मैवम् । अत्रापि लीलयेत्यस्य भावप्राधान्याश्रवणेन लीलारूपत्वेनेति व्याख्यानान्न कश्चिद् दोषः ॥

अत्रायं विवेकः– सोमपुरोडाशादिभोग्यपदार्थेषु द्विविधो भागः स्थूलः सूक्ष्मश्च । तत्र स्थूलो जीवानां भोग्यः । सूक्ष्मः परमेश्वरस्य । जीवेन्द्रियागोचरः सारभागः सूक्ष्म उच्यते । अवतारेषु स्थूलमपि भुङ्क्ते परमेश्वरः । कुत एतत् सर्वमवगम्यत इति चेद् गीताभाष्यतट्टीकाभ्याम् । तथाहि गीताभाष्यम् । 'न च 'अनश्नन्नन्यो अभिचाकशीति' 'अन्यो निरन्नोऽपि बलेन भूयान्' इत्यादिविरोधः । स्थूलानशनोक्तेः । आह च सूक्ष्माशनम् । 'प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः'' इति । एतद्व्याख्यानरूपा प्रमेयदीपिका– स्यादिदं व्याख्यानं यदि भगवतो विषयभोगो युक्तः स्यात् । न चैवम् । तदङ्गीकारे श्रुत्यादिविरोधात् । 'ऋतं पिबन्तौ' (कठ. उ.३.१) इति चात एव छत्रिन्यायेनोपचारितमित्यत आह–**नचेति**। कुतो नेत्यत आह– **स्थूलेति ॥** श्रुत्यादिषु स्थूलस्य जीवभोग्यस्य विषयस्याभोगोक्तेः । सूक्ष्मभोगस्य चाङ्गीकारादिति भावः । सूक्ष्माशने प्रमिते भवेदियं व्यवस्था । तदेव कुत इत्यत आह– **आह चेति ॥**

गन्धादिषु यो जीवेन्द्रियागोचरः सारभागः तस्य भोगं परमेश्वरो अस्माच्छरीराद् आत्मनो जीवादतिशयेन विलक्षणभोग एव भवति । अवतारेषु स्थूलमपि भुङ्क्त इतीवशब्द इति । सोऽयं भोगः परमेश्वरस्य नाविद्यमानसुखप्राप्त्यर्थो नापि विद्यमानसुखव्यक्त्यर्थः । नित्यव्यक्तपूर्णसुखत्वात् परमेश्वरस्य । किन्तु भक्तानुग्रहाय केवलं लीलारूपः । अत एव भोगस्य केवललीलात्वोक्तिर्घटते । अन्यथा सुखव्यक्त्यै भोग इत्युक्तिः स्यात् । सुखस्य नित्यव्यक्तत्वं कुत इति चेत् । गीताभाष्यतट्टीकायाम् । तथाहि गीताभाष्यम्– 'आह च "स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता । यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिः स्तुतः । सुखरूपस्य भोक्तृत्वान्नतु सर्वस्वरूपतः ।

आगमिष्यत् सुखं चापि तच्चास्त्येव सदाऽपि तु । तथाऽप्यचिन्त्यशक्तित्वात् जातं सुखमतीव च" इति नारदीये' (७.६)इति । एतद्व्याख्यानरूपा प्रमेय-दीपिका । सुखरूपस्य सुखकारणस्य । ननु स्रष्टा पातेत्यादिकमयुक्तम् । कदाचित् क्रियावेशे विकारित्वप्रसङ्गात् । भोगेन यद् भाव्यं सुखं तस्य पूर्वमभावेन अपूर्णत्वप्रसङ्गाच्चेत्यत आह– **आगमिष्यदिति** । यद् भोगेन आगमिष्यत् सुखं तच्च सदाऽप्यस्त्यैव । क्रियाश्च शक्तिरूपेण चेति चार्थः । तर्हि कथं भोगेन सुखं जातमित्युच्यत इति भावेन पृच्छति–**अपि त्विति ॥** उत्तरमाह– **तथाऽपीति । सदा सद्भावोऽपीति ।** अत्र 'क्रियाश्च शक्तिरूपेण' इति विशिष्योक्त्या आगमिष्यत्सुखं व्यक्तमेवास्तीति लभ्यते । अन्यथा यद् भोगेन आगमिष्यत् सुखं तच्छक्तिरूपेणास्ति । क्रियाश्च शक्तिरूपेण इत्युक्तिः स्यात् । सुखव्यक्त्यङ्गीकारेणैव भोगनिर्वाहसम्भवे अचिन्त्यशक्त्यङ्गीकारोऽपि व्यर्थः स्यात् । तस्मात् सुखव्यक्त्यभावेऽपि भक्तानुग्रहाय केवलं लीलारूपो भोगोऽङ्गीकार्य इत्येके वर्णयन्ति । मम तु प्रतिभाति । यद्यपि सुखं व्यक्तमेव तथाऽपि भोगेन व्यज्यते । नच व्यक्तस्य व्यक्तिरनुपपन्ना । अचिन्त्यशक्त्या तदुपपादनात् । यद् भोगेन आगमिष्यत् सुखं तत् सदा व्यक्तमस्त्येव । तथाऽपि सुखं जातं व्यक्तमित्युच्यते । कथं व्यक्तस्य व्यक्तिः ? अचिन्त्य-शक्तित्वात् परमेश्वरस्येति गीताभाष्ययोजनया अस्यार्थस्य लाभात् । इयं च योजनोदाहृतप्रमेयदीपिकासूचितैव । किञ्च 'पुण्यो गन्ध इति भोगापेक्षया' इति भाष्यव्याख्यानावसरे प्रमेयदीपिकायाम् । सुगन्धस्तु सुखहेतु-रित्युपपादितमित्युक्तम् । तत् सुखस्य व्यक्तस्यापि व्यक्त्यङ्गीकार एवोपपद्यते नान्यथा । 'रमणं चाऽत्मशब्देनाऽदेयं मातीति चोच्यते' इत्यनुव्याख्यानसुधायाम्– 'आदेयं उपादेयं सुखं सुखसाधनं च मात्यनुभवतीत्यात्मा' इत्युक्तम् । तत् साम्प्रदायिकैर्व्याख्यातं सुखसाधनं चेति । तथाच सुखसाधनतयाऽभिमत-विषयानुभवाभिव्यक्तसुखानुभवकर्तेत्यात्मशब्दनिर्वचनेन लभ्यत इति भाव इति । ततोऽपि व्यक्तस्य सुखस्य व्यक्तिरस्तीति ज्ञायते । नच सुखस्यापि

व्यक्त्यङ्गीकारे आगमिष्यत्सुखं सदाऽस्त्येव । क्रियाश्च शक्तिरूपेणेति विलक्षणोक्तिः न स्यादिति वाच्यम् । क्रियावच्छक्त्यात्मना वर्तमानस्य सुखस्य न व्यक्तिः । किन्तु नित्यव्यक्तस्यैव । क्रियायाश्च व्यक्तिरूपेणावर्तमानायाः व्यक्तिरिति विशेषज्ञापनाय तथोक्ति-सम्भवात् । नच तर्हि भोगस्य सुखव्यक्त्यर्थत्वप्राप्त्या लीलात्वविरोधः । उदाहरिष्यमाणऋग्भाष्यटीकादिशा व्यक्तेर्भक्ताभीष्टसम्पादनरूपत्वे न स्वप्रयोजनानुद्देशितया लीलात्वोप-पत्तेरिति ॥

ऋग्भाष्यतट्टीकोक्तरीत्या बलव्यक्त्यर्थं वा भगवतो भोगः । तथाहि 'इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिब ॥' अत्र भाष्यं 'सदा विष्णुविवक्षायां यजमानबलं सहः । तदिष्टस्यैव दानाय तद्गुणव्यक्तिरेव वा । अनुग्रहव्यक्तिरेव तद्गुणानां न चान्यथा ॥' इति । अत्र टीका– 'इदं प्रसिद्धेन्द्रे घटते सोमपानादिना तस्य बलवृद्धिसद्भावात् । परमेश्वरे तु योजनान्तरं सूचयति– **विष्ण्विति** ॥ इन्द्रशब्देन विष्णुविवक्षायां यजमानबलं सहःशब्देनोच्यते । कथं तर्हि अन्वय इत्यत आह– **तदिष्टस्येति** । सहसे बलाय यजमानस्य यदिष्टं बलं ज्ञानादिरूपं तस्य दानाय तदीयं सोमं पिबेति योजनीयमित्यर्थः । अथ सहःशब्देन परमेश्वरबलमङ्गीकृत्य घटयति– **तदिति** । तस्य विष्णोर्यो गुणो बलाख्यस्तत्र व्यक्तिर्वोच्यते । सहसे बलाय तव बलव्यक्त्यै । व्यक्तिश्च बलसाध्यमभीष्टसम्पादनम् । एवशब्दाभ्यां पर-मेश्वरबलस्य सोमेन वृद्धिं निराकरोतीति । अत्र टीकायां तव बलव्यक्त्यै इत्युक्त्या बलस्य व्यक्तिरङ्गीकृता । भाष्ये तु व्यक्त्यङ्गीकारः स्पष्ट एव । व्यक्तिश्चेत्यादिना टीकायां व्यक्तिशब्दार्थनिरूपणं वस्तुस्थितिमनुरुध्यैव । नतु व्यक्तिशब्दस्यार्थान्तरमस्तीति अभिप्रायेण । 'अवस्थाविशेषो व्यक्तिः' इति सुधावाक्यस्याप्ययमेवार्थः । 'अत एव 'अनुग्रहव्यक्तिरेव तद्गुणानां न चान्यथा' इति ऋग्भाष्योदाहृतप्रमाणवाक्यव्याख्यानावसरेऽपि तट्टीकायामनुग्रह इति भक्ताभीष्टसम्पादनमुच्यत इत्युक्तम् । नहि कंसहननादिक्रिया व्यक्तेत्यस्य

भक्ताभीष्टसम्पादनातिरेकेण अर्थान्तरमस्ति । भक्ताभीष्टसम्पादनं नाम भक्तैकसाधनानुकूलो व्यापारः । न चैवं सोमपानादेः बलव्यक्त्यर्थत्वाङ्गीकारे भोगस्य लीलात्वोक्तिविरोधः । बलव्यक्तेर्भक्ताभीष्टसम्पादनरूपायाः पर-प्रयोजनोद्देशित्वेऽपि भगवतः स्वप्रयोजनानुद्देशित्वात् । एतदर्थमेव टीकायां व्यक्तिशब्दार्थो निरूपितः । न च परप्रयोजनोद्देशित्वेऽपि लीलात्वभङ्गः । सृष्ट्यादिव्यापारस्यापि 'सोऽयं विहारः' इत्यादिना परप्रयोजनोद्देशितया प्रमितस्य लीलात्वाभावप्रसङ्गात् ॥

ततश्चायं निष्कर्षः । भगवान् भक्तसमर्पितान् शुभान् सुरससुगन्धरूपान् विषयान् भुङ्क्ते । 'अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः । मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् ॥' इत्यन्यत्रोक्तेः । भगवद्भोग्याश्च रसादयो जीवेन्द्रियागोचराः । अत एव सूक्ष्मा इत्युच्यन्ते । अवतारेषु जीवभोग्यस्थूलमपि भुङ्क्ते । 'जीवभोग्यस्य भोक्तेशो जीवस्तद्भोगभुङ् नतु' इत्यन्यत्रोक्तेः । नित्यतृप्तस्यापि अचिन्त्यशक्त्या रसादिस्वीकारो युक्तः । सोऽयं परमेश्वरस्य अचिन्त्यशक्त्या नित्यव्यक्तसुखव्यक्त्यर्थं वा बलव्यक्त्यर्थं वा पक्षद्वयेऽपि भोगो लीलारूप एव न स्वप्रयोजनोद्देशकः । व्यक्तेर्भक्ताभीष्टसम्पादनरूपत्वेन स्वप्रयोजनानुद्देशित्वादिति । तदेतत् सर्वमभिप्रेत्योक्तं भोगस्तु लीलयेति भाव इति । 'विष्णुभोगे प्रकारोऽयं भात्यन्योऽपि भवेद्यदि ॥ टीकाभाष्याद्यनुगुणः सुज्ञोक्तः सोऽपि सम्मतः । अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' इत्युक्तेः । अलौकिकार्थस्य यथाप्रमाणं ग्राह्यत्वादिति । जगद्धातृत्वोक्त्या कथं पूर्णानन्दत्वलाभ इत्यतो धातृत्वमिह चेष्टकत्वम् । तच्च पूर्णानन्दत्वसाधकत्वेन श्रुतिसिद्धमित्याशयेनाऽऽह– **तदुक्तमिति** ॥ एष परमात्मा आ समन्तात् काशनादाकाशनामा विष्णुर्यदि पूर्णानन्दो न स्यात् तदा कारणान्तराभावान्न लोकं प्रवर्तयेत् । न चेदेष प्रवर्तयेत् तदा कः पुमानन्यात् लोकं चेष्टयेत् । कश्च प्राण्याद् धर्मादौ प्रवर्तयेत् । अन्यस्य स्वातन्त्र्याभावात् । अतो लोकचेष्टान्यथानुपपत्त्या तत्कर्ता विष्णुः पूर्णानन्द इति श्रुत्यर्थः ॥

**धातृत्वं चेति** ॥ नच अनित्यजगद्धातृत्वेनापि पूर्णानन्दत्वसिद्धिसम्भवेन प्रकृतिनिर्वाहात् किं नित्यधातृत्वोपपादनेनेति वाच्यम् । निरर्गलैश्वर्याभावे लोकरीत्या पूर्णानन्दत्वानुपपत्त्या वा वस्तुस्थितिकथनार्थं वा नित्यधातृत्वोपपादनोपपत्तेरिति द्रष्टव्यम् ॥ **अनाधेयातिशयत्वादिति** ॥ उत्पत्तिविनाशस्वभावरूपातिशयाधानशून्यत्वादित्यर्थः । नित्येषूत्पत्तिविनाशयोः स्वरूपत एवाभावात् स्वभावस्य च अनागन्तुकतया अन्याधीनत्वासम्भवादिति भावः । ननु 'अनाधेयातिशयत्वात्' इत्यस्य कः परिहार इत्यतोऽनुव्याख्यानोक्त एवेत्याशयेन तत् पठति– **नित्यमिति** ॥ 'नित्यं नित्यात्मना यतः । तथाऽनित्यतयाऽनित्यं नित्यशक्त्या स्वयेश्वरः । नियामयति नित्यं च' इत्येतावतोर्ग्रहणं सूचयितुमित्यादेरित्युक्तम् । यथा अनित्यं घटादिकमनित्यतया नियम्यते, तथा नित्यं नित्यात्मना नित्यं च सर्वदैवेश्वरो नियामयति । यत एवं तस्मादुक्तमुपपन्नमिति योजना ॥

एतदुक्तं भवति– यथाहि घटादयोऽनित्यत्वस्वभावा अपि न अकस्मादनित्या भवन्ति । तथात्वे च उत्पत्त्युत्तरक्षण एव विनाशप्रसङ्गात् । एवं नित्यस्यापि नित्यता यदि पराधीना तदा को दोषः । न चानित्यता पराधीनेति कदाचिद् घटादेर्नित्यता प्राप्ता । विनाशकारणोपनिपातध्रौव्यात् । तथा नित्यस्य नित्यतायाः पराधीनत्वेऽपि न जात्वनित्यताप्रसक्तिः । तन्नियमननियमनात् । तदिदमुक्तं नित्यं चेति । न चैतदलौकिकम् । नित्यकर्मभिः दुरितप्रागभावानुवृत्तेः साध्यत्वेन वादिभिः अभ्युपगतत्वात् । अनुवृत्तेर्नित्यतासम्पादनानतिरेकात् । 'सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः', 'यदात्मको भगवान् तदात्मिका व्यक्तिः । किमात्मको भगवान् । ज्ञानात्मक ऐश्वर्यात्मकः' इत्यादिप्रमाणानुसारेण ज्ञानपदमुपलक्षणमित्यभिप्रेत्याऽह– **ज्ञानाद्यात्मकत्वेनेति** ॥ प्रतिपाद्यदेवतास्तुतीत्युक्तोपपादनाय भाष्योक्तां स्तुतिमुपनिषदारूढां कर्तुमाह– **वक्ष्यते चेति** ॥ उपनिषदीति शेषः ॥

**एतत्सर्वमिति ॥** सर्वयज्ञभोक्तृत्वान्तं विशेषणपञ्चकमित्यर्थः । तान्येव वाक्यानि विशेषणक्रमेण पठति– **याथातथ्यत इत्यादि ॥** यद्यपि याथातथ्यत इति वाक्यस्य व्यदधान्निर्मितवानिति विष्णुतत्त्वनिर्णयटीकानुसारेणोत्पत्ति-प्रतिपादकत्वमेव प्रतीयते न नियामकत्वप्रतिपादकत्वम् । जगद्धातृत्वं चैतद्-ग्रन्थपर्यालोचनया नियामकत्वम् । ततो नैतद्वाक्योदाहरणमत्रोचितम् । तथाऽपि विपूर्वस्य दधातेरनेकार्थत्वेनेह नियमनार्थत्वाद्वा उपलक्षणतया नियामकत्वस्यापि विवक्षितत्वाद्वा नोक्त दोषः । अत एवैतद्वाक्यव्याख्यान-रूपप्रमाणव्याख्यानावसरे ससृज इत्युपलक्षणमिति वक्ष्यतीति ज्ञातव्यम् । **वायुरनिलममृतमिति ॥** अः ब्रह्मैव निलं निलयनम् आश्रयो यस्य वायोः सोऽप्यमृतः किमु परमेश्वरः इति कैमुत्येनात्र नित्यत्वं लभ्यत इति भावः । **यत्ते रूपमिति ॥** रूपशब्दोक्ताया मूर्तेः कल्याणतमत्वं नाम ज्ञानाद्यात्मकत्व-मेवेति भावः । **स पर्यगाच्छुक्रमिति ॥** 'शुक्रं तच्छोकराहित्यात्' इति वक्ष्य-माणानुसारेण शोकराहित्योक्त्या पूर्णानन्दत्वलाभ इति भावः । **तस्मिन्नि-ति ॥** 'मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत्' इति वक्ष्यमाणानुसारेण अपशब्दोक्तसर्वयज्ञभोक्तृत्वलाभ इति भावः । यद्यपि त्रिविधा हि देवता वन्द्या भवति विशिष्टा इष्टा अधिकृता चेति । तत्र विशिष्टत्वोपपादनाय आद्यं विशेषणद्वयम् । इष्टत्वोपपादनाय ज्ञानमूर्तये पूर्णानन्दायेति विशेषण-द्वयम् । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः । अधिकृतत्वसूचनाय यज्ञभुज इति विशेषणमिति वा अनिर्धारितस्वरूपस्य नमनायोगात् निर्धारणस्य च लक्षणसाध्यत्वेन विभवाद् हरेर्लक्षणान्याहेति वाऽऽद्यं पद्यं प्रकारान्तरेण व्याख्यातुं शक्यम् । व्याख्यातं च टीकाकृता ग्रन्थान्तरे । तथाऽपि शिष्यैरेव ऊह्यतामिति भावेन न व्याख्यातमिति द्रष्टव्यम् । **गुरुत्वेनापि इति** । अत्र अपिपदेन भगवतो भाष्यकारस्य गुरुदेवतयोरभेदं सूचयति । तर्हि पुनः प्रणामो व्यर्थ इत्यतो निमित्तसमावेशे नैमित्तिकविलोपनियमाभावादिति न्यायं मनसि निधायोक्तं-**गुरुत्वेनेति ॥** निबन्धस्य प्रयोजनमाह–**शिष्यान् ग्राहयितुमिति ॥**

**हरिं प्रणमतीति** ॥ ननु नायं प्रणामः किन्तूपनिबन्धः । अतो गुरुत्वेनापि हरिप्रणामं निबध्नातीत्येव वक्तुमुचितम् । अत एव प्राक् निबध्नातीत्युक्तम् । अन्यथा पूर्वोत्तरविरोधापातादिति चेत् । भवत्येवायमपि प्रणामोपनिबन्धः । प्रणामवाचकनमइत्यादिशब्दप्रयोग एव हि प्रणामोपनिबन्धः । स्तुतिनिबन्धो नाम उत्कर्षप्रतिपादकशब्दप्रयोग एव । नतु स्तौमीति स्तुतिवाचकशब्दप्रयोगः । तथात्वे कुत्रापि स्तुतिनिबन्धो न स्यात् । नचैवं प्रणमतीत्यनुपपत्तिः । भक्तिपूर्वं नमआदिशब्दप्रयोगस्य वाचिकनमस्कारत्वेन निबन्धस्यापि प्रणामरूपत्वोपपत्तेः । प्रणामत्वस्य मानसादौ निबन्धत्वव्यभिचारेऽपि निबन्धस्य प्रणामाव्यभिचारात् । प्रणामवाचकशब्दानुमापकलिपिर्निबन्ध इत्यङ्गीकारे हि निबन्धस्य प्रणामव्यभिचारो भवेत् । न चैवमित्युक्तम् । न चैवं नमस्काराधिकारग्रथनसूचने शिष्यशिक्षार्थमिति तत्त्वप्रकाशिकायां नमस्कारग्रथनस्य शिष्यशिक्षार्थत्वोक्तिविरोध इति वाच्यम् । स्वयं वाचिकनमस्काररूपत्वेऽपि आनुषङ्गिकशिष्यशिक्षार्थत्वे बाधकाभावात् । एतदभिप्रायेणैव न तत्रतत्र टीकाकाराणां सङ्कलय्य व्यवहारः । तद्यथा नारायणप्रणामादिकं ग्रन्थादौ निबध्नाति– **नारायणमिति** ॥ नारायणप्रणामस्येव गुरुप्रणामस्यापि अभिमतसिद्ध्यङ्गतया कार्यारम्भे अवश्यमनुष्ठेयत्वात् तदाचरणपुरःसरं ब्रह्ममीमांसाशास्त्रव्याख्यानं समर्थयमानः प्रतिजानीते– **तमेवेति** ॥ पौनःपुन्येन प्रणमति– **निःशेषेति** ॥ अपरोक्षतया सम्बोध्य प्रणमति अशेषेतीत्याद्यन्तयोः सुधायामुक्तम् । नारायणनमस्कारं ग्रथयति । देवतानतिसमनन्तरं गुरूनपि नमति । देवतात्वेन गुरुत्वेन च अन्तेऽपि नमतीत्याद्यन्तयोः तत्त्वप्रकाशिकायामुक्तम् । नारायणवन्दनं स्वयमन्तरायविधुरोऽपि शिष्यान् ग्राहयितुं प्रकरणादौ निबध्नाति– **सदागमैकविज्ञेयमिति** ॥ अन्तेऽपि मङ्गलाचरणस्य कर्तव्यत्वात् नारायणस्तुतिप्रणामौ करोति ॥ स्वतन्त्रोऽयमितीत्याद्यन्तयोर्विष्णुतत्त्वनिर्णयटीकायामुक्तम् । एवमन्यत्रापि टीकाकारीयो व्यवहारः स्फुटः । अत्राप्यन्ते नारायणं स्तुतिनतिभ्यां प्रीणयतीत्युक्तम् ।

चन्द्रिकायामपि ग्रन्थादौ मङ्गलमाचरतीत्युक्तम् । न चैतत् सर्वमुक्तविधया वाचिकनमस्कारनिबन्धनयोरेकत्वाभावे सम्भवति । तस्मात् प्रणाम निबन्धस्यापि प्रणामरूपत्वात् प्रणमतीत्युपपन्नतरम् । रमाब्रह्मा-दीनामित्येवोक्तिं विहाय योगविभागकरणस्य प्रयोजनमाह– **ब्रह्मादीनामिति** ॥ नच ब्रह्मणो प्राप्त-ज्ञानाङ्गीकारे विरिञ्चेतरेषां तिरोहितलाभो वेति तत्त्वप्रकाशिकाविरोधः । तत्र विरिञ्चज्ञानतिरोधानाभावस्योक्तत्वेन अप्राप्तप्राप्तिनिषेधादिति वाच्यम् । विरिञ्च-ज्ञानतिरोधानस्य अत्यल्पत्वाभिप्रायेणैव तत्त्वप्रकाशिकायां विरिञ्चेतरेषामि-त्युक्तम् । न तु सर्वात्मना तिरोधानाभावाभिप्रायेण । अन्यथा तत्रैवोक्तार्थ-सम्मतित्वेनोदाहृते 'ब्रह्मणस्तु प्रायो नाप्रतिभासितम् । विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यः प्रायशो भवेत्' इति गीतातात्पर्यवाक्ये प्रायःशब्देन ब्रह्मणोऽपि अन्यप्रतिभानानुज्ञानेन तद्विरोधापातात् । आमुक्तेः व्यक्त्यतिशयोपेतमिति प्रमाणलक्षणविरोधापाताच्चेति भावः ।

**श्रियस्त्विति** ॥ बुद्ध्या विवेकेन ज्ञानमिति वर्तते । नन्वेतदैतरेयभाष्य-विरुद्धम् । तत्र जानन्त्याऽपि देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च पृष्टः स भगवानाह । 'कतरः स आत्मा' (ऐ.उप. ५-१) इत्यादौ विशेषज्ञानार्थमित्यनेन रमाज्ञानेऽपि अप्राप्तातिशयलाभस्योक्तत्वादिति चेत्, मैवम् । अत्र रमाज्ञानस्य सर्वदा विद्यत इति नित्यत्वमेवोक्तम् । न तु अभिव्यक्त्यभावः । तत्र तु नित्यव्यक्तस्यापि रमाज्ञानस्य भगवदुपदेशरूपसामग्रीमहिम्ना व्यक्तिविशेष एवोच्यते । यथा 'विशिष्टा दक्षिणा सुखे' इत्यत्र भगवत्संयोगविशेषेणार्ध-नारीरूपरमायाः रूपान्तरापेक्षया व्यक्तस्यापि सुखस्य व्यक्तिविशेषरूपोऽतिशय उक्तस्तद्वज्ज्ञानेऽप्युपपद्यत इति साम्प्रदायिकाः । यद्वा, अनुव्याख्याने 'नित्य-मेकप्रकारा च नारायणमतिः परा । सूर्यप्रभाववदखिलं भासयन्ती निरन्तरा । निर्लेपा वीतदोषा च नित्यमेवाविकारिणी ॥' इत्यादिना नारायणमतेर्वृद्धि-ह्रासराहित्यलक्षणैकप्रकारत्वमुक्त्वा तदेव प्रायः तल्लक्षणा श्रिय इत्यनेन रमामतावतिदिश्य तथैव स्पष्टताभावादित्यनेन स्पष्टताया एव प्रायःशब्द-

व्यावर्त्यत्वेनोक्तेः तद्बलाद् रमाज्ञानस्य नित्यमेकप्रकारत्वमेवेति अवसीयते । स्पष्टत्वं तु विषयोपाधिकमिति प्रसिद्धमेव । 'सर्गस्थितिर्यतिर्ज्योतिर्नित्यानन्दप्रदोऽक्षरे' इत्येतद्व्याख्यानरूपविष्णुतत्वनिर्णयटीकायां ज्योतिर्नित्याविर्भूतो भगवदितरसर्वसाक्षात्कार इत्यनेन रमाज्ञानस्य नित्याविर्भूतत्वोक्तेश्च । 'विशिष्टा दक्षिणा सुखे' इत्यपि सुखविषयकमेव । न ज्ञानविषयकम् । ऐतरेयभाष्यवचनमपि अज्ञलोकानुग्रहार्थं ज्ञानिलोकस्य विशेषज्ञानार्थं च इत्येवम्परतया व्याख्येयम् । कुत एतत् सर्वमिति चेत् । निरवकाशोदाहृतानुव्याख्यानानुरोधादेवेति सर्वं समञ्जसम् । ननु मूले चशब्दो व्यर्थः । नच देवतासमुच्चयार्थ इति युक्तम् । अपिशब्देनैव तत्सिद्धेः । एकक्रियायोगे समुच्चयसम्भवेऽपि प्रकृते क्रियाभेदस्य वक्ष्यमाणत्वेन समुच्चयानुपपत्तेश्च । अत एव चशब्दस्य देवतानामित्यनेन सम्बन्धेन अन्योन्यसमुच्चयार्थौ चापिशब्दावित्यपि व्याख्यानं न युक्तमित्यत आह– **चशब्द इति** ॥ ननु अवधारणार्थत्वमपि अयुक्तम् । अपिशब्दस्य समुच्चयार्थत्वे विरोधेन अवधारणानुपपत्तेः । अर्थान्तरपरत्वेऽपि अवधारणस्य व्यर्थत्वादिति अतो अर्थविशेषज्ञापनाय भिन्नक्रमेण सम्बन्धाङ्गीकारात् न दोष इत्याशयेनाह– **यस्मादित्यनेनेति** ॥ तथा च ननु रमायाः नित्यमुक्तत्वेन स्वभावसिद्धतज्ज्ञानस्य न भगवदधीनत्वम् । अन्येषामपि देवानां स्वस्वगुरूपदेशलब्धज्ञानस्य तदनुत्पन्नत्वमेव । ततो न भगवतो गुरुत्वमुपपद्यत इत्याशङ्कापरिहाराय यस्मादेवेत्युक्तम् । नित्यमुक्तायाः श्रियोऽपि ज्ञानस्फूर्तिः यस्मादेव न स्वभावबलायत्ता 'द्रव्यं कर्म' चेत्यादिप्रमाणसिद्धत्वात् । तथा ब्रह्मादिदेवतानां ज्ञानस्फूर्तिः यस्मादेव । न तु स्वस्वगुरूपदेशात् । 'अज्ञानां ज्ञानदो विष्णुः', 'अगम्यत्वाद्धरिः तस्मिन्नाविष्टः' इत्यादिप्रमाणसिद्धत्वात् । तेषां च निमित्तमात्रत्वादिति योजनोक्ता भवति । ज्ञानशब्दस्य भावसाधनत्वे ज्ञानज्ञानस्य भगवदधीनत्वप्राप्त्या न गुरुत्वोपपादनं स्यादित्यतो व्याचष्टे– **ज्ञातव्यार्थेति** ॥ ज्ञानशब्देन ज्ञेयमुपलक्ष्यत इति प्रमेयदीपिकानुसारेण

लक्षणया वा साध्यत इति साधनं 'कृत्यल्युटो बहुलम्' (पा.अष्टा.३.३.११३) इति स्मरणादिति सुधानुसारेण कर्मणि ल्युडन्ततया वा ज्ञानशब्देन ज्ञातव्यलाभ इति भावः ॥

ननु क्रियाकारकसम्बन्धस्य वाक्यार्थत्वात् तस्य च क्रियाभिसम्बन्धसापेक्षत्वेन अत्र क्रियाध्याहारे कर्तव्ये उत्पद्यत इति अध्याहारे श्रिय इत्यस्य अनन्वयप्रसङ्गः । विद्यत इत्यध्याहारे ब्रह्मादीनामित्यस्य अनन्वयप्रसङ्गः इत्यत उत्पद्यते विद्यत इति क्रियाद्वयाध्याहारमङ्गीकृत्य ब्रह्मादीनां ज्ञानस्फूर्तिः उत्पद्यते । श्रियो ज्ञानस्फूर्तिः सदा विद्यत इत्यन्वये न कोऽपि दोष इत्याशयेनाऽह– **यथायोग्यमिति** ॥ यथासम्भवमित्यर्थः । एतद्विवरणायैव पूर्वमुत्पद्यते विद्यत इति चोक्तम् । न च 'नीलमुत्पलम्', 'राज्ञोऽयं पुरुषः' इत्यादौ क्रियाभिसम्बन्धाभावेऽपि वाक्यार्थबोधान्न तन्नियम इति वाच्यम् । तत्र हि नीलमुत्पलं न रक्तं, राज्ञोऽयं पुरुषो न देवदत्तस्येति विशेषणान्तरव्यावृत्तिप्रतीतावेव तात्पर्येण क्रियासम्बन्धाभावस्यादोषत्वात् । इह च क्रियासम्बन्धबोध एव तात्पर्येण तस्याऽवश्यकत्वात् । एतच्च अनभिहितसूत्रे आकरे स्पष्टमिति ज्ञातव्यम् । मूले सदेत्यस्य विद्यत इत्यध्याहृत्य क्रिययाऽन्वयः । अत एव प्राक् सर्वदा विद्यत इत्युक्तं नमनं स्वभाव इति ज्ञापयितुं सदा नम इति वाऽन्वयः । 'हरये गुरवे नमः' इत्येतावता चारितार्थ्येऽपि गुरुत्वोपपादनाय यस्मादित्यादिकमिति सुज्ञेयत्वान्नोक्तमित्यवगन्तव्यम् ॥

ननु ऋषिदेवताज्ञानस्यानावश्यकत्वेन तज्ज्ञापकोत्तरभाष्यमनर्थकम् । यदि च 'यो ह वै' इत्यादिश्रुत्या तस्याऽवश्यकत्वं, तर्हि तयैव छन्दःप्रभृतिज्ञानस्यापि आवश्यकत्वावगमात् तदपि वक्तव्यमेवेत्यर्धजरतीयानुपपत्तिरित्यतः श्रुत्युपन्यासपूर्वकं छन्दःप्रभृत्यकथने निमित्तं च वदन् उत्तरभाष्यं सङ्गमयति– **यो ह वा इति** ॥ छन्दोगानां ब्राह्मणवाक्यमिदम् । अस्यार्थः । ऋषिर्मन्त्रद्रष्टा । तस्येदमार्षम् । ऋषिदृष्टत्वमिति यावत् । छन्दोगायत्र्यादिदेवतामन्त्रप्रतिपाद्योऽर्थः । सैव दैवतम् । ब्राह्मणपदेन तद्व्याख्येयमन्त्रार्थो लक्ष्यते । इदं

च उत्तरटीकायामेव व्यक्तम् । आर्षं च छन्दश्च दैवतं च ब्राह्मणं च आर्षछन्दोदैवतब्राह्मणानि अविदितानि यस्य मन्त्रस्य । तेन मन्त्रेणेति समुदायैकवचनम् । मन्त्रशब्दो वेदमात्रपरो न तु छन्दोबद्धवाक्यपरः । तथा सति सर्वत्र ऋष्यादिज्ञानस्य आवश्यकता न स्यात् । य इति श्रवणात् स इत्यध्याहार्यम् । यो ऋषिछन्दोदैवतार्थान् अज्ञात्वा केवलेन मन्त्रेण याजयति अध्यापयति वा सः स्थाणुं स्थाणुत्वं तप्तस्थाणुरूपं नरकं स्थावरजातिं वा ऋच्छति प्राप्नोति । गर्ते भूगर्तरूपे नरके कूपान्तश्चारिमण्डूककच्छपादितिर्यग्-योनिषु वा पद्यते पात्यते । प्रमीयते वा अल्पायुर्भवतीति । अस्य पापीयान् भवतीति । तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति वाक्यशेषेणान्वयः ॥ **देवतादि-ज्ञानवत इति** ॥ यद्यपि श्रुत्यनुसारेण ऋष्यादीति वक्यव्यं, तथाऽपि प्राधान्या-भिप्रायेणैवमुक्तमिति ज्ञेयम् ॥

**फलतीति ज्ञायत इति** ॥ नच वाच्यम् । ऋष्याद्यज्ञाने अनर्थ एवोच्यते नतु तज्ज्ञाने फलं भवतीति । 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते । अपि तु विधेयं स्तोतुम्' इति न्यायेन विदितऋष्यादिकेन मन्त्रेण कृतं याजनादिकं सफलं भवतीति अत्र तात्पर्यात् । एतच्छ्रुतिव्याख्यानरूपानुक्रमणिका-समाख्यानाच्चायमर्थो ज्ञायते । तथाहि अनुक्रमणिका– 'मन्त्राणां ब्राह्मणा-र्षेयछन्दोदैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छति' इति । ननु 'यो ह वै' इति श्रुतौ ब्राह्मणपदेन गाथारूपब्राह्मणज्ञानस्य आवश्यकत्वमुच्यते । तदसङ्गतम् । 'ऋषिछन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि । अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ।'[१] 'स्वरो वर्णोऽक्षरं मन्त्रो विनियोगोऽर्थ एव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ॥' इति स्मृतिभ्याम् अवश्यवक्तव्यत्वेन प्राप्तार्थाज्ञानानुक्तिश्च । ब्राह्मणजाप्योऽर्थो ब्राह्मणार्थः । स च विनियोगो मन्त्रार्थश्च । ब्राह्मणपदस्यार्थोपलक्षकत्वाङ्गीकारेण श्रुतौ तद्दोषपरिहारेऽपि भाष्ये अर्थानुक्त्या न्यूनताया अपरिहारादित्यत आह– **तत्र ब्राह्मणपदोप-**

---

१. ऋग्वेदसायणभाष्यम्– भाष्यभूमिका ।

**लक्षितेति ।।** तत्र ऋष्यादिचतुष्टयम् । ब्राह्मणपदोपलक्षितो यो मन्त्रार्थः तज्ज्ञानमित्यर्थः । ब्राह्मणस्य मन्त्रव्याख्यानरूपतया मन्त्रार्थस्य ब्राह्मणजाप्यत्वाद् ज्ञाप्यज्ञापकभावरूपशक्यसम्बन्धेन लक्षणोपपन्नेति भावः । 'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः' इत्यादौ लक्षणामात्रेऽपि उपलक्षणशब्द-प्रयोगाद् इहोपलक्षणा जहल्लक्षणैवेति ज्ञातव्यम् । तथाऽपि अवश्यज्ञातव्य-छन्दोऽनुक्त्या भाष्ये न्यूनतेत्यत आह– **छन्दोज्ञानं त्विति ।।** 'चतुर्विंशत्यक्षरा गायत्री द्वादशाक्षरा जगती' इत्यादिप्रमाणानुसारेण अक्षरगणनयेत्यर्थः । सुकर-मेवेत्यतः परं स्वरादिज्ञानमपि अध्ययनादिना सुकरमिति द्रष्टव्यम् । तेनो-दाहृतश्रुतिस्मृतिभ्यां स्वरादेरपि अवश्यवेदितव्यत्वेनोक्तेः तदनुक्तिदोष इति चोद्यानवकाशः । न चैवमपि उदाहृतस्मृतिभ्यामेव अवश्यवेद्यत्वेनोक्तविनियोगा-नुक्त्या न्यूनतातादवस्थ्यमिति वाच्यम् । एकैकस्मिन् यज्ञादौ अप्रधानकर्मणामति-बहुत्वात् केन मन्त्रेण किं कर्मानुष्ठेयमिति जिज्ञासायां हि 'कर्मणे वा देवेभ्यः शकेयं हस्ताववनिक्ते ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादिब्राह्मणवाक्येन मन्त्राणां विनियोगः क्रियते । अयं च कर्मानुष्ठान एवोपयुक्तो न ब्रह्म-ज्ञाने । ब्रह्मज्ञानेऽपि इत्थम्भावानामनेकत्वेन तत्रतत्र मन्त्राणां विनियोगसद्भावेऽपि एतदुपनिषद्गताः सर्वेऽपि मन्त्राः केवलब्रह्मपरा इति नान्यत्र विनियोगम-पेक्षन्ते । आद्यमन्त्रत्रयस्य ब्रह्मज्ञानोपयुक्ताधिकारप्रतिपादकत्वेऽपि नोदाहृत-मन्त्राणामिवान्यत्र विनियोगः । अतो युक्ता विनियोगानुक्तिरिति । न च छन्दःप्रभृतीनामिव ऋषिदेवतेऽपि अनुक्रमणिकादिना सुज्ञाने इति वाच्यम् । ऋग्भाष्यदिशा अनुक्रमणिकादेः तत्रतत्र स्खलितत्वेन तदुक्ते अनाश्वासाद्वा प्राधान्यज्ञापनाय वा तदुभयोक्तिसम्भवादिति सर्वं समञ्जसम् ।।

**ज्ञापयन्निति ।।**[1] स्वायम्भुवो ऋषिः यज्ञो देवतेति कण्ठतोऽनुक्त-त्वादेवमुक्तमिति ज्ञातव्यम् । ननु सर्वनाम्नां प्रकृतपरामर्शकत्वात् कथमेतै-रिति प्रागप्रकृतमन्त्रपरामर्श इत्यतो बुद्ध्या प्रकृतत्वमेव हि प्रकृतत्वं,

१. सूचयन्निति पाठान्तरम् ।।

ग्रन्थप्रकृतत्वं तु बुद्धिप्रकृतत्वस्य ज्ञापकम् । प्रकृते च बुद्ध्या प्रकृतत्वाद्युक्तः परामर्श इत्याशयेनाऽह– **बुद्धाविति ॥** तदुपपादनाय उक्तम्– **व्याचिकीर्षितत्वेनेति ॥** इच्छायाः ज्ञानपूर्वकत्वेन व्याकर्तव्यज्ञानाभावे व्याचिकीर्षानुपपत्तिरिति भावः ॥ **विशेषतः स्वसम्बन्धमिति ॥**[१] दौहित्रत्वरूपमित्यर्थः । अत एव प्रमाणे 'स्वदौहित्रम्' इति वक्ष्यति । अनेन अन्यस्य यज्ञनाम्नो भगवतोऽभावात् कथमिदं विशेषणमिति चोद्यं परिहृतम् । उक्तशङ्कापरिहारकतया सम्बन्धविशेषज्ञापनाय स्वरूपकथनत्वाङ्गीकारात् । **कुत एतदिति ॥** स्वायम्भुवादेः ऋष्यादित्वं कुतः प्रमाणादित्यर्थः । अप्रतीतिनिरासाय पदद्वयार्थमाह– **सावधानेनेति ॥**

रक्षोभिः खादितुं प्राप्तस्यापि भगवत्स्तुतिविषये जागरूकत्वज्ञापनायेदं विशेषणमिति ज्ञातव्यम् । एतदभिप्रायेणैव **'इति मन्त्रोपनिषदं व्याहरन्तं समाहितम्'** इति भागवते समाहितमित्युक्तम् । ननु किं मोक्षार्थं तुष्टाव उत रक्षोनिरसनार्थम् । अथोभयार्थम् । नाऽद्यः । रक्षोभिरुग्रैरित्यादिना रक्षोनिरसनार्थत्वप्रतीतेः । न द्वितीयः । स्तोत्रं श्रुत्वैव तदसहमानैः खादितुं प्राप्त इति प्रमाणानुसारेण 'इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् । दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्षुधा ॥[२] इत्यादिभागवतानुसारेण च स्तोत्रारम्भानन्तरं रक्षसां प्राप्तत्वेऽपि ततः प्रागप्राप्तत्वेन तन्निरसनस्योद्देश्यत्वासम्भवात् । अत एव न तृतीयोऽपि इत्यतः तृतीयं पक्षमङ्गीकृत्य रक्षोनिरसनस्य अवान्तरफलत्वान्न दोष इत्याह– **यद्यपीति ॥** अत्र मनुयोग्यब्रह्मवाय्वादिप्रतीकेषु देवतान्तरयोग्यपूषादिप्रतीकेषु उपासनस्य सर्वसाधारणाहमाद्युपासनस्य च उक्तत्वात् स्वपरमोक्षार्थमित्युक्तम् । यद्यपि अवहितात्मनेत्यन्तेनैव ऋष्यादेरुक्तत्वाद् अवान्तरफलप्रतिपादकप्रमाणशेषोदाहरणमनर्थकम् । तथाऽपि शिववरातिक्रमणयुक्त्या यज्ञस्य विष्णुत्वसमर्थनज्ञापनार्थं वा उपनिषदो मोक्षरक्षोनिरसनरूपप्रधानावान्तरप्रयोजनज्ञापनार्थं वा तदुदाह-

१. विशेषसम्बन्धमिति

२. श्रीमद्भागवतम्–८.१.१७

रणम् । अवान्तरप्रयोजनोक्त्या प्रधानस्यापि सुज्ञानत्वात् । अत एव मोक्षस्येत्यादिना तथैव वक्ष्यतीति ज्ञातव्यम् । तदेत्यस्य मोचनकाल इत्याद्यर्थ-प्रतीतिनिरासाय 'इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् । दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्षुधा[१] ॥' इत्यादि भागवताविरोधेन अर्थमाह – **तदा स्तुतिकाल इति** ॥ इदं च खादितुं सम्प्राप्त इत्यनेन अन्वेति । तत्र निमित्तं **स्तोत्रं श्रुत्वैवेति** ॥ अनेन स्तोत्रं श्रुत्वैव प्रसन्नेन यज्ञेन मोचित इत्यन्वयभ्रान्तिः परिहृता भवति । तथात्वे उदाहृतभागवतविरोधापातादिति द्रष्टव्यम् । स्तोत्रश्राविणां सर्वेषामेव प्रवृत्त्यभावाद् रक्षसामेव कुत इत्यत एवशब्दाभिप्राय उक्तः **तदसहमानैरिति** ॥ रक्षःशब्दस्य नपुंसकत्वात् तानीति वक्यव्यमित्यतो अध्याहृतेन पुल्लिङ्गेन अन्वयन्न दोष इत्याह– **तान् राक्षसान् इति** ॥

ननु रक्षोभ्योऽवध्यत्ववरदानसमये अन्येषां रक्षोवध्यत्वशापदानं हरस्यानु-चितम् । अन्यैस्तदा हरद्रोहानाचरणादित्यतो नेदमन्येषां शापदानम् । किन्तु रक्षोभ्यो वरान्तरदानमित्यभिप्रेत्य तत्परतया भाष्यं योजयति–**अन्येषामिति** ॥ ननु न केवलं तेषामवध्यत्वं किन्तु अन्येषां वध्यत्वं चेत्यस्यार्थस्य समुच्चायकेन तथाशब्देन प्रतीतेः कथमेव व्याख्यानमित्यत तथाशब्दस्य तात्पर्यार्थवर-समुच्चायकत्वेऽपि श्रुतार्थसमुच्चायकत्वाभावान्न दोष इत्याशयेनाऽह– **तथा-शब्द इति** ॥ न केवलमवध्यत्ववरं किन्तु अन्यवधसामर्थ्यरूपं वरं चेत्येवं वरसमुच्चये इत्यर्थः । नन्वतः कोऽन्यो हरेः प्रभुरित्यत्र हरेरेव परसमर्थत्वे पूर्वोक्तस्य हेतुत्वमुच्यते तदयुक्तम् । प्रादादित्याद्यव्यवहितवाक्योक्तवरदानस्य हेतुत्वमुत व्यवहितवाक्योक्तस्य । नाऽद्यः अप्रयोजकत्वेन हेतुहेतुमद्भावानुप-पत्तेः । द्वितीयेऽपि यतो राक्षसाः यज्ञेन हता अत इति वा । यतः स्वायम्भुवो यज्ञेन मोचितः अत इति वा यतः तुष्टाव अत इति वा वक्तव्यं पक्षान्त-राभावात् । नच तद्युक्तम् । राक्षसहननादेः अत्यल्पत्वेन इतरसाधारण्येन

---

१. 'क्रुधा'

च हरेरेव परमसमर्थत्वसाधकत्वानुपपत्तेरित्यतः पूर्ववाक्यसमुदायलब्धशिववरातिक्रमणस्य हेतुत्वेन अन्वयाङ्गीकारान्न कश्चिद् दोष इत्याशयेन हेतुहेतुमद्भावं स्पष्टयति– **यत इत्यादि** ।। अतःशब्दश्रवणाद् यत इत्यध्याहारः । हेतोरसिद्धिपरिहाराय एवमित्युक्तम् । ननु हरेरन्यः समर्थो नास्ति, हरेः शिववरातिक्रमणवत्त्वात्, इति व्यधिकरणमित्यतः श्रुतिसाध्ये हेतुत्वासम्भवेऽपि, पर्यवसिते तत्सम्भवतीत्यभिप्रेत्य आक्षेपार्थककिंशब्दलब्धं पर्यवसितसाध्यं दर्शयति किन्तु –**हरिरेवेति** ।। ननु 'भागवते च अयमर्थ एवोक्तः' इत्युत्तरभाष्येण ईशावास्यादिमन्त्राणां स्वोक्तार्थे भागवतं प्रमाणत्वेनोच्यते । उत मन्वादीनामृष्यादित्वे । नाऽद्यः । मन्त्रार्थस्य अद्यापि अनुक्तत्वेन तत्र प्रमाणानपेक्षणात् । न द्वितीयः । तत्र प्रमाणस्य उक्तत्वात् । प्रमाणान्तरत्वेऽपि भागवते च अयमृष्यादिरुक्त इत्युक्तिप्रसङ्गादित्यतो द्वितीयं पक्षं मनसि निधाय अवतारयति– **अत्रेति** ।। स्वायम्भुवो ऋषिर्यज्ञो देवतेत्यर्थः ।।

प्रमाणान्तरमित्युक्त्वा, चशब्दो व्याख्यातः । मन्त्रार्थस्य प्रागनुक्तत्वादयमिति परामर्शानुपपत्तिरित्यतो बुद्धिस्थवक्ष्यमाणपरामर्शकत्वान्न दोष इत्याशयेनोक्तं **योऽर्थो वक्ष्यतेऽयमिति ।। अष्टमादाविति ।।** अष्टमस्कन्धस्याऽदिभागे प्रथमाध्याये तत्रापि प्रथमभाग इत्यर्थः । तद्यथा 'आत्मावास्यमिदं विश्वं यज्जगत्यां जगन्मनः । तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यचिद् धनम् ।।' इति । अस्तु किं तत इत्यत आह– **तत्र चेति** ।। तस्मिन्नेव भागवते 'इति मन्त्रोपनिषदं व्याहरन्तं समाहितम्' इत्यनेन मनोः स्तोतृत्वं 'तान् तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः' इति अत्र यज्ञनाम्नो विष्णोः स्तुत्यत्वं च स्पष्टं प्रतीयत इत्यर्थः । ततोऽपि किं प्रकृत इत्यत आह– **तत्समाख्यानादिति**[१] ।। यद्यपि 'भागवते चायमेवार्थ उक्तः' इति भाष्यस्य भागवते अष्टमादौ अयं मनोः स्तोतृत्वं यज्ञनाम्नः स्तुत्यत्वमित्येवंरूपोऽर्थ उक्त इत्येव व्याख्यानमुचितम् । तावतैवोक्तार्थे भागवतस्य प्रमाणत्वलाभात् । ननु ईशावास्यादि-

१. (तत्समाख्ययेति)

मन्त्राणां योऽर्थ इत्यादिव्याख्यानं तस्य प्रकृतानुपयोगात् । तथाऽपि तथा व्याख्याने मन्वादेः ऋषित्वादिकं भागवतोक्तमित्येव विज्ञायते । न तु ईशावास्यादिमन्त्रऋषित्वादिकम् । भागवते ईशावास्यादिमन्त्रोदाहरणपूर्वकं मन्वादेः स्तोतृत्वाद्यकथनात् । टीकोक्तव्याख्याने तु ईशावास्यादिमन्त्राणां भागवते अर्थतो अनुवादलाभेन मन्वादेरीशावास्यादिमन्त्रऋषित्वादिकं सुज्ञानम् । अत एवं व्याख्यातमिति ज्ञातव्यम् । अनेन ईशावास्यादिमन्त्राणां योऽर्थो वक्ष्यते अयमेव भागवते अष्टमादावुक्तः । तत्र चार्थतो मन्त्रानुवादरूपे भागवते अयं मन्वादेः स्तोतृत्वादिरूपोऽर्थ उक्त इत्यावृत्त्या भाष्यं योजितं भवति । व्याख्येयत्वप्रयोजकविषयाद्यकथनप्रयुक्तां भाष्यकृतो न्यूनतां परिहरति **–अनेनति ॥** ऋष्यादिप्रदर्शनपरग्रन्थेन इत्यर्थः । अभ्यर्हितत्वाद् विषयाधिकारीति वक्तव्ये अधिकार्यादित्वेन वचनं स्ववचनप्रमाणभाष्यानुसारेणेति ज्ञेयम् । विषयादिसमुदायस्यैव व्याख्येयत्वप्रयोजकत्वं नतु एकैकस्येति अभिप्रायेण सम्बन्ध इत्येकवचनम् । विषयादिमतोऽपि उक्तानर्थस्य अनादरेण व्याख्येयत्वमित्यत आह– **गहनार्थत्वाच्चेति** ॥ उक्तं च टीकाकारैरन्यत्र गहनार्थत्वाच्च अन्यपरित्यागेन अस्यैव व्याख्येयत्वमिति ॥

ननु आद्यमन्त्रस्यैव व्यर्थत्वात् तद्गतेशावास्यपदव्याख्यानपरमुत्तरभाष्यं सुतरामनर्थकमित्यतो मन्त्रं तावदवतारयति– **उपदिष्टमपीत्यादिना ॥** उपनिषद् विच्छिन्नतृष्णत्वमाद्येन मन्त्रेण विधत्ते इत्यन्वयः । यद्वा, मनुरिति कर्तृपदमध्याहार्यम् । तथात्वे उपनिषदधिकारसिद्ध्यर्थमित्येकपदम् । ननु तत्वप्रतिपादनाय प्रवृत्तोपनिषद् विच्छिन्नतृष्णत्वं कथं प्रतिपादयेदित्यत उक्तं– **तावदिति** ॥ तदेव स्पष्टयति– **तत्त्वं विवक्षुरिति** ॥ 'अनेजदेकम्' इत्यादिनेति शेषः । तद्यर्थभेदादेकवाक्यत्वं न स्यादित्यतो अवान्तरार्थभेदो न दोषायेत्याशयेनोक्तम्– **अधिकारसिद्ध्यर्थमिति** ॥ तत्त्वज्ञानाधिकारस्य वैराग्यसिद्ध्यर्थमित्यर्थः । ननु तत्त्वोपदेशेनैव तत्त्वज्ञानसिद्धेः किं वैराग्यस्य

च हरेरेव परमसमर्थत्वसाधकत्वानुपपत्तेरित्यतः पूर्ववाक्यसमुदायलब्धशिव-वरातिक्रमणस्य हेतुत्वेन अन्वयाङ्गीकारान्न कश्चिद् दोष इत्याशयेन हेतुहेतुमद्भावं स्पष्टयति– **यत इत्यादि** ॥ अतःशब्दश्रवणाद् यत इत्यध्याहारः । हेतोरसिद्धिपरिहाराय एवमित्युक्तम् । ननु हरेरन्यः समर्थो नास्ति, हरेः शिववरातिक्रमणवत्त्वात्, इति व्यधिकरणमित्यतः श्रुतिसाध्ये हेतुत्वासम्भवेऽपि, पर्यवसिते तत्सम्भवतीत्यभिप्रेत्य आक्षेपार्थककिंशब्दलब्धं पर्यवसितसाध्यं दर्शयति किन्तु –**हरिरेवेति** ॥ ननु 'भागवते च अयमर्थ एवोक्तः' इत्युत्तर-भाष्येण ईशावास्यादिमन्त्राणां स्वोक्तार्थे भागवतं प्रमाणत्वेनोच्यते । उत मन्वादीनामृष्यादित्वे । नाऽद्यः । मन्त्रार्थस्य अद्यापि अनुक्तत्वेन तत्र प्रमाणा-नपेक्षणात् । न द्वितीयः । तत्र प्रमाणस्य उक्तत्वात् । प्रमाणान्तरत्वेऽपि भागवते च अयमृष्यादिरुक्त इत्युक्तिप्रसङ्गादित्यतो द्वितीयं पक्षं मनसि निधाय अवतारयति– **अत्रेति** ॥ स्वायम्भुवो ऋषिर्यज्ञो देवतेत्यर्थः ॥

प्रमाणान्तरमित्युक्त्वा, चशब्दो व्याख्यातः । मन्त्रार्थस्य प्रागनुक्तत्वादयमिति परामर्शानुपपत्तिरित्यतो बुद्धिस्थवक्ष्यमाणपरामर्शकत्वान्न दोष इत्याशयेनोक्तं **योऽर्थो वक्ष्यतेऽयमिति ॥ अष्टमादाविति ॥** अष्टमस्कन्धस्याऽदिभागे प्रथमा-ध्याये तत्रापि प्रथमभाग इत्यर्थः । तद्यथा 'आत्मावास्यमिदं विश्वं यत्किञ्चिज्जगत्यां जगन्मनः । तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यचिद् धनम् ॥' इति । अस्तु किं तत इत्यत आह– **तत्र चेति** ॥ तस्मिन्नेव भागवते 'इति मन्त्रोप-निषदं व्याहरन्तं समाहितम्' इत्यनेन मनोः स्तोतृत्वं 'तान् तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः' इति अत्र यज्ञनाम्नो विष्णोः स्तुत्यत्वं च स्पष्टं प्रतीयत इत्यर्थः । ततोऽपि किं प्रकृत इत्यत आह– **तत्समाख्याना-दिति**[१] ॥ यद्यपि 'भागवते चायमेवार्थ उक्तः' इति भाष्यस्य भागवते अष्टमादौ अयं मनोः स्तोतृत्वं यज्ञनाम्नः स्तुत्यत्वमित्येवंरूपोऽर्थ उक्त इत्येव व्याख्यान-मुचितम् । तावतैवोक्तार्थे भागवतस्य प्रमाणत्वलाभात् । ननु ईशावास्यादि-

१. (तत्समाख्ययेति)

मन्त्राणां योऽर्थ इत्यादिव्याख्यानं तस्य प्रकृतानुपयोगात् । तथाऽपि तथा व्याख्याने मन्वादेः ऋषित्वादिकं भागवतोक्तमित्येव विज्ञायते । न तु ईशावास्यादिमन्त्रऋषित्वादिकम् । भागवते ईशावास्यादिमन्त्रोदाहरणपूर्वकं मन्वादेः स्तोतृत्वाद्यकथनात् । टीकोक्तव्याख्याने तु ईशावास्यादिमन्त्राणां भागवते अर्थतो अनुवादलाभेन मन्वादेरीशावास्यादिमन्त्रऋषित्वादिकं सुज्ञानम् । अत एवं व्याख्यातमिति ज्ञातव्यम् । अनेन ईशावास्यादिमन्त्राणां योऽर्थो वक्ष्यते अयमेव भागवते अष्टमादावुक्तः । तत्र चार्थतो मन्त्रानुवादरूपे भागवते अयं मन्वादेः स्तोतृत्वादिरूपोऽर्थ उक्त इत्यावृत्त्या भाष्यं योजितं भवति । व्याख्येयत्वप्रयोजकविषयाद्यकथनप्रयुक्तां भाष्यकृतो न्यूनतां परिहरति –**अनेनति** ।। ऋष्यादिप्रदर्शनपरग्रन्थेन इत्यर्थः । अभ्यर्हितत्वाद् विषयाधिकारीति वक्तव्ये अधिकार्यादित्वेन वचनं स्ववचनप्रमाणभाष्यानुसारेणेति ज्ञेयम् । विषयादिसमुदायस्यैव व्याख्येयत्वप्रयोजकत्वं नतु एकैकस्येति अभिप्रायेण सम्बन्ध इत्येकवचनम् । विषयादिमतोऽपि उक्तानर्थस्य अनादरेण व्याख्येयत्वमित्यत आह– **गहनार्थत्वाच्चेति** ।। उक्तं च टीकाकारैरन्यत्र गहनार्थत्वाच्च अन्यपरित्यागेन अस्यैव व्याख्येयत्वमिति ।।

ननु आद्यमन्त्रस्यैव व्यर्थत्वात् तद्गतेशावास्यपदव्याख्यानपरमुत्तरभाष्यं सुतरामनर्थकमित्यतो मन्त्रं तावदवतारयति– **उपदिष्टमपीत्यादिना** ।। उपनिषद् विच्छिन्नतृष्णत्वमाद्येन मन्त्रेण विधत्ते इत्यन्वयः । यद्वा, मनुरिति कर्तृपदमध्याहार्यम् । तथात्वे उपनिषदधिकारसिद्ध्यर्थमित्येकपदम् । ननु तत्वप्रतिपादनाय प्रवृत्तोपनिषद् विच्छिन्नतृष्णत्वं कथं प्रतिपादयेदित्यत उक्तं– **तावदिति** ।। तदेव स्पष्टयति– **तत्त्वं विवक्षुरिति** ।। 'अनेजदेकम्' इत्यादिनेति शेषः । तद्ध्यर्थभेदादेकवाक्यत्वं न स्यादित्यतो अवान्तरार्थभेदो न दोषायेत्याशयेनोक्तम्– **अधिकारसिद्ध्यर्थमिति** ।। तत्त्वज्ञानाधिकारस्य वैराग्यसिद्ध्यर्थमित्यर्थः । ननु तत्त्वोपदेशेनैव तत्त्वज्ञानसिद्धेः किं वैराग्यस्य

तत्राधिकारत्वकल्पनयेत्युक्तम्– **उपदिष्टमपीत्यादीतिशब्दान्तम्** ॥ अनेनान्वय-व्यतिरेकावुक्तौ । इतिशब्दो हेतौ । अधिकारसिद्ध्यर्थमित्यनेनान्वयः । नन्वेवं 'मा गृधः कस्यस्विद्धनम्' इत्येतावता वैराग्यस्य विहित्वादन्यद् व्यर्थमित्यत उक्तम्– **सोपपत्तिकमिति** ॥ एतच्चाग्रे स्पष्टम् । एवं मन्त्रमवतार्य भाष्य-मवतारयति–**तत्रेति** ॥ मन्त्र इत्यर्थः। मन्त्रस्याऽवश्यकत्वे सिद्ध इति वा । ननु विग्रहप्रदर्शनार्थमुत्तरभाष्यस्य प्रवृत्तिरुताऽऽवास्यपदव्याख्यानार्थम् । नाऽद्यः । ईशस्याऽवास्यमीशावास्यमित्येव वक्तव्यत्वात् । न द्वितीयः । ईशस्येत्यस्य व्यर्थत्वात् । आवास्यपदेन तदर्थलाभाच्चेत्यत उभ-योरपि विवक्षितत्वात् नान्यतरवैयर्थ्यमित्यभिप्रेत्याऽवास्यपदेन आवासयोग्यत्वलाभ-प्रकारं दर्शयन् विग्रहमपि दर्शयति– **अनेनेति** ॥ **आवासमर्हतीति** ॥ अनेन आङ्पूर्वद् वस निवास इत्यस्माद् 'अर्हे कृत्यतृचश्च'[१] इत्यर्हार्थे [२]अर्णप्रत्यये आदिवृद्धौ आवास्यमिति भवतीति उक्तं भवति । ननु ईशावास्यमित्यत्र अध्यापकैरीशेति वास्यमिति च पदद्वयस्य पठ्यमानत्वात् कथं भाष्ये एकपदत्वेन व्याख्यानम् । परेणापि अत एव भिन्नपदत्वेन व्याख्यातमिति चेन्मैवम् । 'द्रवत्पाणी शुभस्पती' इत्यादौ अध्यापकपदपाठातिक्रमेण ऋग्भाष्ये प्रकारान्तरेण व्याख्याततत्वेन अध्यापकपाठस्य अपपाठत्वाभिप्रायेण वा ऋष्यन्तरदृष्टैकपदत्वाभिप्रायेण वा सर्वज्ञभाष्यकृद्व्याख्यानस्य उपपन्न-तरत्वात् । नच पदद्वयस्यापि ऋष्यन्तरदृष्टत्वे तेन भाष्यकृदुक्तार्थालाभ इति वाच्यम् । ईशा परमेश्वरेण विभक्तिव्यत्ययेनेशस्य परमेश्वरस्य वास्यं वासार्हमिति व्याख्यानेन तल्लाभोपपत्तेः । अपव्याख्यानं तु अर्थानुपपत्तेरेवानुप-पन्नम् । नतु भिन्नपदत्वेन । युक्तं चैकपदत्वाश्रयणेन व्याख्यानम् । 'आत्मा-वास्यमिदं सर्वं यज्जगत्यां जगन्मनः' इति भागवते एकपदत्वेनैव अर्थतोऽ-स्यानुवादात् । भिन्नपदत्वस्य अर्थतोऽनुवादपक्षे आत्मवास्यमित्येव स्यान्न तु दीर्घतयेति भाति ॥

---

१. पा.अष्टा.३.३.१६९, सि.कौ.२८२२.          २. 'ण्यप्रत्यये' इति पाठेन भाव्यमिति भाति ।

**अन्यथाप्रतीतेति ॥** जगतीशब्दस्य पृथिवीपरत्वे सर्वमस्वतन्त्रं परमेश्वराधीन-मिति वक्ष्यमाणार्थालाभात् प्रकृतासङ्गतिः । 'प्रवृत्तये प्रकृतिगम्' इति वक्ष्यमाणप्रमाणविरोधश्च । अतोऽन्यथाप्रतीतित्वमिति भावः । **न प्रतीयत इति ।** प्रतीयमानस्य जगत ईशस्य वा परामर्शो नोपपद्यते । जगतेशेन वा त्यक्तेनेत्यस्य असङ्गतत्वात् । समासे अप्रधानतया प्रकृतस्येशस्य प्राधान्येन परामर्शायोगाच्चेति भावः । ईशपरामर्शपक्षोक्तद्वितीयदोषं परिहरति– **समास इति ॥ बुद्ध्या विवेकेनेति ॥** प्राधान्येन उपस्थितस्य विशिष्टस्य प्रथममन्वयबोधे जाते विशेषणविशेष्यव्यतिरेकेण विशिष्टस्याभावाद् विशेष्यान्वये बाधिते विशेषणेनान्वयस्य न्यायप्राप्तत्वमिति बुद्ध्या विवेकेनेत्यर्थः । एतस्य स्वर्गी ध्वस्त इत्याद्युदाहरणम् । यद्वा, शब्दतः प्राधान्यार्थतः प्राधान्ययोः बुद्ध्या प्राबल्यदौर्बल्यविवेके क्रियमाणे अर्थतः प्राधान्यस्यैव प्रबलत्वादीशस्य चार्थतः प्रधानत्वाद् युज्यते तेनेति परामर्श इत्यर्थः । त्यक्तेनेत्यस्य दत्तेनेति व्याख्यानेनैव प्रथमदोषपरिहारः सुज्ञान इति भावः । ननु तेनेतीशपरा-मर्शाङ्गीकारेऽपि वाक्यार्थाव्यवस्थितिरेव जगदीशस्याऽवासमर्हति । प्रकृत्यां जगत् । ईशेन दत्तेन भुञ्जीथाः । कस्यस्विद् राजादेः सकाशात् धनं मा गृध इत्येतेषामन्योन्यान्वयशून्यत्वादित्यतो भाष्यमुपलक्षणमित्यभिप्रेत्य स्वतः प्रवृत्त्यशक्तत्वादिति वक्ष्यमाणप्रमाणानुसारेण तेनेत्येतत् प्रकारान्तरेण व्याचष्टे– **पूर्वार्धेति ॥** जगत ईशावास्यत्वे ईशाधीनप्रकृत्याधारत्वे चोक्ते तत एवेशस्य स्वातन्त्र्यं जगतोऽस्वातन्त्र्यं च यत् तात्पर्यतः सिद्धं तत्परामर्शश्चाय-मित्यर्थः । एवं च सति ततश्चायमिति वक्ष्यमाणदिशा श्रौतविशेषणानां हेतु-हेतुमद्भावेनान्वयः सुगम इति भावः । नन्वेवमपि मन्त्रार्थानुपपत्तिरेव । जगत्स्वप्रवृत्तये ईशस्याऽवासमर्हतीत्येतदसिद्धम् । प्रमाणाभावात् 'जगत्यां जगत्' इत्यपि अप्रामाणिकम् । प्रामाणिकत्वे वा जगतः प्रकृत्यधीनत्वप्राप्तावपि ईशस्याधीनत्वाप्राप्तेः । नच प्रकृतेरीशाधीनत्वादीशाधीनप्रकृत्याधारस्य जगतः ईशाधीनत्वमविकलमिति वाच्यम् । प्रकृतेरीशाधीनत्वे प्रमाणाभावादित्यतः

सर्वत्र प्रमाणोपन्यासेनासिद्धिं परिहरन् श्रौतपदानां हेतुहेतुमद्भावेन योजना-प्रकारप्रदर्शनपूर्वकं मन्त्रार्थं सङ्गृह्णाति– **ततश्चेति ॥** इदं सर्वं यत्किञ्च जगदित्येतेषां तच्छब्दाध्याहारपूर्वकमन्वयं प्रदर्शयति– **यत्किञ्च जगदिदं तत्सर्वमिति ॥** यदिदं किञ्च जगत् तत्सर्वमिति योजना । प्रवृत्त्यर्थमात्मन इत्यस्याऽत्मनः प्रवृत्त्यर्थमिति सम्बन्धः । एवमसिद्धिं परिहृत्य 'तेन त्यक्तेन' इत्यत्रास्य साक्षाद् हेतुत्वासम्भवाद् अवान्तरसाध्यमध्याहरति– **तेन ज्ञायत इति ॥** एवमेव अतोऽपीत्युत्तरवाक्यमपि व्याख्येयम् ॥

ननु ईशावास्यमित्यनेनैव ईशजगतोः स्वातन्त्र्यपारतन्त्र्यसिद्ध्या जगत्यां जगदिति व्यर्थमित्यतः प्रकारान्तरेण ईशादेः स्वातन्त्र्याद्युपपादकत्वान्न वैयर्थ्यमित्याशयेनाऽह– **किञ्चेति ॥** नच 'जगत्यां जगत्' इति श्रुतेः स्वयं प्रमाणत्वात् तदुक्तेऽर्थे 'आकाश एव' इति (बृ.उप. ३.७.८) श्रुत्युपन्यासोऽयुक्त इति वाच्यम् । 'प्रमाणस्य प्रमाणं चेद् बलवद् विद्यते मुने । ब्रह्मदृष्टानतो मन्त्रान् प्रमाणं सलिलेश्वर' इत्यादिप्रमाणानुसारेण बलवत्त्वार्थं वा मीमांसा-प्रकारप्रदर्शनार्थं वा तदुपन्यासोपपत्तेः । **आकाश एवेति ॥** 'दीप्तेराकाश-शब्दोक्ता श्रीर्हि सर्वाश्रया मता' इति बृहद्भाष्यदिशा आकाशशब्दश्चित्-प्रकृतिवाचक इति भावः ॥

एवमसिद्धिं परिहृत्यासङ्गतिं परिहर्तुं श्रुतावध्याहर्तव्यमाह– **प्रकृतिश्चेति ॥** अत्राप्यसिद्धिं परिहरति– **एतस्मिन्निति ॥** 'अक्षरमम्बरान्तधृतेः' (ब्र.सू. १.३.१०) इत्युक्तदिशा अक्षरशब्दवाच्यो विष्णुरिति भावः । एवं प्रकारद्वयेन ईशजगतोः स्वातन्त्र्यपारतन्त्र्ये उपपाद्य तत्र तात्पर्यसिद्धं स्वातन्त्र्यं 'तेन त्यक्तेन' इत्यत्र हेतुत्वेन योजयति– **यत एवमिति ॥** आवृत्तस्य तेनेत्यस्य हेतौ तृतीयान्तत्वमित्याशयेनोक्तम्– **कारणेनेति ॥** परमेश्वरस्य साक्षाद् राजादिवद् वित्तदातृत्वमसम्भवीत्यत उक्तम्– **यदृच्छयेति ॥** भगवदि-च्छयेत्यर्थः ॥

भुज धातोरनेकार्थत्वाद् विवक्षितमर्थं दर्शयति– **भोगं कुर्या इति ॥** अत्र 'यज्जगत्यां जगन्मनः' इति भागवतसमाख्यया स्वकीयं मनः सम्बोध्य मध्यमपुरुषप्रयोगः कृत इति द्रष्टव्यम् । प्रकारद्वयसिद्धमस्वातन्त्र्यमपि हेतुत्वेन योजयति – **यतश्चेति ॥** तेनेत्यतः परं कारणेनेत्यनुवर्तते । अप्रयोजकत्वपरिहाराय तस्य दाने सामर्थ्याभावादित्युक्तम् । ननु 'मा गृधः कस्यस्विद् धनम्' इत्यत्र परकीयद्रव्यापहारेच्छा न कार्येति प्रतीयते । तथात्वेऽस्य मन्त्रस्य वैराग्योपदेशरूपत्वं न स्यादित्यतो 'अतो नान्यं प्रयाचयेत्'इति भाष्यं मनसि निधाय व्याचष्टे– **राजादेः सकाशादिति ॥** ननु प्रमाणे इदं जगद् ईशावास्यं स्वतः प्रवृत्त्यशक्तत्वादिति साध्यसाधनभावः प्रतीयते । सोऽनुपपन्नः । असिद्धेन स्वतःप्रवृत्त्यशक्तत्वेन सिद्धेशावास्यत्वस्य साधनानुपपत्तेः । अनुपयुक्तं चेशावास्यत्वसाधनम् । स्वतन्त्रत्वादीशेन दत्तेन भुञ्जीथाः । राजादेरस्वतन्त्रत्वात् ततो मा गृध इति ह्यर्थोऽत्र विवक्षितः । तत्र जगत ईशावास्यत्वसाधनस्य क उपयोगः । किन्तु ईशजगतोः स्वातन्त्र्यपारतन्त्र्यसाधनस्यैवेत्यत एव-शब्दाध्याहारेण स्वतःप्रवृत्त्यशक्तत्वस्य साध्यत्वलाभप्रकारं दर्शयति– **स्वतःप्रवृत्त्य शक्तत्वादेवेति ॥**

एवशब्दाभिप्रायमाह– **अन्यथेति ॥** यदि स्वतःप्रवृत्त्यशक्तं न स्यात् तर्हि प्रयोजनाभावादीशावास्यं न स्यादित्यर्थः । अयं भावः । नात्र यथाश्रुतः साध्यसाधनभावः । किम्त्वीशावास्यत्वात् स्वतःप्रवृत्त्यशक्तमिति विपरीत एव । नचैवं वक्रोक्तिर्व्यर्थेति वाच्यम् । साधनस्येशावास्यत्वस्य साध्यस्वतः प्रवृत्त्यशक्तत्वायोगव्यवच्छेदज्ञापनार्थत्वात् । साधनस्य साध्यायोगव्यवच्छेदे ज्ञापिते व्यभिचारशङ्काया हेतूच्छेदेनाप्रयोजकत्वशङ्कायाश्चानुदयात् । एवमेव हि वह्निमत्त्वादेव धूमवत्त्वमित्यादिप्रयोगो व्याख्यायते शास्त्रेषु । अन्यथा तत्रापि यथाश्रुतसाध्यसाधनभावप्रसङ्गेन बहुविप्लवप्रसङ्गादिति । अवधारणमहिम्ना लब्धं यथास्थितसाध्यसाधनभावं दर्शयति– **अत ईशावास्यत्वादिति ॥** तेन त्यक्तेनेत्यत्रेशाधीनत्वस्यैव हेतुत्वं, नतु स्वतःप्रवृत्त्यशक्तत्वस्येत्यत ईशा-

धीनमित्युक्तम् । यस्मादित्यस्य पूर्वोत्तराभ्यां सम्बन्धमभिप्रेत्याऽऽह– **यस्मादिति** ॥ ततोऽपीत्यस्य स्वतःप्रवृत्त्यशक्तमीशाधीनमिति पूर्वेणान्वयः । अतः-शब्दान्वयार्थं यच्छब्दमनूद्य व्याचष्टे– **यदिति** ॥ यदित्यस्याव्ययत्वं वा प्रथमाया विपरिणामं वाऽङ्गीकृत्येदं व्याख्यानमित्यवगन्तव्यम् । तदधीन-प्रवृत्तित्वादित्येतत् पूर्वसिद्धानुवादरूपमेव नापूर्वहेतुकथनमित्याशयेनोक्तम्– **एवमुक्तप्रकारेणेति** ॥ अत इत्यस्य पूर्वेणोत्तरेण च सम्बन्ध इत्याशयेनोक्तम् –**अतस्तद्दत्तेनेति** ॥ **अत इति** ॥ यतो जगत् स्वतःप्रवृत्त्यशक्तमतो राजादेरस्वतन्त्रत्वेन दाने सामर्थ्याभावादित्यर्थः । प्रयाचयेदिति स्वार्थे णिजित्याशयेनाऽऽह– **प्रयाचेतेति** ॥ प्रमाणे णिजन्तस्य धात्वन्तरत्वेन परस्मै-पदप्रयोगेऽपि याचतेरात्मनेपदित्वात् प्रयाचेतेत्युक्तमिति ज्ञातव्यम् । उपाहृत-भागवतानुसारेण स्वमनः सम्बोध्य मनुनोक्तत्वाद् भवानित्युक्तम् ॥ १ ॥

## (अथ श्रीपूर्णबोधाचार्यशिष्यनृसिंहाचार्यकृतं याज्ञीयमन्त्रोपनिषद्भाष्यटीकादुर्गमवाक्यार्थविवरणम्)

ॐ ॥ **श्रीमद्विष्णुपदाम्भोजे वसन्तो रेणवः पराः ।**
**लक्ष्मीब्रह्मशिवेन्द्रादिवन्दिताः पावयन्तु माम् ॥**

अथागणितगुणमणिनिकररमणीयप्रभापुञ्जनिरस्ताशेषावद्यध्वान्तपरम-विचित्रापरिमितानन्दोच्चयनिकायकायश्रीमत्कमलारमणपरमप्रेमसौरभयुतलोचन-नलिनदिव्यकटाक्षरसामृतमुख्यपात्रभूतेन गिरिशगरुडाहिवरगुर्वाद्यखिलामरनिकाय-निषेवितचरणारविन्दपरागेण करतलकलितामलकवदाभातसाङ्गापरिमितनिगम-निगदितपरमार्थसार्थेन भगवता मध्वदेवेन प्रणीतं याज्ञीयमन्त्रोपनिषद्भाष्यवरं देवसमूहमनिदुरवगाहं सुजनानुकम्पया व्याचिख्यासुः भगवान् जयतीर्थमुनिः तदादौ प्रारिप्सितानन्तरायपरिसमाप्त्यादिसिद्ध्यर्थं रमारमणं भगवन्तं प्रार्थयते– **श्रीमच्छ्रीवदनेति**॥ भगवान् हरिः लोचनालिभ्यां नोऽस्मान् पात्वित्यन्वयः । प्रसादपूर्वकत्वं दृष्टेर्द्योतयितुं **श्रीमदित्यादि** ॥ रमामुखाम्भोजविषयिण्या

दृष्टेस्तद्‌गतनिरतिशयसौन्दर्यसौरभास्वादनकथनेन परमप्रेमरसो हि तत्र सूचितः । ताभ्यामेव लोचनाभ्यां नः पात्वित्यनेन स्वविषयेऽप्यनुग्रहपूर्वकत्वं सिद्ध्यति । लक्ष्म्यादिकं विहाय तस्यैव प्रार्थनहेतुरप्यनेनोक्तः । अनेन सर्वातिशयस्य द्योतितत्वात् 'यत्ते रूपं कल्याणतमं' इत्युपनिषदुक्तं कल्याणतमत्वमप्यनेनाऽह । असमानाधिकपरमसौन्दर्यात्मकविग्रहभावे स्वस्य परमानन्दज्ञानद्युतिबलौदार्याद्यपरिमितगुणात्मिकातिसुन्दरतरविग्रहायाः सकलजगज्जनन्या अवद्यगन्धविधुरायाः भोक्तृत्वं सञ्जाघटाति । भाषाद्यपद्योक्तविशेषणानामप्युपपादकमेतत् । सर्वोत्कृष्टलक्ष्मीपतित्वोपपादनेनैव सर्वस्यापि लाभादिति ॥

नन्वत्रोपनिषदि यज्ञनाम्नो भगवतः प्रतिपाद्यत्वात् तस्य च आद्यश्लोकेऽनुक्तेः कथमनधिकृतदेवतास्तुत्यादिपरत्वमस्येत्यत आह **सर्वयज्ञेति** ॥ डित्थादिशब्दवद् यज्ञशब्दस्य भगवति साङ्केतिकत्वपरिहाराय तत्प्रवृत्तिनिमित्तकथनेन तन्नामत्वमेवानेनोक्तमिति भावः । नन्वत्र यज्ञभोक्तृत्वाद् यज्ञनामकत्वमुक्तम् । भवेदेतदेवम् । यदि तद्भोक्तृत्वेन तच्छब्दाभिधेयत्वं प्रमितं स्यादित्यत आह– **यथोक्तमिति** ॥ 'स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता । यतः सर्वस्य तेनाहं सर्वोऽपीत्यृषिभिः स्तुतः । सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः' (गी. भा. ७.६.) इत्यत्र तत्तत्स्रष्टृत्वादिना तत्तच्छब्दवाच्यत्वमुक्त्वा 'सुखरूपस्य भोक्तृत्वात्' इत्यनेन सुखकारणभोक्तृत्वाच्च तद्वाचकशब्दाभिधेयत्वं ह्युच्यत इति भावः । **भोगस्तु लीलयेति** ॥ भगवता बादरायणेन प्रयोजनाधिकरणे प्राप्तप्रयोजनत्वेन भगवतो 'लोकवत्तु लीलाकैवल्यम्' (ब्र.सू. २-१-३४) इति जगद्विषयप्रवृत्तेः केवललीलात्वं हि निर्णीतम् । तद्वद्भोगोऽपि पूर्णतमानन्दत्वेन प्राप्तफलाभावेऽपि केवललीलयैवोपपद्यते । पूर्णानन्दस्वरूपस्य 'क्रीडाभोगो न चान्यथा' (मा.उप.भा. १.३.) इति माण्डूकभाष्योदाहृतप्रमाणाच्च । न चैवं भोगे नैष्फल्यं स्यादिति वाच्यम् । 'आगमिष्यत्सुखं चापि तच्चास्त्येव सदाऽपि तु । तथाऽप्यचिन्त्यशक्तित्वाद् जातं सुखमतीव च' (गी.भा.७.६) इत्यादिना अवैयर्थ्यस्याप्युपपादितत्वादिति भावः ॥

जगद्धातृत्वस्य पूर्णानन्दोपपादकत्वं कुत इत्यत आह– **तदुक्तमिति** ॥ 'को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' (तै.उप.२.७.१)इति श्रुतेरयमर्थः, आसमन्तात् काशमानत्वाद् आकाशपदोक्तः परमात्मा यदि पूर्णानन्दो न स्यत् तर्हि असौ अपर्याप्तपूर्णशक्तिः स्यात् । तथा च सति सर्वान् न चेष्टयेत् तथा च तेनाप्रेरितः क एवान्यात् लौकिकचेष्टां कुर्यात् कः प्राण्यात् प्रकृष्टां धर्मादिविषयिणीं वा कुर्यात् । केवलजगतश्चास्वातन्त्र्येण प्रवृत्तावसामर्थ्यं प्रमितम् । अतो लोकस्य लौकिकवैदिकचेष्टान्यथानुपपत्त्या तत्कर्तृत्वं विष्णोरेव वाच्यम् । अन्यस्यासम्भवात् । एवं च सम्पूर्णशक्तिता-सिद्धिः । सम्पूर्णशक्तित्वेनैव च प्रचुरानन्दत्वं सिद्ध्यति । न हि स्वस्याल्पभावं निवारयितुमशक्तस्य सम्पूर्णशक्तित्वं सम्भवतीति । यद्वा, यद्येषो विष्णुः पूर्णानन्दो न स्यात् तदाऽसौ लोकान्न प्रवर्तयेत् । आनन्दोद्रेक-मन्तरेण तत्प्रवृत्तौ कारणाभावात् । तथा च को लोकं चेष्टयेत्, धर्माधर्मादौ च प्रवर्तयेत् । अन्यस्यास्वातन्त्र्यात् । अतो लोकचेष्टान्यथानुपपत्त्या तत्कर्ता विष्णुः पूर्णानन्दः सिद्ध्यतीति ॥

ननु प्रवृत्तेश्चातुर्विध्यात् कारणान्तरेणैव स्यादिति चेन्न । न तावद् दुःखोद्रेकाद् रोदनादिवत्, दुःखवतो दुःखनिवृत्त्यर्थम् औषधादिवद् भगवतो विष्णोः प्रवृत्तिः सम्भवति । यथोक्तम्– 'न ह्यार्ताः कर्म कुर्वन्ति मुग्धाश्चैव विशेषतः' इत्यादि । न हि सुखातिशयलाभार्थं स्रक्चन्दनवनितादाविव प्रवृत्तिः सम्भवति । तथात्वे पूर्णमपूर्णतापत्तेः । न ह्येतावत्पर्यन्तं स्वस्मिन् पूर्णतां सम्पादयितुमसमर्थस्यैतादृशी प्रवृत्तिः सम्भवति । तस्मात् पूर्णानन्दत्वहेतुकैव प्रवृत्तिरिति । अत एव भगवान् बादरायणोऽपि जगाद 'तद्धेतुव्यपदेशाच्च' (ब्र.सू.१.१.१४.) इति । **नित्यं नित्यात्मनेति** ॥ 'सदाऽनित्यतयाऽनित्यं नित्यं नित्यात्मना यतः । नित्ययैव स्वशक्त्येशो नियामयति नित्यदा' (न्या.वि.४.२.६.) इति 'समना च' इत्यधिकरणन्यायविवरणे, 'प्रवृत्तयश्च ताः सर्वा नित्यं नित्यात्मना यतः । यथाऽनित्यतयाऽनित्यं नित्यशक्त्या स्वयेश्वरः । नियामयति नित्यं च' (अनुव्या.२.२.५.) इत्यनुव्याख्याने चानाधेयातिशयस्यापि

नित्यस्य नित्यत्वस्वरूपसत्तादीनां भगवदधीनत्वस्योक्तत्वादिति भावः । धर्म्यात्मना नित्यत्वेऽप्यतिशयश्चास्तीति ज्ञातव्यम् । वियदधिकरणे नित्यानामप्यव्याकृताकाशादीनां भगवदधीनविशेषावाप्तेर्वेदपतिनैवोपपादितत्वात् । 'याथातथ्यतः' इत्युपलक्षणत्वेन जगद्धातृत्वस्योपपादितत्वादिति भावः ॥

**वायुरनिलममृतमिति** ॥ तत्र हि कैमुत्येन विष्णोरमृतत्वमुच्यत इति भावः । यत्ते रूपमिति जरामरणादिदोषस्वभावप्रकृत्यादिदेहभिन्नज्ञानसुखशक्त्याद्यात्मकविग्रहत्वमेव कल्याणतमरूपत्वमिति भावः । **स पर्यगादिति** ॥ पूर्णानन्दत्व एव हि शोकोपलक्षितसकलदोषराहित्यं सम्भवति । अव्रणमिति वाक्यशेषे च पूर्णत्वं चोक्तमिति भावः । **तस्मिन्निति** । तत्र भगवतो वायुदेवस्य सर्वकर्मणां भगवदर्पणकर्तृत्वोक्त्या सर्वकर्मपूज्यत्वेन भगवतः सर्वयज्ञभोक्तृत्वलाभः । स्वस्य गुरुदेवताभेदभावेन हरिनमनेनैव गुरुनमनलाभात् पृथङ्नतिः किमर्थेत्यतः शिष्यान् ग्राहयितुमित्याह– **देवतेति** ॥ अत एव गुरुमपीत्यनभिधाय गुरुत्वेनापीत्यब्रवीत् । अपिशब्देन समुच्चयसिद्धेश्चशब्दवैयर्थ्यादाह– **च इति यस्मादित्यनेनेति** ॥ लक्ष्म्यपेक्षयाऽवधारणं मुख्यमेव, इतरेषां देवानामन्यतोऽपि ज्ञानसम्भवेऽपि तस्यैव स्वातन्त्र्यादवधारणं युज्यत इति भावः । **यथायोग्यमिति** ॥ रमापेक्षया विद्यत इति ब्रह्माद्यपेक्षया उत्पद्यत इति क्रियाध्याहार इत्यर्थः । **यो ह वा इति** । आर्षेत्यत्र स्वार्थे वा तद्द्रष्टृत्व-रूपसम्बन्धार्थे वा अण् । तृतीये तु इदं मानम्– **'ते चैकस्यापि बहवः स्युः सूक्तस्यापि ऋच एव च'** इत्यादि । स्थाणुं वर्च्छति स्थाणुत्वं वा प्राप्नोति,नरके वा पद्यते प्रमीयते वेत्यर्थः । यजनादित्रिकस्य क्रमेण फलत्रयमनेनोक्तम् इति ज्ञातव्यम् । पापीयान् भवतीत्येतत्सर्वत्रोपपादकतया ज्ञेयम् ॥

'अवहितात्मना' इत्यत्र अवहितपदार्थप्रतीतेरात्मशब्दस्य स्वरूपार्थताप्रतीतेश्च तद्व्याचष्टे– **अवहितेति** ॥ **रक्षोभि**रित्यादिना रक्षोनिरसनमात्रफलकत्वं मनुकृतस्तोत्रस्याभिप्रेयत इति प्रतीतिं निवारयितुमाह– **यद्यपीति** ॥ अतितीव्र-

जगद्धातृत्वस्य पूर्णानन्दोपपादकत्वं कुत इत्यत आह– **तदुक्तमिति** ॥ 'को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' (तै.उप.२.७.१)इति श्रुतेरयमर्थः, आसमन्तात् काशमानत्वाद् आकाशपदोक्तः परमात्मा यदि पूर्णानन्दो न स्यत् तर्हि असौ अपर्याप्तपूर्णशक्तिः स्यात् । तथा च सति सर्वान् न चेष्टयेत् तथा च तेनाप्रेरितः क एवान्यात् लौकिकचेष्टां कुर्यात् कः प्राण्यात् प्रकृष्टां धर्मादिविषयिणीं वा कुर्यात् । केवलजगतश्चास्वातन्त्र्येण प्रवृत्तावसामर्थ्यं प्रमितम् । अतो लोकस्य लौकिकवैदिकचेष्टान्यथानुपपत्त्या तत्कर्तृत्वं विष्णोरेव वाच्यम् । अन्यस्यासम्भवात् । एवं च सम्पूर्णशक्तिता-सिद्धिः । सम्पूर्णशक्तित्वेनैव च प्रचुरानन्दत्वं सिद्ध्यति । न हि स्वस्याल्पभावं निवारयितुमशक्तस्य सम्पूर्णशक्तित्वं सम्भवतीति । यद्वा, यद्येषो विष्णुः पूर्णानन्दो न स्यात् तदाऽसौ लोकान्न प्रवर्तयेत् । आनन्दोद्रेक-मन्तरेण तत्प्रवृत्तौ कारणाभावात् । तथा च को लोकं चेष्टयेत्, धर्माधर्मादौ च प्रवर्तयेत् । अन्यस्यास्वातन्त्र्यात् । अतो लोकचेष्टान्यथानुपपत्त्या तत्कर्ता विष्णुः पूर्णानन्दः सिद्ध्यतीति ॥

ननु प्रवृत्तेश्चातुर्विध्यात् कारणान्तरेणैव स्यादिति चेन्न । न तावद् दुःखोद्रेकाद् रोदनादिवत्, दुःखवतो दुःखनिवृत्त्यर्थम् औषधादिवद् भगवतो विष्णोः प्रवृत्तिः सम्भवति । यथोक्तम्– 'न ह्यार्ताः कर्म कुर्वन्ति मुग्धाश्चैव विशेषतः' इत्यादि । न हि सुखातिशयलाभार्थं स्रक्चन्दनवनितादाविव प्रवृत्तिः सम्भवति । तथात्वे पूर्णमपूर्णतापत्तेः । न ह्येतावत्पर्यन्तं स्वस्मिन् पूर्णतां सम्पादयितुमसमर्थस्यैतादृशी प्रवृत्तिः सम्भवति । तस्मात् पूर्णानन्दत्वहेतुकैव प्रवृत्तिरिति । अत एव भगवान् बादरायणोऽपि जगाद 'तद्धेतुव्यपदेशाच्च' (ब्र.सू.१.१.१४.) इति । **नित्यं नित्यात्मनेति** ॥ 'सदाऽनित्यतयाऽनित्यं नित्यं नित्यात्मना यतः । नित्ययैव स्वशक्त्येशो नियामयति नित्यदा' (न्या.वि.४.२.६.) इति 'समना च' इत्यधिकरणन्यायविवरणे, 'प्रवृत्तयश्च ताः सर्वा नित्यं नित्यात्मना यतः । यथाऽनित्यतयाऽनित्यं नित्यशक्त्या स्वयेश्वरः । नियामयति नित्यं च' (अनुव्या.२.२.५.) इत्यनुव्याख्याने चानाधेयातिशयस्यापि

नित्यस्य नित्यत्वस्वरूपसत्तादीनां भगवदधीनत्वस्योक्तत्वादिति भावः । धर्म्यात्मना नित्यत्वेऽप्यतिशयश्चास्तीति ज्ञातव्यम् । वियदधिकरणे नित्यानामप्यव्याकृताकाशादीनां भगवदधीनविशेषावाप्तेर्वेदपतिनैवोपपादितत्वात् । 'याथातथ्यतः' इत्युपलक्षणत्वेन जगद्धातृत्वस्योपपादितत्वादिति भावः ॥

**वायुरनिलममृतमिति** ॥ तत्र हि कैमुत्येन विष्णोरमृतत्वमुच्यत इति भावः । यत्ते रूपमिति जरामरणादिदोषस्वभावप्रकृत्यादिदेहभिन्नज्ञानसुखशक्त्याद्यात्मकविग्रहत्वमेव कल्याणतमरूपत्वमिति भावः । **स पर्यगादिति** ॥ पूर्णानन्दत्व एव हि शोकोपलक्षितसकलदोषराहित्यं सम्भवति । अव्रणमिति वाक्यशेषे च पूर्णत्वं चोक्तमिति भावः । **तस्मिन्निति** । तत्र भगवतो वायुदेवस्य सर्वकर्मणां भगवदर्पणकर्तृत्वोक्त्या सर्वकर्मपूज्यत्वेन भगवतः सर्वयज्ञभोक्तृत्वलाभः । स्वस्य गुरुदेवताभेदभावेन हरिनमनेनैव गुरुनमनलाभात् पृथङ्नतिः किमर्थेत्यतः शिष्यान् ग्राहयितुमित्याह– **देवतेति** ॥ अत एव गुरुमपीत्यनभिधाय गुरुत्वेनापीत्यब्रवीत् । अपिशब्देन समुच्चयसिद्धेश्चशब्दवैयर्थ्यादाह– **च इति यस्मादित्यनेनेति** ॥ लक्ष्म्यपेक्षयाऽवधारणं मुख्यमेव, इतरेषां देवानामन्यतोऽपि ज्ञानसम्भवेऽपि तस्यैव स्वातन्त्र्यादवधारणं युज्यत इति भावः । **यथायोग्यमिति** ॥ रमापेक्षया विद्यत इति ब्रह्माद्यपेक्षया उत्पद्यत इति क्रियाध्याहार इत्यर्थः । **यो ह वा इति** । आर्षेत्यत्र स्वार्थे वा तद्द्रष्टृत्व-रूपसम्बन्धार्थे वा अण् । तृतीये तु इदं मानम्– **'ते चैकस्यापि बहवः स्युः सूक्तस्यापि ऋच एव च'** इत्यादि । स्थाणुं वर्च्छति स्थाणुत्वं वा प्राप्नोति,नरके वा पद्यते प्रमीयते वेत्यर्थः । यजनादित्रिकस्य क्रमेण फलत्रयमनेनोक्तम् इति ज्ञातव्यम् । पापीयान् भवतीत्येतत्सर्वत्रोपपादकतया ज्ञेयम् ॥

'अवहितात्मना' इत्यत्र अवहितपदार्थप्रतीतेरात्मशब्दस्य स्वरूपार्थताप्रतीतेश्च तव्द्याचष्टे– **अवहितेति** ॥ **रक्षोभि**रित्यादिना रक्षोनिरसनमात्रफलकत्वं मनुकृतस्तोत्रस्याभिप्रेयत इति प्रतीतिं निवारयितुमाह– **यद्यपीति** ॥ अतितीव्र-

तपस्तपता तेन राक्षसागमप्रसक्तेः प्रागेव स्तुतिकरणान्मोक्षार्थत्वं ज्ञायते । तच्च भागवते स्पष्टम् । फलान्तरानुक्तेः सर्वस्य मोक्षशेषत्वनिश्चयात् 'तेन त्यक्तेन भुञ्जीथाः' इत्यादिना अधिकारिणं सम्बोध्य उच्यमानत्वात् परम-मोक्षार्थत्वं च ज्ञायत इति भावः । रक्षोभिः खादितुं सम्प्राप्तः विष्णुं तुष्टाव, तथा राक्षसानां प्राप्तिसमये स्तोत्रं श्रुत्वा प्रसन्नेन यज्ञेन मोचित इति भाष्यार्थः प्रतीयते । तथा च कथमिदं तात्पर्यवर्णनं स्यादिति चेन्न । तथात्वे भागवतविरोधात् । तत्र हि "इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् । दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवंन् क्षुधा ।। तांस्तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः । यामैः परिवृतो देवैर्हत्वाऽशासत् त्रिविष्टपम् ।।" (८.१. १७.१८.) इत्युक्तत्वाद् इत्यभिप्रेत्य भाष्यं यथावद्योजयति– **तदा स्तुतिकाल इति** ।।

अन्येषां सर्वेषां तैर्वध्यत्वादर्शनात् कथं तैर्वध्यत्वं तथाऽन्येषामित्युक्तिरित्यत आह– **अन्येषामिति ।।** यद्वा तेषामवध्यत्ववरं दत्वा अन्येषां तैर्वध्यत्वशापं प्रादादिति प्रतीयते । तदचारु । अन्येषां निरपराधित्वेनाप्रसक्तेरित्यत इदं वाक्यमिति ज्ञेयम् । ननु यथा तेषामवध्यत्वं प्रादात् तथाऽन्येषां तैर्वध्यत्वमिति तथाशब्दस्य उपमार्थताप्रतीतेः कथमिदं व्याख्यानमित्यत आह– **तथा शब्द इति ।।** अष्टमादौ अष्टमस्याऽदिमेऽध्याये । नन्वत्राधिकारिणामेवाप्रतीतेः कथं तत्सम्बन्धो दर्शितो भवतीत्यत आह– **अधिकारिणामिति ।।**[1] फलान्तरा-नुक्तस्यैव मोक्षप्रयोजनकत्वं सूचितं द्रष्टव्यम् ।।

तत्त्वं विवक्षुः परमात्मतत्त्वं वक्तुमिच्छुः मनुः विच्छिन्नविषयतृष्णत्वं विधत्त इति सम्बन्धः ।। **सोपपत्तिकमिति ।।** प्रथमार्धतात्पर्यवर्णनं तेनेतीति प्राधान्येन प्रस्तुतजगत्परामर्शकत्वे तस्यास्वातन्त्र्यव्युत्पादनमयुक्तं प्रसज्येत । ईशस्य तु समासोपसर्जनतया प्रस्तुतत्वादिति भावः । त्यक्तस्येति स्वत्यक्त-स्येत्यर्थः । अन्यकर्तृकत्वेऽपि त्यागस्य यत्र कुत्रचित् त्यक्तस्येति वा ज्ञेयम् ।

१. अधिकार्यादीनामिति ।।

**पूर्वार्धेति** । पूर्वार्धतात्पर्येण यदीश्वरस्वातन्त्र्यम् अन्यस्यास्वातन्त्र्यं चेति सिद्धम्, तदुभयपरामर्शोऽयमित्यर्थः । अत एवास्यार्थद्वयस्यैव हेतुतयोत्तरत्र साध्यद्वयसम्बन्धः प्रदर्शयिष्यते । तात्पर्यसिद्धार्थपरामर्शकत्वाभावे पूर्वोत्तरार्धयोः हेतुहेतुमद्भावो न प्रतीयेत । न चैतद्भाष्यानुक्तं, अतो नान्यं प्रयाचयेदित्यतः- शब्देनैव तथा व्याख्यातत्वादिति हृदयम् ॥

नन्वीश्वरदत्तेनैव भोजनमयुक्तं न हीश्वरः स्वयमागत्य धनं प्रयच्छतीत्यत आह– **यदृच्छेति** ॥ 'मा गृधः कस्यस्विद्धनम्' इत्यत्र परकीयद्रव्यापहारेच्छा न कर्तव्येत्येव भासते । अतः कस्यचिद्राजादेः सकाशादिति व्याख्या । अत एव भाष्येऽप्यतो नान्यं प्रयाचयेदित्युक्तम् । ननु मन्त्रे ईशावास्यत्वहेतोः साधकतयोक्तस्य जगदस्वातन्त्र्यस्य भाष्ये कथं तल्लिङ्गतया व्यपदेशः । अन्योन्याश्रयप्रसङ्गादित्यतः सावधारणं योजयति– **स्वत इति** । सावधारणत्वे च यथा वह्निमत्त्वादेव धूमवत्त्वमित्युक्तौ वह्नेर्धूमप्रयोजकतालाभेन धूमस्य गमकत्वं, वह्नेर्गम्यत्वं च लभ्यते । तद्वदत्रापीति न विरोध इति भावः । तद्दत्तेनैव भुञ्जीथा इत्यत्र अधिकारिसम्बोधनेन उक्तत्वात् 'नान्यं प्रयाचयेत्' इत्यत्रापि भवान् इत्यध्याहृतम् ॥ १ ॥

## (उपनिषत्)

*(विहितकर्मानुष्ठानस्य ज्ञानसाधनत्वप्रतिपादनम्)*

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥**

## (भाष्यम्)

**अकुर्वतः कर्म न लिप्यत इति नास्ति–**

**अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।**
**ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम् ।**
**अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदा' इति नारदीये ॥ २ ॥**

## (टीका)

तृष्णाविच्छेदवत् स्वोचितकर्मानुष्ठानमप्यावश्यकं ज्ञानार्थिनामित्येतत् **'कुर्वन्नेव'** इति द्वितीयन्त्रेण विधत्ते । तत्र **'नान्यथेतोऽस्ति'** इत्येतद्दुर्गमार्थत्वाद्व्याख्याति– **अकुर्वत** इति ॥

**ततश्चायं मन्त्रार्थः** । शतं समाः शतं वर्षाणि इह मानुषादिजन्मनि यज्जिजीविषेत् जीवितुमिच्छेत् तत् कर्माणि स्वोचितानि कुर्वन्नेव । आमरणं भगवत्पूजात्मकान्यसङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः? एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते । स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि न प्रागुत्तराणि कर्माणि पापानि बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणाद् अन्यथा कर्म न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ततश्चासौ ज्ञाने नाधिक्रियते । अशुद्धचित्तत्वात् । अतः कर्माणि कार्याणीति ।

*(अद्वैतमतानुसारेण मन्त्रार्थः)*

अपरे व्याचक्षते । ज्ञानिनः सर्वकर्मत्यागः पूर्वमन्त्रेण विहितः । यथा– ईशा ईशित्रा परमेश्वरेण यत् किञ्च जगत्यां पृथिव्यां जगदिदं तत्सर्वं वास्यमाच्छाद्यम् । तेन कारणेन त्यक्तेन सर्वकर्मत्यागेन भुञ्जीथाः पालयेथाः । एवं त्यक्तेषणस्त्वं कस्यस्विद्धनं मा गृधः मा काङ्क्षीः । अथवा मा गृधः । कस्मात्? कस्यस्विद्धनं? न कस्यापि । अतो मिथ्याविषये बुद्धिं मा कार्षीरिति । यस्तु नरमात्रोऽल्पज्ञस्तं प्रति कर्मानेन मन्त्रेणोच्यत इति ।

*(तन्निरासः)*

तदनुपपन्नम् । अज्ञवद् ज्ञानिनोऽपि भगवत्पूजात्मकस्वकर्माकरणे पापलेपसद्भावेन द्वाभ्यामपि तत्कर्तव्यतायाः स्मार्तत्वादिति भावेनाऽह– **अज्ञस्येति** ॥ कृष्णोपास्तिं, स्वकर्मणेति शेषः । नियतमोक्षत्वेन

कर्मणामकिञ्चित्करत्वादलेपस्य ज्ञानिनः कुतः कर्मलेप इत्यत आह– **यत** इति ।। ह्रासो भवेत्, कृष्णोपास्त्यकरणनिमित्तपापेनेति शेषः । यतो ह्रासो भवेदतो मोक्षप्रच्युतिरूपलेपरहितेऽपि ज्ञानिनि कर्मलेपः स्यादेव । यत एवमुभयोः लेपोऽतो द्वाभ्यामपि सा कृष्णोपास्तिः कार्यैवेत्यर्थः ।

असङ्गतं च तस्येशाच्छाद्यत्वकथनम् । न हि तत् कर्माकरणे हेतुः । तथा सत्यज्ञस्यापि तत्प्रसङ्गेनोत्तरमन्त्रविरोधात् । ईशावास्यत्वज्ञानोपलक्षण-पक्षेऽप्यसङ्गतिरेव । नहि जगदीशावास्यमिति जानता कर्म न कार्यमिति नियमोऽस्ति । अद्वैतज्ञानमनेनोपलक्षितमिति चेन्न । विरोधात् । न ह्याच्छा-द्याच्छादकयोरभेदो दृष्टपूर्वः । सर्वमपीशावास्यमङ्गीकुर्वताऽवश्यं जगतीपदस्य सर्वोपलक्षणत्वमङ्गीकर्तव्यम् । ततो वरं प्रकृतिवाचकत्वग्रहणमेव । सर्वार्थ-लाभात् । न च तत्पक्षेऽस्योपयोगोऽस्ति । भुञ्जीथा इत्यस्य पालनार्थता-यामात्मनेपदविरोधः । धनमिथ्यात्वं च प्रत्यक्षादिविरुद्धमिति ।। २ ।।

## (प्रकाशिका)

'न प्रागुत्तराणि कर्माणि पापानि बाधन्ते' इत्यस्य निरन्तरभगवत्पूजाया अपि सकलपापप्रायश्चित्तरूपत्वादिति भावः ।।

'न हि जगदीशावास्यमिति जानतः' इत्यत्र रात्रौ तमसाऽह्नि हिमान्या च जगतः आच्छाद्यत्वं जानताऽपि सन्ध्यावन्दनादिकर्मकरणदर्शनादिति भावः । अद्वैतज्ञानमनेनोपलक्ष्यत इत्येतदपि न प्रकृतोपयोगि । अद्वैतज्ञानवता मायावादिना आचार्येणैव जपादिकर्मणां क्रियमाणत्वात् । अङ्गीकृत्य दूषणान्तरमाह– **न हीति** ।। 'न च तत्पक्षेऽस्योपयोगोऽस्ति' इत्यस्य ईशाच्छा-द्यस्वर्गाद्यर्थं तैरपि यज्ञादेः क्रियमाणत्वादिति भावः । 'भुजोऽनवने' इत्यवनार्थे आत्मनेपदनिषेधादिति भावेनाऽह– **आत्मनेपदविरोध इति** ।।

किं च ईशा ईशित्रा आच्छाद्यं जगदिति च न मायावादिना वक्तुं शक्यते । ईश्वरो माययाऽविद्यमानमेव जगद्दर्शयतीति हि तन्मतम् । कथमन्यथा

दृश्यत्वेन मिथ्यात्वं वदेत् । अपि च रक्षसा रसातले आच्छादितजगतः वराहरूपिणा भगवताऽऽच्छादकजलादुद्धृत्य प्रकाशितत्वाच्च कथमीशाच्छाद्यत्वम्? 'तमेव भान्तमनुभाति सर्वम्' इति च तत्पक्षः । अतोऽपि नेशाच्छाद्यत्वम् । किं च 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्' इति गीतायां जगदीशेन कृष्णेनैवोक्तत्वात् कथमीशाच्छाद्यं जगत् ? अतो यत्किञ्चिदेतत् । प्रत्युत 'तदव्यक्तमाह हि', 'यत्तदद्रेश्यमग्राह्यम्', 'अदृश्यत्वादिगुणको धर्मोक्तेः', 'मायायवनिकाच्छन्नमहिम्ने ब्रह्मणे नमः' इत्यादिश्रुतिस्मृतिभ्यः स्वमते ब्रह्मैवाऽच्छाद्यम् । ब्रह्मणो जगदारोपा-धिष्ठानत्वाङ्गीकाराच्च स्वप्रक्रियया ब्रह्मैवाऽच्छाद्यम् । एवं चेशाच्छाद्यत्वेन त्यागे ब्रह्मण एव त्यागप्रसङ्गः । न तु कर्मणः । अतोऽपि स्वाज्ञानविजृम्भितमेवेदं व्याख्यानम् ॥

अपि च जगदीशाच्छाद्यं चेत् कर्म कुतस्त्याज्यम् ? कर्मणोऽपि जगदन्तःपातित्वादिति चेत् तर्हि मोक्षसाधनमनोवृत्तिरूपापरोक्षज्ञानस्यापि तत एवोपेक्ष्यत्वं स्यात् । किं चेन्द्रवाय्वादिरूपतया महाज्ञानिभिः पाण्डवैरेव महता प्रयत्नेन राजसूयाश्वमेधादिकर्मणां कृतत्वात् कथं ज्ञानिना कर्म त्याज्यम् ? किं च महाज्ञानिनं पार्थं प्रति 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इति निवृत्तरूपकर्मण्येव ज्ञानिन एवाधिकारस्योक्तत्वात् अनेनैव कचित् कर्मणां त्याज्यत्वोक्तिः काम्यकर्मणामेवेति सूचितम् ॥

> 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
> मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ॥

इति सन्ध्यावन्दनादिकर्मणामत्याज्यत्वस्यैव भगवता कथनाच्च । पालयेथा इत्यत्र पालनविषयतया कर्म च न परेण वक्तुं शक्यम् । ईशाच्छाद्यसकलजगतामुपेक्षणे सति आत्मैव ह्युर्वरितः । एवं च स्वात्मानमेव त्वं पालयेथा इत्युक्तं स्यात् । तच्च कर्तृकर्मभावविरोधान्नित्यस्याऽत्मनः पाल्यत्वा-

योगाच्चायुक्तम् । अतो मर्कटः स्वकरगतरत्नमालाया इवोपनिषदामपकर्तैव परो न व्याकर्तेति युक्तमुत्पश्यामः ।। २ ।।

**(ईशावास्यभाष्यटीकाविवृतिः)**

प्रथममन्त्रे वैराग्यरूपाधिकारप्रतिपादनानन्तरं द्वितीयमन्त्रे तत्वं प्रतिपाद्यत इति भ्रमनिरासाय तत्प्रतिपाद्यं सोपपत्तिकं दर्शयति– **तृष्णाविच्छेदवदिति ।।** उपदिष्टमपि तत्वं स्वोचितकर्मानुष्ठानेन शुद्ध एव हृदयेऽवतिष्ठते नान्यत्रेति पूर्ववदुपपादनमिति ज्ञेयम् ।। नन्वयं वतिः प्रथमान्ताद् व्याख्यातव्यः । न चासौ युक्तः । 'तत्र तस्येव' (अष्टाध्यायी-५-१-११६) इति सूत्रविरोधादिति चेत्,न । 'तत्र तस्येव' इत्यस्य प्रायिकत्वात् । अन्यथा 'पूर्ववत् सनः'(अष्टा-१-३-६२)इत्यत्र पूर्वस्मादिवेति पञ्चम्यन्ताद् वतिर्न स्यात् । कार्यत्वानुमाने घटवदित्यादिप्रयोगनिर्वाहाय कुसुमाञ्जलिकारादिभिः प्रायिकत्वेन व्याख्यातत्वाच्च । उक्तं च टीकाकृता विष्णुतत्वविनिर्णयटीकायां 'तत्र तस्येव' इति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वाद् घटवदिति युज्यते इति । विस्तृतं चैतदाकरे 'विद्धवदिति च्छान्दसो द्वितीयान्ताद् वतिः' इति । सुधा-वाक्याभिप्रायस्तु तत्रैवावगन्तव्यः । इतिशब्दो हेतौ ।। **तदिति ।।** कर्मानुष्ठानं वा तदावश्यकत्वं वेत्यर्थः । ननु श्रुतौ कर्माणि कुर्वन्नेव जिजीविषेदित्य-युक्तम् । कर्मकरणमात्रस्य विधेयत्वेन जीवनेच्छाविधानस्य व्यर्थत्वात् । इच्छाया अविधेयत्वाच्चेत्यतो यत्तच्छब्दाध्याहारपूर्वकमुद्देश्यविधेयभावं व्यत्यासेन दर्शयति– **यज्जिजीविषेदिति ।।** यच्छब्दयोगाज्जीवनेच्छाया अनुवाद्यत्वमेव न विधेयत्वमिति भावः । जीवनमिच्छेदिति यत् तत् कर्मकरणपूर्वकमेवेत्यर्थः । जीवनेच्छाकर्मकरणयोः समानकालत्वोक्तेरभिप्रायमाह– **आमरणमिति ।।** यद्वा ननु कर्माणि कुर्यादित्येवालं, किं जिजीविषेदित्यनुवादेनापीत्यतः कर्म-करणे नैरन्तर्यरूपेत्थम्भावज्ञापकं तत् । तथाभूतस्यैव ज्ञानोपयोगित्वादित्या-शयेन तात्पर्यार्थमाह– **आमरणमिति ।।** एवशब्दार्थः **सर्वथेति ।।**

पूर्वार्धोक्तार्थे हेतुत्वेनोत्तरार्धमवतारयति–**कुत इति ॥** ज्ञानार्थिना स्वोचितानि कर्माणि कुतः कार्याणि ? तेषां साक्षाज्ज्ञानकारणत्वाभावादित्याक्षेपार्थः । एवमित्यनुवादेन कर्माणि कुर्वतीति व्याख्यानम् । एवम्भूते त्वयीत्युक्तं भवति । कर्ममात्रस्य लेपकत्वाभावात् पापमित्युक्तम् । काम्यपुण्योपलक्षणमेतत् । एवमुत्तरत्रापि द्रष्टव्यम् । ननु कर्माणि कुर्वतीत्यत्र कर्मशब्देन पापरूपाणि विवक्षितान्युत स्वोचितानि । नाऽद्यः । पापानि कुर्वति पापं न लिप्यत इत्यस्य व्याहतत्वादसङ्गतत्वाच्च । न द्वितीयः । स्वोचितानि कर्माणि कुर्वति पापप्रसक्तेरेवाभावेन पापं न लिप्यत इति निषेधानुपपत्तिः । नच पापशब्देन श्रवणादिप्रागुत्तरपापानां विवक्षितत्वान्नाप्रसक्तिरिति वाच्यम् । तर्हि न लिप्यत इति लेपाभावोक्त्ययोगात् । लेपाभावो हि नरकाद्यनर्थाभावः । न चासौ ज्ञानार्थिकृतस्वोचितकर्मानुष्ठानमात्रेण शक्योऽङ्गीकर्तुम् । सिद्धान्तविरुद्धत्वात् प्रमाणविरुद्धत्वाच्च ॥

ज्ञानार्थिना स्वोचितानि कर्माणि कुतः कार्याणीति शङ्कायां ज्ञानसाधनत्वे वाच्ये कर्मणामलेपकत्वोक्तेरसङ्गतिश्चेत्याशङ्काः परिहरन् अक्षरार्थमुक्त्वा तात्पर्यार्थमाह– **स्वोचितेनेत्यादिना यावदित्यन्तेन ॥** अत्र पूजामित्यन्तेन कर्माणीत्यस्य, अल्पाधिकारिणमपीत्यनेन मनुष्यमात्रेऽपीत्यस्य, प्रागुत्तराणि पापानीत्यनेन समुदायैकवचनान्तपापमित्यस्य न बाधन्त इत्यनेन न लिप्यत इत्यस्य तात्पर्यमुक्तमित्यवगन्तव्यम् । अत्र न बाधन्त इत्यस्य ज्ञानविघ्नकराणि न भवन्तीति वा । अन्तःकरणस्याशुद्धिसम्पादकानि न भवन्तीति वाऽर्थस्य विवक्षितत्वान्नापसिद्धान्तादिदोषावकाशः । अत एव 'ततश्च ज्ञानाधिकारी स भवति' इत्यद्ग्रन्थोक्तः 'ततश्चासौ ज्ञाने नाधिक्रियते' इति वक्ष्यमाणश्च हेतुहेतुमद्भावः श्लिष्टो भवतीति ज्ञातव्यम् । एवमन्वयेन स्वोचितकर्मणां ज्ञानसाधनत्वमुपपाद्य व्यतिरेकेणापि तदुपपादनाय प्रवृत्तं 'नान्यथेतोऽस्ति'इति श्रुतिशेषं व्याख्याति– **इत इति ॥**

अनेन 'अकुर्वतः' इति भाष्यमितोऽन्यथेत्यस्य तात्पर्यकथनरूपमित्युक्तं भवति । अक्षरार्थमुक्त्वा पूर्ववत् तात्पर्यार्थमाह– **भगवदिति** ॥ बाधन्त इत्यस्य पूर्व एवार्थो द्रष्टव्यः । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायं मनसि निधाय नञ्द्वयाभिप्रायमाह– **बाधन्त एवेति** ॥ एवमन्वयव्यतिरेकाभ्यां स्वोचितकर्मणां ज्ञानार्थिनाऽवश्यानुष्ठेयत्वमुपपाद्योपसंहरति– **अत इति** ॥ ज्ञानार्थिनेति शेषः । कर्माणि स्वोचितानि । एतच्च श्रुतौ शेषपूरणाभिप्रायेणोक्तमिति ज्ञातव्यम् । यद्यपि पुरुषार्थाधिकरणे 'नियमाच्च'(ब्र.सू. ३-४-७)इति सूत्रभाष्ययोरयं मन्त्रोऽपरोक्षज्ञानिपरत्वेन व्याख्यातः, तथाऽप्यस्य व्याख्यानान्तरत्वान्न विरोध इति ज्ञातव्यम् ॥

ज्ञानिनोऽपि कर्मानुष्ठानस्याऽवश्यकताप्रतिपादकम् 'अज्ञस्य' इति प्रमाणं भाष्यकृद्व्याख्यानसमर्थनानुपयोगित्वादपव्याख्याननिरासे व्यापारयितुं मन्त्रद्वयापव्याख्यानमनुवदति–**अपर इत्यादि** ॥ ईशा इत्येतदीदृशब्दस्य तृतीयान्तमित्यभिप्रेत्य प्रतिपदमाह– **ईशित्रेति** ॥ **वास्यमाच्छाद्यमिति** ॥ 'वस आच्छादने'इति धातोरिति भावः । त्यक्तेनेत्येतद्भावे निष्ठान्तमित्याशयेनोक्तम् – **त्यागेनेति** ॥ 'भुज पालनाभ्यवहारयोः'इति धातुं मनसि निधायाऽह – **पालयेथा इति** ॥ इतिशब्दः प्रथममन्त्रार्थसमाप्तौ । द्वितीयमन्त्रार्थं तात्पर्यतोऽनुवदति – **यस्त्विति** ॥ अत्र यस्त्वनात्मज्ञतया प्रथममन्त्रार्थग्रहणाशक्तः सोऽग्निहोत्रादिकर्माणि कुर्वन्नेव शतं समा जिजीविषेत् । एवं एवम्प्रकारे । त्वयि जिजीविषति नरे इतः एतस्मात् कर्म कुर्वतो वर्तमानादन्यथा प्रकारान्तरं नास्ति । येन प्रकारेणाशुभं कर्म न लिप्यते । 'न कर्मणा लिप्स्यसे' इति द्वितीयमन्त्रस्याप्यक्षरार्थो द्रष्टव्यः । दूषणोपयोगित्वात् तात्पर्यार्थ एवानूदित इति ज्ञातव्यम् । ननु ज्ञान्यज्ञानिनोः कर्मकरणस्याऽवश्यकताप्रतिपादनाय प्रवृत्ते प्रमाणे उपास्तिशब्देन शास्त्राभ्यासरूपायाः ध्यानरूपाया वा उपास्तेर्ग्रहणे असङ्गतिः स्यादित्यतोऽपेक्षिताध्याहारेणोपास्तिपदं व्याख्याति– **स्वकर्मणेति शेष इति** ॥ अनेन स्वकर्मणा कृष्णोपास्तिं कृष्ण-

पूजामिति व्याख्यातं भवति । ततश्च स्वकर्मणा कृष्णोपास्तिमकुर्वतोऽज्ञस्य ज्ञानिनोऽपि कर्म उपास्त्यकरणजन्यं पापं लिप्येतेति योजनोक्ता भवति । अत्रोत्तरग्रन्थानुसारेणाज्ञस्य लेपो ज्ञानमोक्षप्रच्युतिरूपो द्रष्टव्यः ॥

ननु कृष्णोपास्तिमकुर्वतोऽज्ञस्येव ज्ञानिनोऽपि प्रसिद्धलेपसम्भवादानन्द-ह्रासपर्यन्तं धावनं भाष्येऽनुचितमित्यतोऽज्ञवैलक्षण्यं ज्ञानिनो दर्शयन् प्रसिद्ध-लेपानुपपत्तिमाह– **नियतेति** ॥ अलेपस्य लेपायोग्यस्य ज्ञानिनः कथं पापलेपः । न कथमपि । नन्ववश्यकरणीयकर्मत्यागे कथमलेप इत्यत-स्तदेवासिद्धमित्याशयेनोक्तम्– **कर्मणामकिञ्चित्करत्वादिति** ॥ कर्मणा-मावश्यकत्वं वदता ज्ञानार्थत्वं वा मोक्षार्थत्वं वा वाच्यम् । नाऽद्यः । ज्ञानस्य प्राप्तत्वादित्याशयेनोक्तम्– **ज्ञानिन इति** ॥ मोक्षस्यापि प्राप्तप्रायत्वान्न द्वितीयोऽपीत्याशयेनोक्तम्– **नियतमोक्षत्वेनेति** ॥ ज्ञानिन इत्यत्रापि सम्ब-ध्यते । यद्वा कर्मणामुपास्त्यकरणजन्यपापानां प्राप्तज्ञानत्वेन नियतमोक्षत्वेन चाकिञ्चित्करत्वाद् व्यर्थत्वादलेपस्य ज्ञानमोक्षप्रच्युतिरूपलेपरहितस्य ज्ञानिनः कथं कीदृशः पापलेप इति व्याख्येयम् ॥

ननु ज्ञानिनोऽपि कृष्णोपास्तिमकुर्वत आनन्दह्रासो भवतीत्यनुपपन्नम् । ह्रासस्य पापसाध्यत्वेन कर्माकरणसाध्यत्वासम्भवादित्यतो ह्रासो भवेदित्यनूद्य ततः परमपेक्षितं पूरयति– **ह्रासो भवेदिति** ॥ ह्रासो नामानभिव्यक्तिः । न चाऽवरणानामपगतत्वात् कथमनभिव्यक्तिरिति वाच्यम् । आनन्दांशावर-कत्वेनेश्वरेच्छायाः सत्त्वात् । नन्वलेपेऽपि लेपः स्यादित्येतद्विरुद्धमित्यतो व्यवस्थाया विरोधं परिहरन् वाक्यं योजयति– **यत इति** ॥

अतः कार्यैवेत्येतदव्यवहितप्रकृतज्ञानिमात्रपरमिति भ्रमनिरासायाऽह– **यत एवमुभयोरिति** ॥ **कृष्णोपास्तिरिति** ॥ स्वकर्मणा कृष्णपूजेत्यर्थः । न च ज्ञानोत्तरविकर्मण एवाऽनन्दह्रासकारणतायास्तत्र तत्रोक्तत्वेन कथं भगवत्पूजात्मककर्माकरणस्यापि तत्कारणत्वमिति वाच्यम् । एतत्प्रमाण-तट्टीकयोरपि निरवकाशत्वेन भगवत्पूजात्मककर्माकरणस्यापि तत्कारणत्वे

बाधकाभावात् । उक्तं च पञ्चमे बृहदारण्यकभावबोधे– 'यावत्स्वरूपानन्दानुभवलक्षणह्रासं प्रति विकर्मवद् भगवत्पूजात्मककर्माकरणमपि निमित्तम् । यथोक्तम्– 'कृष्णोपास्तिमकुर्वतः । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम्' इतीति । ननु 'अज्ञोऽर्चयेदेवार्चायामन्यथा दोषवान् भवेत् । ज्ञस्त्वर्चयन् सुगुणवानन्यथा दोषवान्न तु' इति च तृतीयस्कन्धतात्पर्ये ज्ञानिनः स्वविहितकर्माननुष्ठाने दोषाभावस्योक्तत्वादत्राऽनन्दह्रासाभिधाने कथं तद्विरोधो न स्यादिति चेत् । मैवम् । तत्र दोषशब्देन मुक्तिप्रतिबन्धकदोषस्य विवक्षितत्वेनाऽनन्दह्रासाविवक्षणात् । यद्वा, तात्पर्यस्याऽनन्दह्रासरहितोत्तमाधिकारिपरत्वेनास्य च तद्युक्तमानुषोत्तमपरत्वेन विरोधवार्ताभावात् । अस्य मानुषोत्तमपरत्वं तु बृहदारण्यकभावबोधे स्पष्टमिति ॥

तात्पर्यार्थनिराकरणपरं भाष्यमुपलक्षणमित्यभिप्रेत्याक्षरार्थमपि निराचिकीर्षुरीशावास्यशब्दार्थं तावन्निराकरोति– **असङ्गतं चेति** ॥ कथमसङ्गतमिति चेदित्थम् । ईशावास्यत्वं हि कर्माकरणे हेतुत्वेनोच्यते । तेनेति तृतीयया तस्य हेतुत्वेन परामर्शात् । तत्र पृच्छामो वाचनिकमीशावास्यत्वमेव कर्माकरणे हेतुरुत लाक्षणिकं ज्ञानमिति ॥ आद्यं निराकरोति– **नहीति** ॥ तद् ईशाच्छाद्यत्वम् । कुत इत्यत आह– तथा **सतीति** ॥ **तत्प्रसङ्गेनेति** ॥ कर्माकरणप्रसङ्गेनेत्यर्थः । स्वरूपसदीशाच्छाद्यत्वस्याज्ञं प्रत्यप्यविशिष्टत्वादिति भावः । द्वितीयेऽपि किमीशावास्यत्वज्ञाने लक्षणा,उताद्वैतज्ञाने । आद्यमाशङ्क्य निराकरोति– **ईशावास्यत्वज्ञानोपलक्षणत्वपक्षेऽपीति** ॥ अनेन विषयविषयिभावलक्षणः शक्यसम्बन्धोऽपि सूचितो वेदितव्यः । तामेवोपपादयति – **नहीति** ॥ कर्मणो ह्यकर्तव्यत्वमपरमार्थत्वे निषिद्धत्वे निष्फलत्वे वा ज्ञाते भवितुमर्हति । नच जगदीशाच्छाद्यमिति ज्ञानेन कर्म तथा ज्ञातं भवति । किन्तु जगदन्तःपातितयेशाच्छाद्यत्वेन । नचेशाच्छाद्यत्वज्ञानमकर्तव्यताहेतुरप्रयोजकत्वादिति भावः ॥

द्वितीयमाशङ्कते– **अद्वैतज्ञानमिति** ॥ अयं भावः । जगत ईशाच्छाद्यत्वं नाम न घटस्य पटेनेव प्रसिद्धम् । येन कर्माकर्तव्यतायां हेतुर्न स्यात् । किम्त्वीशेऽध्यस्तत्वमेव । 'परमार्थसत्यरूपेण परमात्मनाऽनृतमिदं सर्वमाच्छादनीयम् । यथा चन्दनागर्वादेरुदकादिसम्बन्धजक्लेदादिजं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाऽच्छाद्यते स्वेन पारमार्थिकेन गन्धेन । तद्वदेव हि स्वात्मन्यध्यस्तमस्वाभाविकं कर्तृत्वभोक्तृत्वादिलक्षणं 'जगद्वैतरूपम्' इति परेणोक्तत्वात् । न चाध्यस्तत्वं स्वरूपसत् कर्माकर्तव्यत्वे हेतूकर्तुं शक्यम् । अज्ञस्यापि तत्प्रसङ्गेनोत्तरमन्त्रविरोधात् । किन्त्वीशेऽध्यस्तत्वेन ज्ञानम् । एतदेव च परमतेऽद्वैतज्ञानं नाम । तथाच विषयवाचकेन पदेन विषयिणोऽद्वैतज्ञानस्योपलक्षणोपपद्यते । शक्यसम्बन्धसद्भावात् । कर्माध्यस्तत्वज्ञानं च कर्माकर्तव्यतायां मुख्यो हेतुरिति नासङ्गातिरिति– **अनेनेति** ॥ ईशावास्यपदेनेत्यर्थः । कुतो नेति चेदत्र वक्तव्यम् । ईशाध्यस्तत्वं नामेशाभेदो वा, ईशव्यतिरेकेणासत्त्वं वा । यज्ज्ञानं कर्माकरणे हेतुः स्यादिति । न द्वितीयः । ईशव्यतिरेकेणासत्त्वोक्तावीशाधीनत्वेनाऽस्तीत्युक्तं स्यात् । राजव्यतिरेकेण राष्ट्रं नास्तीत्यादौ तदनुभवात् । न चेशाधीनत्वेन ज्ञानं कर्माकरणे हेतुः, इत्यसङ्गतितादवस्थ्यादिति भावेनाऽद्यं दूषयति –**विरोधादिति** ॥ तदुपपादयति– **नहीति** ॥ आच्छाद्याच्छादकयोः अध्यस्ताधिष्ठानयोरित्यर्थः । ततश्चादृष्टकल्पनाप्रसङ्गादिति भावः । यद्यपि परेण सर्वमेव नामरूपकर्माख्यं विकारजातं परमार्थसत्याऽऽत्मभावनया त्यक्तं स्यादित्यादिना द्वैतज्ञानस्यैव कर्मत्यागे हेतुत्वेनोक्तत्वात् तदेव टीकाकृता निराकार्यं, नान्यत् । अनुक्तोपालम्भप्रसङ्गात् । तथाऽपि शिष्याणां कथाक्रमशिक्षार्थं वा सम्भावितत्वाद् वा पक्षान्तरनिराकरणमिति ज्ञातव्यम् ॥

एवमीशावास्यपदव्याख्यानं निराकृत्य जगत्यां पृथिव्यामित्येतदपि निराकरोति –**सर्वमपीति** ॥ आधारैकदेशपृथिवीवाचकजगतीशब्दस्यान्तरिक्षादिसर्वाधारोपलक्षणत्वमङ्गीकर्तव्यं कुत इत्यतो मुख्यार्थानुपपत्तिसद्भावा-

दित्याशयेनोक्तम्–**सर्वमपीति** ।। यद्यपि पृथिव्यां जगत्यामित्युपलक्षणार्थत्वा-दिति वदता परेण जगतीशब्दस्योपलक्षणत्वमङ्गीकृतमेवेत्यङ्गीकर्तव्यमित्युक्तिर-नुपपन्नेति भाति । तथाऽपि परः स्वोक्तापलापिनां प्रथमोदाहरणत्वान्न मया-ऽङ्गीकृतमिति वक्तुमुत्सहेतापि । अतो न्यायेनोपपादयितुमङ्गीकर्तव्यमित्यु-क्तम् । यद्वा, अङ्गीकर्तव्यमित्यतः परमङ्गीकृतं च परेणेत्यध्याहारेण योज्यमिति न कश्चिद् दोषः । ननु जगतीशब्दस्य पृथिवीवाचकस्य सर्वोप-लक्षणत्वे यावदाधारगताधेयलाभेन श्रौतसर्वशब्दस्वारस्यं सम्पद्यते । अत एव लक्षणाऽपि सोढव्या । वाचकत्वलोभेन प्रकृतिपरत्वे तु प्रकृत्याश्रित-मात्रस्येशावास्यत्वप्राप्तावपि तदनाश्रितस्य तदप्राप्त्या सर्वशब्दास्वारस्य-प्रसङ्गादित्यत आह **सर्वार्थलाभादिति** ।। 'आकाश एव तदोतं च प्रोतं च' (बृ.उप.३-८-७)इत्यादिश्रुत्या प्रकृतेरीशातिरिक्तसर्वाधारत्वस्य प्रमितत्वेन प्रकृतिपरत्वपक्षेऽपि तदाश्रितत्वेन सर्वार्थलाभसम्भवादित्यर्थः । नच पक्षद्वयेऽपि सर्वार्थलाभाविशेषेऽपि लक्षणापेक्षया शक्तेर्ज्यायस्त्वाज्जगतीशब्दस्य प्रकृतिपरत्वेन व्याख्यानमेवोचितं, न पृथिवीपरत्वेन । तदेतदेवाभिप्रेत्योक्तम्– **वाचकत्व-ग्रहणमेवेति** ।। एवं परपक्षे जगतीशब्दस्योपयोगमङ्गीकृत्य तद्व्याख्यानमेवा-नुपपन्नमित्युक्तमिदानीं स एव व्यर्थ इत्याह– **नचेति** ।। नापीत्यर्थः । अस्य जगतीशब्दस्य तत्त्यागेऽप्यनेन वाक्येन सर्वस्येशाच्छाद्यत्वसिद्धेरिति भावः । अस्मत्पक्षे किञ्चेत्याद्युक्तप्रकारेणोपयोगोऽस्तीत्यभिप्रायेण तत्पक्ष इत्युक्तम् आत्मनेपदविरोध इति ।। 'भुजोऽनवने'(पा. अष्टा. २.३.३६.) इति सूत्रेण भुजधातोः पालनातिरिक्त एवार्थे आत्मनेपदस्य विहितत्वात् पालनार्थत्वे तद्विरोध इत्यर्थः । अथेत्यादिनोक्तं धनमिथ्यात्वं निराकरोति– **प्रत्यक्षादीति** ।। आदिशब्देनार्थक्रियाकारित्वप्रमाणदृष्टत्वाद्यनुमानस्य 'विश्वं सत्यम्' (ऋ.सं. २.२४.१२)इत्याद्यागमस्य च सङ्ग्रहः ।।

ननु वर्तमानकाले सत्त्वग्राहिणा प्रत्यक्षेण त्रैकालिकसत्त्वात्यन्ताभावस्या-ग्रहणात् कथं मिथ्यात्वस्य प्रत्यक्षविरुद्धत्वम् ? ग्राह्याभावावगाहिन एव

विरोधित्वात् । प्रत्यक्षस्य चातथात्वादिति चेन्मैवम् । प्रतिपन्नोपाधौ वर्तमान-कालीनसत्त्वग्राहिणा प्रत्यक्षेण तत्र त्रैकालिकसत्त्वात्यन्ताभावो विरुध्यत एव । तथाहि उक्तरूपमिथ्यात्वप्रतिषेधो हि तत्प्रतियोगिभूततत्सत्त्वरूप एव । सामान्याभावस्य यत्किञ्चित्प्रतियोगिसत्त्वविरोधित्वेन तत्तद्विशेषा-णामेव सामान्याभावं प्रति प्रतियोगित्वावश्यम्भावात् । सामान्याभावाभावस्य च रूपद्वयम् । सामान्याभावाभावत्वं तत्तद्विशेषत्वं च । तत्र प्रकृते प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन कालत्रयवर्तिसत्त्वनिषेधरूपासत्त्वाभावत्वेन तदभाव-विषयत्वासम्भवेऽपि वर्तमानकालीनबाधाभावत्वेन रूपेण तद्ग्राहकत्व-मुपपन्नमेवेति तद्विरोधो दुष्परिहर इति ॥ २ ॥

## (दुर्गमवाक्यार्थविवरणम्)

कुर्वन्नेवेत्यत्र शतवर्षमात्रं कर्म कर्तव्यं त इति प्रतीयते । 'कर्मणा बध्यते जन्तुः' इत्यादिना कर्मणां बन्धकत्वोक्तेः कथं च मुमुक्षुं प्रति कर्मविधानमित्यतः श्रुतितात्पर्यमाह– **आमरणमिति** ॥ शतं समा इत्यत्र न आमरणं कर्तव्य-तैवाभिप्रेता । प्रायेण शतवर्षाधिकजीवित्वाभावात्तथोक्तिः, कर्मणां बन्धकत्वं तु भगवत्पूजात्मककर्मणामन्यत्रैव, विष्ण्वाराधकनिवृत्तकर्मणां तु ज्ञानाङ्गत्वं 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' (भ.गी.३.९.)'यज्ञायाऽचरतः कर्म समग्रं प्रविलीयते' (भ.गी.४.२३) इत्यादेरिति भावः । ननु स्वोचितेन कर्मणाऽनुष्ठितेन प्रागुत्तरपापश्लेषस्य कथनस्य कथमुपयोग इत्यत आह– **ततश्चेति** । बाधन्त एवेत्यवधारणेन नञ्द्वयाभिप्राय उक्तः । भुञ्जीथाः पालयेथा इति 'भुज पालनाभ्यवहारयोः' इति (धा. पाठ.१५४८) धातुव्या-ख्यानादिति भावः । ननु अज्ञस्येत्यादिवाक्ये भगवदुपास्त्यकरणे पापः कथ्यते । अतः ज्ञान्यज्ञानिभ्यां कर्मकर्तव्यतापरमिदं वाक्यमित्यत आह– **सर्वकर्मणेति शेष इति** । तथा च कृष्णोपास्तिं कृष्णसेवामित्यर्थः पर्यव-स्यति । पूर्वपक्षे उपपत्तिविरोधमाह–**असङ्गतं चेत्यादिना । तथा सतीति** ॥

सर्वस्य ईशाच्छाद्यत्वमज्ञं प्रत्यविशिष्टमिति । अज्ञस्यापि कर्माकरणप्रसङ्गेन उत्तरमन्त्रे तं प्रति तद्विधानानुपपत्तिरिति भावः । ननु ज्ञानिप्रसङ्ग ईशाच्छाद्यत्वज्ञानस्य विवक्षितत्वाद् अस्य च तदभावादित्यत आह–**ईशावास्येति** ॥

**अद्वैतेति** ॥ अद्वैतज्ञानिना प्रत्यवायपरिहारार्थं न कर्मानुष्ठेयम् । नापि फलेच्छया मुमुक्षुत्वात् । नाप्यनादिवासनानुगृहीतपामरमतिदुरवगमैक्यम् अन्तःकरणशुद्धिद्वारा तदनुष्ठेयं सिद्धफलत्वात् । नापि मुक्तावतिशयलाभार्थं तदिति वाच्यं निर्गुणतादात्म्यरूपमोक्षे तदभावादिति भावः । **सर्वार्थेति** ॥ प्रकृतेः सर्वाश्रयत्वस्य श्रुतिसिद्धत्वादिति भावः । नन्वस्तु प्रकृतिवाचकत्वमेव किं न क्षतमित्यत आह– **न चेति** ॥ समस्तं जगत्प्रकृत्याश्रितमित्यवगमस्य कर्माकरणहेतुत्वान्न च प्रकृतिनिष्ठता कथं न सर्वस्य ईशाच्छाद्यतोक्तावुपयुज्यते, व्याप्तिविरहादिति भावः । नन्वीशावासयोग्यमीशावास्यमिति एकपदत्वाश्रवणे प्रसिद्धपदपाठ-विरोधः । पदद्वयं हि पठन्ति वृद्धाः । तस्मात् पूर्वपक्ष्यभिहित एवार्थ इति चेन्न, तत्रानुपपत्तेरुक्तत्वात् 'सपक्षं महिषं मृग','द्रवत्पाणी शुभस्पती', 'अरुणो मा सकृद् वृकः' ( ऋ.सं.१.१०५.१८; निरु.५.२१), 'यदिन्द्र चित्र मेहना' (ऋ.सं.५.३९.१; साम.३४५.११७२; ताण्ड्य ब्रा.१४.६.४; निरु.४.४) इत्यादाविव प्रसिद्ध्यतिक्रमेणापि व्याख्यानसम्भवादिति । 'आत्मावास्यम्' इति (८.१.१०) भागवतसमाख्यया 'स्वतःप्रवृत्त्यशक्तत्वात्' इति ब्राह्मसमाख्यया च तथैव व्याख्येयत्वाच्च । पदद्वयेन पठनं तु अर्थान्तरोपयुक्तमिति बोध्यम् ॥ २ ॥

**(उपनिषत्)**

*(विपरीतज्ञानस्य विपरीतफलजनकत्ववर्णनम्)*

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चाऽत्महनो जनाः ॥ ३ ॥**

## (भाष्यम्)

**सुष्ठु रमणविरुद्धत्वादसुराणां प्राप्यत्वाच्च असुर्याः । 'न च[1] रमन्त्यहो असदुपासनयाऽऽत्महनः' इत्युक्तत्वात् ।**

**'महादुःखैकहेतुत्वात् प्राप्यत्वादसुरैस्तथा ।**
**'असुर्या नाम ते लोकास्तान् यान्ति विमुखा हरौ' इति वामने ॥**

**[2]ये के चेत्यनेन नियम उक्तः ।**

**'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरौ'[3] इति च ॥ ३ ॥**

## (टीका)

एवं प्राप्ताधिकारं प्रति परमात्मतत्त्वबुभुत्साजननायासुर्या इति मन्त्रेण परमात्मविदां निन्दा क्रियते । तत्रासुर्या इत्यस्य वर्णविपर्ययेणासूर्याः सूर्यप्रकाशहीना इत्यन्यथाप्रतीतिनिरासायार्थमाह– **सुष्ठु रमणेति** ॥ सुष्ठु रमणं सुखं सुर्यं, तद्विरुद्धमहादुःखत्वादसुर्या इत्यर्थः । असुराणां प्राप्यत्वादित्यनेन सकलसुखराहित्यमुपलक्ष्यते । कुतोऽयमसुर्यपदार्थ इत्यत आह– **न चेति** ॥ एतमेव मन्त्रं मूलीकृत्य प्रवृत्तेऽस्मिन् वाक्येऽसुर्यपदार्थवर्णनं **'न च रमन्ति'** इति क्रियते । तत्र चशब्देन महादुःखमनुभवन्तीत्येषोऽर्थः समुच्चीयते । महादुःखसुखाभावपरताऽस्य पदस्योक्तव्याख्यान एव सम्भवति नान्यथेति भावः ।

आत्मनो नित्यत्वेन हननासम्भवात् तत्रानर्थकथनमयुक्तमित्येतदप्यनेन परिहृतम् । असदुपासनया आत्महन इति व्याख्यातत्वात् । विपरीतं भावयता हि तद्याथात्म्यं तिरस्कृतमिति तस्य गौण्या वृत्त्याऽऽत्महन्तृत्वम् । स्पष्टं चात्र प्रमाणमाह– **महादुःखेति** ॥ 'विमुखा हरौ' इति समाख्ययाऽत्राऽत्म-

---

१. 'न खलु रमन्त्यहो'

२. 'ये केचनेत्यनेन' इति प्राचीनः पाठः । तथा सतिं अर्थानुवाद इति वक्तव्यम् ।

३. 'विमुखा हरेः'

शब्दो हरिपर इति चोक्तं भवति । तथा च नित्यशुद्धबुद्धमुक्तस्वरूपमात्मानं जीवं ये विपरीतं प्रतिपद्यन्ते ते आत्महन इत्यपव्याख्यानमेव । ते लोका इति तच्छब्दः प्रसिद्धिद्योतकः । ये ते प्रसिद्धास्तान् यान्तीत्यर्थः । ये आत्म-हनस्ते केचन ताँल्लोकानभिगच्छन्ति केचन नेत्यन्यथाप्रतीतिनिरासायाऽह– **ये के चेति** ॥ ये के चाऽत्महनस्ते सर्वेऽपीत्येवं नियमपरमेवेदं न तूक्तप्रकारेण विभागपरमित्यर्थः । कुत इत्यत आह– **नियमेनेति** ॥ निय-मेनेत्यस्यैव विवरणं **सर्वेऽपीति** । अन्धयतीत्यन्धम् । अतिनिबिडान्धकारा-वृता इत्यर्थः । प्रेत्य मृत्वा । एवमुदाहृतवचनविरोधादेव देवादिशरीराण्यसुर्या लोका इति व्याख्यानमयुक्तमेवेति ॥ ३ ॥

## (प्रकाशिका)

श्रुतिगीता हि काश्चित् श्रुतिं मूलीकृत्य प्रवर्तते । 'न च रमन्ति' इति च श्रुतिगीतावाक्यम् । अत एवैतमेव मन्त्रं मूलीकृत्येत्युक्तम् । ये के चाऽत्महनस्ते सर्वेऽपीत्यत्र यः कोऽपि ब्राह्मणोऽस्मिन् ग्रामे नास्तीत्युक्ते नियमेन ब्राह्मणाभावस्य प्रसिद्धत्वादिति भावः । देवादिशरीराणीत्यस्य स्थाने अदेवादिशरीराणीति न्याय्यम् । तथा च अदेवादिशरीराणीत्यस्य सुरयोग्याः लोकाः देहाः सुर्याः । ते न भवन्तीत्यसुर्याः अदेवादिदेहाः । भूतप्रेतपिशाचादि-शरीराणीति यावत् । आदिपदेन तामसयोन्यन्तरं गृह्यते । असुर्यपदशक्ति-लभ्योऽप्ययमेवार्थः । सति चैवं सुराणामप्यसुरत्वमभिप्रेत्य 'परमात्मभावमद्वय-मपेक्ष्य देवादयोऽप्यसुराः' इति परभाष्यं स्वस्वरूपप्रदर्शनपरमेवेत्यवगन्तव्यम् ॥ ३ ॥

## (ईशावास्यभाष्यटीकाविवृतिः)

असुर्या इति तृतीयमन्त्रस्याधिकारान्तरप्रतिपादकत्वभ्रान्तिं परमात्मतत्व-प्रतिपादकत्वभ्रान्तिं च परिहर्तुं प्रतिपाद्यमाह– **एवमिति** ॥ एवम् उक्त-मन्त्रद्वयोक्तप्रकारेण प्राप्ताधिकारं प्रत्यपरमात्मविदां निन्दा क्रियत इति

### (भाष्यम्)

**सुष्ठु रमणविरुद्धत्वादसुराणां प्राप्यत्वाच्च असुर्याः । 'न च[1] रमन्त्यहो असदुपासनयाऽऽत्महनः' इत्युक्तत्वात् ।**

**'महादुःखैकहेतुत्वात् प्राप्यत्वादसुरैस्तथा ।**
**'असुर्या नाम ते लोकास्तान् यान्ति विमुखा हरौ' इति वामने ॥**

**[2]ये के चेत्यनेन नियम उक्तः ।**

**'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरौ[3]' इति च ॥ ३ ॥**

### (टीका)

एवं प्राप्ताधिकारं प्रति परमात्मतत्त्वबुभुत्साजननायासुर्या इति मन्त्रेण परमात्मविदां निन्दा क्रियते । तत्रासुर्या इत्यस्य वर्णविपर्ययेणासूर्याः सूर्यप्रकाशहीना इत्यन्यथाप्रतीतिनिरासायार्थमाह– **सुष्ठु रमणेति** ॥ सुष्ठु रमणं सुखं सुर्यं, तद्विरुद्धमहादुःखत्वादसुर्या इत्यर्थः । असुराणां प्राप्यत्वादित्यनेन सकलसुखराहित्यमुपलक्ष्यते । कुतोऽयमसुर्यपदार्थ इत्यत आह– **न चेति** ॥ एतमेव मन्त्रं मूलीकृत्य प्रवृत्तेऽस्मिन् वाक्येऽसुर्यपदार्थवर्णनं **'न च रमन्ति'** इति क्रियते । तत्र चशब्देन महादुःखमनुभवन्तीत्येषोऽर्थः समुच्चीयते । महादुःखसुखाभावपरताऽस्य पदस्योक्तव्याख्यान एव सम्भवति नान्यथेति भावः ।

आत्मनो नित्यत्वेन हननासम्भवात् तत्रानर्थकथनमयुक्तमित्येतदप्यनेन परिहृतम् । असदुपासनया आत्महन इति व्याख्यातत्वात् । विपरीतं भावयता हि तद्याथात्म्यं तिरस्कृतमिति तस्य गौण्या वृत्त्याऽऽत्महन्तृत्वम् । स्पष्टं चात्र प्रमाणमाह– **महादुःखेति** ॥ 'विमुखा हरौ' इति समाख्ययाऽत्राऽत्म-

१. **'न खलु रमन्त्यहो'**

२. **'ये केचनेत्यनेन'** इति प्राचीनः पाठः । तथा सतिं अर्थानुवाद इति वक्तव्यम् ।

३. **'विमुखा हरेः'**

शब्दो हरिपर इति चोक्तं भवति । तथा च नित्यशुद्धबुद्धमुक्तस्वरूपमात्मानं जीवं ये विपरीतं प्रतिपद्यन्ते ते आत्महन इत्यपव्याख्यानमेव । ते लोका इति तच्छब्दः प्रसिद्धिद्योतकः । ये ते प्रसिद्धास्तान् यान्तीत्यर्थः । ये आत्म-हनस्ते केचन ताँल्लोकानभिगच्छन्ति केचन नेत्यन्यथाप्रतीतिनिरासायाऽह– **ये के चेति** ॥ ये के चाऽत्महनस्ते सर्वेऽपीत्येवं नियमपरमेवेदं न तूक्तप्रकारेण विभागपरमित्यर्थः । कुत इत्यत आह– **नियमेनेति** ॥ निय-मेनेत्यस्यैव विवरणं **सर्वेऽपीति** । अन्धयतीत्यन्धम् । अतिनिबिडान्धकारा-वृता इत्यर्थः । प्रेत्य मृत्वा । एवमुदाहृतवचनविरोधादेव देवादिशरीराण्यसुर्या लोका इति व्याख्यानमयुक्तमेवेति ॥ ३ ॥

## (प्रकाशिका)

श्रुतिगीता हि काश्चित् श्रुतिं मूलीकृत्य प्रवर्तते । 'न च रमन्ति' इति च श्रुतिगीतावाक्यम् । अत एवैतमेव मन्त्रं मूलीकृत्येत्युक्तम् । ये के चाऽत्महनस्ते सर्वेऽपीत्यत्र यः कोऽपि ब्राह्मणोऽस्मिन् ग्रामे नास्तीत्युक्ते नियमेन ब्राह्मणाभावस्य प्रसिद्धत्वादिति भावः । देवादिशरीराणीत्यस्य स्थाने अदेवादिशरीराणीति न्याय्यम् । तथा च अदेवादिशरीराणीत्यस्य सुरयोग्याः लोकाः देहाः सुर्याः । ते न भवन्तीत्यसुर्याः अदेवादिदेहाः । भूतप्रेतपिशाचादि-शरीराणीति यावत् । आदिपदेन तामसयोन्यन्तरं गृह्यते । असुर्यपदशक्ति-लभ्योऽप्ययमेवार्थः । सति चैवं सुराणामप्यसुरत्वमभिप्रेत्य 'परमात्मभावमद्वय-मपेक्ष्य देवादयोऽप्यसुराः' इति परभाष्यं स्वस्वरूपप्रदर्शनपरमेवेत्यवगन्तव्यम् ॥ ३ ॥

## (ईशावास्यभाष्यटीकाविवृतिः)

असुर्या इति तृतीयमन्त्रस्याधिकारान्तरप्रतिपादकत्वभ्रान्तिं परमात्मतत्व-प्रतिपादकत्वभ्रान्तिं च परिहर्तुं प्रतिपाद्यमाह– **एवमिति** ॥ एवम् उक्त-मन्त्रद्वयोक्तप्रकारेण प्राप्ताधिकारं प्रत्यपरमात्मविदां निन्दा क्रियत इति

सम्बन्धः । ननु परमात्मतत्वप्रतिपादिकेऽत्र ग्रन्थे नातत्वविदां निन्दा कार्या । निन्दायास्तत्वप्रतिपादनरूपत्वाभावात् । तदुपयोगाभावाच्चेत्यतस्तदुपयोगोऽस्तीत्याशयेनोक्तम्– **परमात्मतत्वबुभुत्साजननायेति** । उपदेशस्य परार्थत्वाद् बुभुत्सावत एव च परस्योपदेश्यत्वात्तस्याश्च विरोधिनिन्दासाध्यत्वादस्त्येव निन्दया उपयोग इति भावः ॥ **तत्रेति** ॥ मन्त्र इत्यर्थः । असुर्यपदेन कथं सूर्यप्रकाशहीनत्वं लभ्यत इत्यत उक्तम्– **वर्णविपर्ययेणेति** ॥ ह्रस्वस्योकारस्य दीर्घतया विपर्ययेणेत्यर्थः । नन्वेवमप्यसूर्या सूर्यहीना इत्यर्थः सम्पद्यते । न चासौ दोष इत्यतः सूर्यशब्दस्य सूर्यप्रकाशे लक्षणामभिप्रेत्योक्तम्– **सूर्यप्रकाशहीना इति** ॥

**अन्यथाप्रतीतीति** ॥ एतन्मन्त्रव्याख्यानरूपप्रमाणविरुद्धत्वाद् अन्धेन तमसेत्यनेन पुनरुक्तत्वाच्चेति भावः । भाष्ये सुष्ठु रमणेत्येतत् सूर्यशब्दार्थकथनमतो नासङ्गतिरित्याशयेनाऽह– **सुष्ठु रमणं सुर्यमिति** ॥ अनेनैव सुपूर्वाद् रमेर्जमन्ताड्ड इति डप्रत्यये टिलोपे सष्ठु रमणं सुरं तद्विरुद्धत्वादसुरा इत्येव स्यान्न त्वसुर्या इति चोद्यं परिहृतं भवति । बाहुलकढ्यप्रत्ययान्तत्वेन डान्तत्वाभावात्– **तद्विरुद्धमहादुःखत्वादिति** ॥ बहुव्रीहिरयम् । दुःखवत्त्वादित्यपि पाठः । अनेनासूर्यशब्दान्मत्वर्थेऽर्शआद्यच्प्रत्यय इत्युक्तं भवति ॥ यद्यप्यत्र यथाश्रुतभाष्यानुसारेण सुष्ठु रमणं सुर्यं तद्विरुद्धत्वादसुर्या इत्येव वक्तव्यम् । तथाऽपि दुःखस्यैव सुष्ठु रमणविरुद्धत्वं साक्षात् । ननु लोकानामित्याशङ्कापरिहाराय महादुःखैकहेतुत्वादिति वक्ष्यमाणप्रमाणानुसारेण 'असुर्या नाम लोकान् नित्यनिरतिशयदुःखान्' (भा.ता.१०-९४-२४)इति दशमभागवततात्पर्यानुसारेण च तद्विरुद्धमहादुःखवत्त्वादिति व्याख्यातमिति ज्ञातव्यम् । नन्वसुरप्राप्यत्वस्य स्वर्गादिसाधारण्यात् को विशेषस्तमस इत्यतो 'नच रमन्ति' (भाग.१०.९४.२४)इत्युदाहरिष्यमाणप्रमाणम् 'असुर्यान् नाम लोकान् निरस्तसमस्तसुखान्' इति भागवततात्पर्यं च मनसि निधाय विवक्षितमर्थमाह– **असुराणां प्राप्यत्वादित्यनेनेति** ॥ भाष्यं तु असुरशब्दोपपदात् 'या प्रापणे'

इत्यस्मात् 'घञर्थे कविधानम्' इति कर्मणि कप्रत्यये 'आतो लोप इटि च' (पा.अष्टा.६.४.६४)इत्यकारलोपे निर्वचनत्वात् पूर्वपदान्त्यलोपे च निष्पन्नासुर्यशब्दार्थकथनमात्रपरमिति द्रष्टव्यम् ॥

ननु प्रमाणे रमणाभावोक्तावपि असुर्यपदार्थत्वेनानुक्तत्वात् कथमुक्तशङ्कापरिहार इत्यत आह– **असुर्यपदार्थवर्णनमिति** ॥ भागवतवाक्ये 'नच रमन्ति' (भाग.१०.९४.२४) इत्यनेनासुर्यपदार्थवर्णनं क्रियते यतोऽतोऽयमसुर्यपदार्थ इत्यर्थः । तत्रासुर्यपदार्थवर्णनस्य का सङ्गतिरित्यत उक्तमेतमेव **मन्त्रमिति** ॥ श्रुतिगीतिकायां 'नच रमन्ति' इत्येतद्भागवतवाक्यमूलत्वेन तात्पर्ये भगवत्पादैः 'असुर्या नाम' इति श्रुतेः पठितत्वादेतमेव मन्त्रं मूलीकृत्येत्युक्तम् । भागवतस्य मन्त्रमूलत्वं नाम मन्त्रसंवादित्वमेव, नतु मन्त्रतोऽर्थमुपलभ्य रचितत्वम् । स्वतः सर्वज्ञत्वाद् भागवतकृत इति ज्ञेयम् । नन्वेवमप्यसुर्यपदार्थत्वेनोक्तयोर्द्वयोर्मध्येऽसुरप्राप्यत्वादित्युक्तार्थस्य प्रामाणिकत्वलाभेऽपि सुष्ठु रमणविरुद्धत्वादित्यस्य न तल्लाभ इत्यतः 'अनुभवन्ति च । नित्यदुःखम्' इति चशब्देनोक्तमिति भागवततात्पर्यं मनसि निधाय प्रमाणे चशब्दार्थमाह– **तत्रेति** ॥ 'नच रमन्ति' इति भागवतवाक्य इत्यर्थः ॥

ननु भागवतोक्तरीत्या असुर्यशब्दस्य महादुःखसुखाभावपरत्वेऽपि सुष्ठु रमणेत्याद्युक्तासुर्यपदाक्षरयोजनायां न किमपि नियामकं पश्यामः । योजनान्तरेणापि उक्तार्थद्वयलाभसम्भवादित्यतोऽसिद्धं तदित्याह– **महादुःखेति** ॥ महादुःखपरता सुखाभावपरता चेत्यर्थः ॥ **उक्तव्याख्यान एवेति** ॥ सुष्ठु रमणेत्याद्युक्तव्याख्यान एवेत्यर्थः । नन्वसुर्यपदार्थवर्णनस्याप्रामाणिकत्वशङ्कायाः 'न च रमन्ति' इत्येतावतैव निरासादवशिष्टप्रमाणोदाहरणं व्यर्थमित्यतः श्रुतौ शङ्कान्तरनिरासार्थत्वात् न तदिति भावेनाऽऽह– **आत्मन इति** ॥ उक्तत्वमात्रस्योक्तशङ्कानिरासकत्वाभावादाह– **व्याख्यातत्वादिति** ॥ 'असदुपासनया' इत्यनेन आत्महन्तृत्वस्य व्याख्यातत्वादित्यर्थः । घटादीनामिवाऽत्मनः स्वरूपेण हननानङ्गीकारान्नोक्तशङ्कावकाश इति भावः । नन्वेवं तर्हि

असदुपासकेष्वात्महन्तृशब्दप्रयोगानुपपत्तिः । तन्निमित्तात्मविनाशकत्वा-भावादित्यतो गौण्या वृत्त्या प्रयोग इत्याशयेन गुणयोगं दर्शयति– **विपरीत-मिति ॥** आत्महन्तृत्वं आत्महन्तृशब्दप्रतिपाद्यत्वम् । स्वरूपतिरस्कर्ता हि मुख्यहन्तोच्यते । असदुपासकस्त्वात्मयाथात्म्यस्य तिरस्कर्ता तिरस्काररूप-गुणयोगाद्धन्तृशब्देनोपचर्यत इति भावः ॥

॥ **स्पष्टमिति** ॥ अतो न पूर्वेण गतार्थतेति भावः । पूर्वप्रमाणस्या-सुर्यपदार्थकथनरूपताया एतमेव मन्त्रं मूलीकृत्येत्याद्युपपादनसापेक्षत्वादस्प-ष्टत्वम् । अत्र चासुर्या नामेति कण्ठत उक्तत्वात् स्पष्टत्वमिति भावः । असुरैः प्राप्यत्वादित्येतत् स्ववचनभाष्यवद् व्याख्ययम् ॥ **अत्रेति ॥** भाष्य-कृदुक्तासुर्यपदार्थ इत्यर्थः ॥ **अत्रेति ॥** आत्महन इति मन्त्र इत्यर्थः ॥ **इति चेति** ॥ न केवलमसुर्यपदार्थ उक्त इति चशब्दार्थः ॥ आत्मशब्दस्य हरिपरत्वे विवादाभावात् किं व्याख्यानेनेत्यत आह– **तथा चेति ॥** नित्य-शुद्धबुद्धमुक्तस्वरूपं तदात्मकब्रह्मस्वरूपम् । यद्यपि नैवम्प्रकारेण कण्ठतो व्याख्यातम् । किन्तु आत्मानं घ्नन्तीत्यात्महनः । कथमात्मानं नित्यं हिंसन्ति । अविद्यादोषेण विद्यमानस्याऽत्मनस्तिरस्करणादित्याद्येवोक्तम् । तथाऽपि तत्तात्पर्यानुवादो वा । अपव्याख्यातॄणामनेकत्वादन्येनैवं व्याख्याततत्वाद् वैवमनुवाद इति ज्ञेयम् ॥

ननु 'तान् यान्ति' इत्येतावता समञ्जसत्वादाद्यस्तच्छब्दो व्यर्थ इत्यत आह –**तच्छब्द इति ॥** द्वितीयतच्छब्दभ्रान्तिं परिहर्तुं ते लोका इतीत्यनुवादः । तर्हि ते प्रसिद्धास्तान् यान्तीत्यनन्वयदोष इत्यतो यच्छब्दाध्याहारेण तं दर्श-यन्नर्थमाह– **ये ते प्रसिद्धा इति** ॥ त इत्यनुवादेन प्रसिद्धा इति व्याख्यानम् । ततश्च यच्छब्देन तेषां प्रसिद्धिं विधाय तानित्यनेन प्रसिद्धाननूद्य यान्तीति विधीयते । ये लोकास्ते प्रसिद्धाः तान् प्रसिद्धान् यान्तीत्युक्तं भवति । ननु तमसोऽन्धत्वहेतुत्वेऽपि न स्वयमन्धत्वमचेतनत्वात् । तत् कथमन्धेनेति तमसो विशेषणं श्रुतावित्यतोऽन्तर्णीतणिच्त्वेनान्धत्वहेतुत्वस्यैव विवक्षितत्वान्न

दोष इत्याह– **अन्धयतीत्यन्धमिति** ।। ननु तमसोऽनन्धस्याप्रसिद्ध्या व्यर्थं विशेषणमित्यतः 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायं मनसि निधाय तदभिप्रायं वदन् तमसाऽऽवृता इत्येतद् व्याचष्टे– **अतिनिबिडेति** ।। अनेनान्धेनादर्शनात्मकेन तमसा अज्ञानेनाऽवृता इति परव्याख्यानमपहस्तितं भवति । लोकशब्दस्य शरीरपरत्वे हि कथञ्चित् तदुपपद्येत । नच तदस्ति । उत्तरवाक्येनैव तस्य निराकरिष्यमाणत्वात् । प्रसिद्धलोकानां चाज्ञानावृतत्वस्य बाधितत्वादिति । 'लक्ष्मणः प्रेत्य सुग्रीवं बभाषे रामचोदितम्' (ऐ.उ.भा.२-३-७) इत्यादौ प्रेत्येत्यस्य प्राप्तावपि प्रयोगाच्छ्रुतौ तदर्थत्वभ्रान्तिपरिहाराय तदनूद्य व्याचष्टे – **प्रेत्य मृत्वेति** ।। भाष्यकृतोऽपव्याख्याननिराकरणाभाव-प्रयुक्तां न्यूनतां परिहरति– **एवमुदाहृतेति ।। देवादिशरीराणीति** ।। इयमत्र परव्याख्या । अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते । असुर्याः परमात्म-भावमद्वयमपेक्ष्य देवादयोऽप्यसुराः । तेषां सम्भूताः असुर्याः । ते लोकाः । कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्ते इति जन्मानि ब्रह्मादिदेहाः अन्धेना-दर्शनात्मकेनाज्ञानेन तमसा आवृताः आच्छादिताः तान् स्थावरान् प्रेत्य इमं देहं त्यक्त्वाऽभिगच्छन्ति यथाकर्म यथाश्रुतमिति ।। ३ ।।

## (दुर्गमवाक्यार्थविवरणम्)

तद्विरुद्धमहादुःखवत्त्वादित्यनेन 'महादुःखैकहेतुत्वात्' इति प्रमाणैकवाक्य-तोक्ता । ननु उक्तनिर्वचने प्रमाणत्वेनोदाहृते 'न च रमन्ति' इति (भाग. १०.८७.२२.) वाक्ये सुखराहित्यादिकमसुर्यपदार्थतयोच्यत इत्यतः तद्विसंवाद-परिहारायाऽह **असुराणामिति** ।। ननु अत्र आत्महन्तॄणां सुखराहित्यादिकं फलतयोच्यते । नत्वसुर्यपदार्थतयाऽतः कथमुक्तार्थे प्रामाण्यं तस्येत्यत आह– **एतमेवेति** ।। अधिकांशोदाहरणाभिप्रायमाह– **आत्मन इति** । ये के-चिदात्मन इति केचिच्छब्दस्य ये आत्महनः ते केचेति । तच्छब्दसम्बन्धे हि विभागपरत्वं स्यात् । न च तथा किं नाम, ये के च ते सर्वेऽपि

इति यच्छब्दान्वयेन नियमपरत्वमेवेति भावः । अन्धत्वं नाम चाक्षुषज्ञान-हीनत्वमित्युक्तम् । अप्राप्तप्रतिषेधप्रसक्त्या जडे तमसि तादृशोक्त्ययोगादित्यत आह– **अन्धयतीति** ॥ देवादिशरीराणि इति सुरसम्बन्धिनः देहाः सुर्याः, तद्विरुद्धाः राक्षसादिदेहाः,उपलक्षणत्वेन मानुषादिविरोधस्यापि ग्राह्यत्वात् । अत एव देवादीत्यादिपदम् । तान् प्राप्नुवन्तीति पराभिप्रायः ॥ ३ ॥

## (उपनिषत्)

*(परमात्मस्वरूपनिरूपणम्)*

**अनेजदेकं मनसो जवीयो नैनद् देवा आप्नुवन् पूर्वमर्षत् ।**
**तद् धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥**

## (भाष्यम्)

**'अनेजन्निर्भयत्वात् तदेकं प्राधान्यतस्तथा ।**
**सम्यग् ज्ञातुमशक्यत्वादगम्यं तत् सुरैरपि ॥**

**स्वयं तु [१]सर्वानगमत् पूर्वमेव स्वभावतः ।**
**अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत् परम् ॥**

**द्रवतोऽत्येति सन्तिष्ठत् तस्मिन् कर्माण्यधान्मरुत् ।**
**मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत्' इति ब्रह्माण्डे ।**

**ऋष ज्ञाने ॥ ४ ॥**

## (टीका)

एवं निवृत्तकर्मणा विशुद्धाशयस्यैहिकामुष्मिकाशेषविषयेभ्यो व्यावृत्तस्येश्वर-तत्त्वबुभुत्सावतः, कोऽसावात्मा ? यद्विपरीतोपासनमसुर्यलोकप्राप्तिसाधनं स्यादित्यपेक्षायां परमात्मतत्त्वोपदेशः क्रियते– **अनेजदित्यादिना** ॥ तत्राऽद्यं

---

१. 'सर्वानुगमात्'

मन्त्रमन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे– **अनेजदिति** ॥ तत् परमात्मस्वरूपं निर्भयत्वादेवानेजत् अकम्पमानम् । न तु निष्क्रियत्वात् । प्राधान्यत एव चैकं न तु द्वितीयवस्तुरहितत्वात् । तथाशब्दो विशेषणसमुच्चये । मनसोऽपि जवीयो वेगवत्तरम् । मनो हि वेगवत् प्रसिद्धम् । सम्यग्ज्ञातुमशक्यत्वादेव 'नैनद्देवा आप्नुवन्' इति तत् सुरैरप्यगम्यमुच्यते । न तु सर्वथाऽगोचरत्वात् । पूर्वमर्षदित्यस्य व्याख्यानं स्वयं तु सर्वानिति । अगमत् व्यजानात् । पूर्वमेवेत्यनुवादेन स्वभावत इति विवरणम् । अचिन्त्यशक्तितश्च सर्वगत्वाच्च तत् परं ब्रह्म सन्तिष्ठद् द्रवतोऽन्यानत्येतीत्युच्यते । न त्वन्यस्य कल्पितत्वात् । अप इत्यस्य व्याख्यानं **कर्माणीति** । आ समन्तात् पालयन्तीति कर्माण्यापः। सर्वैः क्रियमाणानि कर्माणि तस्मिन्नर्पितवानित्यर्थः । अन्यकर्माणि कथं मातरिश्वाऽर्पयेदित्यत आह– **मारुतीति** ॥ यतः सर्वा चेष्टा मरुत्प्रेरणयोत्पन्नत्वान्मारुती अतस्तां हरये हरावर्पयेदित्युक्तमित्यर्थः । अर्षदित्येतदगमदिति व्याख्यातम् । तन्मूलभूतं धातुसूत्रमपि पठति– **ऋष ज्ञान** इति ॥ अनेजदित्यादेः निष्क्रियत्वाद्यर्थकल्पने मनसो जवीय इत्यादिविरोधश्च । न च सोपाधिकनिरुपाधिकत्वेन व्यवस्था । मुख्यार्थसम्भवे अमुख्यार्थायोगात् । स्वप्रधाने ब्रह्मणि वेदान्तानां तात्पर्यादत्र स्वरूपकथनमात्रेण वाक्यपरिसमाप्तिः ॥ ४ ॥

## (प्रकाशिका)

अगमद्व्यजानादित्यत्र गत्यर्थानां ज्ञानार्थत्वादिति भावः । अचिन्त्यशक्तित इति वदता भाष्यकारेणात्रैव स्थितस्यानन्तरूपग्रहणशक्तिसद्भावाच्चैकेन रूपेण तिष्ठद् रूपान्तरेण द्रवतोऽत्येतीति गत्यन्तरं सूचितम् । अप इत्यस्य व्याख्यानं कर्माणीति । कर्माणीत्यत्र सर्वकर्मणामन्ते कृष्णार्पणबुद्ध्या अपां दीयमानत्वात् शिखाग्रहणेन शिखिनामाकर्षवदप्पदेन सर्वकर्मणामुपलक्षणमिति भावः । एतादृशं ब्रह्मोपासीतेत्यादिज्ञात्रपेक्षितक्रियानभिधानात् स्वप्रधाने ब्रह्मणी-

त्युक्तम् । सास्नादिमती गौः, पृथुबुध्नोदराकारो घट इत्यादौ लौकिकवाक्ये, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रौतवाक्ये च स्वरूपमात्रनिरूपणेनापि वाक्य-पर्यवसानदर्शनादिति भावः ॥ ४ ॥

### (ईशावास्यभाष्यटीकाविवृतिः)

उत्तरमन्त्रस्याप्युपोद्घातत्वभ्रान्तिं परिहरन् अनुष्ठानोपयोगितया वृत्तमन्त्रत्रया-र्थानुवादेनावसरसङ्गतिप्रदर्शनपूर्वकं वर्तिष्यमाणमन्त्रसन्दर्भमवतारयति– **एवमित्यादिना** ॥ आशयस्येत्यन्तेन द्वितीयमन्त्रस्यार्थोऽनूदितः । व्यावृत्त-स्येत्यन्तेन प्रथमस्य वैराग्यं प्रति निवृत्तकर्मणामन्तःकरणशुद्धिद्वारा हेतुत्व-ज्ञापनाय क्रमोल्लङ्घनम् । बुभुत्सावत इत्यन्तेन तृतीयस्य, अपेक्षायामित्यन्तेना-वसरसङ्गतिरुक्ता । अवशिष्टेनोत्तरमन्त्रसन्दर्भप्रतिपाद्यमुक्तमिति ज्ञातव्यम् ॥ **तत्रेति** ॥ उत्तरमन्त्रसन्दर्भ इत्यर्थः ॥ **अन्यथाप्रतीतिनिरासायेति** ॥ एतदुभयमुत्तरटीकायां स्पष्टम् । स्मृत्यैवेत्यवधारयता लाघवं सूचितम् । प्रथमं स्ववचनेन व्याख्याय तत्र प्रमाणोपन्यासे गौरवं स्यादिति भावः । तच्छब्दत्रयं विशेष्यसमर्पकं सर्वत्रान्वेतीति भावेनाऽद्यमनूद्य व्याचष्टे– **तदिति** ॥ उत्तरं द्वयमप्येवमेव व्याख्यातव्यमिति भावः ।

निर्भयत्वादित्यादिहेतूनामेकमित्यादिनाऽन्वयभ्रान्तिं परिहरन् हेत्वनुवादेन साध्यसम्बन्धं दर्शयति– **निर्भयत्वादेवेति** ॥ अपव्याख्याननिराकरणस्य भाष्यारूढत्वार्थमचिन्त्यशक्तितश्चैवेत्येवशब्दस्य सर्वैः पञ्चम्यन्तैः सम्बन्ध-मभिप्रेत्यात्र सम्बन्धो दर्शितः । एवमुत्तरत्रापि द्रष्टव्यम् ॥**अनेजदिति** । अनेजदित्युच्यत इत्यर्थः । एकमित्यप्येवं व्याख्येयम् । निर्भयत्वादीनां शब्दवाच्यत्व एव हेतुत्वात् । अत एवोत्तरत्रागम्यमुच्यते इत्याद्युक्तम् । 'एजृ कम्पने' इति धातुं मनसि निधायाऽह– **अकम्पमानमिति** ॥ अवधारण-व्यावर्त्यतया अपव्याख्यानं दर्शयति– **नतु निष्क्रियत्वादिति** ॥ एवमुत्तरत्रापि ज्ञातव्यम् । उपमार्थत्वासम्भवादाह– **तथाशब्दो विशेषणसमुच्चय इति** ॥

समुच्चय इत्येवोक्ते न केवलं निर्भयत्वादनेजत् तथा एकमिति विशिष्टसमुच्चयः प्रतीयेत । स चायुक्तः । निर्भयत्वस्यैकशब्दवाच्यत्वे निमित्तत्वासम्भवात् । अतो विशेषण-समुच्चय इत्युक्तम् । न केवलमनेजत् तथा एकमिति विशेषणसमुच्चय इत्यर्थः । 'मनसो जवीयः' इत्येतत् प्रमाणेऽव्याख्यातत्वात् स्वयं व्याचष्टे– **मनसोऽपीति ॥** श्रौतक्रमानुसारेणात्र व्याख्यातमित्यवगन्तव्यम् । मनोग्रहणस्याभिप्रायमाह– **मनो हीति ॥ सम्यगिति ॥** साकल्येनेत्यर्थः ॥

ननु प्रमाणे 'तत्सुरैरगम्यमुच्यते' इति साध्यकथनमयुक्तम् । श्रुतौ 'नैनद् देवा आप्नुवन्' इत्युक्तत्वेन तद्विसम्वादप्रसङ्गादित्यतस्तदर्थानुवादरूपत्वान्न दोष इति भावेन नैनद् देवा आप्नुवन्नितीत्युक्तम् । 'नैनद्देवा आप्नुवन्' इत्यनेन तत्सुरैरगम्यमुच्यत इत्यर्थः । अत्र देवाः एनत् परमात्मस्वरूपं मनआदिभिर्नाऽप्नुवन्निति योजनया श्रुतौ गमेरवगमार्थत्वेन भाष्ये च देवाज्ञेयत्वमुच्यते, नतु देवाप्राप्यत्वम् । सम्यग्ज्ञातुमशक्यत्वादिति हेतुकथनेन । नतु सर्वथाऽगोचरत्वादित्यपव्याख्याननिराकरणेन च विरोधप्रसङ्गादिति ज्ञातव्यम् । एवशब्दव्यावर्त्यतयाऽपव्याख्यानं दर्शयति– **नतु सर्वथाऽगोचरत्वादिति ॥** एवं हि परेषां व्याख्या । द्योतनाद् देवाश्चक्षुरादीन्द्रियाणि एनत् प्रकृतपरमात्मतत्वं नाऽप्नुवन् ज्ञापनाय नाऽप्नुवन्तीति । टीकायां सर्वथा अगोचरत्वादित्युक्तिरर्थानुवाद इति ज्ञातव्यम् । गमेर्गत्यर्थतायामृष ज्ञान इत्युत्तरभाष्यविरोधप्रसङ्गादवगत्यर्थमाह– **व्यजानादिति ॥** ननु प्रमाणे स्वभावत इति व्यर्थं, श्रुत्यननुगुणं च । नच पूर्वमेवेति श्रौतपदव्याख्यानरूपत्वान्न दोष इति वाच्यम् । तथा सति पूर्वमेवेत्यस्य वैयर्थ्यप्रसङ्गादित्यतो व्याख्येयपदानुवादरूपत्वान्न तदित्याशयेनाऽह– **पूर्वमेवेत्यनुवादेनेति ॥**

नच श्रुतावेवशब्दाभावात् प्रमाणे कथं पूर्वमेवेत्यनुवाद इति वाच्यम् । स्वभावत इत्यर्थलाभाय 'सर्वं वाक्यं सावधारणम्' इति न्यायेनाध्याहृतावधारणस्यानुवादोपपत्तेः । सावधारणत्वे हि पूर्वमेव न त्वागन्तुकस्येत्युक्त्या स्वभाव इत्यर्थलाभसम्भवादिति भावः । एतदर्थमेव चानुवाद इति ज्ञातव्यम् ॥

**अचिन्त्यशक्तितश्चेति ॥** इयमत्र योजना । तत् परं ब्रह्म द्रवतोऽन्यानत्येतीत्युच्यत इत्यत्र सर्वगतत्वमेव हेतुः । न त्वचिन्त्यशक्तिरपि । गगनादीनामिव सर्वगतत्वमात्रनिर्वाह्येऽचिन्त्यशक्त्यनपेक्षणात् । 'सर्वगत्वात् स दूरे च' इति वक्ष्यमाणप्रमाणानुरोधाच्च । सन्तिष्ठद् द्रवतोऽन्यानत्येतीत्युच्यत इत्यत्राचिन्त्यशक्तित इति हेतुः । तिष्ठतो द्रवदतिक्रमणस्य लोकविरुद्धत्वेन सर्वगतत्वानिर्वाह्यस्याचिन्त्यशक्त्यपेक्षणात् ॥ **ऐश्वर्यादेवाऽसीनो दूरं व्रजतीत्यादि ।** 'आसीनो दूरं व्रजति शयानो याति सर्वतः । ऐश्वर्याद् भगवान् विष्णुर्विरुद्धं घटयत्यसौ' इति काठकभाष्योक्तेश्च (काठ-भा.१-२-२२) । नचैवं हेतुद्वयस्य भिन्नसाध्यकत्वे चशब्दानुपपत्तिः । हेतुसमच्चयमात्रे चशब्दाङ्गीकारात् । अत्राचिन्त्यशक्तितः सर्वगतत्वादित्युभयं नत्वित्यपव्याख्याननिरासलाभाय सावधारणं व्याख्येयम् । पूर्वन्यायेन सिद्धत्वादचिन्त्यशक्तितश्चैवेत्यवधारणसद्भावाच्च टीकायां नोक्तमिति ज्ञातव्यम् ॥

श्रुतिभाष्ययोर्विसंवादं परिहरति– **अप इत्यस्येति ॥** यद्यप्यत्राप इति नाप्शब्दस्य द्वितीयाबहुवचनान्तम् । तस्य कर्मवाचकत्वासम्भवात् । तद्धि रूढ्या योगेन वा । नाऽद्यः । वेदनिघण्टौ पकारान्तस्याप्शब्दस्य कर्मनामस्वपठितत्वात् । अपः अप्नः दंसः वेप इत्यादीनि कर्मनामानीति सकारान्तस्यैवापःशब्दस्य कर्मनामसु पठितत्वाच्च । टीकाकृताऽपि 'दक्षं दधाते अपसम् (ऋ.सं-१-२-९) इत्यस्यामृचि कर्मापसं च कर्तारमिति भाष्यव्याख्यानावसरे अपसं कर्मेति ऋक्पदभाष्यपदयोः सम्बन्धं प्रदर्श्य तदुपपादनायापःशब्दः कर्मनामेत्युक्तत्वाच्च । न द्वितीयः । उणादिवृत्तौ 'आप्नोतेर्ह्रस्वश्च' आप्लृ व्याप्तावित्यस्मात् क्विप्प्रत्यये ह्रस्वे च कृते निष्पन्नस्याप्शब्दस्याम्भोवाचित्वमित्युक्तत्वेनाम्भसि योगेऽपि कर्मणि तदभावात् । तथाऽपि 'विश्वेदेवासो अप्तुरः' (ऋ.सं.१.३.८) इत्यस्यामृचि 'अप्तुरः कर्मवेगिनः' इति भाष्यव्याख्यानावसरे टीकायामप्शब्दः कर्मवाचीत्युक्तत्वेनात्रापि पकारान्तस्यैवाप्शब्दस्य ग्रहणोपपत्तेः । नच योगरूढ्योरभावः । उणाद्यनुसारेण योगोपपत्तेः । न

च तत्राम्भोवाचित्वमित्युक्तत्वेन कर्मणि योगासम्भव इति वाच्यम् । प्रयोगानुसारेणाम्भोवाचित्वमित्युणादिवृत्तेः कर्मवाचित्वोपलक्षणत्वोपपत्तेः । कर्मणामपि प्रतिपुरुषं व्याप्तत्वात् ॥

अथवा आङ्पूर्वात् 'पा रक्षणे'इत्यस्मात् क्विपि निर्वचनत्वादाङो ह्रस्वत्वे च निष्पन्नस्यापूशब्दस्य कर्मवाचित्वे बाधकाभावात् । न ह्युणादिवृत्त्यनुसारेणैव योगोऽङ्गीकार्य इति निर्बन्धे कारणमस्ति । अत एवानुव्याख्याने 'आप आपालनाच्च' इत्युक्तम् । एतदेवाभिप्रेत्य टीकायाम् 'आ समन्तात् पालयन्ति' इति योगप्रदर्शनं कृतमिति ज्ञातव्यम् । ननु कर्मणां भगवत्याधानं नाम भगवति समर्पणमेव नान्यत् । 'सर्वा तां हरयेऽर्पयेत्' इत्युत्तरप्रमाणानुरोधात् । तत्र किं मातरिश्वा स्वकृतानि कर्माण्यर्पितवानुत, सर्वैः क्रियमाणानि । नाऽद्यः । तस्य भगवद्भक्तमात्रसाधारणत्वेन बिशिष्य मातारिश्वनस्तत्कथनानुपपत्तेः । न द्वितीयः । अन्यदीयस्य कर्मणोऽन्येन समर्पणानुपपत्तेरित्यतो द्वितीयपक्षाङ्गीकारपरत्वेन भाष्यं व्याचष्टे– **सर्वैः क्रियमाणानीति** ॥ अत्र समर्पणं नाम सर्वकर्मणां भगवत्कर्तृत्वेन तत्पूजात्वेन तद्भक्तिप्रसादफलकत्वेनानुसन्धीयमानत्वम् । यथोक्तं गीतातात्पर्यनिर्णये 'नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् । तथाऽपि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥ तद्भक्तिः तत्फलं मह्यं तत्प्रसादः पुनः पुनः । कर्मन्यासो हरावेवं विष्णोस्तुष्टिकरः सदा' (गी. ता.३-२७) इति ॥

अनेन मातरिश्वाऽपः कर्माणि अग्न्यादीनां ज्वलनदहनप्रकाशनाभिवर्षणादीनि दधाति विभजति धारयति चेत्यपव्याख्यानं निरस्तं भवति । इदानीं द्वितीयपक्षोक्तदोषपरिहारायोत्तरं भाष्यं व्याख्यातुं तमेव दोषमाशङ्कते– **अन्यकर्माणीति** ॥ अन्यकृतकर्माणीत्यर्थः । अन्यथा सर्वेषामपि तत् स्यादविशेषादिति भावः ॥

सर्वैः क्रियमाणा चेष्टा कथं मारुती स्याद् बाधादित्याशङ्कां परिहरन्नपेक्षिताध्याहारपूर्वकं भाष्यं योजयति– **यत इति** ॥ अन्येषाममुख्यकर्तृत्वेऽपि

प्रेरकत्वाद्वायोरेव मुख्यकर्तृत्वमतो न बाधो नाप्यविशेष इति भावः । यद्यप्या समन्तात् पालयन्तीति पूर्वोक्तव्युत्पत्त्या सत्कर्मणामेव पालकत्वादप्शब्दार्थत्वं प्रतीयते । तथाऽपि सर्वैः क्रियमाणानि कर्माणि तस्मिन्नर्पितवान् यतः सर्वा चेष्टा मरुत्प्रेरणयोत्पन्नेत्यादिटीकानुसारेण 'मारुत्येव यतश्चेष्टा सर्वाः' इत्यादि-भाष्यानुसारेण चोपलक्षणत्वेनासत्कर्मणामप्यप्शब्दार्थत्वं ज्ञातव्यम् । तेषां भगवदर्पणं नाम तत्कर्तृकत्वेनानुसन्धानमिति ज्ञातव्यम् ॥ **तन्मूलभूतमिति ॥** व्याख्यानमूलभूतमित्यर्थः ॥ **धातुसूत्रमपीति ॥** आगमस्य स्वयं प्रमाणत्वाद-पिशब्दः । धातुसूत्रापठने गमेर्ज्ञानार्थत्वं न ज्ञायेत । सम्यग्ज्ञातुमशक्यत्वदिति पूर्ववाक्यार्थपर्यालोचनया तज्ज्ञानसम्भवेऽपि प्रतिपत्तिगौरवप्रसङ्गादिति भाष्यकृतो भावः स्फुटत्वान्न वर्णित इति बोध्यम् ॥

यद्यपि काशिकायां 'ऋषी गतौ' इति धातुं पठित्वा ईदित्त्वादेव हि ऋष्ट इत्यादौ 'श्वीदितो निष्ठायाम्' (पा.अष्टा-७-२-१४)इति निष्ठाया अनिट्त्व-मुक्तम् । धातुपाठेऽपि 'ऋषी गतौ'इति ईदित्त्वेन गत्यर्थक एव धातुः पठ्यते नतु 'ऋष ज्ञाने' इति । तथाऽपि गत्यर्थस्य ऋषतेर्ज्ञानार्थत्वमुक्तानुबन्धत्वं चाभिप्रेत्य भाष्ये 'ऋष ज्ञाने' इति धातुः पठित इति द्रष्टव्यम् । यद्वा, सर्वज्ञ-भाष्यकृत्प्रयोगानुसारेण 'ऋष ज्ञाने' इत्यपि धातुरस्तीति ज्ञातव्यम् । अपव्या-ख्याने प्रमाणविरोधपरं भाष्यमुपलक्षणमित्याशयेनान्तरङ्गानुपपत्तिमप्याह– **अनेजदित्यादेरिति ॥** अत्राऽद्येनाऽदिशब्देन एकमित्यादेर्द्वितीयेनाद्वितीय-चादेस्तृतीयेन 'तद्धावतोऽन्यान्'इत्यादेर्ग्रहणम् ॥ ४ ॥

**ततश्चायमर्थः ॥** अनेजदित्यस्य निष्क्रियार्थत्वे सक्रियत्वप्रतिपादकेन 'मनसो जवीयः' इत्यनेन विरोधः । एकमित्यस्य द्वितीयराहित्यार्थत्वे 'तद् धावतोऽन्यान्' इत्याद्यन्यसद्भावप्रतिपादकविरोधः । 'नैनद् देवा आप्नुवन्'इत्यस्य सर्वथा इन्द्रियागोचरत्वार्थत्वे 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' इति दर्शनप्रार्थनविरोधः । एवमन्यत्रापि विरोधो द्रष्टव्यः इति ॥

ननु निरुपाधिकचैतन्यस्य निष्क्रियत्वं सर्वेन्द्रियागोचरत्वं चोच्यते । सक्रियत्वमिन्द्रियगोचरत्वं च सोपाधिकस्य । 'मनसो जवीयः' इत्यस्यान्तः-

करणावच्छिन्नचैतन्यपरत्वेन 'यत्ते रूपम्' इत्यादेरादित्यपरत्वेन परेण व्याख्यातत्वादेवं परमार्थापेक्षयाऽद्वितीयत्वं व्यावहारिकापेक्षयाऽन्यप्रतिपादनमित्यतो न कोऽपि विरोध इत्याशङ्क्य परिहरति– **नचेति** ।। सोपाधिकेत्याद्युपलक्षणं, पारमार्थिकत्वव्यावहारिकत्वेनेत्यपि द्रष्टव्यम् । कुतो नेत्यत आह– **मुख्यार्थेति** ।। निरुपाधिकचैतन्यस्याकल्पितत्वेन मुख्यत्वात्, सोपाधिकस्य कल्पितत्वेनामुख्यत्वादस्मदुक्तन्यायेन सर्वस्य मुख्यब्रह्मपरत्वसम्भवेन 'मनसो जवीयः'इत्यादेः कल्पितामुख्यचैतन्यार्थत्वायोगात् । व्यावहारिकस्यापि कल्पितत्वेनामुख्यतया 'तद्धावतोऽन्यान्' इत्यादेरस्मदुक्तन्यायेनाकल्पितमुख्यार्थत्वसम्भवेऽमुख्यार्थत्वायोगादित्यर्थः । उपलक्षणमेतत् । एवशब्दस्य परमार्थद्वितीयराहित्यार्थत्वे 'याथातथ्यतोऽर्थान्'इत्यादिविरोधः । तत्र महदादीनां याथातथ्यत इत्यनेन परमार्थत्वस्योक्तत्वादित्यपि द्रष्टव्यम् । यद्वा, अमुख्यार्थायोगादित्यस्य लक्ष्यार्थायोगादित्यर्थः । अनेजदेकमित्यादेर्निरुपाधिकचैतन्यपरत्वं वदता परेण लक्षणाया अङ्गीकर्तव्यत्वादङ्गीकृतत्वाच्चेति व्याख्यातव्यम् । ननु न लक्षणाङ्गीकार एव दोषः । तथा सति कुत्रापि सा न स्यादित्यत उक्तं **मुख्यार्थसम्भव इति** ।। अस्मदुक्तरीत्या वाच्यार्थसम्भव इत्यर्थः । नन्वपव्याख्यान इव भाष्यकृद्व्याख्यानेऽप्यस्त्यनुपपत्तिः । तथाहि, अनेकपदात्मकवाक्यश्रवणादनेकार्थप्रतीतावपि वाक्यस्य तावदेकत्र तात्पर्यं कल्प्यम् । अन्यथैकवाक्यत्वासम्भवात् । यत्परः शब्दः स शब्दार्थ इति शाब्दाः । वाक्यतात्पर्यविषयश्च स एव । यत्प्रतिपादनेन वाक्यपर्यवसानं यत्प्रतिपादनाय च पदान्तरोपादानम् । तथाभूतश्च कार्यात्मैव । नहि गौरश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा वाक्यं पर्यवसितमनुभूयते । किन्तु 'देवदत्त गामानय' इत्यादि कार्यनिष्ठमेव । अतः कार्यमेव सर्वत्र वाक्यार्थः । कार्यत्वं च कृतिसाध्यत्वे सति कृत्युद्देश्यत्वम् । तत्र लिङ्लोट्तव्यप्रत्ययः साक्षात् कार्याभिधायी । पदान्तराणि तु तत्प्रतीतये तदन्वितस्वार्थाभिधायीनि तत्पराण्येव । न चानेजदेकमित्यादौ तद्बोधकं लिङादि श्रूयते । ततः

केवलसिद्धस्वरूपब्रह्मप्रतिपादकस्यास्यापर्यवसितत्वेनाप्रामाण्यप्रसङ्गः । नच 'विष्णुरुपांशु यष्टव्यः' इत्यादिकर्मविधिशेषत्वेन वा 'आत्मा द्रष्टव्यः श्रोतव्यः' इत्यादिज्ञानविधिशेषत्वेन वाऽत्र ब्रह्मप्रतिपादनेन कार्यपरत्वान्नापर्यवसितत्वमिति वाच्यम् । तथात्वे ब्रह्मणः कार्यशेषत्वापत्त्या स्वप्रधाने ब्रह्मणि वेदान्तानां महातात्पर्यमिति सिद्धान्तव्याकोपप्रसङ्गादित्यत आह– **स्वप्रधान इति ॥** कार्यानन्वित इत्यर्थः । सत्यं पर्यवसितमेव वाक्यं प्रमाणं कार्यपरमेव च पर्यवसितमिति । तथाऽपि कृतिसाध्यत्वे सति कृत्युद्देश्यत्वं न कार्यत्वम् । तथा सति मात्रादीन् जिज्ञासमानं प्रति 'इयं ते माता', 'अयं तव पिता' इत्यादिसिद्धबोधकवाक्यस्याप्रामाण्यप्रसङ्गात् । किन्त्विष्टेष्टसाधनतान्यतर-रूपमेव । तच्च क्वचित् सिद्धं क्वचित् कृतिसाध्यमित्यन्यदेतत् । तदिहापि ब्रह्मण उत्तमानामिष्टत्वान्मध्यमादीनामिष्टसाधनत्वात् तद्बोधकवाक्यस्य युक्ता परिसमाप्तिरिति भावः ॥ ४ ॥

## (दुर्गमवाक्यार्थविवरणम्)

निवृत्तकर्मणेति द्वितीयमन्त्रार्थानुवादः । ऐहिकेति प्रथममन्त्रस्य विरागं प्रति निवृत्तकर्मणां हेतुतोपपादनाय क्रमोल्लङ्घनम् । 'कर्मणा शुद्धसत्वस्य वैराग्यं जायते हृदि' इत्युक्तं प्राधान्यतः, तथा प्राधान्याच्चेति समुच्चयः प्रतीयते । तदयुक्तम् । निमित्तान्तरानुक्तेरित्यत आह– **तथा शब्द इति ॥** अनेजदित्येकं विशेषणमुक्त्वा एकत्वरूपविशेषणान्तरं समुच्चिनोतीत्यर्थः । वेगवत्तरत्वे मनस एव प्रतियोगिता किमिति निरूप्यत इत्यत आह– **मनो हीति ॥** कर्मणामपूशब्दवाच्यत्वं कथमित्यत आह– **आ समन्तादिति** ॥ नन्वेवं सत्कर्मणामेवापूशब्दवाच्यता स्यात् । इतरेषां पालकत्वाभावादिति चेत्, सत्यम् । भगवत्पूजात्मकत्वेन मरुत्प्रवरेणार्पणस्य क्रियमाणत्वान्मुख्यवृत्त्या सत्कर्मणामेवापूशब्देनोक्तौ इतराण्यपि क्रियात्वादिसादृश्याद् गौण्या वृत्त्या उच्यन्ते । तत्रार्पणं नाम तत्कर्तृत्वानुसन्धानमेवेति द्रष्टव्यमिति भावः ॥

ननु 'अनेजत्' इत्यादेः निष्क्रियत्वाद्यर्थतैव किं न स्यादिति चेन्न, प्रमाणेन व्याख्यातत्वात् । किञ्च यद्यनेजत् निष्क्रियमित्यर्थः स्यात्, तर्हि 'मनसो जवीयः' इति विरुद्ध्येत । क्रियाभावे वेगवत्तरत्वाभावात् । एकमित्यस्य द्वितीयवस्तुराहित्यमर्थश्चेत्, 'नैनद्देवा आप्नुवन्' इति वचनविरोधः । तत्र देवानामेव द्वितीयतयाऽभिहितत्वात् । न खलु सुराणां नरशृङ्गायमानत्वे तदज्ञेयता वक्तुं रमणीया स्याद् अप्राप्तप्रतिषेधप्रसङ्गात् । 'नैनद्देवा आप्नुवन्' इत्यत्र सर्वथाऽगम्यत्वमभिमतं चेत्, तदा 'तस्मिन्नपो मातरिश्वा दधाति' इत्ययुक्तं प्रसज्येत । न ह्यनवद्यागण्यकल्याणगुणैरतिपूर्णतया साकल्येनागोचरं नारायणाभिधं ब्रह्म सर्वथाऽप्यविदित्वा भगवतो वासुदेवस्य परमाप्ततमेन निजतेजसैवानादितोऽप्यवगतपरावरेण हरिचरणारविन्दपरागसंसक्तमानसेन भगवता वायुदेवेन तत्र सर्वकर्माणि अर्पयितुं युक्ततामर्ह(य)न्ति । 'तद्धावतोऽन्यान् अत्येति' इत्यत्रात्ययनस्य कल्पितत्वाभिप्राये 'तद्दूरे तद्वन्तिके' इत्यादि-विरोधः । तत्रापि स्वार्थे तात्पर्यं नास्तीति चेन्न, 'यस्तु सर्वाणि' इत्यादिना फलकथनेन तात्पर्यावगमात्, तत्रापव्याख्यानं तु निराकरिष्यते । ननु स्वाभाविकेन रूपेण निष्क्रियत्वादिकं ब्रह्मणः, औपाधिकेन तु मनसो जवीय-स्त्वादि । अतो न विरोध इति चेत्, भवेदेवं कल्पना, यदि मुख्यार्थाङ्गीकृतौ न विरोधशान्तिर्भवेत् । नैतदस्ति । सकलश्रुतिस्मृतियुक्तिसिद्धस्य मुख्यस्यैवार्थस्य भगवता भाष्यकारेणाविरोधेनैवोक्तत्वान्मुख्यसम्भवे चामुख्यायोगात् । अतो नैवं व्यवस्था युज्यत इति तदेवाऽऽह– **अनेजदित्यादेरिति** ॥ ४ ॥

## उपनिषत्

*(परमात्मतत्वोपदेशः)*

**तदेजति तन्नेजति तद् दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य तदु[१] सर्वस्य बाह्यतः** ॥ ५ ॥

---

१. 'तदु सर्वस्यास्य' इत्यपि क्वचित् पाठः ।

(भाष्यम्)

तदेजति [१]तत एव एजत्यन्यत् । तत् स्वयं नेजति ।

'ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् ।
सर्वगत्वात् स दूरे च बाह्येऽन्तश्च समीपगः'

इति तत्वसंहितायाम् ॥ ५ ॥

(टीका)

उत्तरमन्त्रे 'तदेजति' इत्यस्य तद् ब्रह्म चेष्टत इति तु व्याख्यानं प्रायपाठविरुद्धम् । अतः तद् बिभेतीत्यन्यथाप्रतीतिः स्यात्तन्निरासायाऽह–**तदिति** ॥ तदित्यव्ययम् । पञ्चम्यर्थे चेदमङ्गीक्रियते । तर्ह्येजनस्य किं कर्तृ ? तत्राऽह–**अन्यदिति** ॥

ननु किमध्याहारेण ? तद् ब्रह्म बिभेतीत्येवार्थः किं न स्यादित्यतस्तन्नेजतीत्युत्तरवाक्यविरोधात् । शाब्द्या ह्यनुपपत्तेरार्थी बलवतीति भावेन तद्व्याख्याति– **तत् स्वयमिति** ।। तन्नेजतीत्येतन्निष्क्रियत्वार्थमपि व्याख्यातुं शक्यमित्यतो मन्त्रार्थे समाख्यामाह– **तत इति** ॥ दूरे समीपतश्च बाह्येऽन्तश्चेति योज्यम् ॥ ५ ॥

(प्रकाशिका)

प्रायपाठविरुद्धमित्यस्य 'तदेजति तन्नेजति' इत्यादिप्रायपाठविरुद्धमित्यर्थः । शाब्द्या ह्यनुपपत्तेरित्यत्र तद् ब्रह्म एजति चलतीति यथाश्रुतवाक्यार्थकथने तन्नेजतीत्युत्तरवाक्यविरोधः स्यात् । कम्पनरूपैजनस्य निर्भये ब्रह्मण्यसम्भवाद् यथास्थितवाक्ययोजनायामर्थ एवानुपपन्नः । भिन्नवाक्यतायां तु तस्मादेजतीति ब्रह्मनिमित्तकैजनरूपार्थस्यानुपपत्त्यभावान्नार्थानुपपत्तिः । किं तु किमेजतीत्याकाङ्क्षायां अन्यदिति पदाध्याहाराभावे वाक्ययोजनानुपपत्तिरूपा शाब्द्येवानुपपत्तिरिति भावः । दूरे बाह्ये अन्तः समीपग इति यथास्थितवाक्य-

२ .'तत एजति'

योजनायाः पौनरुक्त्येनासम्भवाद् दूरे समीपगश्च बाह्येऽन्तश्चेति भिन्नक्रमेण योजना कार्येति भावेनोक्तम्– **दूरे समीपगश्चेति** ॥ ५ ॥

### (ईशावास्यभाष्यटीकाविवृतिः)

ननु तदेजतीत्याद्युत्तरभाष्यं व्यर्थम्। नच श्रौतपदानुवादेन व्याख्यानार्थमिति वाच्यम् । अप्रतीत्यन्यथाप्रतीतिरूपव्याख्यानबीजाभावेन तदयोगात् । नच 'तद् ब्रह्म बिभेति' इत्यन्यथाप्रतीतिरेव बीजमिति वाच्यम् । तच्चेष्टत इति यथाप्रतीतेरपि सम्भवेनान्यथाप्रतीत्यैव भाव्यमिति निर्बन्धे कारणाभावादित्यतः परिशेष एव तत्कारणमित्याशयेनाऽऽह– **उत्तरमन्त्र इति** ॥ **प्रायपाठविरुद्धमिति** ॥ अनेजदित्यत्र एजतेर्भयार्थत्वेन व्याख्याततत्वात् तत्प्रायपठितत्वविरुद्धमित्यर्थः। **अत इति** ॥ अर्थान्तरप्रतीत्यसम्भवादित्यर्थः। ननु तदित्यस्य तत इति व्याख्यानमलाक्षणिकत्वादयुक्तमित्यतस्तद्धटयन्नुत्तरभाष्यमवतारयति– **तदित्यव्ययं पञ्चम्यर्थे चेदमङ्गीक्रियत इति** ॥ ननु तच्छब्दरूपस्य तदित्यस्य प्रथमात्वेऽपि 'सप्तसु प्रथमा' इति महाव्याकरणसूत्रात्, 'सुपां सुलुक्' (पा.अष्टा.७-१-३९) इति प्रसिद्धव्याकरणसूत्राद्वा पञ्चम्यर्थत्वसम्भवे अव्ययत्वाङ्गीकारोऽयुक्तः । 'नाम ब्रह्म' इत्यादौ प्रथमादेः सप्तम्याद्यर्थत्वस्योदाहृतव्याकरणद्वयानुसारेण भाष्यटीकाकृद्भ्यां बहुशोऽङ्गीकृतत्वाच्चेति चेन्मैवम् । महाव्याकरणसूत्रेण प्रथमायाः पञ्चम्यर्थत्वेऽपि प्रसिद्धव्याकरणसूत्रेण च प्रथमायाः पञ्चम्यादेशत्वेन पञ्चम्यर्थत्वेऽपि न साक्षात् पञ्चम्या एव पञ्चम्यर्थत्वम् । अव्ययत्वाङ्गीकारे तु 'सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्'[1] इत्युक्तन्यायेन तदित्यस्यैव पञ्चमीत्वेन तदर्थत्वोपपत्तेः प्रतिपत्तिलाघवादव्ययत्वाङ्गीकारो युक्तः । यद्वा, एतद्ग्रन्थस्योपायान्तरत्वान्न कश्चिद् दोषः। तदित्यस्याव्ययत्वं तु स्वरादित्वेनेति मन्तव्यम्। नन्वध्याहाराभावे कथं कर्त्राकाङ्क्षाशान्तिरित्यत उक्तम्– **तद्ब्रह्मेति** ॥

---

१. वामनकृताष्टाध्यायीव्याख्याकाशिकोदाहृता कारिका-१-१-३७ ।

ननु तत एजति बिभेतीति व्याख्याने कर्तृवाचकशब्दाभावो दोषः । तद् बिभेतीति व्याख्याने उत्तरवाक्यविरोधो दोष इति पक्षद्वयस्यापि दुष्टत्वसाम्यात् कथं निर्णय इत्यत आह– **शाब्द्या ह्यनुपपत्तेरिति** ॥ आर्थानुपपत्तेरन्यतर-वाक्याप्रामाण्यहेतुत्वेन बलवत्त्वम् । शाब्दानुपपत्तेस्त्वध्याहारेण परिहार्यत्वान्न तद्धेतुत्वमिति ततो दुर्बलत्वमिति भावः । ननूपपत्तिसिद्धेऽर्थे प्रमाणान्तरानपेक्ष-णादुत्तरं भाष्यमनर्थकमित्यत उपपत्तेः सावकाशत्वशङ्कापूर्वकं भाष्यमवतारयति– **तन्नेजतीत्येतन्निष्क्रियत्वार्थमपीति** ॥ तथा चोत्तरवाक्यस्याविरोधकत्वात् तदेजतीत्यस्य तद् ब्रह्म बिभेतीत्येवार्थो युक्तः । अध्याहाराभावादिति भावः । नच तन्नेजतीत्यस्य निष्क्रियत्वार्थत्वे 'मनसो जवीयः' इत्यनेन विरोधः शङ्क्यः । निर्भयत्वार्थत्वेऽपि अनेजदित्यनेन पौनरुक्त्यदोषसाम्यात् । यदि च तात्पर्यज्ञापकत्वेन पौनरुक्त्यं परिह्रियते तदा सोपाधिकनिरुपाधिकविषयत्वेन विरोधोऽपि परिह्रियताम् । नचैवं पक्षद्वयेऽपि साम्यादेवमेव व्याख्याने किं बीजमिति वाच्यम् । 'तदेजति'इत्यस्य तत एजत्यन्यदिति व्याख्यानस्यातिक्लिष्टत्वेन साम्याभावात् । साम्येऽप्यर्थानिर्णयेन सिद्धान्तिन एवानिष्टत्वात् । अत एव निष्क्रियत्वार्थमपीत्युक्तमिति शङ्कितुरभिप्रायः । यद्यपि मुख्यार्थसम्भवेऽ-मुख्यार्थायोगादित्युक्तरीत्या सोपाधिकविषयत्वेन विरोधस्य परिहर्तुमशक्यत्वेन 'मनसो जवीयः' इत्येतद्विरोधस्यापरिहार्यत्वान्नैतच्चोद्यावकाशः । तथाऽपि तदाच्छादनेनैवैतच्चोद्यमिति मन्तव्यम् ॥ **मन्त्रार्थ इति** ॥ अतो नोत्तरार्धस्य वैयर्थ्यमिति भावः । ननु सर्वगतत्वस्य दूर इत्यादावेकैकत्र तावन्न हेतुत्वम् । असर्वगतानामपि घटादीनां दूरादिस्थत्वात् । नापि द्वयोर्द्वयोः । सर्वगतत्वाद् दूरे बाह्ये च । सर्वगतत्वादन्तः समीपगश्चेत्यत्रापि पूर्वदोषानुवृत्तेरित्यतो द्वितीयं पक्षमङ्गीकृत्य तत्रोक्तदोषपरिहाराय श्रुत्यनुसारेण प्रतियोग्यनुयोगि-क्रमानुसारेण च पदानि योजयति– **दूर इति** ॥ ५ ॥

**(अथ खण्डार्थः)** ततश्चानेजदेकमित्यादिमन्त्रद्वयस्यायमर्थः । 'तद्धावतः' इत्यत्र श्रूयमाणं तदित्येतत् सर्वत्रान्वेति । तद् ब्रह्म निर्भयत्वादेवानेज-

दित्युच्यते । नतु निष्क्रियत्वात् । प्रधानत्वादेवैकमित्युच्यते । नतु द्वितीयशून्यत्वात् । मनसो जवीयः । मनो हि वेगवत्त्वेन प्रसिद्धम् । ततोऽप्यतिशयेन वेगवत् । एनद् एतद् ब्रह्म देवाः ब्रह्माद्याः नाऽप्नुवन् सम्यक् न ज्ञातवन्तः । स्वयं तु पूर्वं पूर्वमेवानादित एव सर्वान् आर्षत व्यजानात् । 'ऋष ज्ञाने' तद् ब्रह्म स्वयमेकत्र तिष्ठदेव धावतो द्रवतोऽन्यानत्येति अतिक्रम्य वर्तते । एवं माहात्म्योपेते तस्मिन् ब्रह्मणि मातरिश्वा मुख्यवायुरपः सर्वैः क्रियमाणानि कर्माणि दधाति तत्पूजात्वेन समर्पितवान् ॥ मं. ४ ॥ वायोः सर्वप्रेरकत्वेन सर्वकृतकर्मणां मुख्यतो वायुकर्तृकत्वेन युक्तं वायोः सर्वकर्मसमर्पणम् । ब्रह्मणोऽन्यस्माद् भयाभाववदन्यस्यापि ब्रह्मणः सकाशाद् भयाभावे साम्यं स्यादित्यत आह– **तदेजतीति** ॥ तदित्यव्ययं पञ्चम्यर्थे । अन्यदिति कर्त्रध्याहारः । तत् ततो ब्रह्मणः सकाशादन्यद् ब्रह्मादिजगदेजति बिभेति । 'भीषाऽस्माद् वातः पवते' (तै.उप.२.८.१) इत्यादेः । तद् ब्रह्म स्वयं नैजति न बिभेति । तद् दूरे तदु तदेवान्तिके समीपे च वर्तते । सर्वगतमिति यावत् । न चानेजदित्यनेन निर्भयत्वस्य 'तद्धावतः' इत्यादिना सर्वगतत्वस्य चोक्तत्वात् पुनरुक्तिरिति वाच्यम् । श्रुतिः स्वस्य परमात्मनिर्भयत्वसर्वगतत्वप्रतिपादने तात्पर्यमस्तीति ज्ञापनाय तदभ्यस्यतीत्यङ्गीकारे दोषाभावात् । तद् ब्रह्मास्य सर्वस्यान्तर्नियामकत्वेन वर्तते । तदु तदेवास्य सर्वस्य बाह्यतो बहिराश्रयत्वेन वर्तत इति ॥ ५ ॥

## (दुर्गमवाक्यार्थविवरणम्)

**प्रायपाठेति** ॥ अनेजदित्यत्र एजृ धातोर्यथार्थकत्वं गृहीत्वा तदभावस्योक्तत्वादित्यर्थः । अस्य लेखनं नास्ति । निष्क्रियार्थमपीति, तथा च एजति बिभेतीत्यर्थाङ्गीकारेऽपि न विरोध इति भावः । यद्यपि 'मनसो जवीयः' इत्यनुरोधेन अनेजदित्यत्रैव निर्भयार्थतया निर्णीतं, तथाऽपि तदाच्छादने नेयमाशङ्केति द्रष्टव्यम् ॥ ५ ॥

### (उपनिषत्)

*(परमात्मनः सर्वभूतगतत्वज्ञानेन जायमानफलनिरूपणम्)*

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चाऽत्मानं ततो न विजुगुप्सते ॥ ६ ॥

### (भाष्यम्)

**'सर्वगं परमात्मानं सर्वं च परमात्मनि ।**
**यः पश्येत् स भयाभावान्नाऽत्मानं गोप्तुमिच्छति'**
**इति सौकरायणश्रुतिः ॥ ६ ॥**

### (टीका)

'तद्दूरे तद्वन्तिके' इत्यादौ परमेश्वरस्य सर्वभूताश्रयतया सर्वभूतगतत्वमुक्तम् । तज्ज्ञानफलं 'यस्तु सर्वाणि' इति मन्त्रेणोच्यते । तत्र जीवस्य सर्वभूतात्मकत्वमुच्यत इत्यपव्याख्याननिरासाय मन्त्रं श्रुत्या व्याचष्टे– **सर्वगमिति** ॥ 'सर्वगं परमात्मानम्' इति, 'सर्वभूतेषु चाऽत्मानम्' इत्यस्यार्थः । 'सर्वं च परमात्मनि' इति पूर्वार्धस्य । भयाभावादिति 'ततो न विजुगुप्सते' इत्येतद्व्याख्यानस्य 'नाऽत्मानं गोप्तुमिच्छति' इत्यस्योपपादनम् । अभेदार्थतायां सप्तम्यनुपपत्तिश्च ॥ ६ ॥

### (प्रकाशिका)

सर्वभूतान्यात्मनि आत्मत्वेनाभिपश्यतीत्यपव्याख्यानकर्तुरभिप्राय इति भावेनाऽह **जीवस्य सर्वभूतात्मकत्वमिति** ॥ इदं चोपलक्षणम् । सर्वभूतान्यात्मनि स्वस्मिन् जीव इति यथाश्रुतार्थकथनाशाऽप्येकस्मिन् जीवे सर्वजीवानामभावेन परस्यानुपपन्नैव । अस्माकं तु विश्वरूपे भगवति सर्वजीवानामाश्रितत्वान्न काऽप्यनुपपत्तिः ॥

'ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ।
पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ॥'
इति हि स्मृतिः ॥ ६ ॥

## (ईशावास्यभाष्यटीकाविवृतिः)

प्रकरणवशादुत्तरमन्त्रस्यापि भगवन्माहात्म्यप्रतिपादकत्वमिति भ्रमनिरासाय प्रतिपाद्यं कथयन् भाष्यं सङ्गमयति– **तद् दूर इत्यादि** ॥ यद्यप्यत्र सर्वभूताश्रयत्वं सर्वभूतगतत्वं चोक्तमित्येव वक्तव्यम् । 'तदु सर्वस्य बाह्यतः' इत्यनेन सर्वभूताश्रयत्वस्य,तदन्तरस्येत्यनेन सर्वभूतगतत्वस्य च पृथगुक्तत्वात् । अत एव इत्यादावित्युक्तम् । यस्त्वित्युत्तरमन्त्रे तद्व्याख्यानश्रुतौ चोभयोः समकक्ष्यतयोक्तत्वाच्च । तथाऽपि श्रुत्युक्तं सर्वभूताश्रयत्वं सर्वभूतगतत्वे प्रकारसमर्पकमेव । नतु स्वातन्त्र्येण ज्ञेयमिति ज्ञापनाय तथोक्तिसम्भवात् । पृथगुभयोर्ज्ञेयत्वसम्भवे किं प्रकारसमर्पकताज्ञापनेनेति चेन्नैवं शङ्क्यम् । सर्वभूतगतत्वस्य गगनादिसाधारणस्य स्वावस्थानाय सर्वभूतोपजीवनरूपस्य वा भगवन्माहात्म्यरूपत्वाभावेन मुमुक्षुज्ञेयत्वासम्भवादिति शङ्कावकाशात् । सर्वभूतगतत्वोक्तौ तु नैतच्चोद्यावकाशः । भगवतः सर्वभूतगतत्वं सर्वभूतस्थितिहेतुव्यापारप्रेरकत्वेन । एतदेव सर्वभूताश्रयतया सर्वभूतगतत्वं नाम । नचैतद् गगनादिसाधारणं, नवा स्वावस्थानाय सर्वभूतोपजीवनम् । येनोक्तदोषः स्यात् । सर्वाधारतया सर्वभूतेषु परमात्मानं विजानतः पूर्वमन्त्रोक्तस्य सर्वाधारतया सर्वभूतगतत्वस्यात्रानुवादः । प्राक् सर्वाधारत्वेन सर्वगतत्वदर्शनफलमुक्तमित्याद्युत्तरटीकाग्रन्थादप्ययमेवार्थष्टीकाकृदभिप्रेतो ज्ञायते । अन्यथा टीकायां क्वचिदपि सर्वभूताश्रयत्वस्य सर्वभूतगतत्वसमकक्ष्यतयोक्तिप्रसङ्गेन नियमेन प्रकारतयोक्तिर्न स्यात् । उक्तं च प्रमेयदीपिकायाम् – 'नहि सर्वभूतप्रेरकत्वेन सर्वभूतगतत्वं गगनादिसाधारणम् । येन मुमुक्षूपास्यत्वाभावः' इति । उक्तं च तत्वप्रकाशिकायाम् – 'न सर्वभूतेषु स्थितिमात्रं सर्वभूतान्तर्यामी च' इति ॥

**तज्ज्ञानफलमिति ॥** अत्र ज्ञानसामान्यग्रहणेन यस्त्विति मन्त्रे सर्वगमिति भाष्योदाहृतश्रुतौ च दृशेर्ज्ञानसामान्यार्थत्वम् । 'पश्यार्थैश्चानालोचने' (पा.अष्टा.८-१-२५) इत्यादौ दृशेर्ज्ञानमात्रार्थताया दृष्टत्वादित्युक्तं भवति । कुतो विशेषशब्दस्य सामान्यपरत्वमिति चेत् । यस्त्विति मन्त्रस्य यस्मिन्निति मन्त्रस्य च पौनरुक्त्यमाशङ्क्याऽद्यस्य ज्ञानसामान्यवाचकत्वं, द्वितीयस्य विशेषज्ञानपरत्वं चाऽश्रित्य 'विजानतश्चात्रोच्यते' इत्युत्तरभाष्येण परिहारादिदं ज्ञायते । एतच्च तद्वाक्यव्याख्यानटीकायां स्पष्टम् । 'प्राप्ताधिकारस्य परमेश्वर-तत्वबुभुत्सावतः परमात्मतत्वोपदेशः क्रियते । अनेजदित्यादिना' इत्यादि-पूर्वटीकापर्यालोचनया चास्य ज्ञानसामान्यपरत्वं विज्ञायते । नच यस्त्विति मन्त्रस्य ज्ञानसामान्यपरत्वे तत्साक्षात्कारो मोक्षसाधनमित्यतीतग्रन्थेनोक्त-मित्यग्रिमटीकाविरोध इति वाच्यम् । अत्रोक्तपरोक्षज्ञानस्यापरोक्षज्ञानद्वारा मोक्षसाधनत्वेन साक्षात्कारस्यापि मोक्षसाधनत्वमुक्तप्रायमित्यभिप्रायेण वा यस्मिन्निति मन्त्रे विजानत इत्यनेन साक्षात्कारस्योक्तत्वाभिप्रायेण वा अग्रिम-ग्रन्थप्रवृत्त्युपपत्तेरिति ॥

**सर्वभूतात्मकत्वमुच्यत इति ॥** इयमत्रापव्याख्या ॥ यस्तु परिव्राट् मुमुक्षुः सर्वाणि भूतान्यव्यक्तादीनि स्थावरान्तानि आत्मन्येवानुपश्यति । आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु चाऽत्मानं तेषामपि भूतानामहमेवाऽत्मेति । सर्वभूतेषु चाऽत्मानं यस्तु पश्यति सः ततः तस्मादेव दर्शनात् । न विजुगुप्सते विजुगुप्सां घृणां न करोति । सर्वा हि घृणा आत्मनोऽन्यं निकृष्टं पश्यतो भवति । आत्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमस्तीति ॥

मन्त्रसमाख्याश्रुत्योः क्रमेण व्याख्यानव्याख्येयभावभ्रमं निवारयति– **सर्वग-मिति ॥** पूर्वार्धस्यार्थ इति सम्बन्धः । ननु व्याख्यानश्रुतौ भयाभावादिति व्यर्थम् । व्याख्येयमन्त्रे तद्व्याख्येयपदाभावादित्यत आह– **भयाभावादि-तीति ॥** भयाभावादित्येतन्नाऽमानं गोप्तमिच्छतीत्यस्योपपादनमित्यन्वयः ॥

ततश्च भयाभावादित्येतदुपपत्तिसमर्पकतया मन्त्रेऽध्याहाररूपमेव न व्याख्यानरूपमित्युक्तं भवति । ननु मन्त्रे नाऽत्मानं गोप्तुमिच्छतीति साध्यमेव न श्रूयते । कस्योपपादनायाध्याहार इत्यत उक्तम्– **ततो न विजुगुप्सत इत्येतद्व्याख्यानस्येति** ॥ यद्यप्यत्र न विजुगुप्सत इत्येतद्व्याख्यानस्येत्येव वक्तव्यम्, नतु तत इति । तद्व्याख्यानाभावात् । तथाऽपि भयाभावादित्यध्याहारे निमित्तसूचनाय यथाश्रुतानुवादः कृतः । 'ततो न विजुगुप्सते'इति विशिष्टानुवादे हि ततः परमेश्वरस्य सर्वभूताश्रयत्वादिज्ञानान्नाऽत्मानं गोप्तुमिच्छतीत्यर्थप्रतीत्या अप्रयोजकत्वशङ्कायां तन्निरसनोचितस्य भयाभावादित्यस्याध्याहारो विज्ञायेत । ततश्च परमेश्वरस्य सर्वभूताश्रयत्वादिज्ञानाद् भयाभावः । भयाभावान्नाऽत्मगोपनेच्छेति सुगमः साध्यसाधनभावः । नच तत इत्यस्य व्याख्यानं भयाभावादितीत्येव किं नोक्तमिति वाच्यम् । ज्ञानस्येव भयाभावस्याप्रकृतत्वेन परामर्शानुपपत्तेरित्याशयात् ॥

यद्वा, टीकायां तत इत्यतः परमित्यस्यार्थ इत्यनुवर्तते । तत इत्यस्यार्थो भयाभावादितीति योजना । बुद्ध्या प्रकृतत्वात् परामर्शोपपत्तिरिति भावः । ननु किं बुद्ध्या प्रकृतत्वमङ्गीकृत्य भयाभावपरामर्शेनेत्यत आह– **नाऽत्मानं गोप्तुमिच्छतीत्यस्योपपादनमिति** ॥ भयाभावादितीत्यनुवर्तते । भयाभावादित्येतन्नाऽत्मानं गोप्तुमिच्छतीत्यस्योपपादनमुपपादकम् । नतु सर्वभूताश्रयत्वेन सर्वभूतगतत्वज्ञानं साक्षात् तदुपपादकम् । अप्रयोजकत्वात् । अतो बौद्धपरामर्शो युक्त इति भाव इति व्याख्येयम् । अथवा तत इत्येतद् भयाभावादितीत्यतः पूर्वं सम्बद्ध्यते । तथाच तत इत्यनूद्य भयाभावादिति व्याख्याय 'न विजुगुप्सते'इत्यादिना तस्योपयोगः कथितो भवतीति व्याख्येयम् । भाष्यमुपलक्षणमित्याशयेनान्तरङ्गानुपपत्तिमप्याह– **अभेदार्थतायामिति** ॥

यस्त्विति मन्त्रस्य जीवस्य सर्वभूताभेदार्थतायामात्मनीति सर्वभूतेष्विति च सप्तम्यनुपपत्तिः । तया आधाराधेयभावप्रतीत्या भूतलघटयोरिव भेदस्यैव प्रतीतेरित्यर्थः । चशब्देन समाख्याश्रुतिविरोधं समुच्चिनोति ॥ ६ ॥

**ततश्चायं मन्त्रार्थः** ॥ यस्त्वधिकारी सर्वाणि भूतानि चेतनाचेतनात्मकान्यात्मन्येव आत्माधारतयैवानुपश्यति जानाति सर्वभूतेषु चाऽत्मानं नियामकत्वेनानुपश्यति सः आत्मानं न विजुगुप्सते गोप्तुं नेच्छति । कुतः ? ततः सर्वाश्रयतया सर्वभूतगतत्वज्ञानात् । तथा ज्ञानेऽपि कुतो न गोपनेच्छेत्यतोऽपि तत इत्युक्तम् । भयाभावादित्यर्थः । भयकारणेषु सत्ताप्रदत्वेन परमेश्वरं जानतस्तेषामकिञ्चित्करत्वेन ज्ञानावश्यम्भावाद् भयाभावः । ततश्च नाऽत्मनो गोपनेच्छेति ॥ ६ ॥

## (दुर्गमवाक्यार्थविवरणम्)

**सर्वभूताश्रयतयेति** ॥ फलवाक्यैकवाक्यतासिद्ध्यर्थं तात्पर्यानुवादः **अभेदार्थतायामिति** ॥ 'सर्वभूतानि आत्मनि' इत्यनेनैव अभेदसिद्धेः पुनः 'सर्वभूतेषु चाऽत्मानम्' इत्यस्य वैयर्थ्यम् । न च तैः सर्वपदार्थाभेदो ब्रह्मणोऽङ्गीक्रियते ॥ ६ ॥

## (उपनिषत्)

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

## (भाष्यम्)

**यस्मिन् परमात्मनि सर्वभूतानि स परमात्मैव तत्र सर्वभूतेष्वभूत् । एवं सर्वभूतेष्वेकत्वेन परमात्मानं विजानतः को मोहः?**

**'यस्मिन् सर्वाणि भूतानि स आत्मा सर्वभूतगः ।**
**'एवं सर्वत्र यो विष्णुं पश्येत् तस्य विजानतः ।**
**'को मोहः कोऽथवा शोकः स विष्णुं [१]'पर्यगाद् यतः'**

**इति पिप्पलादशाखायाम् ॥**

---

१. 'पर्यगादतः' ह.

**पूर्वोक्तानुवादेन [१]शोकमोहाभावोऽपि विजानतश्चात्रोच्यते । अभ्यासश्च सर्वगतत्वस्य तात्पर्यद्योतनार्थः ॥ ७ ॥**

## (टीका)

एतन्मन्त्रार्थविवरणार्थो यस्मिन् सर्वाणीत्ययं मन्त्र इति वक्ष्यति । तत्र यस्मिन्नात्मनि जीवे सर्वभूतानि स आत्मैव यस्य विजानतः तानि संवृत्त इत्याद्यन्यथाप्रतीतिनिरासाय मन्त्रं व्याख्याति– **यस्मिन्निति** ॥ सर्वभूतानि तिष्ठन्तीति शेषः । तत्रेत्यनुवादेन सर्वभूतेष्विति व्याख्यानम् । अभूत् अनादितो वर्तते । विजानत इत्यस्यान्वयसिद्ध्यर्थमेवमित्यध्याहारः कृतः । एवं सर्वाधारतया सर्वभूतेषु परमात्मानं विजानतः तं चैकत्वेन विजानत इति योज्यम् । विजानतोऽनुपश्यत इति द्वयोरपि व्याख्यानं विजानत इति ।

अर्थान्तरे सम्भवति कुतोऽयं मन्त्रार्थ इत्यतः श्रुत्यन्तरेण व्याख्यानादिति भावेनाऽऽह– **यस्मिन्निति** ॥ विजानतः एकत्वं चेति शेषः । ननु परमेश्वर-ज्ञानेऽपि कुतः शोकाद्यभाव इत्यत आह– **स विष्णुमिति** ॥ यतो ज्ञानी विष्णुं पर्यगात् सम्यक् प्राप्नोत्येव । अतः शोकाद्यभावस्तस्य युक्त इत्यर्थः ।

अनेन 'स पर्यगात्' इत्युत्तरमन्त्रार्थतात्पर्यमप्युक्तं भवति । एकत्वमित्यस्य पौनरुक्त्यं चान्यथा । अनुवादस्य वैयर्थ्यात् ।

नन्वेवं मन्त्रव्याख्यानेऽपि पुनरुक्तिः स्यात् । 'यस्तु सर्वाणि भूतान्यात्मन्येव' इत्यस्य 'यस्मिन् सर्वाणि भूतानि' इत्यनेनोक्तत्वात् 'सर्वभूतेषु चाऽऽत्मानम्' इत्यस्य चाऽऽत्मैवाभूदित्यनेनोक्तत्वात् । अतो नायं मन्त्रार्थ इत्यत आह – **पूर्वेति** ॥ पूर्वमन्त्रोक्तस्य सर्वाधारतया सर्वगतत्वस्यात्रानुवादोऽतो न पुनरुक्तिरित्यर्थः । न च वाच्यमधिकविधानायानुवादो भवति, न चात्राधिकं किञ्चिदिति । पूर्वमेवंविधो भयाभावः फलत्वेनोक्तः । अत्र पुनः शोक-मोहाभावोऽपि । प्राक् सर्वाधारत्वेन सर्वगतत्वदर्शनफलमुक्तम् । अत्र तु

१. 'शोकमोहाभावो विजानतः'

विशेषतो जानत इत्येवं फले ज्ञाने चाऽधिक्यसद्भावादित्यर्थः । उपलक्षणं चैतत् । 'एकत्वमनुपश्यतः' इत्याधिक्यं च द्रष्टव्यम् । 'तद्भावतः' इत्यस्य सर्वगतत्वस्य 'तद्दूरे' इत्यादिना पुनरुच्यमानत्वात् पुनरुक्तिदोष इत्याशङ्कां पुनरुक्तिदोषपरिहारप्रसङ्गात् परिहरति– **अभ्यासश्चेति** ॥ श्रुतिः स्वस्य परमात्मसर्वगतत्वे तात्पर्यं द्योतयितुं तदभ्यस्यतीति न दोष इत्यर्थः । सर्वगतत्वस्येत्युपलक्षणम् । अनेजत्तन्नेजतीत्यभयत्वस्यापि द्रष्टव्यम् ॥ ७ ॥

## (प्रकाशिका)

ब्रह्मगमनस्य निश्चितत्वादगादित्यतीतत्वोक्तिरिति भावेनाऽह– **सम्यक् प्राप्नोत्येवेति** ॥ 'एष्यत्तु निश्चितं यत् स्यादतीतत्वेन भण्यते' इति स्मृतिः । 'आत्मैवाभूत्' इति पूर्वार्धेऽपि परेणैक्यस्य कथितत्वात् पुनरुत्तरार्धे 'एकत्वमनुपश्यतः' इत्येकत्वस्यैव कथनात् पौनरुक्त्यम् । न च भाष्ये वक्ष्यमाणरीत्या परेणापीदं पौनरुक्त्यमभ्यासार्थमिति परिहर्तुं शक्यम् । सर्वभूतानामन्ते ब्रह्मण्येकीभावं वदताऽपि परेणैकस्मिन् जीवे सर्वभूतैक्यं नाङ्गीक्रियते । उभयोरपि भिन्नदेहाद्यवच्छिन्नत्वेन बाधितं च । एवं च बाधितेऽर्थे रज्जुः सर्प इति बहुवारमभ्यासेऽपि यथा नार्थसिद्धिः, तात्पर्यं तु दूरापास्तं तथाऽत्राप्युक्तरीत्या बाधिते परस्यानभिमतेऽर्थे अभ्यासोऽपि स्वस्य शास्त्राभ्यासराहित्यसूचक एव । न तु परस्यार्थसाधकः । टीकाकृतोक्तपौनरुक्त्यं तु अभ्युपगमवादेनेति ज्ञेयम् । अस्मकं तु 'यस्मिन् सर्वाणि भूतानि स आत्मैव सर्वभूतेष्वभूत्' इत्यर्थाश्रयणात् स्थानभेदेन परमात्मनि प्राप्तभेदनिवारणायैकत्वमनुपश्यत इति सार्थकमिति भावः ॥ ७ ॥

### (ईशावास्यभाष्यटीकाविवृतिः)

॥ **एतन्मन्त्रार्थेति** ॥ अतो न मन्त्रप्रतिपाद्यं पृथग् वक्तव्यम् । नापि पुनरुक्तिरिति भावः ॥ **वक्ष्यतीति** ॥ पूर्वोक्तानुवादेनेत्यादिनेति शेषः ॥ **तत्रेति** ॥ उत्तरमन्त्र इत्यर्थः । एतस्यान्यथाप्रतीतिनिरासायेत्यनेनान्वयः ।

यस्मिन् काले यथोक्त आत्मनि वा तान्येव सर्वाणि भूतानि परमार्थदर्शनादात्मैवाभूदात्मैव संवृत्तः । परमार्थवस्तु विजानतः । तत्र तस्मिन् काले तत्राऽत्मनि वा को मोहः कः शोकः शोकश्च मोहश्च कामबीजमजानतो भवति । न त्वात्मैकत्वं शुद्धं गगनोपमं पश्यत इत्यपव्याख्यां किञ्चिद्विवरणपूर्वकं सङ्ग्रहेणानुवदति– **यस्मिन्नित्यादिना ॥ विजानतस्तानि संवृत्त इति ॥** परमार्थवस्तु विजानतस्तानि भूतानि संवृत्तो भूतानि जातः भूताभिन्न इति यावत् । परेणाऽत्मैवाभूदात्मैव संवृत्त इत्यत्राभूदित्येतत् प्रतिपदत्वेन संवृत्त इति प्रयोगात् सङ्ग्रहानुवादेऽत्र संवृत्त इत्येवानूदितम् । तस्य चायमेवार्थ इति ज्ञातव्यम् । तानि संवृक्त इति क्वचित् पाठः । स तु स्वपरमूलकोशादर्शनात् कल्पितो ज्ञातव्यः । इत्याद्यन्यथाप्रतीतीत्यत्राऽदिशब्देन तत्र को मोह इत्याद्यन्यथाप्रतीतिसङ्ग्रहः । सर्वभूतानीत्यस्याभूदित्यनेनान्वयासम्भवात् तदनुवदन्नपेक्षितं पूरयति– **सर्वभूतानीति ॥ तत्रेत्यनुवादेनेति ॥** तत्र को मोह इत्यत्र विद्यमानस्य तत्रेत्यस्यानुवादेनेत्यर्थः । ननु इदानीमपि परमेश्वरस्य सर्वभूतगतत्वादभूदित्यतीतत्वोक्तिरयुक्तेत्यतो नातीतत्वाभिप्रायेणाभूदित्युक्तम् । किन्त्वागन्तुकत्वशङ्कानिरासायानादितो वर्तमानत्वाभिप्रायेणेत्याशयेन 'प्रयोग एककालीनः सर्वकालेऽनुषज्यते ॥ ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः' इति प्रमाणं मनसि निधायानूद्य व्याचष्टे– **अभूद् अनादितो वर्तत इति ॥**

ननु भाष्ये एवमिति न तावच्छ्रौतपदानुवादः, श्रुतौ तदभावात् । नाप्यध्याहारः तस्य व्यर्थत्वादित्यतो द्वितीयं पक्षमङ्गीकृत्याध्याहारस्य प्रयोजनमाह **–विजानत इत्यस्यान्वयसिद्ध्यर्थमिति ॥** अभूदित्यन्तेन पूर्वेणान्वयसिद्ध्यर्थमित्यर्थः । एवं विजानत इत्युक्ते हि पूर्वोक्तस्य ज्ञाने प्रकारत्वप्रतीत्या विजानत इत्यस्य पूर्वेणान्वयो घटते । विजानत इत्येवोक्तौ येन केनापि प्रकारेणेति प्रतीत्या न पूर्वोक्तेनान्वयसिद्धिः । अत एवोदाहरिष्यमाणसमाख्याश्रुतौ एवं सर्वत्र यो विष्णुं पश्येदित्युक्तमिति भावः । ननु मन्त्रे परमात्मनः सर्वभूतगतत्वेन ज्ञानं तेष्वेकत्वेन ज्ञानं च पृथगेवानूद्य फलमुक्तम् । तत्र

विजानत इति एकत्वमनुपश्यत इति च पृथक् श्रवणात् । भाष्ये तु सर्व-भूतेष्वेकत्वेन परमात्मानं विजानत इत्युभयविषयैकज्ञानानुवादेन फलमुक्तमतो मन्त्रभाष्ययोर्विरोध इत्यतो मन्त्रानुसारेण भिन्नवाक्यतया भाष्यं योजयति – **एवं सर्वाधारतयेति ॥**

सर्वभूतेषु परमात्मानमिति सम्बन्धप्रदर्शनम् । तं चेति शेषकथनमिति ज्ञातव्यम् । यद्यप्यत्र टीकायां सर्वाधारतया सर्वभूतेष्वित्यादिकमेव वक्तव्यम् । नत्वेवमिति, तस्य योजनानुपयोगात् । तथाऽपि सर्वभूतेष्वित्यादिभाष्यमध्या-हृतैवंशब्दव्याख्यानरूपमिति ज्ञापनाय तदुक्त्युपपत्तेः । नचैवमपि टीकायां सर्वाधारतयेत्यधिकं भाष्ये तदभावादनावश्यकत्वाच्चेति वाच्यम् । मन्त्रे यस्मिन् सर्वाणि भूतानीत्युक्तं सर्वभूताश्रयत्वं सर्वभूतगतत्वे प्रकार-प्रदर्शकतयोपयुज्यते । नतु सर्वभूतगतत्वादिकमिव पृथक् ज्ञातव्यतया । तथात्वे तद्वत् पृथग्विजानत इति वक्तव्यत्वापातात् । सर्वभूतगतत्वे प्रकारप्रदर्शनं त्वावश्यकमिति प्रागुपपादितमेव । भाष्ये तदनुक्तिरपि स्वातन्त्र्येणा-ज्ञेयत्वसूचनायेत्येतावतोऽर्थस्य ज्ञापनाय सर्वाधारतयेत्युक्तेरावश्यकत्वात् ॥

यद्वा, भाष्ये एवमित्यस्य वैयर्थ्यशङ्कायां 'यस्मिन् सर्वाणि भूतानि' इत्युक्त-सर्वाधारत्वस्य प्रकारतयाऽनुवादार्थत्वान्न तदिति भावेनैवमित्यनूद्य सर्वाधारतयेति व्याख्यातम् । अस्मिन् पक्षे भाष्ये सर्वभूतगतत्वमिव सर्वभूताधारत्वस्यापि वक्तव्यत्वान्न्यूनतेति शङ्का निरस्ता भवति । एवंशब्देनोक्तिस्तु प्रकारत्व-ज्ञापनायेति बोध्यम् । ननु तं चैकत्वेन विजानत इति योज्यमित्युक्तमयुक्तम् । मन्त्रानुसारेण तं चैकत्वेनानुपश्यत इति वक्तव्यत्वात् । नच यथाभाष्यमुक्त-त्वान्न दोषः । तथा सति भाष्यस्य मन्त्रविरोधप्रसङ्गः । मन्त्रे विजानत इत्यस्योभयत्र सम्बन्धाभिप्रायेण भाष्यप्रवृत्त्यङ्गीकारे मन्त्रेऽनुपश्यत इत्यस्य वैयर्थ्यप्रसङ्ग इत्यत आह– **विजानत इति ॥** अत्र यद्यपि विजानत इत्येतन्न विजानत इत्यस्य व्याख्यानम् । यथाश्रुतानुवादत्वेनाधिकोक्त्यभावात् । नाप्य-नुपश्यत इत्यस्य, उभयोः समानार्थत्वेन विशेषाभावात् । तथाऽपि विजानत

इत्यनुवादेन को मोह इति सम्बन्धस्य प्रदर्शितत्वात् तद्व्याख्यानत्वोक्ति-र्घटते । न ह्यर्थकथनमेव व्याख्यानम् । अनुपश्यत इत्यस्य तु न पूर्वमन्त्र इवात्र दृशेर्ज्ञानसामान्यार्थत्वम् । किन्तु साक्षात्कारार्थमिति ज्ञापनाय विजानत इति व्याख्यानं कृतम् । विशेषतो जानतः अपरोक्षज्ञानिन इति ॥

**ततश्चेत्थं मन्त्रयोजना ॥** यस्मिन् परमात्मनि सर्वाणि भूतानि तिष्ठन्ति । स परमात्मैव तत्र तेषु भूतेष्वभूत् । सर्वभूताधारतया सर्वभूतेष्वनादितो वर्तते । इत्येवं परमात्मानं विजानतः विशेषतोऽपरोक्षतो जानतः तथा सर्वेषु भूतेषु स्थितस्य परमात्मनः एकत्वम् अधिष्ठानभेदप्रयुक्तभेदाभावं, ततश्चा-नुग्राह्यानुग्राहकभावाभावं चानुपश्यतः आपरोक्ष्येण जानतः को मोहः? न कोऽपि । तदभावे च कः शोकः? न कोऽपीति । 'एकत्वमनुपश्यतः' इति मन्त्रानुसारेणापेक्षितं पूरयति– **एकत्वेनेति ॥** 'एकत्वं चेति शेष इत्यपि पाठः । अध्याहृतस्यान्वयप्रदर्शनाय विजानत इत्यनुवाद इति ज्ञेयम् ॥

विमतः शोकाद्यभाववान् परमेश्वरज्ञानित्वादिति मन्त्राभिप्रेतानुमानेऽ-प्रयोजकत्वमाशङ्कते – **ननु परमेश्वरज्ञानेऽपीति ॥** परमेश्वरज्ञानेन तत्प्राप्तिम-नुमाय तया शोकाद्यभावसाधनान्न दोष इत्याशयेन व्याचष्टे– **यत इति ॥** स इत्यस्य व्याख्यानं **ज्ञानीति ॥** सुप्तौ विष्णुप्राप्तावप्यात्यन्तिकशोकाद्यभावा-भावाद् व्यभिचारनिरासाय श्रुत्युक्तस्य परीत्यस्य व्याख्यानं **सम्यगिति ॥** गमेर्ज्ञानार्थत्वभ्रमनिरासाय प्राप्नोतीत्युक्तम् । 'अनियमः सर्वेषामविरोधात्' (ब्र.सू.३-३-३२) इत्युक्तन्यायेन ज्ञानिनो विष्णुप्राप्तिनियमान्नासिद्धिराशङ्कनीयेत्या-शयेनावधारणप्रयोग इति ज्ञातव्यम् ॥

॥ **अनेनेति ॥** विष्णुप्राप्तेर्हेतुत्वकथनेनेत्यर्थः ॥ **तात्पर्यमिति ॥** ज्ञानिनः शोकाद्यभावे युक्तिकथने तात्पर्यमित्यर्थः । अन्यथोत्तरार्धस्य पूर्वमन्त्रेण सङ्गत्यभावप्रसङ्ग इति भावः । न केवलं शोकाद्यभावे हेतुरुक्तो भवति, किन्तु तात्पर्यमपीत्यपिशब्दः । भाष्यमुपलक्षणमित्याशयेनापव्याख्याने आन्तरानुप-

पत्तिमप्याह– **एकत्वमिति ॥ पौनरुक्त्यमिति ॥** 'सर्वाणि भूतान्यात्मैवेति विजानतः' इत्यनेनैक्यज्ञानस्योक्तत्वात् पौनरुक्त्यमित्यर्थः । **अन्यथा** परोक्तव्याख्याने ॥ **वैयर्थ्यादिति ॥** अधिकविधाननिषेधयोरन्यतरस्याभावादिति भावः ॥

**एवमिति ॥** भाष्यकारोक्तरीत्येत्यर्थः । अपिशब्देन व्याख्यानद्वयस्यापि समबाधकत्वाद् भाष्यकृदुक्तमेव युक्तमिति निर्णयो नोपपद्यत इति सूचयति । ननु भाष्ये साध्यानुक्तेर्न्यूनता न पुनरुक्तिरिति तदध्याहारेऽप्यनन्वयप्रसङ्गः । तदर्थमत इत्यध्याहारेऽपि समग्रस्य पुनरुक्त्यभावहेतुत्वमुत पूर्वोक्तानुवादेनेत्येतावन्मात्रस्य नोभावपि । पूर्वोक्तानुवादेन न पुनरुक्तिरित्येतावतैव समञ्जसत्वेन शोकमोहेत्यादेर्व्यर्थत्वादित्यतः आकाङ्क्षाक्रमेण भाष्यं योजयति –**पूर्वमन्त्रोक्तस्येति ॥** पूर्वमन्त्रोक्तस्य 'ततो न विजुगुप्सते' इत्यन्तस्यानुवादेनेत्यर्थभ्रमनिरासाय 'सर्वाधारतया' इत्यादिना पूर्वोक्तशब्दार्थकथनमिति ज्ञातव्यम् । मन्त्रे यस्त्वित्यादिना सर्वाधारतायाः पृथगुक्तत्वेऽपि नात्र स्वातन्त्र्येण ज्ञेयता विवक्षिता । किन्तु 'सर्वभूतेषु चाऽत्मानम्' इत्युक्तसर्वभूतगतत्वे प्रकारतयेति ज्ञापयितुं सर्वाधारतयेत्युक्तम् । एवमेव प्रागित्युत्तरवाक्यमपि व्याख्यातव्यम् । एतच्च प्रागुपपादितमनुसन्धेयम् । ननु तर्ह्यवशिष्टं भाष्यं व्यर्थं स्यादित्यतस्तन्निवर्त्याशङ्कामुत्थापयति– **नचेति ॥**

कुतो न वाच्यमित्यतो भाष्ये शोकमोहाभावश्चात्रोच्यते, विजानतश्चात्रोच्यत इति वाक्यद्वयमाश्रित्य तत्राप्याद्यस्य फलाधिक्यप्रदर्शकत्वं द्वितीयस्य साधनाधिक्यप्रदर्शकत्वं चाऽश्रित्य पूर्वमन्त्रोक्तफलानुवादपूर्वकं फलान्तरप्रदर्शकत्वेनाऽद्यवाक्यं योजयति– **पूर्वमेवंविद इति ॥** यस्त्विति मन्त्रे सर्वाधारतया सर्वगतत्वविद इत्यर्थः । अधुना पूर्वमन्त्रोक्तसाधनानुवादपूर्वकमधिकसाधनप्रदर्शकत्वेन द्वितीयवाक्यं योजयति – **प्रागिति ॥** यस्त्विति मन्त्र इत्यर्थः ॥ **दर्शनफलमिति ॥** ज्ञानफलमित्यर्थः ॥ **अत्रेति ॥**

यस्मिन्निति मन्त्र इत्यर्थः । ज्ञानाधिक्यलाभाय विशब्दो विशेषत इति व्याख्यातः । यद्यपि विजानतः शोकमोहाभावश्चात्रोच्यत इत्येकवाक्यत्वेनापि भाष्ययोजना घटते । न चैवं चशब्दो व्यर्थः । पूर्वमन्त्रोक्तभयाभावसमुच्चायक इत्युपपत्तेः । तथाऽप्युक्तन्यायेनाधिकार्थलाभसम्भवे किमेकवाक्यत्वश्रद्धा-जाड्येनेत्याशयात् । एकवाक्यतायां विजानत इत्यस्यातीवोपयोगादर्शनाच्च । नन्वियं पुनरुक्तिस्तदूर इति वाक्यव्याख्यानावसरे परिहार्या नात्र । असङ्गतत्वाादित्यत उक्तम्– **पुनरुक्तिदोषपरिहारप्रसङ्गादिति** ॥ ७ ॥

## (दुर्गमवाक्यार्थविवरणम्)

भूतशब्देन चेतनमात्रग्रहणमिति चेन्न, निष्प्रमाणं सर्वशब्दार्थसङ्कोचापत्तेः । ननु माऽस्तु सङ्कोचः । चेतनाभेदो नाम मुख्यमैक्यमेव । जडविषय तु तव्द्यतिरेकेण मिथ्यात्वमिति न विरोध इति चेन्न । निर्मूलमेवं कल्पने उन्मत्तभाषित्वप्रसङ्गाद् इति चानुपपत्तिरादिशब्देन गृह्यते । ननु विष्णोर्भूतेषु सर्वदा विद्यमानत्वात् कथमभूदित्यतीतकालसम्बन्ध एवोच्यत इत्यत आह– **अभूदिति** ॥ 'अस्ति ब्रह्मेति चेद्वेद' (तै.उप.२.६.१.) इत्यत्र यथाऽस्तिशब्दस्य सर्वकालसाधारण्यम् । न च तत्र वर्तमानकालसम्बन्धमात्रमर्थः । एवं प्रकृतेऽपि । यथोक्तं 'प्रयोग एककालीनः सर्वकालेऽनुषज्यते । ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः ॥' इति । सर्वकालसाधारण्यं यथा लभ्यते तथैव प्रयुज्यतामिति चेन्न, कालत्रयावमर्शिनो लकारस्याभावेन आसीदिति अस्तीत्यादेरेकदेशकालसम्बन्धं विना वक्तुमशक्यत्वादिति भावः । इति योज्यमिति कुत इत्यत आह– **विजानत इति** । एकत्वेनेत्यनुवादादेकत्वमनुपश्यत इत्यस्यैव व्याख्यानमिति चेन्न, एवमित्यध्याहारानुपयोगादिति भावः ॥ **तदभ्यस्यतीति न दोष इति** ॥ ननु परपक्षेऽप्यधिकविधानाभावेनानुवादवैयर्थ्येऽपि तात्पर्यद्योतनार्थम् अभ्यासोऽस्त्विति चेत् । तर्हि ऐक्यमेवाभ्यस्यताम् । विजानतोऽनुपश्यत इति द्विवारं ज्ञानानुवादः स्तुत्यर्थः । एकस्मिन्नेव वाक्ये अभ्यासश्च न दृष्टपूर्वः ॥ ७ ॥

## (उपनिषत्)

*(परमात्ममाहात्म्यज्ञानस्य शोकमोहादिवारकत्ववर्णनम्)*

स पर्यगाच्छुक्रमकायमव्रण-
मस्नाविरꣳ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भू-
र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

## (भाष्यम्)

'शुक्रं तच्छोकराहित्यादव्रणं नित्यपूर्णतः ।
पावनत्वात् सदा शुद्धमकायं लिङ्गवर्जनात् ॥

स्थूलदेहस्य राहित्यादस्नाविरमुदाहृतम् ।
एवम्भूतोऽपि सार्वज्ञ्यात् कविरित्येव शब्द्यते ॥

ब्रह्मादिसर्वमनसां [१]प्रकृतेर्मनसोऽपि च ।
ईशितृत्वान्मनीषी स परिभूः सर्वतो वरः ॥

सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः ।
स सत्यं जगदेतादृङ् नित्यमेव प्रवाहतः ॥

अनाद्यनन्तकालेषु [२]प्रवाहैकप्रकारतः ।
नियमेनैव ससृजे भगवान् पुरुषोत्तमः ॥

सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः ।
सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान् ॥

एवम्भूतो महाविष्णुर्यथार्थं जगदीदृशम् ।
अनाद्यनन्तकालीनं ससर्जाऽत्मेच्छया प्रभुः' इति वाराहे ॥ ८ ॥

---

१. 'प्रकृत्या मनसोऽपि' ह. २. 'प्रवाहैकप्रकारकम्' ह.

## (टीका)

ज्ञानिनः शोकाद्यभावे युक्तित्वेन 'स पर्यगात्' इति विष्णुप्राप्तिरुक्ता । तत्र च राजादीनिव परमेश्वरं प्राप्तस्यापि शोकाद्यभावः किन्निमित्त इत्यतः शुक्रमित्यादिविशेषणानि । तत्रादेहोक्त्या प्राप्तशङ्कापरिहाराय कविरित्युत्तरार्धः । तमिमं मन्त्रमप्रतीत्यादिपरिहाराय पुराणवाक्येन व्याख्याति– **शुक्रमिति** ॥ शुचं शोकं रहति त्यजतीति शुक्रमित्यर्थः । **नित्यपूर्णत इति** ॥ नित्यत्वपूर्णत्वाभ्यामित्यर्थः । 'व्रण सञ्चूर्णने' इत्यतः स्तोको व्रणः । कालेनास्तोकं नित्यं, गुणैरस्तोकं पूर्णमिति । पावनत्वात् पावित्र्यहेतुत्वात् ॥

यद्यपि कायशब्दः स्थूलसूक्ष्मशरीरसाधारणः । तथाऽप्यस्नाविरमिति स्थूलशरीराभावस्य पृथगुक्तेः 'अकायं लिङ्गवर्जनात्' इत्युक्तम् । स्नावोपलक्षितधातुमयं स्नाविरं स्थूलशरीरमेव हि प्रसिद्धम् । यतो हि ब्रह्म शुद्धं तस्मादपापविद्धम् । ततश्च पापमूलस्थूलसूक्ष्मशरीरविधुरम् । तथा च देहनिमित्तशोकादिशून्यम् । एवम्भूतं च ज्ञानी पर्यगात् । सारूप्यादिलक्षणां तद्गतिं गतो भवति । अतस्तस्य शोकाद्यभावो युक्त इति भावः ॥

यद्यशरीरो विष्णुर्न तर्हि तस्य जगत्सर्जनाद्युपपद्यते । घटादिसृष्ट्यादौ शरीरान्वयव्यतिरेकानुविधानदर्शनात् । न च वाच्यं शुक्तिकायामिव रजतं परमात्मनि जगदारोपितमेव । अतो न शरीरापेक्षेति । बाधाभावेन तत्सत्यत्वनिश्चयात् । न चादेहत्वस्य जगत्सृष्ट्यादेश्च कालभेदेन व्यवस्था । जगत्सृष्ट्यादिप्रवाहस्यानाद्यनन्ततया प्रमितत्वात् । अतः सत्यानाद्यनन्तकालीनजगदुत्पत्त्यादिकारणस्य विष्णोः कथमशरीरत्वमित्याशङ्कापरिहारायोक्तस्य कविरित्यादेः व्याख्यानम् । **एवम्भूतोऽपीति** ॥ एवम्भूतोऽशरीरोऽपि स पुरुषोत्तमः सत्यं प्रवाहतो नित्यमपि जगत्ससृज इति सम्बन्धः । **एतादृगिति** ॥ सत्यत्वादिना प्रमितमित्यर्थः । ससृज इत्युपलक्षणम् । प्रवाहतो नित्यत्वेऽपि पूर्वोत्तराणां जगतां वैचित्र्यं सम्भवति । तन्नास्तीति स्वरूपकथनम् ॥ **अनादीति** ॥ नियमेन प्रवाहैकप्रकारत इति प्रवाहिणामेकप्रकारत्वमभिप्रैति ।

तदनेन 'शाश्वतीभ्यः समाभ्यः' इति सप्तम्यर्थे व्याख्यातं भवति । अनाद्यनन्त-संवत्सरेषु याथार्थ्येन वर्तमानानपीत्यर्थः । अशरीरस्य जगत्सृष्ट्यादिनिर्वाहार्थ-माह– **सार्वज्ञादिति** ॥ 'एवाह्येवैवाहि' इतिवत् कविरित्येव कविरित्येवम् । परिभवति सर्वं वशीकरोतीति परिभूस्सर्वतो वरः । स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः । सदाऽनन्याश्रयः । चशब्दौ विशेषणसमुच्चयार्थौ ॥

ननु शरीराधीनत्वात् सर्जनादेः कथं सार्वज्ञादिना घटत इत्यत आह– **सज्ज्ञानेति** ॥ जडशरीराभावेऽपि सज्ज्ञानाद्यात्मकशीर्षादिमान् भवति । यत एवम्भूतस्तस्माज्जगत्ससर्जेति योजना । सज्ज्ञानाद्यात्मकविग्रहवत्त्व-मन्येषामविद्यमानं तस्योपपादयितुं सार्वज्ञादिमाहात्म्यमुक्तमिति भावः ॥

अपरे तु योऽयमतीतैः मन्त्रैरुक्त आत्मा स स्वेन रूपेण किंलक्षणक इत्यपेक्षायामयं मन्त्र इत्युक्त्वा 'स पर्यगात्' इत्येतदप्यात्मविषयं व्याकुर्वते । स आत्मा पर्यगाद्व्याप्तोऽभूदिति । तत्त्वसत् । शुक्रमित्यादेः द्वितीयान्त-स्यान्वयाभावप्रसङ्गात् । न चैतत्प्रथमान्तमात्मन एव विशेषणं, लिङ्ग-व्यत्ययात् । विपरिणामस्त्वगतिका गतिः । स्वयमेव सर्वं भवतीति स्वय-म्भूरिति च 'मनीषी परिभूः' इत्यनेन विरुद्धम् । न चैवंविधमात्मनो निष्कृष्टं रूपं तेषामिति ॥ ८ ॥

## (प्रकाशिका)

स्तोको व्रण इत्यत्र स्तोकोऽल्पता । 'किञ्चिन्मात्रं तनुस्तोकह्रस्वाल्पत्रुटयः समाः' इति हलः । न चाकायमित्यत्र सर्वथा कायाभावः शङ्क्यः । 'यत्ते रूपं कल्याणतमम्' इत्युपरि कल्याणरूपस्य वक्ष्यमाणत्वात् । 'अकायमव्रणम्' इत्यपि प्राकृतदुर्भगदेहस्यैव निषेधः । अत एव व्रणादियोग्यदेहाभावसूचनाय 'अव्रणमस्नाविरम्' इत्युक्तम् । तस्य हरेः शोकरहितत्वेन तं प्राप्तस्य मुक्त-स्यापि शोकराहित्यघटनाय सारूप्यादिलक्षणां तद्गतिमित्युक्तम् ॥

नियमेन प्रवाहैकप्रकारत इतीत्यत्र प्रवाहस्यैकत्वात् तत्रैकप्रकारोक्तिः व्यर्था स्यात् । अत एव प्रवाहिणामित्युक्तम् । 'कविरित्येव शब्द्यते' इत्युक्ते

नामान्तरं नास्तीति भ्रमः स्यात् । अत एवशब्दार्थं सदृष्टान्तमाह– **एवाह्येवैवेति** ॥ 'एवाह्येवैवाह्यगाइ' इत्युपनिषद्वाक्येषु एवाहीतिशब्दस्य एवं हीत्यर्थ उक्त इति भावः ॥

ननु कविपदेन भगवतः सार्वज्ञकथनेऽपि तार्किकसर्वज्ञेश्वरवद्देहाभावे कथं सृष्टिः । कुम्भकरणकौशलज्ञानवतोऽपि कुम्भकारस्य हस्तच्छेदे कुम्भकर्तृत्वादर्शनादिति हरेरप्यलौकिकदेहसद्भावं प्रमाणेन द्रढयति– **सज्ज्ञानानन्दशीर्ष** इति ॥

न चैवंविधमित्यत्र तेषां स्वयमेव सर्वं स्वयं भवतीति वादिनामेवंविधं 'शुक्रमकायमव्रणमस्नाविरम्' इत्यादिनोक्तं निष्कृष्टरूपमस्ति । मनुष्यपशुपक्ष्यादिरूपेषु शोकसहितत्वात् सकायत्वात् सव्रणत्वात् स्नाविरविशिष्टत्वात् पापविद्धत्वाच्च । तथा च स्वयम्भुपदेन सर्वजीवात्मकत्वं वदतां कथं न पूर्वोत्तरविरोध इति भावः ॥ ८ ॥

## (ईशावास्यभाष्यटीकाविवृतिः)

उत्तरभाष्यं सङ्गमयितुं 'पर्यगात्' इति मन्त्रप्रतिपाद्यं तावदाह –**ज्ञानिन इत्यादिना** ॥ **तत्र चेति** ॥ विष्णुप्राप्तौ निमित्तत्वेनोक्तायामित्यर्थः । निमित्तविशेषाभावेऽपि परमेश्वरं प्राप्तस्य शोकाद्यभावे राजादीन् प्राप्तस्यापि शोकाद्यभावः स्यात् । ततश्च द्वितीयानुमानेऽप्रयोजकत्वमित्याशयेनोक्तम्– **राजादीनिवेति** ॥ **इत्यत इति** ॥ इति यतः शङ्का अतस्तन्निरासायेत्यर्थः ॥ **तत्रादेहत्वोक्त्येति** ॥ शुक्रमित्यादिविशेषणेष्वकायमस्नाविरमिति विशेषणाभ्यामदेहत्वोक्त्येत्यर्थः ॥ **प्राप्तशङ्केति** ॥ यद्यशरीरो विष्णुरित्यादिवक्ष्यमाणरीत्या प्राप्तशङ्केत्यर्थः ॥ **अप्रतीत्यादीति** ॥ आदिपदेन परोक्तान्यथाप्रतीतेरकायास्नाविरशब्दयोः पौनरुक्त्यस्य च सङ्ग्रहः । ननु बृहद्भाष्ये शुक्रं जीवमादायेत्युक्त्वा 'शोकेन रत्या युक्तत्वाच्छुक्रो जीव उदाहृतः' इत्युपन्यस्ते प्रमाणे शोकवत्तायाः शुक्रशब्दार्थत्वप्रतीतेः कथं शोकराहित्यं शुक्रशब्दार्थ इत्यतः शुक्रशब्दस्य

शोकराहित्ये योगं दर्शयति– **शुचमिति** ॥ अनेन शुच्शब्दे कर्मण्युपपदे 'रह त्यागे' इत्यस्माद् बाहुलके डप्रत्यये टिलोपे उपपदान्त्यस्य कुत्वे शुक्रमिति सिद्ध्यतीत्युक्तं भवति । एतेन शुक्रं रोचिष्मद् दीप्तिमदित्यपव्याख्यानमपहसितं वेदितव्यम् । ननु पूर्णशब्दोक्त धर्मिणः प्रवृत्तिनिमित्तत्वाभावात् पूर्णत इत्ययुक्तम् । प्रकरणवशाद् भावप्राधान्येऽपि नित्यशब्दो व्यर्थ इत्यतः प्रवृत्तिनिमित्तद्वयं भावप्राधान्यं पञ्चम्यन्तात् तसिं च मनसि निधाय व्याचष्टे – **नित्यत्वेति** ॥ अव्रणशब्देनोक्तार्थद्वयलाभप्रकारं दर्शयति– **व्रण सञ्चूर्णन** इत्यत इति ॥ स्तोकोऽल्पः । अनेनाव्रणमक्षतमित्यपव्याख्यानं निरस्तं भवति । पावनत्वादित्यस्य पवित्रत्वादिति व्याख्याने अपापत्वातिरिक्तपवित्रत्वाभावादपापविद्धमित्यनेन पुनरुक्तिः स्यादित्यत आह–**पावित्र्यहेतुत्वादिति** ॥ अनेन शुद्धं निर्मलमिति परोक्तं निरस्तं भवति ॥ **साधारण इति** ॥ तथा च 'अकायं देहवर्जनात्' इति व्याख्येयम् । नतु सामान्यशब्दस्य विशेषे लक्षणामङ्गीकृत्य लिङ्गवर्जनादिति । लक्षणाया मुख्यार्थानुपपत्तिपूर्वकत्वादत्र च तदभावादिति भावः । अस्त्यत्रापि मुख्यार्थानुपपत्तिरित्याह– **तथाऽपीति** ॥ ननु 'अकायं स्थूलवर्जनात् । लिङ्गदेहस्य राहित्यादस्नाविरमुदाहृतम्' इत्येव प्रमाणे किं नोक्तम् ? पुनरुक्तिपरिहारस्यैवमपि सम्भवादित्यत आह– **स्नावोपलक्षितेति** ॥ मांसमज्जादिसप्तधातुविकारस्य स्थूलदेहस्य स्नाविरमात्रत्वानुपपत्तेः स्नावोपलक्षितेत्युक्तम् ॥ **स्थूलशरीरमेव हि प्रसिद्धमिति** ॥ नतु लिङ्गशरीरम् अतो न वैपरीत्येन वक्तुं शक्यमिति भावः । अनेन 'स्नावाः शिराः यस्मिन् विद्यन्त इति स्नाविरं न स्नाविरम् अस्नाविरम् । अव्रणमस्नाविरमित्याभ्यां स्थूलशरीरप्रतिषेधः' इत्यपव्याख्यानं निराकृतं भवति ॥

ननु यदुक्तं राजादीनिव परमेश्वरं प्राप्तस्यापि शोकाद्यभावः किंनिमित्त इत्यतः शुक्रमित्यादिविशेषणानीति । तत्र किं सर्वेषां विशेषणानां परमेश्वरं प्राप्तस्य शोकाद्यभावोपपादकत्वमभिप्रेतमुतैकस्य । नाऽद्यः । अप्रयोजकत्वेन तदभावात् । न द्वितीयः । अमुकस्येति निर्धारणोपायाभावाद् विशेषणान्त-

रवैयर्थ्यप्रसङ्गाच्चेत्यतः शुक्रमित्यस्यैवोक्तसाध्योपपादकत्वम् । शोकादिशून्यपरमेश्वरसारूप्यादिप्राप्तिमतः शोकाद्यभावनियमात् । इतरेषां तु विशेषणानां साक्षात् परम्परया शुक्रत्वोपपादकत्वान्न वैयर्थ्यमित्याशयेन हेतुहेतुमद्भावेन विशेषणानि योजयति– **यतो हीति ॥ एवम्भूतं चेति ॥** उक्तप्रणाड्या शोकादिशून्यमित्यर्थः । अनेन राजादिवैषम्यमुक्तं भवति । 'स पर्यगात्' इत्यस्य हेतोः पूर्वमन्त्रोक्तशोकाद्यभावेन साध्येनान्वयमाह– **अत इति ॥** मन्त्रे यत्तच्छब्दावध्याहार्याविति ज्ञापनायात इत्युक्तम् ॥

इदमुक्तं भवति । विमतो ज्ञानी शोकादिरहितः । शोकादिरहितब्रह्मप्राप्तिमत्त्वात् । यो यद्रहितयत्प्राप्तिमान् स तद्रहितः । यथा दारिद्र्यरहितराजादिप्राप्तिमान् दारिद्र्यरहितः । सारूप्यादिलक्षणप्राप्तिविशेषस्य विवक्षितत्वान्न सुप्ते व्यभिचारः । एतदर्थमेव सारूप्यादिलक्षणामित्युक्तम् । नच सुप्ते साध्यस्यापि सत्त्वान्न व्यभिचारप्रसक्तिरिति वाच्यम् । तस्याप्यन्तःकरणरूपेण शोकादिमत्त्वात् । नच शोकादिरहितेति व्यर्थम् । विपक्षे व्याघातसूचनार्थत्वात् । शोकरहितब्रह्मसारूप्यं गतः स्वयं च शोकादिमानित्यस्य व्याहतत्वात् । बहिरेवाप्रयोजकत्वपरिहारे ब्रह्मप्राप्तिमत्त्वादित्येव हेतुरस्तु । नच ब्रह्मणः शोकादिशून्यत्वासिद्धिः । ब्रह्म शोकादिशून्यं स्थूलसूक्ष्मशरीरशून्यत्वात् । व्यतिरेकेण देवदत्तादिवत् । नचाप्रयोजकता । शोकस्योक्तशरीरद्वयनिमित्तत्वेनाकारणकार्योत्पत्तिप्रसङ्गात् । एतदेवाभिप्रेत्योक्तम्–**देहनिमित्तेति ॥** ब्रह्मणोऽपि स्वरूपदेहवत्त्वेनासिद्धिवारणाय स्थूलसूक्ष्मेत्युक्तम् ॥

ननु देहद्वयघटित एक एव हेतुरुत हेतुद्वयम् । नाऽद्यः । स्थूलपदवैयर्थ्यात् । तमोगतेषु व्यभिचारापाताच्च । न द्वितीयः । स्थूलदेहशून्यत्वस्य तमोगतेषु प्रलयकालीनेषु च व्यभिचारित्वात् । सूक्ष्मदेहशून्यत्वस्य तमोगतेष्वनैकान्त्यात् । अत एव जडदेहशून्यत्वे तात्पर्यमित्यपि निरस्तम् । प्रलयकालीने व्यभिचारनिवारणेऽपि तमोगते तदनिवारणात् । तस्मात् कथमेतदिति चेत्, मैवम् । शोकादिनिमित्तदेहशून्यत्वस्य हेतुत्वे तात्पर्यात् । तमोगतानां स्वरूप-

देहस्य विशेषबलेन स्वरूपशोकादिव्यक्तिनिमित्ततायाः सिद्धान्तेऽङ्गीकृतत्वेन तत्र हेतोरभावेन व्यभिचारशङ्कानवकाशात् । शोकादिनिमित्तलिङ्गदेहवति प्रलयकालीनेऽपि न व्यभिचारः । न चैवमपि देहपदं व्यर्थम् । असिद्धिपरिहाराय पक्षे हेतूपपादनार्थत्वात् । यद्वा, आनन्दाद्यात्मकदेहातिरिक्तदेहशून्यत्वं हेतुरिति न कश्चिद् दोषः । नच स्थूलसूक्ष्मदेहशून्यत्वस्यासिद्धिः । ब्रह्म स्थूलसूक्ष्मदेहशून्यं पापविधुरत्वाद् व्यतिरेकेणास्मदादिवदित्यनुमानेन तत्सिद्धिसम्भवात् । अत्रापि विपक्षेऽकारणकार्योत्पत्तिप्रसङ्ग एव बाधको ज्ञातव्यः । अत एव पापमूलेति शरीरविशेषणम् । नच साध्ये स्थूलपदं व्यर्थमिति वाच्यम् । गुणादिकं गुण्यादिना भिन्नाभिन्नमित्यादाविवोद्देश्यसिद्ध्यर्थत्वसम्भवात् । शोकनिमित्तदेहशून्यत्वस्य साध्यत्वे तात्पर्यान्नोक्तशङ्कावकाश इति वा । न चात्रापि हेतोरसिद्धिः । ब्रह्म पापविद्धं न भवति जगत्पावित्र्यहेतुत्वादित्यनुमानेन तत्सिद्धेः । अत्र च विपक्षे हेतूच्छेद एव बाधकः । नहि स्वयं पापविद्धस्य जगत्पावित्र्यहेतुत्वं सम्भावनार्हमिति ॥

ननु 'शुक्रमित्यादिविशेषणानि' इति पूर्वग्रन्थे पूर्वार्धगतानां षण्णां विशेषणानां शोकाद्यभावोपपादकत्वं प्रतिज्ञाय 'यतो हि' इति तदुपपादनपरेऽत्र ग्रन्थे अव्रणमित्यस्य हेतुत्वानुपपादनाद् विरोधः । पूर्वमादिशब्देन तद्व्यतिरिक्तविशेषणविवक्षायामव्रणमित्यस्य मन्त्रे वैयर्थ्यापातादिति चेन्मैवम् । शुद्धत्वादीनामिव नाव्रणत्वस्य परम्परया शोकादिशून्यत्वोपपादकत्वम्, अपितु अव्रणत्वाच्छोकादिशून्यम् । नहि स्वरूपतो देहतश्चानादिनित्यमानन्दादिगुणपूर्णं ब्रह्म शोकादिमद् भवितुमर्हति । विरोधादिति साक्षादेव तदुपपादकत्वमिति ज्ञापनायात्राग्रहणोपपत्तेः ॥

इदानीं कविरित्याद्युत्तरार्धव्याख्यानरूपमेवम्भूतोऽपीति भाष्यं योजयितुं यदुक्तं प्राक् तत्रादेहत्वोक्त्या प्राप्तशङ्कापरिहाराय कविरित्युत्तरार्ध इति तां शङ्कां तावद् दर्शयति– **यद्यशरीर इत्यादिना** ॥ पूर्वार्धेऽकायास्नाविरशब्दाभ्यामशरीरत्वस्योक्तत्वादिति भावः । विष्णुर्नाशरीरः स्रष्टृत्वात् । घट-

स्रष्टृवदिति विवक्षितानुमाने विपक्षे हेतूच्छेदरूपं बाधकमुक्तम्– **यद्यशरीर इति** ॥ यद्वा, यदि विष्णुरशरीरः स्यात् तदा स्रष्टा न स्यादिति तर्क एवानेनोक्तः । तत्र कुलालादौ व्यतिरेकव्याप्तिं सप्रमाणकमाह– **घटादीति** ॥ विवर्तवादः परिणामवादश्चेति द्विविधो हि मायावादः । तत्राऽद्यमतानुसारेण दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्क्य निषेधति– **नचेति** ॥ इयं च शङ्का मन्त्रे याथातथ्यत इत्येतद्व्यावर्त्यतया कथितेति द्रष्टव्यम् ॥

॥ **आरोपितमेवेति** ॥ ननु कुलालादिना घटादिकमिव परमात्मना जगत्सृज्यमित्येवशब्दार्थः । अधिष्ठानस्याप्यारोपार्थं शरीरसापेक्षत्वे शुक्तिकाया अपि तत् स्यादित्याशयेन दृष्टान्तोपादानमिति द्रष्टव्यम् । कुतो न वाच्यमित्यतः 'सन् घटः' 'अहं दुःखी' इत्यादि प्रत्यक्षेण, प्रमाणदृष्टत्वाद्यनुमानेन, 'विश्वं सत्यम्' (ऋ.सं.२-२४-१२) इत्याद्यागमेन च जगतः सत्यत्वेन प्रमितत्वादित्याह – **तत्सत्यत्वेति** ॥ अनेन 'याथातथ्यतः' इत्येतद् व्याख्यातं भवति । ननु तर्हि शुक्तिरजतादिसत्ताऽपि प्रत्यक्षेण सिद्ध्येदविशेषादित्यतो बाधकभावाभावाभ्यां विशेषादित्याशयेनोक्तम्– **बाधाभावेनेति** ॥ ननु न सृष्ट्यादिसमये परमेश्वरस्यादेहत्वम् । येन सृष्ट्याद्यनुपपत्तिः । किन्तु समयान्तरे । अतो नादेहत्वोक्तिविरोधोऽपीत्याशङ्क्य निषेधति– **नचेति** ॥ इयं च शङ्का मन्त्रे 'शाश्वतीभ्यः समाभ्यः' इत्येतद्व्यावर्त्यतयोक्तेति ज्ञातव्यम् । कुतो नेत्यतः प्रवृत्तस्य 'शाश्वतीभ्यः समाभ्यः' इत्यस्य तात्पर्यमाह– **जगदिति** ॥ 'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति' इत्यादिप्रमाणेन प्रमितत्वादित्यर्थः । अत्र प्रमितत्वादित्युक्त्या पूर्वत्र निश्चयादित्युक्त्या च मन्त्रे विशेषणद्वयस्यासिद्धिः परिहृता । अत एवैतत्पदद्वयव्याख्यानरूपे 'स सत्यं जगदेतादृक्' इति प्रमाणे एतादृगित्यनेन सत्यत्वानाद्यनन्तत्वयोः प्रमितत्वमुक्तमिति ज्ञातव्यम् । एवम्भूतोऽपीत्येतत् शुक्रत्वादिविशिष्टोऽपीति प्रतीतिनिरासायाकायमस्नाविरमिति पदद्वयोक्ताशरीरत्वपरामर्शकतयाऽनूद्य व्याकुर्वन्नशरीरत्वस्य कवित्वेन विरोधस्यानाशङ्क्ना-

देवम्भूतोऽपि कविरिति शब्दित इत्यसङ्गतमित्यतः ससृज इत्यनेन सम्बन्धान्ना-सङ्गतिरिति भावेन व्यवहितानां पदानामन्वयं च दर्शयति – **एवम्भूतोऽशरीरोऽपीत्यादि ॥**

एतादृगित्यस्य वैयर्थ्यमाशङ्क्य प्रमाणसूचकत्वान्न तदित्याशयेन व्याचष्टे– **सत्यत्वादिनेति ॥** आदिपदेन प्रवाहतो नित्यत्वस्य ग्रहणम् । अत्र नित्यमेवेत्येवशब्दस्य एतादृगेवेति सम्बन्धोऽभिप्रेतः । नतु यथाश्रुतः । सत्यमित्यनेन विरोधापातात् । अत एवैवम्भूतोऽपीत्यपिशब्दस्याऽवृत्तिमाश्रित्य नित्यमपीति पूर्वमुक्तम् । अन्यथा नित्यमेवेत्यवक्ष्यत् । तथाच यथा लोके अयं घट इत्युक्त्वा पुनर्घटो भवत्येवेत्युक्त्या प्रमितत्वं प्रतीयते, तथेहापि जगत् सत्यं प्रवाहतो नित्यमपीत्युक्त्वा पुनरेतादृगेवेत्युक्त्या प्रमितत्वं लभ्यत इति भावः । परमेश्वरस्यादेहत्वे प्राप्तशङ्कायास्तत्परिहारस्य च सृष्ट्यादिसर्वविषयत्वात् ससृजे इति सृष्टिमात्रोक्तिरयुक्तेत्यत आह– **ससृज इत्युपलक्षणमिति ॥** स्थित्यादीनामुपलक्षणमित्यर्थः । अनेन मन्त्रे व्यदधादित्युपलक्षणमित्युक्तं भवति ॥

नन्वनादीत्यादिना पूर्वोत्तरजगतां वैचित्र्याभावोक्तिर्न प्रकृतसङ्गता । अदेह-त्वस्य जगत्सृष्ट्यादेश्च कालभेदेन व्यवस्थाशङ्कायाः जगत्प्रवाहे नित्यत्वोक्ति-मात्रेण परिहारसम्भवादित्यत उक्तशङ्कापरिहारानुपयोगेऽपि वस्तुस्थितिकथन-रूपत्वान्न दोष इत्याह– **प्रवाहत इति ॥**

ननु जगतोऽनेकप्रकारत्वशङ्कायां प्रवाहस्यैकप्रकारत्वकथनमसङ्गतमित्यतः प्रवाहशब्दस्य प्रवाहिषु लक्षणामभिप्रेत्याऽऽह– **नियमेनेति ॥** नियमेनेत्य-स्योत्तरशेषत्वभ्रमनिरासायात्र सम्बन्धो दर्शितः । ननूक्तशङ्कापरिहारस्य नियमेन प्रवाहैकप्रकारत इत्येतावतैव सिद्धेरनाद्यनन्तकालेष्विति व्यर्थमित्यतो मन्त्रगतपञ्चम्याः सप्तमीत्वेन विपरिणामज्ञापनार्थत्वान्न तदित्याशयेनाऽऽह– **तदनेनेति ॥** तच्च तदिदं च तदिदं तेन । अनाद्यनन्तकालेष्वित्यनेनेत्यर्थः ।

इतीत्यतः परं पञ्चम्यन्तमिति शेषः। पञ्चम्याः सप्तम्यर्थत्वेन लब्धं याथातथ्यत इत्यादिमन्त्रवाक्यार्थमन्वयप्रदर्शनपूर्वकमाह– **अनाद्यनन्तेति ॥** याथातथ्यत इत्यस्य याथार्थ्येनेति व्याख्यानेन तृतीयान्तात् तसिरित्युक्तं भवति । वर्तमानानपीति मन्त्रे अध्याहारः। अशरीरस्याप्यारोपाधिष्ठानत्वेन स्रष्टृत्वमुपपद्यत इत्यन्यथासिद्धिशङ्कायाः याथार्थ्येन वर्तमानानित्यनेन निरासादशरीरत्वयथार्थस्रष्टृत्वयोर्विरोधस्फोरणायापीत्युक्तम् । एतस्यार्थान्महदादीन् व्यदधादुत्पादयामासेति मन्त्रेणान्वयः । अनेन, याथातथ्यतः, यथातथाभावो याथातथ्यम् । यथाभूतकर्मफलसाधनतः अर्थान् कर्तव्यपदार्थान् व्यदधाद् यथानुरूपं विभजन् शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सरेभ्यः प्रजापतिभ्यः इत्यपव्याख्यानमपहस्तितं वेदितव्यम् ॥

ननु शुक्रमित्यादिशब्दवाच्यत्वस्याप्युक्तत्वेन 'कविरित्येव शब्द्यते' इत्यवधारणार्थैकैवशब्दानुपपत्तिरित्यतो नायमेवशब्दः किन्तु बिन्दुलोपेनैवंशब्दः । एवशब्दत्वेऽपि वा अव्ययानामनेकार्थत्वेन एवंशब्दार्थभूतप्रकारार्थक एव नावधारणार्थकोऽतो नोक्तदोष इत्याशयेनानूद्य व्याचष्टे– **कविरित्येव कविरित्येवमिति ॥**

इदं च व्याख्यानं भाष्यकृत्सम्मतमित्याशयेनोक्तम्– **एवाह्येवैवाहीतिवदिति ।** भगवत्पादैः कर्मनिर्णये 'विदा मघवन्' इति खण्डव्याख्यानावसरे एतद्वाक्यस्य एव हि एवमेव हीति व्याख्यातत्वेन तद्वदिहापि व्याख्यायत इत्यर्थः । कर्मनिर्णये एव हीत्यस्यैवं हीति व्याख्यानम् । 'एवैव हि' इत्यस्यैवमेव हीति व्याख्यानम् । दैर्घ्यं तु सांहितमिति ज्ञातव्यम् । यद्यप्येवाहीतिवदित्येतावतैव प्रकृतनिर्वाहात् तावदेवोदाहर्तव्यम् । तथाऽपि स्पष्टत्वार्थमधिकोदाहरणं कृतमित्यवधेयम् । नचात्रेतिशब्देनैव प्रकारसमर्पणादेवंशब्दो व्यर्थ इति वाच्यम् । अथवेत्यादिवदित्येवमिति निपातसमुदायत्वाङ्गीकारेण तदनवकाशात् । नच सार्वज्ञादेव कविरिति शब्द्यत इति भिन्नक्रमेणैवशब्द-

सम्बन्धसम्भवात् किमेवं व्याख्यानेनेति वाच्यम् । परेणापि कविः सर्वदृगिति व्याख्यातत्वेनापव्याख्याननिरासादिप्रयोजनाभावेन तथा सम्बन्धस्य व्यर्थत्वादित्याशयात् ।

तात्पर्यार्थपरं भाष्यमित्यभिप्रेत्याक्षरार्थं दर्शयति– **परिभवतीति** ॥ स्वयम्भूशब्देन सदाऽनन्याश्रयत्वलाभप्रकारं दर्शयति– **स्वयमेवेति** ॥ ननु स्वयम्भूशब्दवाच्यत्वे निमित्तान्तरानुक्त्या समुच्चेतव्याभावादनन्याश्रयत्वाच्चेति चशब्दानुपपत्तिः । 'प्रकृत्या मनसोऽपि च' इत्यत्रापिशब्देनैव ब्रह्मादिमनः-समुच्चयसिद्धेश्चशब्दो व्यर्थ इत्यत आह– **चशब्दौ विशेषणसमुच्चयार्था-विति** ॥ स्वयम्भूश्च मनीषी चेति विशेषणसमुच्चायकावेव चशब्दौ नतु यथा-श्रुतसम्बन्धेन निमित्तसर्वमनःसमुच्चायकौ । येनोक्तदोषः स्यादिति भावः । ननु परमेश्वरस्य सदेहत्वे अकायत्वोक्तिविरोध इत्यतो व्यवस्थया तं परिहरति – **जडशरीरेति** ॥ देहवत्त्वस्य स्रष्टृत्वे हेतुत्वलाभाय यत्तच्छब्दावध्याहृत्य योजयति– **यत एवम्भूत इति** ॥ ज्ञानाद्यात्मकदेहवानित्यर्थः । ननु विग्रह-वत्त्वाङ्गीकारे तत एव सर्जनाद्युपपत्तेः कविरित्यादिना सार्वज्ञादिवर्णनं व्यर्थ-मित्यत आह– **सज्ज्ञानाद्यात्मकेति** ॥ अत्र सच्छब्देन पारतन्त्र्यादिदोष-राहित्यस्य विवक्षितत्वादन्येषामविद्यमानमिति घटते । व्यदधात् निर्मितवान् निर्माणशक्तिप्रदर्शनार्थं कविरित्यादीति । विष्णुतत्त्वविनिर्णयटीकायामपि कवित्वादीनां सज्ज्ञानात्मकविग्रहत्वोपपादकत्वेनैव निर्माणशक्तिप्रदर्शकत्वं विवक्षितं नतु साक्षात् । अतो न विरोधः ॥

यद्वा, विग्रहवतोऽपि परमेश्वरस्य कुलालादिवन्नानन्तजगन्निर्मातृत्वं युक्तम् । तदुपयुक्तसार्वज्ञाद्यभावादिति शङ्कापरिहाराय कवित्वादीनां निर्माणशक्तिप्रदर्शकत्वं तत्रोक्तम् । अत्र तु प्रकारान्तरेण तेषामुपयोग उक्त इति न कोऽपि विरोध इति ज्ञातव्यम् । 'स विष्णुं पर्यगाद् यतः' इति प्रमाणशेषेण उत्तरमन्त्रस्य सङ्गतिसूचनपूर्वकं 'स पर्यगात्' इत्येतद् ज्ञानिविषय-तया व्याख्यातम् । तेन परोक्तसङ्गतिव्याख्यानयोरयुक्तत्वं सूचितमिति भावेन

ससङ्गतिकं तद्व्याख्यानं दूषयितुमनुवदति– **अपरे त्विति** ॥ अयं मन्त्र इति ॥ 'स पर्यगात्' इत्यादिको मन्त्र इत्यर्थः ॥ **एतदपीति** ॥ न केवलं शुक्रमित्यादिकमित्यपेरर्थः । तदेव व्याख्यानं दर्शयति– **स आत्मेति** ॥ शुक्रमित्यादिकमस्मद्रीत्या द्वितीयान्तमभ्युपेयते । आद्यं निराचष्टे– **शुक्रमित्यादेरिति** ॥ **अन्वयाभावेति** ॥ विशेष्यभूतात्मवाचि 'स' इति प्रथमान्तेनान्वयाभावप्रसङ्गादित्यर्थः । द्वितीयमाशङ्क्य निराकरोति– **न चैतदिति** ॥ कुतो नेत्यत आह– **लिङ्गेति** ॥ शुक्रमित्यादेर्विशेषणस्य प्रथमान्तत्वे नपुंसकत्वावश्यम्भावात् स इति विशेष्यस्य च पुल्लिङ्गव्यत्ययेन विशेषणविशेष्यभावानुपपत्तिरित्यर्थः । नच 'घटो द्रव्यम्' इत्यादिवदुपपत्तिः । तत्र नियतलिङ्गत्वात् । अत्र शुक्रमित्यादीनामनियतलिङ्गत्वात् । अनियतलिङ्गानां विशेषणानां विशेष्यनिघ्नत्वावश्यम्भावादिति भावः ॥

ननु न लिङ्गव्यत्ययः । शुक्रमित्यादीनामपि पुल्लिङ्गत्वेन विपरिणामाङ्गीकारात् । यथोक्तं परेण । शुक्रमित्यादीनि वचांसि पुल्लिङ्गत्वेन विपरिणेयानि । स पर्यगादित्युपक्रम्य कविर्मनीषीत्यादिना पुल्लिङ्गत्वेनोपसंहारादितीत्यत आह– **विपरिणामस्त्विति** ॥ अगतिका गतिः । गत्यन्तररहिता गमनिकेत्यर्थः । अस्मदुक्तरीत्या शुक्रमित्यादिद्वितीयान्तानां स पर्यगादित्युक्तप्राप्तिकर्मत्वेन कविरित्यादिप्रथमान्तानां व्यदधादित्युक्तसृष्ट्यादिकर्तृत्वेन यथाश्रुतान्वयसम्भवे विपरिणामोऽङ्गीकारोऽनुचित इति भावः । स्वयम्भूरित्यस्यापव्याख्यानं निराकरोति– **स्वयमेवेति** ॥ **विरुद्धमिति** ॥

मनीषी मनस ईशिता, परिभूः सर्वेषामुपर्युपरि भवतीति परव्याख्यानानुसारेण, भाष्यकृद्व्याख्यानानुसारेण वा सर्वभेदस्यैव प्राप्त्या सर्वात्मकत्वं विरुद्धमित्यर्थः । एवं स पर्यगादित्येतद् व्याख्यानं निराकृत्य मन्त्रस्य परोक्तां सङ्गतिमपि निराकरोति– **नचेति** ॥ नापीत्यर्थः । **एवंविधमिति** ॥ कविरित्याद्युक्तसार्वज्ञादिविशिष्टमित्यर्थः । तेषां निर्विशेषत्ववादिनामिति हेतुगर्भं विशेषणम् । ततश्चास्य मन्त्रस्य निष्कृष्टात्मप्रतिपादकत्वाभावाद् योऽय-

मतीतैर्मन्त्रैरित्युक्तसङ्गत्यनुपपत्तिरिति भावः । यद्वा, स्वयमेव सर्वं भवतीति व्याख्याने दोषान्तरमाह– **नचेति ॥** एवंविधं चेतनाचेतनसर्वजगदात्मकम् । तथा च निष्कृष्टात्मस्वरूपप्रतिपादनाय प्रवृत्तेऽत्र मन्त्रेऽतथाभूतसर्वात्मकत्वप्रतिपादनमसङ्गतमिति भावः ॥ ८ ॥

**ततश्चायं मन्त्रार्थः–** पूर्वमन्त्रे ज्ञानिनः शोकाद्यभाव उक्तः । तत्र हेत्वाकाङ्क्षायामाह– **स पर्यगादिति ॥** यतो ज्ञानी परमेश्वरप्रसादाद् विष्णुं पर्यगात् सम्यक् प्राप्नोत्येव परमेश्वरसारूप्यलक्षणां गतिं गतो भवतीति यावत् । अतः शोकाद्यभावो युक्तः । परमेश्वरसारूप्येऽपि कुतस्तदभावः । राजादिसारूप्यवतस्तदभावादित्यत उक्तम्–**शुक्रमिति ॥** शुचं शोकं रहति त्यजतीति शुक्रम् । शोकादिरहितब्रह्मसारूप्यं गतस्य शोकाद्यभावो युक्त इति भावः । ब्रह्मणः शोकादिराहित्यमेव कुतः ? यतोऽकायम् । शोकहेतुलिङ्गदेहवर्जितम् । तथा अस्नाविरं स्नावोपलक्षितसप्तधातुमयस्थूलशरीरवर्जितम् । अकायत्वादिकमपि कुतः? यतोऽपापविद्धं देहारम्भकपापशून्यम् । तदपि कुतः? यतः शुद्धं जगत्पावित्र्यनिमित्तम् । न ह्येवम्भूते पापं सम्भावनार्हम् । किञ्च यतोऽव्रणम् । नित्यत्वे सत्यानन्दादिगुणपूर्णम् । अतोऽपि शुक्रम् । ननु ब्रह्मणो देहशून्यत्वे श्रुत्यादिसिद्धसर्वजगत्सर्जनादिविरोधः । तस्य देहसापेक्षतायाः घटादौ दृष्टत्वादित्यतः कविरित्याद्युत्तरार्धः । तत्राऽदौ सज्ज्ञानानन्ददेहवानित्युपस्कर्तव्यम् । यतः सज्ज्ञानानन्ददेहवान् अतोऽर्थान् महदादीन् व्यदधाद् उत्पादयामास । स्थित्याद्युपलक्षणमेतत् ॥

ननु जगदारोपाधिष्ठानत्वरूपजगत्स्रष्टृत्वस्य शरीरानपेक्षत्वात् किं तदङ्गीकारेणेत्यतोऽर्थान् विशिनष्टि– **याथातथ्यत इति ॥** तृतीयान्तात् तसिः वर्तमानानिति शेषः । अबाधितप्रत्यक्षादिसिद्धतया याथार्थ्येन वर्तमानानित्यर्थः । न चादेहत्वस्य जगत्सृष्ट्यादेश्च कालभेदेन व्यवस्था । जगत्सृष्ट्यादिप्रवाहस्यानाद्यनन्ततया प्रमितत्वात् । तदेतदुक्तम्– **शाश्वतीभ्यः समाभ्य इति ॥**

पञ्चमी सप्तम्यर्थे । अनाद्यनन्तवत्सरेषु व्यदधात् । सज्ज्ञानाद्यात्मक-देहवत्त्वमन्येषामविद्यमानं परमेश्वरस्योपपादयितुं सार्वज्ञ्यादिमाहात्म्यमुक्तं कविरित्यादिविशेषणैः । कविः सर्वज्ञः । मनीषी रमाब्रह्मादिमनसामीशिता । परिभवति सर्वं वशीकरोतीति परिभूः सर्वतो वरः । स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः सदाऽनन्याश्रय इति ॥ ८ ॥

## (दुर्गमवाक्यार्थविवरणम्)

नित्यपूर्णत इति नित्यं पूर्णत्वत इति प्रतीतेराह– **नित्यत्वेति** ॥ स चाव्रणशब्दरूढो न भवतीति भावः । नन्वस्मिन् पक्षे कथं पदारूढतेत्यत आह– 'व्रण सञ्चूर्णने' इति यदि पावनत्वं नाम पावित्र्यं, तच्च प्रकृते शुद्धपद-प्रवृत्तिनिमित्तं स्यात् तर्हि अपापविद्धमिति पुनरुक्तं भवेत् । सकलपापा-संश्लेष हि पावित्र्यं नामेत्यत आह– **पावनत्वादिति** ॥ ननु कायशब्दस्य उभयसाधारण्यम् । तर्हि अकायमित्यत्रैव स्थूलदेहाभावोऽर्थः । अत्र लिङ्ग-वर्जनमिति किं न स्यादित्यत आह– **स्नावोपलक्षितेति** ॥ परब्रह्मप्राप्तेः संसारिसाधारण्यादाह– **सारूप्यादिलक्षणामिति न च वाच्यमिति** ॥ न च वाच्यमिति याथातथ्यत इत्येतद्व्यावर्त्यकथनम् ॥ **न चादेहत्वस्येति** ॥ 'शाश्वतीभ्यः समाभ्यः' इत्यस्येति बोध्यम् । **ससृज इत्युपलक्षणमिति** ॥ धारणपोषणादिकं च ग्राह्यम् । अत एव भाष्याद्यपद्ये 'जगद्धात्रे' इत्यभिहितमिति भावः । अथवा 'ससृज इत्युपलक्षणं सृजति स्रक्ष्यतीत्यपि ग्राह्यम् । अन्यथा अनाद्यनन्तकालेष्वित्युक्तायोगादिति भावः ॥

ननु प्रवाहैकप्रकारता कथम् ? अनाद्यनन्तकालीनप्रवाहस्य एकत्वाद् अनेकत्वे हि एकप्रकारतोक्तिः सम्भवतीत्यत आह– **नियमेनेति** ॥ ननु 'सार्वज्ञात् कविरित्येव शब्द्यते' इत्ययुक्तं सूरिज्ञान्यादिशब्दवाच्यत्वादित्यतो नायमेवशब्दोऽवधारणार्थः । किन्तु एवंशब्दार्थ इत्येतत्प्रयोगप्रदर्शनपूर्वकमाह–

**'एवाह्येवैवाहीति** ॥ ननु यदि प्रथमान्तत्वे लिङ्गव्यत्ययप्रसङ्गस्तर्हि द्वितीयार्थे द्वितीया स्यादित्यत आह– **विपरिणामस्त्विति** ॥ **इति च विरुद्धमिति** ॥ मनसामीशितृत्वस्य सर्वपरिभावकत्वस्येतरसापेक्षत्वात् स्वयमेव भवतीत्यन्य-निरासो न युक्त इति भावः । नचैवंविधमिति सर्वजगत्स्रष्टृत्वादीनां सोपाधिक-रूपत्वादिति भावः ॥ ८ ॥

**(उपनिषत्)**

*(सम्यग्ज्ञानस्य मिथ्याज्ञाननिन्दासाहित्येनैव मोक्षसाधनत्ववर्णनम्)*

**अन्धःतमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूयं इव ते तमो य उं विद्यायांऽ रताः ॥ ९ ॥**

**अन्यदेवाऽहुर्विद्ययाऽन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥ १० ॥**

**(भाष्यम्)**

**'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् ।**
**ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः ॥**

**तस्माद् यथास्वरूपं तु नारायणमनामयम् ।**
**अयथार्थस्य निन्दां च ......... ॥ ९–१० ॥**

**(टीका)**

'अन्धं तमः प्रविशन्ति' इत्यादिमन्त्रानप्रतीत्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे– **अन्यथोपासका इति** ॥ यथावत्परमात्मज्ञानं मोक्षसाधनमित्यु-क्तम् । न केवलं तत् । किं नामान्यथाज्ञाननिन्दासमुच्चितमेवेत्येतदर्थप्रति-पादकमाद्यमन्त्रत्रयम् । तत्र तावद् यथावज्ज्ञानस्येवान्यथाज्ञाननिन्दाया अप्यावश्यकत्वोपपादनायान्यथाज्ञानस्योक्तमसुर्यलोकसाधनत्वमनूद्यान्यथा-

ज्ञानानिन्दनस्य ततोऽधिकानर्थसाधनत्वमाद्येन मन्त्रेणोच्यते । तस्यार्थोऽ**न्यथेति । उपासका** विष्णोरिति शेषः । सर्वत्र ज्ञानशब्दस्योपासनापर्यन्तत्वाद्ध्यामिश्रोक्तिः । तत्राविद्यापदं विषयिवाचकं विषयस्यान्यथाकारस्य लक्षकमित्यभिप्रेत्याविद्यामुपासत इत्येतदन्यथोपासका इति व्याख्यातम् । ततोऽन्यथाज्ञानिप्राप्यात्तमसोऽधिकमिव । इवार्थमाह– **व्यक्तमिति ॥** उशब्दोऽवधरणार्थः विद्यायामित्यनेन सम्बद्ध्यते । तेन विद्यायां यथार्थज्ञान एव रताः । न त्वन्यथाज्ञाननिन्दां कुर्वन्तीत्येषोऽर्थो लभ्यते । अत उक्तम् – **तेषामनिन्दका इति ॥** ततः किमित्यतो वक्ति– **तस्मादिति ॥** यस्मान्मिथ्याज्ञानतदनिन्दाभ्यां तमः प्राप्तिः । निन्दां च विद्यादिति शेषः । अयथार्थस्य निन्दामिति । अयथार्थज्ञानस्य निन्द्यत्वमित्यर्थः ॥ ९ ॥

किं विपक्षेऽनर्थप्राप्तेरेव सम्यग्ज्ञानासम्यग्ज्ञाननिन्दनयोः कर्तव्यता ? नेति ब्रूमः । किन्तु मोक्षफलस्यांशत उभयसाध्यत्वादपीति प्रतिपादकोऽ**न्यदेवाहुः विद्यये**ति द्वितीयमन्त्रः । तथा हि । विद्यया यथार्थज्ञानेनान्यदेव मोक्षैकलक्षणं फलं प्राप्यमाहुर्वृद्धाः । अविद्यया अन्यथाज्ञाननिन्दया चेति यावत्, अन्यदेव फलमाहुरिति धीराणां धीमतां वृद्धवचनसम्मतियुक्तं वचनं शुश्रुम । ये धीराः नोऽस्मभ्यं मोक्षसाधनं विचचक्षिरे व्याचचक्षिरे । तस्मादुपपन्नः समुच्चय इति ॥ १० ॥

## (प्रकाशिका)

तमस्यनुभूयमानदुःखातिशयस्य ततोऽधिकमित्यनेनैव प्राप्तेः पुनरिवशब्दो व्यर्थ इव भाति । अतस्तदर्थमाह भाष्यकारः– **व्यक्तमिति ॥** तमः प्रवेशयन्ति वायुदूताः । अविद्योपासकस्तु सद्विद्यामजानन्नत एव दुर्विद्यानिन्दनमप्यजानन् भगवतो जीवस्वरूपत्वमुक्त्वा दुःखभोक्तृत्वमज्ञातृत्वं मूलस्वरूपेऽपि निर्गुणत्वादिकमुपास्ते । त्वं तु सद्विद्यां जानन्नत एव दुर्विद्यानिन्दनमपि जानन् दुष्प्रमेयं न निन्दसि, केवलविद्यामेवोपास्से । एवं च भगवद्द्वेष्युपेक्षकत्वाद् ज्ञात्वा कृतब्रह्महत्यावत् तव भगवदपराधोऽधिक इति

दोषाधिक्यं घोषयित्वा तमोमार्गे तं ज़त्रुताडन-तर्जन-ताडन-जिह्वाच्छेदन-देह-दाहादिना बहुतरदुःखादिकं दत्वा नयन्ति । तं तु न तथा नयन्ति । तमसि ततोऽधिकदुःखानुभवस्तु भूयःपदेनैव प्राप्त इति भावः । अविद्यया अन्यथाज्ञाननिन्दयेत्यत्र अविद्यया मोक्षैकदेशप्राप्तेरसम्भवात्, अविद्यानिन्दनस्य प्राक् प्रस्तुतत्वाच्च, यथाश्रुतविद्याविद्ययोर्भिन्नफलत्वस्य सर्वसम्मतत्वेना-वक्तव्यत्वाच्च, 'अविद्यया मृत्युं तीर्त्वा' इति मोक्षैकदेशरूपफलस्य वक्ष्यमाणत्वाच्च निन्दयेति पदमध्याहृत्य व्याख्येयमिति भावः । लौकिकधैर्यस्याप्रयोजकत्वाद्धियां रता इति धीराः इति भावेनोक्तम्– **धीमतामिति** ॥ तेऽपि धीराः कल्पना-शक्त्या नोक्तवन्त इति भावेनोक्तम्–**वृद्धवचनसम्मतियुक्तमिति** ॥ ९–१० ॥

**(ईशावास्यभाष्यटीकाविवृतिः)**

**अथ भाष्यार्थः ॥ इत्यादिमन्त्रानिति** ॥ आदिपदेन 'सम्भूत्याऽमृतमश्नुते' इत्यन्ता मन्त्राः ग्राह्याः ॥ **अन्यथोपासका इतीति** ॥ एतच्च मन्त्रषट्क-व्याख्यानरूपकौर्म इत्यन्तस्मृतिप्रतीकग्रहणमिति मन्तव्यम् । ननु मन्त्रा एव व्यर्थास्ततस्तद्व्याख्यानपरं भाष्यं सुतरामनर्थकमित्यतस्त्रिकद्वये आद्यत्रिकस्य तावत् ससङ्गतिकं प्रतिपाद्यमाह – **यथावदित्यादि ॥ मोक्षसाधनमित्युक्त-मिति** ॥ 'ततो न विजुगुप्सते', 'तत्र को मोहः कः शोकः' इति भयशोकाद्य-भावसाधनत्वोक्त्या तद्रूपमोक्षसाधनत्वमुक्तमित्यर्थः ॥ **न केवलं तदिति** ॥ मोक्षसाधनमित्यनुवर्तते । केवलमसहायं तत् परमात्मज्ञानं मोक्षसाधनं नेत्यर्थः ॥ **तत्र तावदिति** ॥ तत्र आद्यमन्त्रत्रयेऽप्याद्येन मन्त्रेण तावदन्यथा-ज्ञानानिन्दनस्य ततोऽन्यथाज्ञानादधिकानर्थसाधनत्वमुच्यत इत्यन्वयः । तर्हि पूर्वार्धस्य वैयर्थ्यम् । न चान्यथाज्ञानस्यानर्थसाधनत्वं वक्तुं तदिति वाच्यम् । तस्यासुर्या नामेति मन्त्रेणोक्तत्वेन पुनरुक्तिप्रसङ्गादित्यत उक्तानुवादरूपत्वान्न दोष इत्याशयेनोक्तमन्यथाज्ञानस्योक्तमसुर्यलोकसाधनत्वमनूद्येति ॥ अनूद्येत्यतः पूर्वं पूर्वार्धेनेति शेषः । ननु अनुवादोऽपि व्यर्थः । अधिकविधानाद्यभावादित्यत उक्तम् । यथावज्ज्ञानस्येवान्यथाज्ञाननिन्दाया अप्यावश्यकत्वोपपादनायेति ॥

उपासनाकर्मानुक्तेराह– **विष्णोरिति शेष इति ॥** अनुपपत्तिस्फोरणाय वा अध्याहृतस्य सम्बन्धज्ञापनाय वा उपासका इत्यनुवादः । ननु **'येऽविद्यामुपासते', 'यतस्तद् वेद'** इति मन्त्रे **'अन्यथोपासका ये तु ये विदुः सह सज्जनाः'** इति भाष्ये च ज्ञानोपासनयोर्व्यामिश्रोक्तिरयुक्ता । अनिर्णयप्रसङ्गादित्यत आह – **सर्वत्रेति ॥** मन्त्रे भाष्ये चेत्यर्थः ॥ **उपासनापर्यन्तत्वादिति ॥** सामान्यशब्दस्य विशेषे लक्षणेति भावः । यद्यप्युपासनाशब्दस्य ज्ञानपरत्वेनाङ्गीकारेणापि व्यामिश्रोक्तिघटना सम्भवति । तथाऽपि तमःप्राप्तिरूपानर्थस्य मृत्यूत्तारणादिरूपमोक्षस्य चोपासनाफलत्वेऽपि ज्ञानमात्रफलत्वाभावादेव घटना कृतेति द्रष्टव्यम् । भाष्यमन्त्रयोर्व्याख्यानव्याख्येयभावं घटयति– **तत्रेति ॥** आद्यमन्त्र इत्यर्थः । **विषयिवाचकमिति ॥** विद्याविरुद्धमिथ्याज्ञानवाचकमित्यर्थः । विषयविषयिभावरूपशक्यसम्बन्धसूचनाय विषयिवाचकमिति विषयस्येति चोक्तम् । मिथ्याज्ञानरूपाविद्याया उपास्यत्वाभावान्मुख्यार्थानुपपत्तिर्द्रष्टव्या । ननु तत इत्यनेन तमसः परामर्शः क्रियते, उतान्यथोपासकानाम् । नाऽद्यः । स्वतः स्वस्याऽधिक्यस्य बाधितत्वात् । न द्वितीयः । विजातीयत्वेनाऽधिक्यासम्भवादित्यतोऽन्यथोपासकास्तमो यान्तीति वाक्यतात्पर्यार्थपरामर्शान्न कश्चिद् दोष इत्याशयेनाऽह– **तत इति ॥**

ननु मन्त्रव्याख्यानरूपे प्रमाणे व्यक्तमिति किं मन्त्रपदानुवादः, उत व्याख्यानम् । नाऽद्यः । मन्त्रे तत्पदाभावात् । न द्वितीयः । व्याख्येयपदाभावादित्यतो द्वितीयपक्षमङ्गीकृत्याऽह– **इवार्थमाहेति ॥** अनेन भाष्ये अधिकमिवेति मन्त्रगतेवशब्दानुवादेन व्यक्तमिति तद्व्याख्यानं कृतमित्युक्तं भवति । ननु इवशब्दस्य व्यक्तत्वार्थत्वे भूय इवेत्यस्य व्यक्तमधिकं सम्यगधिकमित्यर्थः सम्पद्यते । प्रकारान्तराभावात् । तथा च **'अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः ॥ ततः किञ्चिद् विशेषेण दुर्ज्ञानस्याविनिन्दकाः'** इत्येतन्मन्त्रव्याख्यानरूपबृहद्भाष्यविरोधः । तत्र किञ्चिदित्यनेनेवशब्दस्याल्पार्थता व्याख्यानेनाल्पाधिकतमःप्राप्तेः फलत्वेनोक्तत्वात् । नच तत्र

किञ्चिदिति नेवशब्दस्य व्याख्यानमिति वाच्यम् । उन्मूलत्वापातात् । इवशब्दस्य व्याख्यानाभावप्रसङ्गाच्च । **'उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते'** इति तत्रैव पूर्वोक्तप्रमाणप्राप्ताल्पत्वार्थताया हातुमशक्यत्वाच्च । किञ्चिदित्यस्येवशब्दार्थत्वाभावेऽपि विरोधापरिहाराच्चेति चेन्मैवम् । अत्राप्यधिकमित्यस्य किञ्चिदधिकमित्येवार्थोऽभिप्रेतः । व्यक्तत्वार्थकेवशब्दस्य तु अन्यथोपासकास्ततोऽल्पमधिकं तमो यान्तीति व्यक्तं प्रमितमिति भिन्नक्रमेण सम्बन्धस्य विवक्षितत्वेन विरोधाभावात् । इयांस्तु विशेषः । अत्र भूय इत्यस्यैव किञ्चिदाधिक्यार्थकत्वमङ्गीकृत्येवशब्दो व्यक्तत्वार्थतया व्याख्यातः । तत्रेवशब्दः किञ्चिदित्यर्थकत्वेनेति । नन्वन्यथाज्ञानिप्राप्यतमसः सकाशात् तदनिन्दकानामधिकतमःप्राप्तिर्भवतीत्युक्तं तदयुक्तम् । अन्यथा-ज्ञानानिन्दनस्योभयोरपि समत्वेनाधिकतमःप्रापकाभावात् । अङ्गीकृत्य चैत-दुक्तम् । वस्तुतस्तु अन्यथाज्ञाननिन्दकस्य विद्यारतत्वेनान्यथोपासकापेक्षया समीचीनत्वेनानिन्दनप्रयुक्ताल्पतमःप्राप्तेरेव वक्तुमुचितत्वादिति चेत् ।

अस्त्यत्र विवेकः । न तावदन्यथोपासकापेक्षया तदनिन्दकस्य विद्यारतत्वप्रयुक्तं समीचीनत्वम् । अनिन्दनदोषदूषितस्य विद्यारतत्वस्य भर्जितबीजवद-किञ्चित्करत्वेन सामीचीन्यानापादकत्वात् । नाप्यन्यथाज्ञानानिन्दकत्वेनोभयोः साम्यम् । अन्यथोपासकस्य सम्यगाचार्योपदेशाभावेनान्यथाज्ञाननिन्दनस्य कर्तव्यत्वेनाप्राप्ततया तत्त्यागिनोऽप्राप्तत्यागित्वात् । विद्यारतस्य तु सम्यगाचार्योपदेशावश्यम्भावेन तत एव ब्रह्मनिर्गुणत्वादिनिन्दनस्य कर्तव्यत्वेन प्राप्तस्याप्यकरणेन प्राप्तनिष्ठाहीनत्वाद् अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो ह्यधिक-दोषवान् । आचार्योपदेशाभावेनाप्राप्तनित्यकर्मादित्यागिनः सकाशादाचार्योप-देशादिना प्राप्ते नित्यकर्मादौ निष्ठाहीनो दोषवानिति लोके प्रसिद्धत्वात् । अतोऽन्यथोपासकापेक्षयाऽन्यथाज्ञानानिन्दकस्याधिकपापित्वाद्युक्तमधिकतमः-प्राप्तिकथनम् । तदेतत्सर्वमुक्तमेतन्मन्त्रव्याख्यानरूपे बृहद्भाष्ये– **अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः । ततः किञ्चिद् विशेषेण दुर्ज्ञानस्यावि-**

**निन्दकाः ॥ सम्यगाचार्यवचनमवज्ञाय विरोधिनि । सत्त्वबुद्धिं यतः कुर्युस्ततस्तेऽधिकपापिनः । अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान्'** इति । सम्यगाचार्यवचनं ब्रह्मनिर्गुणत्वादिनिन्दापरम् । अवज्ञाय तिरस्कृत्य । विरोधिनि ब्रह्मनिर्गुणत्वादौ सत्वबुद्धिं यतः कुर्युरिति तद्वाक्यार्थः ॥

ननु मन्त्रे विद्यारतानामधिकतमःप्राप्तिरुच्यते । तद् विरुद्धं प्रकृतासङ्गतं च । नच 'य उ विद्यायां रताः' इत्यस्य न विद्यारतत्वमात्रे तात्पर्यम् । किन्त्वन्यथाज्ञानानिन्दनेऽपि । अतो नोक्तदोषद्वयावकाशः । अत एव भाष्ये तेषामनिन्दका इति तद्वाक्यमन्यथाव्याख्यातमिति चेत्, सत्यम् । तेन तदर्थालाभादित्यतो लाभप्रकारं दर्शयति– **उशब्दोऽवधारणार्थ इत्यादि ॥**

ननु तस्मादित्यादिभाष्यमाद्यमन्त्रस्य व्याख्यानमुत विद्यां चाविद्यां चेति तृतीयमन्त्रस्य । नाऽद्यः । पूर्वश्लोकेनैव सम्यग् व्याख्यातत्वात् । न द्वितीयः । तस्मादित्यंशवैयर्थ्यादित्यत आद्यं पक्षमङ्गीकृत्य पदव्याख्यानत्वाभावेऽपि मन्त्रेऽनन्वयशङ्कायामध्याहृतसाध्येनान्वयप्रदर्शनार्थं तदित्यभिप्रेत्य साध्याकाङ्क्षामुत्थापयति– **ततः किमिति ॥** यस्मादित्यध्याहृत्य पूर्वश्लोकार्धेनान्वयं दर्शयति– **यस्मान्मिथ्याज्ञानेति ॥** ननु भाष्येऽपि साध्यानुक्तेरनन्वयदोषस्तदवस्थः । ततः किमित्यपेक्षाया अनिवृत्तिश्चेत्यतः साध्यमध्याहरति– **विद्यादिति शेष इति ॥** एतच्च ये विदुरिति भाष्ये 'यस्तद्वेद' इति मन्त्रे चानुवादेन सूचितमिति बोध्यम् । शेषपूरणं च निन्दां चेत्यतः परमिति ज्ञापनाय तत्पदानुवादः । एवं सर्वत्रापि ज्ञातव्यम् । अत्र यस्मान्मिथ्याज्ञानेन तमःप्राप्तिस्तस्मान्नारायणमनामयं यथास्वरूपं विद्यात् । यस्मात् तदनिन्दया तमःप्राप्तिस्तस्मादयथार्थस्य निन्दां च विद्यादिति प्रत्येकमन्वयो ज्ञातव्यः । ननु निन्दां विद्यादित्ययुक्तम् । निन्द्यत्वज्ञानस्य विशिष्टफलहेतुत्वेऽपि निन्दाज्ञानस्य तदभावादित्यतो विषयिवाचकनिन्दाशब्दस्य विषये निन्द्ये लक्षणां भावप्राधान्यं चाङ्गीकृत्यानूद्य व्याचष्टे– **अयथार्थस्य निन्दामितीति ॥**

ज्ञानस्येत्युक्त्या 'दुर्ज्ञानस्याविनिन्दकाः' इति बृहद्भाष्यानुसारेणायथार्थ-प्रातिपदिकात् परं ज्ञानप्रातिपदिकस्याध्याहार इत्युक्तं भवति । अनेन 'येऽविद्यामुपासते' विष्णोरन्यथाकारस्य निर्गुणत्वादेरुपासकाः तेऽन्धन्तमः प्रविशन्ति यस्मात् तस्माद् यथास्वरूपं नारायणं विद्यादुपासीत ये विद्यायामु विद्यायामेव यथार्थज्ञान एव रताः । सम्यगाचार्यवचनमवज्ञायायथार्थज्ञान-स्यानिन्दका इति यावत् । ते ततः मिथ्याज्ञानिप्राप्यतमसः सकाशाद् भूयः किञ्चिदधिकं तमः प्रविशन्तीव व्यक्तं प्रमितम् । यस्मात् तस्मादयथार्थज्ञानस्य निन्द्यत्वं च विद्यात् । ततश्च निन्दा कार्येति साध्याध्याहारेण मन्त्रयोजना सूचिता भवति । द्वितीयमन्त्रार्थविवरणरूपतृतीयमन्त्रव्याख्यानेनैव द्वितीय-मन्त्रस्यापि व्याख्यातत्वं मन्यमानेन भाष्यकृताऽव्याख्यातं द्वितीयमन्त्रं स्वयमवतार्य व्याचष्टे– **किं विपक्षेऽनर्थप्राप्तेरेवेत्यादिना ॥ सम्यग्ज्ञानासम्यग् ज्ञाननिन्दनयोः कर्तव्येति ॥** अत्र सम्यग्ज्ञानस्य कर्तव्यत्वं नाम सम्पाद्यत्वम-सम्यग्ज्ञाननिन्दनस्य तु प्रसिद्धमेवेति ज्ञातव्यम् । एवमवतार्य व्याख्यातुं प्रतिजानीते– **तथा हीति ॥** अन्यथाज्ञानवाचकाविद्याशब्दस्य तन्निन्दायां जहल्लक्षणेत्याह– **अन्यथाज्ञाननिन्दया चेति यावदिति ॥** धिया रमन्त इति व्युत्पत्तिमभिप्रेत्योक्तं धीराणां धीमतामिति ॥ **वृद्धवचनसम्मतियुक्तमिति ॥** 'अन्यदेवाऽहुः' इति धीरवचनगताहुरित्यस्यास्मद्वृद्धा एवमाहुरित्यर्थकत्वादेव-मुक्तमिति ज्ञातव्यम् ॥ ९–१० ॥

## (दुर्गमवाक्यार्थविवरणम्)

विषयिलक्षणमुख्यार्थसम्बन्धद्योतनाय विषयभूतस्य अन्यथाकारस्येत्यु-क्तम् । 'ततो भूय इव ते तमः' इत्यत्र अन्यथाज्ञानानिन्दकेन प्राप्यतमसोऽन्यस्य भावेन मिथ्याज्ञानिप्राप्याद् भूय इत्यधिकोक्तिरयुक्तेत्याशङ्कानिरासाय इवेत्यु-क्तम् । स्थानकत्वेऽपि तदपेक्षया दुःखं स्पष्टतरम् अनुभवन्तीति भावः । नन्विदं कथं युज्यते ? न हि मिथ्याज्ञाननिन्दनमात्रेणान्यथाज्ञान्यपेक्षयाऽधिक-दुःखानुभव उपपत्तिगोचरतामर्हतीति चेन्न । मैवं मंस्थाः । एतच्छङ्कानिरासस्य

बृहद्भाष्ये स्फुटमवगमात् । तथा च वाक्यम्– **'अन्यथोपासका येऽस्तु ते यान्ति ह्यधरं तमः । ततः किञ्चिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः । सम्यगाचार्यवचनमविज्ञाय विरोधिनी । सत्वबुद्धिं यतः कुर्युः ततस्तेऽधिकपापिनः । अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान्'** (६.४.१०)धीरैरप्याहुरित्युक्तत्वाद् वृद्धवचनसम्मतियुक्तं वचनम् इत्युक्तम् । **एकपुरुषार्थेति ॥** अन्यथोभयशब्देनैव चारितार्थ्यादिति भावः । तज्ज्ञानस्येत्यर्थ इति ॥ ९–१० ॥

**(उपनिषत्)**

**विद्यां चाविद्यां च यस्तद् वेदोभयꣳ सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥**

**(भाष्यम्)**

**.........ये विदुः [१]सह सज्जनाः ॥ ११ ॥**

**ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः ।**
**दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः ॥**

**यथार्थस्य परिज्ञानात् सुखज्ञानादिरूपताम् ।**
**यान्त्येवं[१] ................... ॥**

**(टीका)**

अस्यैवार्थस्य विवरणार्थो विद्यां चेति तृतीयो मन्त्रः । तस्येदं व्याख्यानं – **ये विदुरिति ॥** यथास्वरूपं त्वित्याद्युक्तावृत्त्याऽन्वयः । तेन विद्यापदम् ईश्वरयाथात्म्यस्याविद्यापदं चान्यथाज्ञाननिन्द्यत्वस्योपलक्षणमित्युक्तं भवति । सहेत्येकपुरुषार्थहेतुत्वेनेत्यर्थः । दुःखाज्ञानादिरूपिणोऽयथार्थस्येति । तज्ज्ञान-

---

१. ते हि सज्जनाः' ह.

१. 'यान्त्येव' ह.

स्येत्यर्थः । अयथार्थज्ञाननिन्दया मृत्युपदोदितदुःखादितरणं भवति । यथार्थज्ञानेन च सुखज्ञानादिरूपतालक्षणामृतप्राप्तिः भवतीत्येतदुपपादनाय दुःखाज्ञानादिरूपिणोऽयथार्थस्य सुखज्ञानादिरूपिणो यथार्थस्येति विशेषणोपादानं कृतम् । तथा च श्रुतिः– **'तं यथा यथोपासते तदेव भवति'** इति ॥ ११ ॥

## (प्रकाशिका)

क्रमिकज्ञानयोः युगपदुत्पत्त्यभावात् सहशब्दार्थमाह– **एकपुरुषार्थेति** ॥११॥

## (ईशावास्यभाष्यटीकाविवृतिः)

**विवरणार्थ इति** ॥ 'अन्यदेव' इति सामान्येनोक्तस्य 'मृत्युं तीर्त्वाऽमृतमश्नुते' इति विस्पष्टमुक्तत्वाद् विवरणार्थ इत्युक्तम् । अतो न गतार्थतेति भावः । ननु ये विदुरित्यारभ्यैव भाष्यस्य तृतीयमन्त्रव्याख्यानत्वे विद्यां चाविद्यां चेति पदद्वयस्याव्याख्यातत्वप्रसङ्गः । भाष्ये वेदनकर्मानुक्त्याऽनन्वयप्रसङ्गश्चेत्यत आह– **यथास्वरूपं त्वित्यादीति** ॥ ननूक्तावृत्त्याऽन्वयाङ्गीकारेऽपि मन्त्रभाष्ययोर्विसंवाद एव । मन्त्रे विद्याविद्ययोर्भाष्ये चेश्वरयाथात्म्यायथार्थज्ञाननिन्द्यत्वयोर्वेद्यत्वेनोक्तत्वादित्यतो मन्त्रगतपदद्वयव्याख्यानत्वाद् भाष्यस्य न दोष इति भावेन व्याख्यानतां घटयति– **तेनेति** ॥ आवृत्तेन यथास्वरूपं चेत्यादिनेत्यर्थः । अत्राऽद्या विषयिवाचकस्य विषये जहल्लक्षणा । द्वितीया तु धर्मिवाचकस्य धर्मे । 'उपलक्षणा च गौणी च' इत्यादौ लक्षणामात्रेऽप्युपलक्षणाशब्दप्रयोगादिति द्रष्टव्यम् ॥

यौगपद्यार्थत्वभ्रमनिरासायाऽह– **सहेत्येकपुरुषार्थेति** ॥ निर्दुःखपरमानन्दरूपैकपुरुषार्थेत्यर्थः । अयथार्थस्य निन्दया दुःखाज्ञानादिरूपिणश्च निन्दयेति वा दुःखज्ञानादिरूपिणस्ते इति वाऽन्वयभ्रमनिरासाय विशेषणविशेष्यभावेन तत्प्रदर्शनपूर्वकम् अयथार्थज्ञानस्य निन्द्यत्वप्रस्तावेऽप्ययथार्थस्य तदभावाद्

भगवत्यसम्भवाच्चेति शङ्कापरिहाराय दुर्ज्ञानस्याविनिन्दका इति बृहद्भाष्यानुसारेणायथार्थपदं तज्ज्ञानलक्षकतया व्याचष्टे– **दुःखाज्ञानादीति** ॥ दुःखाज्ञानादिरूपिणोऽयथार्थज्ञानस्येति कार्यकारणयोरभेदोपचारः । यद्वा, दुःखाज्ञानादि रूपयत्युत्पादयतीति व्युत्पत्त्या तत्कारणस्येत्येवार्थः । सुखज्ञानादिरूपिणो यथार्थस्येत्यत्र तु साक्षादभेद एव । यथार्थपदोदितेश्वरयाथात्म्यस्य सुखज्ञानादिव्यतिरेकेणान्यस्याभावेन तदात्मकत्वादिति बोध्यम् । ननु दुःखाज्ञानादिरूपिण इति भाष्ये दुःखाज्ञानादि रूपं यस्येति बहुव्रीहिणैव मत्वर्थलाभादिनिप्रत्ययवैयर्थ्यमिति चेत्, बहुव्रीहिमाश्रित्य मतुबर्थप्रत्ययप्रयोगे वैयर्थ्येऽपि दुःखाज्ञानादिकं च तत् रूपं च दुःखाज्ञानादिरूपं तदस्यास्तीति दुःखाज्ञानादिरूपीति कर्मधारयमाश्रित्य तत्प्रयोगे शब्दान्तरत्वेन दोषाभावात् । नच 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इत्याद्युक्तिबलाद् बहुव्रीह्यङ्गीकार एवोचितो न कर्मधारयमत्वर्थीयाङ्गीकार इति वाच्यम् । यतोऽस्त्यत्र व्यवस्था । यत्र कर्मधारयमत्वर्थीये बहुव्रीहौ च शब्दसाम्यं तत्र कर्मधारयमत्वर्थीय एवाङ्गीकार्यो न बहुव्रीहिः । तस्यान्यपदार्थप्रधानकस्य कर्मधारयाज्जघन्यत्वेन वृथा तदङ्गीकारस्यानुचितत्वात् । यत्र च कर्मधारयमत्वर्थीयाद् बहुव्रीहौ शब्दलाघवं तत्र बहुव्रीहिरेवाङ्गीकार्यो न कर्मधारयमत्वर्थीयः । अल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणस्य दोषत्वात् । यथोक्तम्–'कर्मधारयमत्वर्थीयाद् बहुव्रीहिरेवेष्टो लघुत्वात्' इति । सम्मतं चैतट्टीकाकारस्य । अत एव प्रमेयदीपिकायाम् । 'यद्विकारि' (भ.गी. १३-३) इत्यत्र कर्मधारयमत्वर्थीयमभ्युपगम्यानादिमदित्यत्र तदनङ्गीकारः । एतच्च 'एकगोपूर्वाठ्ठञ् नित्यम्' (पा.अष्टा.५.२.११८) इति सूत्रे दुर्घटवृत्तिकृता प्रपञ्चितमनुसन्धेयम् । तस्माद्युक्तं 'दुःखाज्ञानादिरूपिणः' इत्यत्र कर्मधारयमत्वर्थीयाश्रयणमिति । मन्त्रानुक्तविशेषणोपादानस्य प्रयोजनमाह– **अयथार्थज्ञानेत्यादि** ॥ ननु मन्त्रे मृत्यूत्तारणमुक्तं प्रमाणे तु दुःखादितरणम् । अतो वैरूप्यमित्यत उक्तम्– **मृत्युपदोदितेति** ॥ एवमेव सुखज्ञानादिलक्षणामृत-

प्राप्तिर्भवतीत्येतदपि व्याख्येयम् । **इत्येतदुपपादनायेति** ॥ दुःखादितरणे दुःखादिरहितत्वेन भगवदुपासकत्वरूपोपपत्तेः सुखज्ञानादिरूपत्वे च सुखादिमत्त्वेन भगवदुपासकत्वरूपोपपत्तेः सूचकत्वेनोपपादनायेत्यर्थः । कथमनेन विशेषणद्वयेन तत्सूचनमिति चेदित्थम् । ज्ञानशब्दस्योपासनापर्यन्तत्वस्योक्तत्वादयथार्थज्ञानं नाम जीवाभिन्नत्वादिना भगवदुपासनम् । जीवस्य च दुःखादिमत्त्वात् तदेव दुःखादिमत्त्वेन भगवदुपासनमित्युच्यते । तस्य च दुःखाज्ञानादिरूपिण इत्यनेन दुःखाज्ञानादिसाधनत्वेन निन्द्यत्वेऽभिहिते दुःखादिरहितत्वेन भगवदुपासनस्य कर्तव्यत्वं लभ्यते । ततश्च दुःखादिरूपिणोऽयथार्थज्ञानस्य निन्दया दुःखादितरणं भवतीत्यर्थः सम्पद्यते ॥

एवं यथार्थस्य परिज्ञानं नाम परमेश्वरयाथात्म्यस्योपासनम् । तस्य च याथात्म्यस्य सुखज्ञानादिरूपत्वेऽभिहिते सुखादिमत्त्वेन भगवदुपासकत्वं स्फुटं लभ्यते । तथाच सुखज्ञानादिरूपिणः यथार्थस्य परिज्ञानात् सुखज्ञानादिरूपत्वेऽभिहिते सुखादिमत्त्वेन भगवदुपासकत्वात् सुखज्ञानादिरूपतां यान्तीत्यर्थः सम्पद्यते । अतो युक्तं तत्सूचकत्वम् ॥

अवश्यमेतदेवं व्याख्येयम् । अन्यथा 'तं यथा यथा' इति श्रुत्युदाहरणासङ्गतिप्रसङ्गादिति ध्येयम् । दुःखाज्ञानादिरहितत्वेन तदुपासकस्य सुखादिरूपता भवतीत्येतत् कुत इत्यत आह– **तथा चेति** ॥ तामेव पठति– **तं यथेति** ॥ तदेव तत्सदृशमेव भवति प्राप्नुवन्ति । अन्यथोपासत इति बहुवचनानुपपत्तेरेकवचनस्य भू प्राप्ताविति धातोः परस्मैपदस्य च छान्दसत्वात् । एतदभिप्रायेणैव वैश्वानराधिकरणटीकायां 'तदेव भवति प्राप्नुवन्ति' इत्युक्तम् । भाष्ये– 'सुखज्ञानादिरूपताम्' इति । सुखज्ञानादिरूपताव्यक्तिमित्यर्थः । अत एव 'तद्व्यक्तिमाव्रजेत्' इति वक्ष्यतीति ज्ञेयम् ॥ ११ ॥

**ततश्चायं मन्त्रार्थः–** विद्यां विद्याविषयीभूतमीश्वरयाथात्म्यम् । अविद्याम् अन्यथाज्ञाननिन्द्यत्वम् । चशब्दावन्योन्यसमुच्चये । तदिदमुभयं यः सज्जनः

सह निर्दुःखानन्दरूपैकपुरुषार्थसाधनत्वेन वेद जानाति उपास्ते इति यावत् । सः अविद्यया दुःखाज्ञानादिरूपिणोऽयथार्थज्ञानस्य निन्दया दुःखादिरहितत्वेन परमेश्वरोपासनयेति यावत् । मृत्युं दुःखादिकं तीर्त्वा विद्यया सुखज्ञानादि-रूपिणः परमेश्वरयाथात्म्यस्योपासनया अमृतत्वं सुखज्ञानादिरूपताव्यक्तिमश्नुते प्राप्नोति । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति ॥ ११ ॥

## (उपनिषत्)

*(अन्यथाज्ञानस्यानर्थसाधनत्वप्रतिपादनपुरःसरं सम्यग्ज्ञानस्य मोक्षसाधनत्वोपपादनम् )*

**अन्धं तमः प्र विशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः ॥ १२ ॥**

**अन्यदेवाऽहुः सम्भवादन्यदाहुरसम्भवात् ।**
**इति शुश्रुम धीराणां येनस्तद् विचचक्षिरे[1] ॥ १३ ॥**

## (भाष्यम्)

**'...... सृष्टिकर्तृत्वं नाङ्गीकुर्वन्ति ये हरेः ॥**
**तेऽपि यान्ति तमो घोरं तथा संहारकर्तृताम् ।**
**नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात् सर्वगुणात्मकम् ।**
**सर्वकर्तारमीशेशं सर्वसंहारकारकम् ॥ १२-१३ ॥**

## (टीका)

अन्यथाज्ञानमेवानर्थसाधनं, यथार्थज्ञानमेव मोक्षसाधनमित्येतद्विवरणार्थं 'अन्धं तमः प्रविशन्ति' इयुत्तरमन्त्रत्रयम् । तत्राऽद्यमन्त्रस्यार्थः–**एवमिति** ॥

---

१. अत्र यद्यपि **'विचचक्षिरे'** इति पाठः मुद्रितपुस्तकेषु पठ्यते । तथाऽपि प्राचीनतालपत्रेषु **'व्याचचक्षिरे'** इत्यपि पाठोऽस्ति ।

यथाऽन्यथोपासका अन्यथाज्ञानानिन्दका इत्यर्थः । असम्भूतिं जगत्सृष्टेर-कर्तारमित्यस्य तात्पर्यं सृष्टीति ॥ अत्राप्युशब्दोऽवधारणार्थः सम्भूत्यामित्यनेन सम्बध्यते । तेन सम्भूत्याम् उ जगत्स्रष्टृत्व एव, जगत्स्रष्टैव विष्णुः न तु संहारकर्तेत्यस्मिन्नर्थे रता इत्येषोऽर्थो लभ्यते । तस्मादुक्तं– **तथेति** ॥ तेऽप्येवं सृष्टिकर्तृत्वानङ्गीकारिण इव तमो यान्तीत्यर्थः । ततः किमित्यत आह– **तस्मादिति** ॥ यस्मादेवं सृष्टिकर्तृत्वानङ्गीकारेऽनर्थः । विद्यादिति वाक्यशेषः । सृष्टिकर्तृत्वानङ्गीकारेऽनर्थकथनमुपलक्षणार्थमिति ज्ञापयितुं सर्वगुणा-त्मकमित्युक्तम् । एतदप्युपलक्षणम् । उपसंहारेऽधिकस्यापि वक्ष्यमाणत्वात् ॥ १२ ॥

किं विपक्षे बाधकसद्भावादेवैतज्ज्ञातव्यम् ? नेति ब्रूमः । किं तु मोक्षोप-योगित्वादपीति प्रतिपादयितुं 'अन्यदेवाऽहुः सम्भवात्' इति द्वितीयो मन्त्रः । तत्र सम्भवात्सृष्टिकर्तृत्वज्ञानादसम्भवात् सम्भवविपरीतसंहारकर्तृत्वज्ञाना-दित्यर्थः ॥ १३ ॥

## (प्रकाशिका)

न विद्यते सम्भूतिर्यस्मादिति व्युत्पत्तिमभिप्रेत्याऽह–**जगत्सृष्टेरकर्तार-मिति** ॥ उपसंहारेऽधिकस्यापि वक्ष्यमाणत्वादित्यत्र सर्वदोषविनिर्मुक्तमित्यादि-श्लोकत्रयेण बहुप्रमेयाणां निरूप्यमाणत्वादाधिक्यमिति भावः ॥ १२–१३ ॥

## (ईशावास्यभाष्यटीकाविवृतिः )

**इत्येतद्विवरणार्थमिति** ॥ असम्भूतिमित्यनेनायथार्थज्ञानस्य सम्भूतिं चेत्यादिना यथार्थज्ञानस्य विवृतत्वादिति भावः । एवंशब्दस्य दार्ष्टान्तिकार्थकस्य दृष्टान्ताकाङ्क्षायां 'यथार्थस्य परिज्ञानात्' इति सन्निहितप्रकृतयथार्थज्ञानिनां दृष्टान्तत्वस्य विरुद्धत्वात् तेषामनिन्दका इति व्यवहितोक्तं दृष्टान्तमाह– **यथेति** ॥ अत्रान्यथाज्ञानानिन्दकानामधिकतमःप्राप्तेरुक्तत्वेऽपि तमःप्राप्ति-मात्रे दृष्टान्तत्वं ज्ञातव्यम् । 'तथा संहारकर्तृताम् । नाङ्गीकुर्वन्ति' इत्यस्य

'य उ सम्भूत्यां रताः' इत्येतद्व्याख्यातत्वं घटयति–**अत्राप्युशब्द इत्यादि ॥** न केवलं य उ विद्यायामित्यत्रेत्यपेरर्थः । तेऽप्येवमित्यत्राप्येवंशब्दस्य यथाऽन्यथाज्ञानानिन्दका एवमित्यर्थः प्रतीयते । अतोऽनूद्य व्याचष्टे– **तेऽप्येवमिति ॥**

अव्यवहितस्य दृष्टान्तत्वसम्भवे व्यवहितस्य तदङ्गीकारोऽनुचित इति भावः । अत्र तमःप्राप्तिमात्रे दृष्टान्तदार्ष्टान्तिकभावो ज्ञातव्यः । अन्यथा संहार-कर्तृत्वानङ्गीकारिणां भूयःशब्देनाधिकतमःप्राप्तेरुक्तत्वेन वैषम्यापातादिति द्रष्ट-व्यम् । ननु सृष्टिकर्तृत्वानङ्गीकारिप्राप्यतमसः सकाशात् संहारकर्तृत्वा-नङ्गीकारिप्राप्यतमसो भूय इवेति मन्त्रे आधिक्यमुक्तम् । तदयुक्तम् । आधिक्यप्रापकदोषाधिक्याभावादिति चेदस्त्येव दोषाधिक्यम् । तथाहि । सृष्टिकर्तृत्वानङ्गीकारिणः सम्यगाचार्योपदेशाभावेनाप्राप्तत्यागित्वात् । सृष्टि-कर्तृत्वमङ्गीकृत्य संहारकर्तृत्वानङ्गीकारिणस्तु सृष्टिकर्तृत्वाङ्गीकाराय सम्यगाचार्योपदेशस्य तन्मूलभूत 'यतो वा' इत्यादिवेदवाक्यानुसरणस्य चाऽवश्यकत्वेन ताभ्यामेव संहारकर्तृत्वस्यापि प्राप्त्या तत्त्यागिनः प्राप्त-निष्ठाहीनत्वात् । अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनस्याधिकदोषवत्तायाः पूर्वो-दाहृतप्रमाणसिद्धत्वात् । अतः संहारकर्तृत्वानङ्गीकारिणो युक्ताऽधिक-तमःप्राप्तिरिति ॥

साध्यानुक्तेस्ततः किमिति शङ्काया अपरिहार इत्यत आह– **विद्यादिति वाक्यशेष इति ॥** अन्यथा 'यो वेद' इत्यनुवादानुपपत्तेरिति भावः । सर्वसंहार-कारकमिति वाक्यान्ते शेषो वाक्यशेषः । यत्र क्वाप्यन्वयभ्रान्तिपरिहाराय वाक्यशेष इत्युक्तम् । अनेन मन्त्रेऽनन्वयशङ्कायां यस्मात् तस्मादित्य-ध्याहारेणान्वयो ज्ञातव्य इत्युक्तं भवति । ननु मन्त्रे सर्वगुणात्मक-त्वाज्ञानेऽनर्थानुक्तेस्तस्मात् सर्वगुणात्मकं विद्यादिति साध्यकथनमसङ्गतमित्यत आह – **सृष्टीति ॥ सर्वगुणात्मकमित्युक्तमिति ॥** अत्र सर्वगुणात्मकमित्यतः परमीशेशमिति शेषः । अन्यथा तद्विशेषणवैयर्थ्यप्रसङ्गात् । यद्वा, तस्य

विशेष्यसमर्पकत्वादनुपादानमिति ज्ञातव्यम् ॥ **एतदप्युपलक्षणमिति** ॥ सर्वगुणात्मकमित्येतदपि सर्वदोषविनिर्मुक्तत्वादेरुपलक्षणमित्यर्थः । कुत इत्यत आह– **उपसंहार इति** ॥ सर्वदोषविनिर्मुक्तमित्याद्युपसंहारग्रन्थे सर्वदोषविनिर्मुक्तत्वादेरधिकस्य वक्ष्यमाणत्वादित्यर्थः ॥ १२ ॥

**ततश्चायं मन्त्रार्थः–** ये परमेश्वरमसम्भूतिं जगत्सृष्टेरकर्तारमुपासते तेऽन्धयतीत्यन्धतमः प्रविशन्ति । ये च सम्भूत्यामु जगत्स्रष्टृत्व एव । जगत्स्रष्टैव विष्णुर्नतु संहारकर्तेत्यस्मिन्नर्थे रताः, उपलक्षणमेतत् । परमेश्वरस्य सर्वगुणात्मकत्वसर्वदोषविनिर्मुक्तत्वादिकं नाङ्गीकुर्वन्ति । तेऽपि ततः सृष्टिकर्तृत्वानङ्गीकर्तृप्राप्यतमसः सकाशाद् भूयः किञ्चिदधिकं तमः प्रविशन्तीत्येतदिव व्यक्तमसन्दिग्धमिति यावत् । यद्वाऽत्रेवशब्दस्यैवाल्पार्थत्वाङ्गीकारेण भूय इव किञ्चिदधिकमिति व्याख्येयम् । यस्मादेवं सृष्टिसंहारकर्तृत्वसर्वगुणात्मकत्वाद्यनङ्गीकारेऽनर्थः तस्मात् परमेश्वरं स्रष्टृत्वाद्युपेतं विद्यादुपासीतेति ॥ १२ ॥

द्वितीयमन्त्रविवरणरूपतृतीयमन्त्रव्याख्यानेनैव द्वितीयस्यापि व्याख्याततां मन्यमानेन भाष्यकारेणाव्याख्यातं द्वितीयमन्त्रं स्वयं ससङ्गतिकं व्याचष्टे– किं विपक्ष इत्यादि ॥ **एतदिति** ॥ सृष्टिसंहारकर्तृत्वमित्यर्थः ॥ **मोक्षोपयोगित्वादपीति** ॥ मोक्षफलस्यांशत उभयसाध्यत्वादपीत्यर्थः ॥ **सृष्टिकर्तृत्वज्ञानादिति** ॥ अनेन सम्भवत्यनेनेति सम्भवः भावप्रधानो निर्देशः । विषयवाचकस्य विषयिणि ज्ञाने लक्षणेत्युक्तं भवति । नञोऽभावार्थत्वभ्रमनिरासाय विरुद्धार्थत्वमङ्गीकृत्यासम्भवादिति पदं व्याचष्टे– **सम्भवविपरीतेति** ॥ 'इति शुश्रुम धीराणाम्' इत्युत्तरार्धस्य प्रागेव व्याख्याततत्वादत्र न व्याख्यानं कृतम् ॥ १३ ॥

## (दुर्गमवाक्यार्थविवरणम्)

दुःखाज्ञानादिरूपत्वलक्षणायथार्थस्य विष्णावभावेन निन्द्यत्वासम्भवाद् अन्यथाज्ञाननिन्दाया एव प्रस्तुतत्वाच्च तज्ज्ञानमुपलक्षणीयमिति भावः । सर्व-

गुणात्मकमित्यादेः यो वेदेत्यनेनैवान्वितत्वे फलितकथनरूपत्वं न स्यात् । तथात्वाभावे च तस्मादिति व्यर्थमित्यतो वाक्यभेदसिद्ध्यर्थं शेषं पूरयति– **विद्यादितीति** ॥ एवं पूर्वत्रापि द्रष्टव्यम् ॥ १३ ॥

## (उपनिषत्)

**सम्भूतिं च विनाशं च यस्तद् वेदोभयꣳ सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥१४॥**

## (भाष्यम्)

**'यो वेद संहृतिज्ञानाद् देहबन्धाद् विमुच्यते ।**
**सुखज्ञानादिकर्तृत्वज्ञानात्[१] तद् व्यक्तिमाव्रजेत् ॥**

**सर्वदोषविनिर्मुक्तं गुणरूपं जनार्दनम् ।**
**जानीयान्न गुणानां च भागहानिं प्रकल्पयेत् ॥**

**न मुक्तानामपि हरेः साम्यं विष्णोरभिन्नताम् ।**
**नैव प्रचिन्तयेत् तस्माद् ब्रह्मादेः साम्यमेव वा ॥**

**मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम् ।**
**ततो विष्णोः परोत्कर्षं सम्यग् ज्ञात्वा विमुच्यते'**

**इति कौर्मे ॥ १४ ।**

## (टीका)

तस्यैव विवरणार्थः 'सम्भूतिं च' इति तृतीयो मन्त्रः । तस्यार्थो **यो वेदेति** ॥ पूर्ववदावृत्त्यैवान्वयः । **संहृतिज्ञानादिति** ॥ तत्कर्तृत्वज्ञानादित्यर्थः । देहसम्बन्धस्य मृत्युत्वं तद्धेतुत्वाज्ज्ञातव्यम् । सुखज्ञानादीति पूर्ववद्युक्तिसूचनार्थम् । मन्त्रार्थमुपसंहरति– **सर्वेति** ॥ तस्मादिति वक्ष्यमाणमादौ

१. '–कर्तृत्वज्ञानम्' ह.

योज्यम् । हरेः साम्यं न चिन्तयेदिति वक्ष्यमाणेनान्वयः । विष्णोरभिन्नतां मुक्तानामित्यनुवर्तते । ब्रह्मदेरमुक्तवर्गस्य साम्यमेव । किमुताभिन्नताम् । वाशब्दो न चिन्तयेदित्यस्यानुकर्षणार्थः । मानुषादीत्यत्र जानीयादित्यनुवर्तते । ततो मुक्तामुक्तगणात् । तस्मादिति परामृष्टहेतुं दर्शयति– **सम्यगिति** ॥

केचिदविद्यापदं कर्मवाचकं मत्वैकैकनिन्दया मोक्षे ज्ञानकर्मणोः समुच्चयस्य प्रतिपादकमाद्यमन्त्रत्रयमिति मन्यन्ते । अन्ये तु विद्यापदं देवताज्ञानस्य वाचकं मत्वा स्वर्गादौ तस्य कर्मणा समुच्चयं प्रतिपादयतीदमित्याचक्षते । उत्तरं तु मन्त्रत्रयं सम्भूत्यसम्भूतिपदयोरुत्पत्त्यनुत्पत्तिमत्परत्वेन हिरण्यगर्भप्रकृतिवाचकत्वं गृहीत्वा तदुपासनयोः सत्यलोकादिप्राप्तौ समुच्चयस्य प्रतिपादकमिति प्रतिपन्नाः ॥

तदेतदपव्याख्यानम् । पुराणवाक्येनैवान्यथा व्याख्यातत्वात् । 'नान्यः पन्थाः' इत्यादिश्रुतिविरुद्धश्च समुच्चयपक्षः । केवलकर्मिणोऽप्यधिकः केवलज्ञानिनः संसार इति च 'कामकारेण चैके' (ब्र.सू.३.४.१५) इत्यादिविरुद्धम् । आत्मज्ञाननिष्ठाया एवात्रोपक्रमादिभिः निर्णीतत्वादेवताज्ञानकर्मणोः समुच्चयश्च न प्रकरणानुगुणः । **'कुर्वन्नेव'** इति मन्त्रस्यापि निवृत्तकर्मविषयतया व्याख्यातत्वात् । **'सम्भूतिं च विनाशं च'** इत्यत्र कुतोऽयं विनाश आपतित इति चिन्त्यम् । विनाशधर्मकत्वाद्विनाशो हिरण्यगर्भ इति चेन्न । सम्भूतिपदेन पौनरुक्त्यात् । अव्याकृतोक्त्यभावाच्च । अकारलोपेन सम्भूतिरव्याकृतमित्यपूर्वं व्याकरणकौशलमित्यास्ताम् ॥ १४ ॥

## (प्रकाशिका)

आदौ योज्यमित्यत्र तस्माद्विष्णोरित्यर्थकथनाय तत्रापि तस्मादित्यस्याऽवश्यकत्वादुपसंहारत्वज्ञापकपदस्यात्रादर्शनादादावपि योज्यमिति भावः । अव्याकृतोक्त्यभावादित्यत्र प्रागसम्भूतिपदेन न विद्यते सम्भूतिर्यस्या इति असम्भूति-

पदेन प्रकृतिमुक्त्वा इदानीं तत्स्थाने प्रयुक्तविनाशपदेन हिरण्यगर्भोक्तौ प्रकृतिवाचकपदाभावादिति भावः। अकारलोपेनेत्यत्र सम्भूतिपदे अकारप्रक्षेपं कृत्वा प्रकृतिमभिधाय पुनस्तल्लोपे सति सम्भूतिपदमात्रमुर्वरितमिति व्याख्यानस्य प्रसिद्धव्याकरणेऽनुशासनाभावादपूर्वं व्याकरणकौशलमित्युक्तम् । यद्यपि निरुक्तिमात्रे वर्णनाशादिकमुक्तं, तथाऽपि स्वापेक्षितलौकिकप्रयोगेषु वर्णविनाशादेः कथने घटपदमघटवाचकं पटपदमपटवाचकम् एक्यपदं चानैक्यवाचकं स्यादिति सर्वव्यवहारेषु सङ्करप्रसङ्ग इति भावः ॥ १४ ॥

**(ईशावास्यभाष्यटीकाविवृतिः)**

यो वेदेत्यत्र वेदनकर्मानुक्तेराह– **पूर्ववदावृत्त्येति**[१] ॥ सर्वगुणात्मकमित्याद्यावृत्त्येत्यर्थः । यः सर्वसंहारकारकं भगवन्तं वेद सः संहृतिज्ञानेन बन्धाद् विमुच्यते इत्यसङ्गतिः। भगवज्ज्ञानस्य बन्धमोचकत्वेऽपि संहृतिज्ञानस्य तदभावाद् विरोधश्चेत्यतः सुखज्ञानादीत्युत्तरभाष्यानुसारेण व्याचष्टे–**संहृतीति** ॥

ननु मन्त्रे मृत्युं तीर्त्वेति मृत्यूत्तरणं फलमुक्तम् । भाष्ये तु देहबन्धमोचनमतो वैरूप्यमित्यतो व्याख्यानव्याख्येयभावं घटयति– **देहसम्बन्धस्येति** ॥ तद्धेतुत्वादिति वदता मृत्युशब्दस्य देहबन्धे लक्षणा कार्यकारणभावः शक्यसम्बन्ध इत्युक्तं भवति। ननु सम्भूत्येति मन्त्रे सर्वकर्तारमिति पूर्वभाष्ये चाविशेषेण सर्वकर्तृत्वस्य प्रकृतत्वादत्र सुखज्ञानादीति विशिष्योक्तिर्व्यर्थेत्यत आह– **सुखेति** ॥ **पूर्ववदिति** ॥ पूर्वभाष्ये सुखज्ञानादिरूपिण इति विशेषणमिवेत्यर्थः ॥ **युक्तिसूचनार्थमिति** ॥ अधिकारिणः सुखज्ञानादिव्यक्तिमत्त्वे सुखज्ञानादिकर्तृत्वेन भगवदुपासकत्वरूपयुक्तिसूचनार्थमित्यर्थः ॥ यद्यप्यत्र 'सम्भूतिं च विनाशं च' इत्यादिपूर्वमन्त्रानुसारेण सुखज्ञानादिकर्तृत्वेत्याद्युक्त्वाऽनन्तरं संहृतिज्ञानादिकं वक्तव्यम् । नच विनाशेन मृत्युं तीर्त्वेत्युत्तरार्धानुसारेण भाष्यप्रवृत्तेर्न दोष इति वाच्यम् । उत्तरार्धेऽपि

१. **'पूर्वावृत्त्येति'** मुद्रितः पाठ।

पूर्वक्रमोल्लङ्घने निमित्ताभावात् । तथाऽपि **'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः'** इत्यादिप्रमाणानुसारेण विशिष्टरूपेऽपि मोक्षे संसारनिवृत्तेः पूर्वभावित्वात् फलानुसारेणोत्तरार्धे क्रमोल्लङ्घनम् । तदनुसारेण प्रवृत्तत्वाद् भाष्यस्य न तत्रापि कश्चिद् दोषः ॥

**ततश्चायं मन्त्रार्थः ॥** सम्भूतिं सुखज्ञानादिसर्वकर्तृत्वं विनाशं विनाशकर्तृत्वं सर्वसंहारकत्वमिति यावत् । चशब्दावन्योन्यसमुच्चये । तदिदमुभयं योऽधिकारी सह एकपुरुषार्थसाधनत्वेन वेद उपास्ते, सः विनाशेन परमेश्वरस्य विनाश-कर्तृत्वोपासनेन मृत्युं मृत्युकारणदेहादिबन्धं तीर्त्वा सम्भूत्या सुख-ज्ञानादिकर्तृत्वोपासनेनामृतं सुखज्ञानादिव्यक्तिमश्नुते प्राप्नोति । 'तं यथा यथोपासते' इति श्रुतेरिति । ननूपसंहारज्ञापकाभावादुपसंहरतीत्यनुपपन्नमित्यत आह– **तस्मादिति ॥** भाष्ये 'न गुणानां च भागहानिम्' इति ज्ञानानन्दादिगुणानां मध्ये ज्ञानेच्छाद्यङ्गीकृत्याऽनन्दाद्यनङ्गीकारेण हानिं नैव प्रकल्पयेदित्यर्थः । **वक्ष्यमाणमिति ॥** 'न वै प्रचिन्तयेत् तस्मात्' इत्यत्र वक्ष्यमाणं तस्मादिति पदं 'सर्वदोषविनिर्मुक्तम्' इत्यस्याऽदौ योज्यमित्यर्थः ॥ **हरेः साम्यं नेति ॥** हरेः साम्यं नेत्यस्य चिन्तयेदिति वक्ष्यमाणेनान्वय इत्यर्थः । न मुक्तानामिति नञः सम्बन्धप्रदर्शनाय हरेः साम्यं नेत्यनुवादः कृतः । क्वचिद्धरेः साम्यं चिन्तयेदिति वक्ष्यमाणेनान्वय इति पाठो दृश्यते । तत्र साम्यमित्यस्य चिन्त-येदिति वक्ष्यमाणेनान्वय इत्यर्थः । नेत्यस्य पूर्ववदेव सम्बन्धो ज्ञातव्यः । मुक्तानामित्यस्य पूर्वत्रान्वितत्वादभेदस्य च प्रतिसम्बन्धिसापेक्षत्वादाह– **मुक्तानामित्यनुवर्तत इति ॥**

ननु साम्यमेवेत्यवधारणं विरुद्धम् । ब्रह्मादेः साम्यमेव न चिन्तयेत् । अभिन्नतां तु चिन्तयेदित्यर्थप्रतीतेरित्यतो नावधारणार्थत्वमेवशब्दस्य, येनोक्त-दोषः । किन्तु कैमुत्यार्थत्वमित्याह– **साम्यमेव किमुताभिन्नतामिति ॥** न चिन्तयेदित्यनुकर्षस्य वक्ष्यमाणत्वात् साम्यमेवेति यथाश्रुतानुवादः । साम्यमेव न किमुताभिन्नतामिति पाठस्तु वक्ष्यमाणानुकर्षसिद्धवत्कारेणेति

द्रष्टव्यम् । ननु न मुक्तानामित्यनेनैव ब्रह्मादिसाम्यस्य निषिद्धत्वात् पुनरुक्तिदोष इत्यत उक्तम्– **मुक्तवर्गस्येति** ॥ ननु भाष्ये साम्यमेवेत्यस्यान्वयाभावः । विकल्पाप्रसक्तेर्वाशब्दवैयर्थ्यं चेत्यत आह– **वाशब्द इति** ॥

साम्यमेव नेति पाठे तु, ननु साम्यमेव नेत्यनुवादो न युक्तः । नञोऽश्रवणात् । वाशब्दवैयर्थ्यं चेत्यत आह– वाशब्द इतीत्यवतारणीयम् । अव्ययानामनेकार्थत्वादिति भावः । नवै प्रचिन्तयेदित्यन्वयभ्रमनिरासायाऽह – **मानुषादीत्यत्रेति** ॥ 'विमुक्तिगं मानुषादिविरिञ्चान्तततारतम्यम्' इत्यत्र 'विष्णोः परोत्कर्षम्' इत्यत्र चेत्यर्थः । यद्यपि सन्निहितत्वात् प्रचिन्तयेदित्यनुवर्तत इति वक्तव्यम् । तथाऽपि तस्य नञ्सम्बद्धत्वेनैव पूर्वत्रान्वितत्वान्नञ्परित्यागेन केवलस्यानुवृत्तेरनन्यगतिकत्वाज्जानीयादित्यनुवर्तत इत्युक्तम् । ननु विष्णोः परोत्कर्षं जानीयादित्यन्तेनैवोपसंहारसिद्धेः 'सम्यग् ज्ञात्वा विमुच्यते' इति व्यर्थमित्यत आह– **तस्मादिति परामृष्टमिति** ॥ अनेन यस्मात् परमेश्वरं सम्यग् ज्ञात्वा विमुच्यते तस्मात् सर्वदोषविनिर्मुक्तमित्यादिप्रकारेण जानीयादित्यर्थ इत्युक्तं भवति ॥

ननु मन्त्राणामुक्तार्थस्थापनायावश्यकरणीयस्यापव्याख्याननिराकरणस्य भाष्येऽकरणान्न्यूनतेत्यतस्तां परिहरिष्यन् ज्ञानकर्मसमुच्चयवादिनामपव्याख्यानमनुवदति– **केचिदिति** ॥ केचिज्ज्ञानकर्मणोः समुच्चयस्य प्रतिपादकमाद्यं मन्त्रत्रयम् इति मन्यन्त इत्यन्वयः । किं मायावादिवत् स्वर्गादिसाधनत्वेनेत्यत उक्तम्– **मोक्ष इति** ॥ तादर्थ्ये सप्तमी । मोक्षार्थं मोक्षसाधनत्वेनेति यावत् । एवं स्वर्गादावित्येतदपि व्याख्येयम् । नन्वाद्यमन्त्रे समुच्चयस्य साधनत्वप्रतिपादकपदाभावात् कथं तत्प्रतीतिरित्यत आर्थिकप्रतीत्यङ्गीकारान्न दोष इत्याशयेनोक्तम्–**एकैकनिन्दयेति** । नन्वर्थादपि न ज्ञानकर्मसमुच्चयसिद्धिः । अविद्यामात्रस्य विद्यामात्रस्य च निन्दितत्वेनाविद्याज्ञानसमुच्चयस्यैव सिद्धेरित्यत उक्तमविद्यापदं कर्मवाचकं मत्वेति ॥

अधुना मायावादिनामपव्याख्यानमनुवदति– **अन्ये त्विति** ॥ **विद्यापदमिति** ॥ अविद्यापदं कर्मवाचकं मत्वेति पूर्वन्यायेन सिद्धत्वान्नोक्तम् । किं तार्किकादिवन्मोक्षसाधनेत्वेनेत्यत उक्तम्– **स्वर्गादाविति** ॥ **इदमिति** ॥ आद्यं मन्त्रत्रयमित्यर्थः । **उत्तरं त्विति** ॥ 'अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते' इत्याद्युत्तरमन्त्रत्रयं तु सत्यलोकादिप्राप्तौ प्राप्त्यर्थम् । **तदुपासनयोः** हिरण्यगर्भप्रकृत्युपासनयोः । समुच्चयस्य प्रतिपादकमिति प्रतिपन्ना इति सम्बन्धः । हिरण्यगर्भप्रकृतिवाचकपदाभावात् कथमेतदित्यत उक्तम्– **सम्भूत्यसम्भूतिपदयोरित्यादि** । यथोक्तं परेण । अधुना व्याकृताव्याकृतोपासनयोः स्वर्गादौ समुच्चिचीर्षया प्रत्येकं निन्दा क्रियत इत्यादि । एवमनूदितं व्याख्यानद्वयं निराकर्तुं प्रतिजानीते– **तदेतदिति** ॥ **पुराणवाक्यैनैवेति** ॥ अतो न भाष्यकारस्यापव्याख्याननिराकरणाभावप्रयुक्ता न्यूनतेति भावः ॥

उभयसाधारणं दोषमुक्त्वा समुच्चयवादिनामसाधारणं दोषमाह– **नान्यः पन्थेत्यादीति** ॥ अयनाय मोक्षाय ज्ञानान्यः पन्था कर्मादिर्न विद्यत इति कर्मणो मोक्षसाधनताया निषिद्धत्वात् कर्मसमुच्चयपक्षः श्रुतिविरुद्ध इत्यर्थः । समुच्चयपक्षे प्रधानप्रमेयानुपपत्तिमभिधाय 'ततो भूय इव ते तमो य उ विद्यायां रताः' इति वाक्यार्थानुपपत्तिमप्याह– **केवलकर्मिण इति** ॥

एवं हि परेण व्याख्यातम् । येऽविद्यां कर्मोपासते तेऽन्धन्तमः सुखदुःखपुण्यपापात्मकं संसारं प्रविशन्ति । ये विद्यायामेव ज्ञान एव रतास्ते ततः केवलकर्मिप्राप्यसंसाराद् भूयोऽधिकं तमः संसारं प्राप्नुवन्तीति । तदेतद् व्याख्यानं 'कामकारेण चैके' (ब्र.सू.३-४-१५) इत्यादिसूत्रेण तद्गृहीतया 'कामाचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात् परमीयुरनारम्भणम्' इति श्रुत्या च विरुद्धम् । तत्र केवलज्ञानिनः संसारनिवृत्तेरुक्तत्वेनाधिकसंसारस्य दूरापास्तत्वात् ॥

मायावादिपक्षेऽप्यसाधारणं दोषमाह– **आत्मज्ञानेति** ।। अत्रास्यामुपनिषदि ।। **निर्णीतत्वादिति** ।। 'अत्राऽद्येन मन्त्रेण सर्वैषणापरित्यागेनाऽत्मज्ञाननिष्ठतोक्ता' इत्यादिना ग्रन्थेन परेण निर्णीतत्वादित्यर्थः । यद्वा भाष्यकारेण निर्णीतत्वादित्यर्थः । सर्वेषामपि मन्त्राणां प्रमाणेन भगवत्परतया व्याख्यानेनाऽत्मज्ञाननिष्ठायाः निर्णीतत्वलाभात् । आत्मज्ञाननिष्ठायामुपक्रमादिकमपि यथायथं ज्ञातव्यम् । ननु देवताज्ञानस्य प्रकरणाननुगुणत्वेऽपि न काम्यकर्मणः प्रकरणाननुगुणत्वम् । 'कुर्वन्नेव' इति मन्त्रे तस्य प्रकृतत्वादित्यत आह– **कुर्वन्नेवेति मन्त्रस्यापीति** ।। दूषणान्तरमाह– **सम्भूतिं चेति** ।। कुतः कस्मादापतित इत्यत्यन्तासङ्गतिज्ञापनाय परिहासः । अस्मत्पक्षे आद्यमन्त्रे सम्भूत्यामेवेत्यवधारणेन द्वितीयमन्त्रेऽसम्भवशब्देन प्रकृतस्य संहर्तृत्वस्यात्र मन्त्रे विनाशशब्देनानुवादसम्भवेऽपि परेण मन्त्रत्रयस्य हिरण्यगर्भप्रकृतिपरत्वाङ्गीकारेणात्र तदुभयग्रहणाय सम्भूतिं चासम्भूतिं चेति वक्तव्यत्वेऽपि विनाशं चेति वचनमत्यन्तासङ्गतमित्यर्थः । विनाशग्रहणस्य प्रकृतोपयोगमाशङ्कते– **विनाशधर्मकत्वादिति** ।। इदं च लक्षणाबीजशक्यसम्बन्धप्रदर्शनायोक्तम् । **अव्याकृतोक्तीति** ।। प्रकृत्युक्तीत्यर्थः ।।

नन्वसम्भूतिशब्देनाव्याकृताकाशग्रहणान्नाव्याकृतोक्त्यभावो नापि पौनरुक्त्यम् । न चासम्भूतिशब्दाश्रवणं दोषः । असम्भूतिशब्दगताकारलोपे सम्भूतिशब्दस्यैवासम्भूतिशब्दत्वादित्यत आह– **अकारलोपेनेति** ।। यथोक्तं परेण– 'सम्भूतिं च विनाशं च' इत्यत्रावर्णलोपेन निर्देशो द्रष्टव्य इति । **व्याकरणकौशलमिति** ।। व्याकरणस्य व्याख्यानस्य कौशलमपूर्वमिति वा । व्याकरणशास्त्रे कौशलमपूर्वमिति वा परिहासः ।। १४ ।।

## (दुर्गमवाक्यार्थविवरणम्)

मानुषादीत्यत्राव्यवहिततयोक्तम् । 'नैव प्रचिन्तयेत्' इत्यनुषज्यत इत्यवभासते, तथा च सति अशेषाम्नायस्मृतिगोचरस्वसिद्धान्तो व्याहन्येतेत्यत उक्तम्–

**मानुषादीति** ।। ननु तस्मादित्यनेनैव सम्यग्ज्ञानस्यैव मोक्षसाधनत्वादिति हेतोर्लब्धत्वात् सम्यग्ज्ञात्वेति व्यर्थमित्यत आह– **तस्मादितीति** ।। **केवलकर्मिण इति** ।। अविद्यापदस्य कर्मवाचकत्वं गृहीत्वा व्याख्याने कर्ममात्रापेक्षया ज्ञानमात्रनिष्ठस्याधिकानर्थोऽभिहितो भवेत् । स च न शोभां बिभर्ति भगवन्मतविरोधात् । 'कामकारेण चैके' (ब्र.सू.३.४.१५.) इत्यत्र भगवज्ज्ञानिनः कामतश्चरणं दूषयति– **आत्मज्ञानेति** ।। यदुक्तं देवताज्ञानकर्मणोः स्वर्गादावैकैकनिन्दया समुच्चयं ब्रवीतीत्युत्पाद्यं मन्त्रत्रयमिति तदरमणीयम् । एतत्प्रकरणस्याऽत्मज्ञाननिष्ठापरत्वेन विद्यापदस्य देवताज्ञानवाचित्वे प्रकरणानानुगुण्याद् आत्मविद्यारतिप्रकरणत्वं कुतोऽस्यावसीयते, इति चेद् उपक्रमे 'असुर्याः' इति मन्त्रेणापरमात्मविदां निन्दनस्य प्रकृतत्वात् 'अनेजत्' इत्यादिनाऽऽत्मतत्त्वमुपदिश्य, 'यस्तु सर्वाणि' इत्यादिना तज्ज्ञानफलस्योक्तत्वाच्चैतत्प्रकरणमेव ज्ञापयतीति भावः ।।

ननु कुर्वन्नेवेति मन्त्रेण कर्मणां विहितत्वादविद्यापदेन च तेषां ग्रहणात् कर्मणां च स्वर्गसाधनतया तत्समभिव्याहारेण विद्यापदमपि स्वर्गसाधनीभूतदेवताज्ञानं वदिष्यति । न चास्माकं मोक्षे समुच्चयपक्ष इव श्रुत्यादिविरोधोऽस्तीत्यत आह– **कुर्वन्नेवेति इति** ।। न चाविद्यापदस्य कर्मपरामर्शकत्वे किञ्चिन्मानम् । स्वर्गादौ च कर्मसमुच्चयाभिधायीदमिति च निर्मूलम् । 'अमृतमश्नुते' इत्यमृतत्वहेतुताश्रवणान्मुख्यसम्भवे चामुख्यायोगादिति च बोध्यम् । उत्तरमन्त्रत्रयापव्याख्यां निरस्यति– **सम्भूतिं चेति** ।। सम्भूत्यसम्भूतिपदयोः हिरण्यगर्भप्रकृतिवाचकत्वे सम्भूतिं चासम्भूतं चेत्येव वक्तव्यम्, न तु सम्भूतिं च विनाशं चेति । प्रकृतेर्नित्यत्वेन विनाशशब्दस्य तत्परत्वासम्भवाद् असम्भूतिपदस्य संहारकर्तृतापरत्वे तु न काऽप्यनुपपत्तिः । संहृतिविनाशपदयोः समानार्थत्वादिति हृदयम् ।। १४ ।।

### (उपनिषत्)

*(श्रवणाद्यनन्तरं साक्षात्काराय परमात्मनि प्रार्थना)*

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपा वृणु सत्यधर्माय दृष्टये ॥ १५ ॥

### (भाष्यम्)

*(मुख्यवायुप्रतीके परमात्मन अस्तित्वोपपादनम्)*

**'पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् ।**
**विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् ॥**

**तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् ।**
**सत्यधर्माय भक्ताय ...........॥ १५ ॥**

### (टीका)

एवं प्राप्ताधिकारं शिष्यं प्रति परमात्मस्वरूपं निरूप्य तत्साक्षात्कारो मोक्षसाधनमित्यतीतग्रन्थेनोक्तम् । स चेश्वरसाक्षात्कारो न श्रवणादिमात्रेण भवति । नापि मोक्षः साक्षात्कारमात्रेण । किन्तु भगवत्प्रसादादेवेत्यतो अनुष्ठितश्रवणादिकेनापि साक्षात्कारार्थं, प्राप्तसाक्षात्कारेणापि च मोक्षार्थं यथा भगवत्प्रार्थनं कार्यं तत्प्रकारप्रदर्शनार्थो 'हिरण्मयेन पात्रेण' इत्याद्युत्तरो ग्रन्थः । तत्र सगुणब्रह्मप्राप्त्यर्थमेकर्षिप्रभृतिशब्दाभिधेयमादित्यं प्रति मार्गयाचनमनेन क्रियत इत्याद्यन्यथाप्रतीतिनिरासाय तद्व्याख्यानरूपां स्मृतिं तावदुदाहरति– **पात्रमिति** ॥ सत्यस्येत्यनूद्य विष्णोरिति व्याख्यातम् । मुखमिति समस्त-विग्रहोपलक्षणम् । यद्यपि मन्त्रेऽपावृण्विति प्रार्थनम् , अत्र तु दर्शयतीति स्वरूपकथनम् । तथाऽपि मन्त्रतात्पर्यमात्रोक्तिरियमिति न दोषः । 'पुष पुष्टौ' इत्यतः पूर्णत्वेन पूषेत्युक्तम् । सत्यधर्मायेत्यनूद्य भक्तायेति व्याख्यानम् ॥ १५ ॥

## (प्रकाशिका)

दर्शयतीति स्वरूपकथनमित्यत्र प्रार्थनार्थकलोटोऽभावात् स्वरूपसङ्कीर्तनमात्रमित्युक्तम् । इदमप्युपलक्षणम् । अपावृण्विति पदस्य फलितकथनं चेत्यपि द्रष्टव्यम् ॥ १५ ॥

## (ईशावास्यभाष्यटीकाविवृतिः)

ननु 'हिरण्मयेन' इत्यादिमन्त्रस्यैव व्यर्थत्वात् तद्व्याख्यानपरं भाष्यं सुतरामनर्थकमित्यत उक्तार्थानुवादेन सङ्गतिकथनपूर्वकमुत्तरमन्त्रसन्दर्भप्रतिपाद्यमाह – **एवमित्यादिना** ॥ **अतीतग्रन्थेनोक्तमिति** ॥ 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति' इत्याद्यतीतग्रन्थेनेत्यर्थः । **न श्रवणादिमात्रेणेति** ॥ अव्यक्तस्वभावस्य भगवतः प्रयत्नशतेनापि साक्षात्कर्तुमशक्यत्वस्य **'अपि संराधने प्रत्यक्षानुमानाभ्याम्'** (ब्र.सू.३.२.२४) इत्यादावुक्तत्वादिति भावः ॥ **नापि मोक्ष इति** ॥ राजादिसाक्षात्कारमात्रेण निगडमोक्षादर्शनादिति भावः । तर्हि साक्षात्कारशास्त्रस्य मोक्षशास्त्रस्य चाप्रामाण्यं स्यादित्याशयेन शङ्कते– **किन्त्विति** ॥ उत्तरमाह– **भगवदिति** ॥ **'अतोऽनन्तेन तथाहि लिङ्गम्'** (ब्र.सू.३-२-२७) इत्यादौ प्रसादस्य साक्षात्कारसाधनतायाः **'ततो ह्यस्य बन्धविपर्ययौ', 'भवपाशाच्च मोचकः', 'यस्य प्रसादात्'** (विष्णुतत्वविनिर्णयोदाहृत नारायणश्रुतिः) इत्यादौ प्रसादस्य मोक्षसाधनतायाश्च प्रमितत्वादिति भावः । उत्तरो ग्रन्थ इति ॥ 'अग्ने नय' इत्यनेन मोक्षार्थं प्रार्थनमितरेण साक्षात्कारार्थमिति विवेको द्रष्टव्यः॥ **तत्रेति** ॥ मन्त्रस्याऽवश्यकत्वे सिद्ध इत्यर्थः । **एकर्षिप्रभृतिशब्दाभिधेयमिति** ॥ यद्यपि पूषन्नित्यादिशब्दाभिधेयमिति वक्तव्यम् । मन्त्रे तस्यैवाऽदित्वात् । परेणापि जगतः पोषणात् पूषा रविरित्युक्तत्वाच्च । तथाऽपि तस्याऽदित्यवाचकतायाः प्रसिद्धत्वादनुपादानम् ॥

यद्वा, पूषञ्छब्दस्याऽदित्ये प्रसिद्धत्वेन कथञ्चित् तच्छब्दाभिधेयत्वसम्भवेऽप्येकर्ष्यादिशब्दाभिधेयत्वमादित्यस्याप्रामाणिकमिति दूषणसूचनाया-

तदादित्वेन ग्रहणं कृतमिति द्रष्टव्यम् ।। **इत्याद्यन्यथप्रतीतीति** ।। मन्त्र-प्रतिपाद्यान्यथाप्रतीतिरियम् । आदिशब्देन मन्त्रगतसत्यादिपदार्थान्यथा-प्रतीतिर्ग्राह्या । स्ववचनेनापि व्याख्यास्यमानत्वात् तावदित्युक्तम् । विष्णु-विशेषणत्वप्रतीतिनिरासायाऽह– **सत्यस्येत्यनूद्येति** ।। अनेन सत्यस्याऽदित्य-मण्डलस्येति व्याख्यानं निरस्तं भवति । मुखमात्रस्यापिहितत्वानुपपत्तेः 'यत्ते रूपं कल्याणतमम्' इत्युत्तरग्रन्थानुरोधाच्चाऽह– **समस्तविग्रहोपलक्षणमिति** ।। अनेन मुखं द्वारमिति व्याख्यानमपाकृतं वेदितव्यम् । अत्र सूर्यमण्डले साक्षात्कारयोग्यानां तदमुख्यमावरणम् । मुख्यं त्वविद्यादिकमेव । अत एव 'तत् त्वं पूषन्नपावृणु' इत्यनेन सूर्यमण्डलाख्यावरणापगमं प्रार्थयित्वा 'व्यूह रश्मीन् समूह तेजः' इति स्वरूपज्ञानादिविस्तारप्रार्थनेनाविद्याद्यावरणा-पगमप्रार्थनमुपपद्यते । अन्यथा तस्य व्यर्थत्वात् । अत एव चोत्तरटीकायां रश्मितेजःशब्दौ स्वरूपज्ञानादिपरत्वेन व्याख्यातौ । सूर्यमण्डलस्यैवाऽवरणत्वे तु तद्व्याख्यानं विरुद्ध्येतेति । पूर्णत्वलाभाय धातुसूत्रं पठति– **पुष पुष्टा-वितीति** ।। 'पुष पुष्टौ' इत्यतः कनिन्प्रत्यये कित्वाद् गुणाभावे निर्वचनत्वेन धातोर्दैर्घ्ये पूषन्निति भवति । अनेन जगतः पोषणात् पूषेति व्याख्यानम-पास्तम् । भक्तविशेषणत्वभ्रान्तिं परिहरति– **सत्यधर्मायेत्यनूद्येति** ।। १५ ।।

## (दुर्गमवाक्यार्थविवरणम्)

**अतीतग्रन्थेनेति** ।। 'आत्मन्येवानुपश्यति' इत्यनेन 'दृशिर् प्रेक्षणे'(१०५७) इति धातुव्याख्यानादित्यर्थः । श्रवणादेरव्यक्तस्वभावेश्वरसाक्षात्काराङ्गत्व-मात्मतत्त्वोपदेशेनैव ज्ञायते । अन्यथा साक्षात्कारस्यैव मुक्तिहेतुतया तेनैव तल्लाभे उपदेशनैष्फल्यादिति बोध्यम् ।। **उत्तरो ग्रन्थ इति** । 'अग्ने नय' इत्यतः प्राग् दर्शनार्थं भगवत्प्रार्थनं तेन च मन्त्रेण मोक्षार्थमिति ज्ञात-व्यम् ।। **मुखमितीति** ।। "यत्ते रूपं कल्याणतमम्' इति उत्तरत्र वक्ष्य-माणत्वादिति भावः ।। १५ ।।

*(एकर्षियमादिप्रतीकस्थितभगवत्प्रार्थना)*

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजो यत् ते रूपं कल्याणतमं तत् ते पश्यामि ॥ १६ ॥**

## (भाष्यम्)

**'............. प्रधानज्ञानरूपतः ।**
**विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद्धरिः ॥**

**सूर्यः स सूरिगम्यत्वात् प्राजापत्यः प्रजापतेः ।**
**विशेषेणैव गम्यत्वात्............ ॥ १६ ॥**

## (टीका)

एकशब्दस्य प्रधानवाचकत्वात् 'ऋष ज्ञाने' इत्यतश्च प्रधानज्ञानरूपत्वत एकर्षिरित्युक्तम् । प्राधान्यं च ज्ञानस्य सर्वविषयत्वादिना ज्ञातव्यम् । नियमनात्, सर्वस्येति शेषः । 'सूर्यः स सूरिगम्यत्वात्' इत्यनेन सूरिशब्दोपपदस्य याते रूपमिदमित्युक्तं भवति । प्रजापतेर्हिरण्यगर्भस्यायं प्राजापत्य इत्यभिसन्धाय सम्बन्धो दर्शितः प्रजापतेः गम्यत्वादिति । तर्हि सूर्य इत्यनेन गतार्थत्वमित्यत उक्तम्– **विशेषेणैवेति** । एतेन प्रजापतेरपत्यमिति व्याख्यानं निरस्तं भवति ॥ १६ ॥

## (प्रकाशिका)

सर्वविषयत्वादिनेत्यत्र निरवधिकसर्वविषयत्वेनेत्यर्थः । सूरिशब्दोपपदस्येत्यत्र निरुक्तत्वादिकारलोपः । अन्यथा सूरियः इति स्यादिति ज्ञेयम् ॥ १६ ॥

### (ईशावास्यभाष्यटीकाविवृतिः)

**प्रधानज्ञानरूपत्वत इति ॥** अनेन भावप्रधानो निर्देश इत्युक्तं भवति । एतेन एक एव ऋषतीत्येकर्षिरित्यपास्तम् । रमादिव्यावृत्त्यर्थं प्राधान्यं व्याचष्टे– **प्राधान्यं चेति ॥** आदिपदेन निरतिशयस्पष्टत्वादेर्ग्रहणम् । प्रसिद्ध-

यमस्यापि यत्किञ्चिन्नियामकत्वादाह– **सर्वस्येति शेष इति ॥ सूरिशब्दोपपदस्य यातेरिति ॥** तृतीयान्ते सूरिशब्दे उपपदे 'या प्रापणे' इत्यस्मात् 'आतोऽनुपसर्गे कः' (पा.अष्टा. ३-२-३) इति कर्मणि कप्रत्यये 'आतो लोप इटि च' (पा.अष्टा.६-४-६७) इत्याकारलोपे निर्वचनत्वादुपपदैकारलोपे[1] सूर्य इति रूपमित्यर्थः । ननु 'आतोऽनुपसर्गे कः' (पा.अष्टा. ३-२-३) इति सूत्रस्य काशिकायामाकारान्तेभ्योऽनुपसर्गेभ्यः कर्मण्युपपदे कप्रत्ययो भवतीति व्याख्यातत्वादत्र कर्मण उपपदस्याभावात् कथमनेन कप्रत्ययः ? किञ्च 'कर्तरि कृत्' (पा.अष्टा.३-४-६७) परिभाषया कर्तर्येव कप्रत्ययस्य गां ददातीति गोद इत्यादाविव सम्भवेऽपीह 'सूरिगम्यत्वात्' इति भाष्यानुसारेण कर्मणि तदयोगादिति चेत्, सत्यम् । छन्दस्त्वेनात्रोपाधिद्वयव्यभिचारस्यादोषत्वात् । सम्मतं चैतट्टीकाकारस्य । द्वितीयाध्याये 'आ नो भज परमेषु' (ऋ.सं.१-२७-५) सामवेद १४९९)इत्यस्यामृचि 'अन्ते मोक्षे मितत्वेन ज्ञानमन्तममुच्यते' इति भाष्यव्याख्यानावसरे अन्ते संसारस्येति शेषः । तस्यार्थो मोक्ष इति तादर्थ्ये सप्तमी । मोक्षसाधनतयेति यावत् । मितत्वेन प्रमितत्वेन । 'आतोऽनुपसर्गे कः' (पा.अष्टा. ३-२-३) इति टीकायामुक्तत्वात् । तत्र हि सप्तम्यन्ते अन्तशब्दे उपपदे 'माङ् माने' इत्यस्मात् कर्मणि कप्रत्ययोऽभिमतः । नचासावुक्तोपाधिद्वयस्याव्यभिचारित्वे सम्भवतीति ॥

यद्वा 'सुपि स्थः'(पा.अष्टा.३-२-४) इति सूत्रव्याख्यानावसरे काशिकायामत्र योगविभागः कर्तव्यः । सुपि आकारान्तेभ्यः कप्रत्ययो भवति । द्वाभ्यां पिबतीति द्विप इत्युक्तत्वादत्रापि योगविभागेनाकर्मणि सूरिशब्दे उपपदे यातेः कर्मणि कप्रत्यये बाधकाभावात् । नच योगविभागाश्रयणेनोपपदनियमाभावेऽपि 'कर्तरि कृत्' इति परिभाषया कर्तर्येव कप्रत्ययः प्राप्नोति न कर्मणीति वाच्यम् । योगविभागस्येष्टसिद्ध्यर्थत्वेन कर्तरीत्यननुवृत्त्या कर्मण्यपि तत्सम्भवात् ॥

१. '**–उपपदेकारलोपे**' इति पाठेन भाव्यमिति भाति ।

अथवा 'ग्रहवृदृनिश्चिगमश्च' (पा.अष्टा.३-३-५८) इत्येतत्सूत्रीयाद् 'घञर्थे कविधानम्' इति वार्तिकादिह कर्मणि कप्रत्ययाङ्गीकारात् । नच 'घञर्थे कविधानम्' इत्युक्त्वा 'स्थास्नागापाव्यधिहनियुध्यर्थम्' इत्युक्तत्वेन वार्तिकस्यापि स्थास्नादिषु नियमितत्वात् कथं तेनापि यातेः कप्रत्यय इति वाच्यम् । अभियुक्तप्रयोगानुसारेणास्यापि तत्रोपसङ्ख्येयत्वात् । अत एव सुधायां 'मायामात्रमिदं द्वैतम्' (माण्डूकोप.१-१७) इत्येतद्व्याख्यानावसरे 'घञर्थे कविधानम्' इति कर्मणि कप्रत्यय इत्युक्तमिति ध्येयम् । एतस्यैव सूर्यशब्दस्य 'सूर्य ऊरीकृतेरयम्' इति बृहद्भाष्ये कृतस्य व्याख्यान्तरत्वान्न दोषः । ननु प्रजापतेर्गम्यत्वात् 'प्राजापत्यम्' इति व्याख्यानमयुक्तम् । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (पा.अष्टा. ४-१-८५) इति प्राग् दीव्यतीयेषु विहितस्य ण्यप्रत्ययस्य सम्बन्धार्थे विधानेऽपि गम्यत्वार्थेऽविधानादित्यतस्तात्पर्यार्थत्वेन भाष्यं योजयति– **प्रजापतेरिति** ॥ **अभिसन्धायेति** ॥ सम्बन्धार्थे ण्यप्रत्ययमभिप्रेत्येत्यर्थः । **तर्हीति** ॥ सूर्यशब्देन सूरिमात्रगम्यत्वोक्त्या हिरण्यगर्भगम्यत्वस्यापि प्राप्तत्वादिति भावः ॥ १६ ॥

'अहेयत्वादहंनामा' इति प्रमाणानुसारेण भावप्रधानो निर्देश इत्याह– **अहेयत्वत इति** ॥ अहंशब्देनाहेयत्वलाभप्रकारं सूचयति–**न हीयत इति** ॥ अनेन नञ्पूर्वात् 'ओ हाक् त्यागे' इत्यस्मात् कर्मणि 'घञर्थे कविधानम्' इति वार्तिकेण कप्रत्यये कित्त्वाद् 'आतो लोप इटि च' (पा.सू.६.४.६४) इत्यकारलोपेऽहमिति रूपनिष्पत्तिरित्युक्तं भवति । यद्यप्यस्मदादेशभूतस्याहमित्यस्य रूढत्वान्न निर्वचनीयत्वम् । तथाऽपि हरौ तद्वृत्तौ न जीवाभेदो निमित्तमिति प्रतिपादनाय प्रयोजनवशान्निर्वचनं कृतमिति ज्ञातव्यम् । नन्वहमिति प्रथमैकवचनस्योक्तनिर्वचनलब्धाहेयत्वेन निमित्तेन भगवति प्रवृत्तिसम्भवेऽपि द्विवचनबहुवचनयोर्द्वितीयादिविभक्तीनां च कथमहेयत्वेन निमित्तेन भगवति प्रवृत्तिः ? तत्र न हीयत इति निर्वचनासम्भवात् । नच भगवति द्विवचनादिवृत्तिर्नाहेयत्वेन, किन्तु निमित्तान्तरेण । अतो नैतन्निर्वचन-

गवेषणप्रयास इति वाच्यम् । अस्मच्छब्दगतसप्तविभक्तीनां सर्ववचनानामप्य-हेयत्वेनैव भगवति वृत्तेः प्रमाणसिद्धत्वात्, भगवत्पादवचनसिद्धत्वाच्च । यथोक्तं बृहद्भाष्ये– 'मे सर्वाहेयस्य विष्णोः । अस्मच्छब्दगतैर्विष्णुर्वाच्यः सप्तविभक्तिभिः ॥ सर्वाहेयत्वतस्त्वेकः' इत्यादि । सर्वाहेयत्वेनाहमिति प्रथमान्तशब्दवाच्यत्वसम्भवेऽपि म इति षष्ठ्यन्तशब्दवाच्यत्वं कथमित्यतस्तत्र प्रमाणमाह– **अस्मदिति** ॥ इति भावबोधेऽवतारित्वाच्चेति चेत् । अस्यार्थस्य प्रमाणज्ञेयत्वेऽपि निर्वचनाज्ञेयत्वात् । निर्वचनस्यापि महाव्याकरणरीत्या सम्भवेऽप्याधुनिकरीत्याऽसम्भवात् । अहंशब्दे तु प्रसिद्धव्याकरणरीति-सम्भवान्निर्वचनं कृतमिति भाति । अधिकं तु विचार्यम् ॥

'अस्तितामानात्' इत्यत्र अस्तितया मानादिति तृतीयातत्पुरुषः । तृतीया च प्रकारे । मानशब्दः प्रमापरः । निर्विशेषस्य मुख्यार्थत्वात् । सत्त्वेन प्रमितत्वस्य वस्तुमात्रसाधारणत्वादसाधारण्याय नित्येति योग्यतया सम्बद्ध्यत इत्याशयेन व्याचष्टे– **नित्यसत्त्वेनेति** ॥ अस्मिशब्दात् सत्त्वेन प्रमितत्वं कथं लभ्यत इत्यत आह– **अनेनेति** ॥ 'अस भुवि' 'माङ् माने' इत्याभ्यां डिप्रत्यये द्वितीयधातोष्टिप्रत्यये अस्मीति रूपमिति भावः । ननु कथं धातुद्वयादेकः प्रत्ययः ? परश्चेति सूत्राद्धातोरिति पञ्चम्या च धातोरव्यवहितोत्तरमेव कार्यं भवतीति विज्ञानात् । धातोरित्येकवचनादपि न धातुद्वयादेकप्रत्ययोत्पत्तिरिति चेन्मैवम् । धातुद्वयादपि प्रत्ययोत्पत्तेः 'अदिभूभ्यां डुतच्' (उणादिप्रकरणे पञ्चमपादे प्रथमसूत्रम् -६७९) इत्युणादिसूत्रे उक्तत्वात् । 'अद भक्षणे' 'भू सत्तायाम्' इति धातुद्वयाद् डुतच्प्रत्यये टिलोपे च सति अद्भुतमिति रूप-सिद्ध्यङ्गीकारात् । नच प्रसिद्धोणादिवृत्तौ 'अदि भुवो डुतच्' इति सूत्रं पठित्वा अद्युपपदे भुवो धातोर्डुतज् भवतीति सूत्रस्य व्याख्यातत्वात् कथं धातुद्वयात् प्रत्ययो भवतीत्यत्रैतत्सूत्रोदाहरणमिति वाच्यम् । मूलकोशेष्वदिभूभ्यामित्येव पाठदर्शनात् । वृत्त्यन्तरे अदिभूभ्यामित्येव पठित्वा व्याख्यातत्वाच्च । धातुव्यतिरिक्तस्यादित्युपपदस्याभावेनादिभुव इति पाठस्यायुक्तत्वाच्च ।

निघण्टुभाष्ये वेदभाष्ये च धातुसमुदायादेकप्रत्ययस्य बहुशोऽभिहितत्वाच्च । तस्माद्धातुद्वयात् प्रत्ययाङ्गीकारो युक्त इति ॥

**एतेनेति** ॥ अहेयत्वादिनाऽहमादिशब्दवाच्यत्वकथनेनेत्यर्थः ॥ **मूर्तिनियमोऽपीति** ॥ न केवलमहेयत्वादिप्रवृत्तिनिमित्तनियम इत्यपेरर्थः । ननु 'सर्वजीवेषु संस्थितः' इत्ययुक्तम् । भगवदुपासकैरेव साक्षात्कारार्थमहमस्मिशब्दवाच्यतया भगवतः प्रार्थ्यमानत्वेनोपासकान्तर्गतस्यैवाहमादिशब्दवाच्यताया वक्तुमुचितत्वादित्यत आह– **उपासकेष्वित्यर्थ इति** ॥ विशिष्योक्त्याऽहमस्मिशब्दवाच्यत्व एव मूर्तिनियमो नतु पूषादिशब्दवाच्यत्व इति प्रतीतिः स्यादत आह– **उपलक्षणं चैतदिति** ॥ एतद् अहमस्मिशब्दाभिधेयस्य हरेर्मूर्तिनियमकथनमुपलक्षणमित्यर्थः । उपलक्षणीयं दर्शयति– **पूषादिशब्दैरपीति** ॥ यद्यप्यत्र पूषादिशब्दैः पूषाद्यन्तर्गत एवोच्यत इति वक्तव्यम् । तथाऽपि पूष्णोऽपि द्वादशादित्यान्तर्गतत्वादादित्यान्तर्गत इत्युक्तमिति ज्ञेयम् । अत्राऽदित्याद्यन्तर्गत एवोच्यत इत्येव पाठः । मूलकोशेषु तथैव दर्शनात् । एकर्षियमादिशब्दवाच्यत्वोपपादनायाऽदिशब्दस्याऽवश्यकत्वाच्च । योग्यताभेदेनेत्याद्युत्तरवाक्यानुगुण्याच्च । आदित्यान्तर्गत इति क्वचित्कपाठे आदित्यशब्दस्योपलक्षणत्वेनाऽदित्याद्यन्तर्गत एवोच्यत इति व्याख्यातव्यम् । अन्यथाऽऽदित्यान्तर्गतस्य पूषसूर्यशब्दवाच्यत्वसम्भवेऽप्येकर्षियमादिशब्दवाच्यत्वासम्भवादुत्तरवाक्यवैगुण्याच्च । नन्वादित्यान्तर्गतभगवत्साक्षात्कारायानेकप्रतीकेषु भगवत्प्रार्थनमसङ्गतमित्यतस्तस्याभिप्रायमाह– **योग्यताभेदेनेति** ॥ अतो युक्तं नानाप्रतीकगतभगवत्प्रार्थनमिति भावः ॥

ननु क्रतुशब्दस्य यज्ञवाचित्वेऽपि ज्ञानवाचिताया अप्रसिद्धत्वात् कथं 'स क्रतुर्ज्ञानरूपत्वात्' इति व्याख्यानमित्यतो गीताभाष्योदाहृताभिधानपठनेन तद् घटयति–**क्रतुर्मतिर्मनीषेत्यभिधानादिति** ॥ यथोक्तं गीताभाष्ये– 'आत्ममायया आत्मज्ञानेन । "केतुः केतश्चितिश्चित्तं क्रतुर्मतिर्मनीषा मायाः' इति

ह्यभिधानम्' इति । 'इति प्रज्ञाया नामधेयानि' इति वाक्यशेषाद् इति प्रमेयदीपिकायामुक्तत्वाज्ज्ञाननामधेयत्वं गम्यते । नच 'मेधा दृष्टिर्धृतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वशः' (ऐ.उप.३.२) इत्यैतरेयश्रुतेः । प्रकृतोपयुक्तसम्बन्धाभिप्रायेणायमनुवादः । प्रज्ञानस्य नामधेयानि भवन्तीत्युक्तत्वादभिधानादित्युक्तमिति व्याख्यानं किं न स्यादिति वाच्यम् । स्पष्टं भगवत्पादोदाहृताभिधानसद्भावे उक्तकुसृष्ट्याश्रयणस्यानुचितत्वात् । **'मतिर्माया सुतत्वतः । मनुनाम्नामजादीनां मनीषेशो यतो हरिः ॥ क्रतुः स सर्वकर्तृत्वात्'** इत्यादिनैतरेयभाष्ये क्रतुमतिमनीषाशब्दानां प्रकारान्तरेण व्याख्याततया ज्ञानपरत्वाभावेन तदुदाहरणस्यात्यन्तासङ्गतत्वाच्च । तस्मादुक्तमेव व्याख्यानं युक्तमिति ॥ किं तदङ्गम् ? कथं च तत्प्रणेतृत्वमग्निशब्दार्थ इत्यत आह– **अङ्गं शरीरमिति ॥** अनेन अङ्गशब्दोपपदात् 'णीञ् प्रापणे' इत्यस्मात् कर्तरि डिप्रत्यये निर्वचनादुपपदानुस्वाराकारयोर्लोपेऽग्निरिति रूपमित्युक्तं भवति ॥

अनन्वयशङ्कायां 'सत्यधर्माय भक्ताय' इति प्रमाणानुसारेण शेषं पूरयति– **भक्त उच्यत इति शेष इति ॥** ननु ब्रह्माधारकत्वस्य भक्ताभक्तसाधारणत्वाद् विशिष्य भक्त उच्यत इति शेषपूरणमयुक्तम् । न चाध्याहृतहृदयपदमहिम्ना एतल्लभ्यत इति वाच्यम् । हृदयपदाध्याहारस्यैवाकर्तव्यत्वात् । कर्तव्यत्वेऽपि तेन भक्तलाभासम्भवादित्यतो हृदयपदाध्याहारस्याऽवश्यकत्वप्रदर्शनपूर्वकं तेन भक्तलाभप्रकारं च दर्शयति–**अत्र सत्यमित्यादि ॥ अनाधारमिति ॥** 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा.उप. ७-२४-१) इत्यनन्याधारत्वश्रुतेरिति भावः । अनेनापव्याख्यानं निरस्तमित्याह– **सत्यस्येति ॥ इति प्रकृतपरित्याग इति ॥** इत्यत्र सत्यशब्देन प्रकृतपरित्याग इत्यर्थः । परेण सत्यस्याऽदित्यमण्डलस्येति व्याख्यातत्वादस्माभिः परमात्मन इति व्याख्यातत्वात् पक्षद्वयेऽपि परस्य प्रकृतपरित्याग इति भावः ॥ १७ ॥

'उदकं पीयते तेन तमसस्त्रायते जगत् । यतोऽतः पात्रमुद्दिष्टं विद्वद्भिः सूर्यमण्डलम्' (बृ.उप.भा ५-१५-१) इति बृहद्भाष्योदाहृतप्रमाणं मनसि निधाय व्याचष्टे– **पिबति रसानिति ॥ सूर्यमण्डलेनेति ॥** तदुपलक्षिताज्ञानादिना चेत्यर्थः ॥ १५ ॥

**स्वरूपं बाह्यं चेति ॥** रश्मिशब्दव्याख्यानं स्वरूपं ज्ञानमिति ॥ १६ ॥

तत्वप्रदीपे 'अहं तत्तेजो रश्मीन्नारायणम्' इत्येतद्व्याख्यानावसरे 'रतिः शं च मितमस्येति रश्मिर्जीवः' इति व्याख्यातत्वेन जीववाचकस्य रश्मिशब्दस्य तत्स्वरूपज्ञाने लक्षणामभिप्रेत्येदं व्याख्यानमिति द्रष्टव्यम् । तेजःशब्दस्य व्याख्यानं बाह्यं ज्ञानमिति । वृत्तिरूपं ज्ञानमित्यर्थः । इदं चान्तःकरणस्य तैजसत्वेन तत्परिणामरूपवृत्तेरपि तेजःशब्दवाच्यत्वात् । **'एवं तेजःप्रातिभाख्यं बाह्यं चेति द्विधा मतम्'** इति प्रमाणानुसाराच्चोपपद्यत इति भावः । द्वितीयस्य त इत्यस्य पश्यामीत्यनेन साक्षादन्वयासम्भवाद् रूपमित्यनेन चाऽद्यस्यान्वितत्वादपेक्षिताध्याहारेणान्वयमाह– **ते प्रसादादिति ॥** रश्मि-तेजःशब्दौ स्वरूपबाह्यज्ञानपरतया स्वयं व्याख्याय यत्परेण व्याख्यातं रश्मीन् स्वान् व्यूह विगमय । तेजस्तावकं समूह एकीकुरु उपसंहरेति । तद् दूष-यति– **आदित्यरश्म्यादीनामिति ॥** आद्येनाऽदिशब्देन तेजसो द्वितीयेनोप-संहरणस्य च सङ्ग्रहः ॥ **ब्रह्मप्रतीत्यसम्भवादिति ॥** श्रवणादिसाधन-परिपाकमव्यक्तस्वभावस्य ब्रह्मणोऽनुग्रहं च विना रश्म्याद्यपगममात्रेण साक्षात्कर्तुमशक्यत्वादिति भावः ॥ १६ ॥

## (दुर्गमवाक्यार्थविवरणम्)

सर्वविषयत्वादिनेत्यत्र यतः 'परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः' (ब्र.सू.३-२-३२) इत्यधिकरणार्थपर्यालोचनयाऽऽदिशब्दार्थः सुगम एव । निरतिशयस्पष्टत्वं चाऽदिशब्दार्थ इति ज्ञातव्यम् । प्रजापतिगम्यत्वं प्राजापत्य-शब्दारूढं न प्रतीयते । अत आह– **प्रजापतेरिति ॥** १६ ॥

(उपनिषत्)

**योऽसावसौ पुरुषः सोऽहमस्मि ॥ १७ ॥**

(भाष्यम्)

**'..................अहं चासावहेयतः ।**
**अस्मि नित्यास्तितामानात् सर्वजीवेषु संस्थितः ॥**

**स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः ।**
**स क्रतुर्ज्ञानरूपत्वादग्निरङ्गप्रणेतृतः' इति ब्रह्माण्डे ॥**

**सत्यं ब्रह्म हृदये धारयतीति सत्यधर्मा । एकोऽसौशब्दः प्राणे स्थित इति ॥ १७ ॥**

(टीका)

अहेयतोऽहेयत्वतः । न हीयते इत्यहमित्यर्थः । **नित्यास्तितामानादिति** ॥ नित्यसत्त्वेन प्रमितत्वादित्यर्थः । अनेन 'अस भुवि' 'माङ् माने' इत्येतयोरिदं रूपमित्युक्तं भवति । अहमस्मिशब्दोक्तत्वेऽपि न जीवैक्यं हरेराशङ्कनीयमित्याह– **स्वयं त्विति** ॥ सर्वजीवेभ्यो व्यतिरिक्तोऽप्यहेयत्वादियोगेनैवाहमस्मिशब्दाभ्यामुच्यत इत्यर्थः ।

एतेन, नाहं त्वां भृत्यवद्याचे किं नाम, योऽसावादित्ये पुरुषः सोऽहमस्मीत्यपव्याख्यानमित्युक्तं भवति । अहमस्मिशब्दाभिदेयत्वे हरेः मूर्तिनियमोऽप्यस्तीत्याह– **सर्वजीवेष्विति** ॥ उपासकेष्वित्यर्थः । उपलक्षणं चैतत् । पूषादिशब्दैरप्यादित्याद्यन्तर्गत एवोच्यते । अधिकारियोग्यताभेदेन खलु नानाप्रतीकेषु भगवदापरोक्ष्यमत्र प्रार्थ्यते । 'क्रतुर्मतिर्मनीषी' इत्यभिधानात् 'स क्रतुः ज्ञानरूपत्वात्' इत्युक्तम् । अङ्गं शरीरमप्रधानं जगद्वा नयतीत्यग्निरित्यर्थः ।

एवं पुराणवाक्येन तात्पर्यतो व्याख्यातान् मन्त्रानिदानीं स्ववाक्येन विशदयन् सत्यधर्मपदं कथं भक्तस्य वाचकमित्यतस्तन्निर्वक्ति– **सत्यमिति** ॥

भक्त उच्यत इति शेषः । अत्र सत्यं ब्रह्म धारयतीति सत्यधर्मेत्युक्ते कथमनाधारं ब्रह्मायं धारयतीति शङ्का स्यात् तन्निवृत्त्यर्थं हृदये धारयतीत्युक्तम् । हृदये ब्रह्मधारणं चाऽदरनैरन्तर्योपेतं तद्ध्यानादिकमेव । तच्च भक्तस्यैव सम्भवतीति भावः । सत्यस्य च यथाभूतस्य धर्मस्यानुष्ठात्रे इति व्याख्याने सत्यस्यापिहितमिति प्रकृतपरित्यागो दोषः ॥

**ततश्चायमर्थः ।** हिरण्मयमिव हिरण्मयं ज्योतिर्मयम् । पिबति रसांस्त्रायते च जगदिति पात्रम् । तेन हिरण्मयेन पात्रेण सूर्यमण्डलेन सत्यस्य सद्गुणपूर्णस्य आदित्यमण्डलान्तर्गतस्य तव मुखं पिहितमस्ति । हे पूषंस्तद्वपुस्त्वं सत्य-धर्माय त्वद्विषयध्यानादिमते मह्यं दृष्टये, मम त्वद्दर्शनसिद्ध्यर्थमिति यावत्, अपावृणु अपगतावरणं कुरु ॥ १५ ॥

हे पूषन्नेकर्षे यम सूर्य प्राजापत्य मदीयान् रश्मीन् व्यूह । तेजश्च समूह । स्वरूपं बाह्यं च मदीयज्ञानं विस्तारयेति यावत् । तथा च यत्ते रूपं कल्याणतमं तत्ते प्रसादादहं पश्यामीति । आदित्यरश्म्यादीनामपगमनादिना तदन्तर्गत-ब्रह्मप्रतीत्यसम्भवादादित्यरश्म्यादिविषयं व्याख्यानं न युक्तम् ॥ १६ ॥

'योऽसावसौ पुरुषः' इत्यत्र द्विरसाविति किमर्थमित्यत आह–**एक इति ॥** असौशब्दोऽसाविति शब्दः । इति वक्तीति शेषः । यद्यसुः प्राणस्तस्मिन्नित्यर्थः स्यात्तर्ह्यस्यान्वयो नास्ति, क्रियापेक्षत्वादधिकरणस्येत्यतः क्रियाध्याहारेणान्वयं दर्शयति–**स्थित इति ॥** असावसाविति वीप्सार्थतया किं न व्याख्यायत इति चेन्न । एवं व्याख्याने प्राणाख्यप्रतीकान्तरस्याप्युक्तिलाभात् । एकेनापि शब्देन वीप्सासिद्धेः । तथा च योऽसौ प्रसिद्धोऽसौ प्राणे स्थितः पुरुषः स एवाहेयत्वनित्यसत्तामानाभ्यामहमस्मिशब्दाभिधेयस्तं च पश्यामीति वाक्यार्थः । अथवा पूषादिशब्दैरुपलक्षणया प्राणस्यानेकप्रतीकस्थत्वं विष्णोरुक्तम् । तत्र भेदशङ्कायामिदमाह– **सर्वप्रतीकेषु स्थित एक एवेत्यर्थः** ॥ १७ ॥

## (प्रकाशिका)

'सोऽहमस्मि' इत्यपव्याख्यानमित्यत्र एवमभेदपरतया व्याख्याने जीवब्रह्मणोरैक्यमेकस्मिन् प्रार्थ्यप्रार्थकभावायोगाद्युक्तिविरुद्धम् । इदानीं व्यावहारिकभेदोऽस्ति, मुक्तावैक्यप्राप्तेरुभयोपपत्तिरिति तु अस्मीति लटा विरुद्ध्यते । तस्य वर्तमानैक्यप्रतिपादकत्वात् । 'वर्तमाने लट्' ॥

एतेन 'अहं ब्रह्मास्मि' 'तत्त्वमसि' इत्यादावपि अनुपपत्तिर्दर्शिता । किं च जीवस्य स्वदेहपाते सति यः श्वासनियामको वायुः, अनिलम् अकाराख्यः परमात्मा निलं निलयनम् आधारो यस्य तदनिलं, तस्य वायोः स्वरूपम्, अमृतमिति वायोरमृतत्वमुक्त्वा तदाधारतयाऽनिलमित्यत्र अकारपदेनोक्तस्य तदाधारस्य हरेः सुतराममृतत्वं चार्थत उक्तम् । अथ मरणानन्तरम् इदं मम शरीरं भस्मान्तं भवतीति स्वस्य मृतत्वोक्तेश्च कथं मृतामृतयोरैक्यं स्यात् ? प्राग् ब्रह्मणः 'अकायमव्रणम्' इति 'शुद्धमपापविद्धम्' इति च प्राकृतदेहोपेताशुद्धपापविद्धजीवेभ्यो वैलक्षण्योक्तेश्च कथमभेदः ? 'यत्ते रूपं कल्याणतमम्' इति कल्याणतमपदेन भगवतो जीवेष्वसम्भावितज्ञानादिगुणभरितातिशोभनदिव्यदेहकथनाच्च कथमभेदः ? **'तद्धावतोऽन्यानत्येति तिष्ठत्'** इति भगवतः सर्वगतत्वस्यानन्तमूर्तिग्रहणाख्याचिन्त्यशक्त्या एकमूर्त्या स्थितेः बहुमूर्तिभिश्च परितो धावत्सकलजीवात्ययनाख्यविचित्रसामर्थ्यस्य च कथनाद् अणुभ्योऽसमर्थेभ्यश्च जीवेभ्यो महासमर्थस्य सर्वगतस्य हरेः कथमभेदो भवेत् ? न हि कुण्डलिनामधीश्वरोऽनन्तः डुण्डुभो भवति । नापि घटो गगनं भवति । अपि च तस्मादन्यदेजति तन्नेजतीत्युपक्रम एव भयाभयाख्यविरुद्धधर्मकथनाच्च कथमेकता स्यात् । न हि भवति भीरुहरिणशिशुः क्वापि भयरहितो हर्यक्षः । तस्मादुपनिषदभिमानिनी सकलजगतो माता मङ्गलदेवता लक्ष्मीः **'यो नः पिता'** इत्यादिश्रुत्युक्तसकलजगत्पितुः स्वकमितुः **'शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः'** इत्यादिना तत्पुत्रपौत्रदासत्वादिनोक्तब्रह्मादिजीवसमुदायैक्यं कथं ब्रूयात् ? किं त्वेवं पूर्वोत्तरमजानन् विपरीतं च जानन्

कुवाद्येव बलीवर्दो वा गर्दभो वा श्वा वा कपिर्वेत्येतादृशमिथ्याज्ञानाद् दुर्योनिषु पततः स्वस्यैव हीनजीवैक्यं वदेत् । तथा च श्रुतिः **'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा यद्यद् भवति तत् तदा भवति'** ॥

कस्तर्हि 'योऽसावसौ पुरुषः सोऽहमस्मि' इति वाक्यार्थ इति चेत्, सत्यम् । ब्रूमस्तस्यार्थम् । सावधानेन श्रूयताम् । उक्तविधयाऽनेकविरुद्ध-धर्मिणोरैक्यायोगादादौ त्वद्दत्तधनभोक्तृत्वेनोक्तो योऽसौ पुरुषः तदनन्तरं त्वद्विषयकपूजारूपनिष्कामकर्मकर्तृत्वेनोक्तो योऽसौ पुरुषः, तदनु सूर्यस्थित-भगवदपरोक्षज्ञानं प्रार्थयमानो योऽसौ पुरुषः, अन्ते 'अग्ने नय' इति मोक्षं प्रार्थयमानो योऽसौ पुरुषः, सोऽहमेतदुपनिषदधिकारी जीव एवास्मि । त्वद्दत्तधनभोक्तृत्वात्, त्वद्दर्शनकामुकत्वात्, त्वत्तः परमपुमर्थमोक्षमर्थयमा-नत्वाच्च । न तूपनिषत्प्रतिपाद्यदेवता त्वमेवास्मि । दातृप्रतिग्रहीत्रोः, पूज्यपूजकयोः, शिष्याचार्ययोः, द्रष्टृदृश्ययोः, मोच्यमोचकयोरधिकारिविषययोश्च भेदावश्यम्भावादित्यनुपमृद्यपदमहिम्नैव जीवब्रह्मणोरत्यन्तभेदाख्यार्थसिद्धेः प्रतिवादिनो मुखमुद्रणमेवेति । न हि याचको दरिद्रः याच्यमानमहाराजं प्रति त्वमेवाहमस्मीति कश्चिद् ब्रूते । तस्मात् तत्प्रकरणानुकूलत्वादस्मदीयार्थ एव प्रेक्षावद्भिरादरणीयः, न तु प्रकरणविरुद्धः परकीयोऽर्थ इति सन्तोष्टव्य-मायुष्मता ॥

किं च 'वायुरनिलममृतम्' इति वाक्यशेषे वायोः प्रस्तूयमानत्वाद् योऽसावसौ वायौ पुरुषः, वायुहृदि स्थितो नारायण इत्यर्थः, सोऽहं रुद्रादिवदसुरवेधाभावाद् रुद्रादिदेवैर्वा धात्रा वा तेन वायुना वा कदाऽप्यहेयत्वादविस्मर्यमाणत्वादिति यावत्, अहमित्युच्यमानं परं ब्रह्म । **'नामानि सर्वाणि यमाविशन्ति'** इति च श्रुतेः । तथा प्रलयेऽप्यविलुप्तज्ञानवत्त्वेन अस्तित्वोपलक्षितसकलगुणवत्तया तेनैव वायुना सदा प्रमितत्वादस्मीति पदेनाप्युच्यमानं परं ब्रह्म । अत एव यो विष्णुस्तस्य अकारवाच्यस्य परमात्मनः वायुः निलं निलयनं सन्निधानपात्रीभूतं रूपम् अथ जीवमरणानन्तरमपि अमृतं मृतिरहितम् । नित्यामृतश्रीहरेः

सन्निधानाज्जीवानां मरणावस्थायामपि आब्रह्मलयं मृतिरहितमिति भावः । इदं जीवानां शरीरं मरणे सति वारंवारं दह्यमानं भस्मान्तं, भस्म भस्मीभावः अन्ते अवसाने यस्य तत् तथोक्तम् । 'अनावृत्तिर्देहिनां देहपाते तस्माद् वायुर्देवदेवो विशिष्टः' इति भारते । एवं च देहिनां देहपातेऽपि मरणाभावेन सर्वजीवोत्तमत्वान्नित्यापरोक्षज्ञानित्वेन हरेरतिप्रियत्वात् कल्यादीनां वेधविधुरत्वेन कदाऽपि हरौ वैमुख्याभावाच्च वायुप्रतीकमेव वागादिसकलप्रतीकेभ्योऽप्यधिकम् । अत एकऋष्यादिपदवाच्य हे हरे, तस्मिन् वायौ क्रियमाणहरिध्यानादेः कल्याद्यसुरकृतविघ्नाभावात् तत्रैव त्वामुपास्य 'यत्ते रूपं कल्याणतमं तत् पश्यामि' इति पूर्वेणान्वयः । अत एव छन्दोगानामुपनिषदपि **'य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं हासुरा ऋत्वा विदध्वसुः'** इति निरन्तरायोपास्तिं वायावाह ॥

एवं चोपनिषदभिमानिनी रमा हनुमदवतारे स्वोपकारकं स्वज्येष्ठपुत्रं मुख्यप्राणं मानयन्ती हरिं स्तौतीत्येकवाक्यतया मनोहरार्थाख्यामृतलाभे कः प्रेक्षावान् विषसम्पृक्तान्ने रतिं कुर्यात् । कश्च प्रेक्षावानुपनिषत्प्रतिपाद्यदेवतास्तुतिप्रस्तावे 'निन्दामि च पिबामि च' इति न्यायेन तमौपनिषदं महापुरुषं नीचतमेन जीवेनैकीभूतं वदेत् । तस्मान्न परकृतेयं व्याख्या, किन्तूपनिषदां प्रत्याख्यैवेति युक्तमुत्पश्यामः ॥

इदं च स्वोक्ततत्त्वोपोद्बलनं **'दशार्थाः सर्ववेदेषु'** इति निरूपयतो, मम हृदि स्थित्वा मामनुदिनं प्रेरयतः, **'अयमिह सुमतिं वायुदेवो विदध्यात्'** इति मया स्तूयमानस्य पवनस्य गुरोरेवाभिसन्धिरित्यनुसन्धेयम् ॥

यथाभूतस्य धर्मस्यानुष्ठात्र इत्यत्रोपनिषदुपक्रमे तेन त्यक्तेनेति ज्ञानिनः सकलकर्मत्यागमुक्त्वा इदानीं यथास्थितधर्मस्यानुष्ठात्रे इति कथने स्ववचनविरोधश्चेत्यपि द्रष्टव्यम् ॥

आदित्यरश्म्यादिविषयं व्याख्यानमित्येतदुदयेऽस्तमये च तव मते प्रतिबन्धकत्वाभिमतरश्मिरहितमण्डले ब्रह्मदर्शनप्रसङ्गादनुपपन्नम् । सौरं तेजः

'सूर्यकोटिप्रतीकाशम्' इति स्मृतेरनन्तसूर्यप्रकाशेभ्योऽप्यधिकभगवत्प्रकाशं, सूर्यतेजोभिभूतो दीपः स्वाभिभावकसौरं तेज इव कथं विरुध्यात् । न हि भवति तरक्षोः मृगीशावः प्रतिबन्धकः । किन्तु स्वाव्यक्तत्वशक्त्यैव भगवांस्तत्र न प्रतीयते । श्रवणादिना प्रसन्नः सन् प्रतीयत इत्येव वक्तव्यम् । तस्मात् परोदीरितव्याख्याऽपव्याख्यैव । एकेनापि वीप्सासिद्धेरित्यत्र यो धूमवानसौ वह्निमानित्युक्तेऽपि वीप्साफलव्याप्तिसिद्धेः । अत एव श्रुतिः 'ब्राह्मणो न हन्तव्यः' इत्येवाऽह । न तु यो यो ब्राह्मणोऽसावसौ न हन्तव्य इत्याह । नानाप्रतीकेषु स्वदर्शनं प्रार्थयमानस्योपासकस्य ॥ १७ ॥

## (ईशावास्यभाष्यटीकाविवृतिः)

ननु प्रातिपदिकमात्रस्य शब्दत्वेन व्यवहारे इतिशब्दानपेक्षायामपि विभक्त्यन्तस्य तु तत्त्वेन व्यवहारे अस्तीतिशब्दापेक्षा । तथैव सांव्यावहारिकत्वात् । प्रकृते च न प्रातिपदिकमात्रग्रहणम् । तथात्वे एकोऽसुशब्द इति वाऽदसुशब्द इति वा स्यात् । किन्तु विभक्त्यन्तस्य । तथात्वेऽसाविति शब्द इति वाच्यम् । तत् कथमसौशब्द इत्युक्तमित्यतः सत्यमत्रापीतिशब्दाध्याहारान्न दोष इत्याशयेनाऽह– **असौशब्दोऽसाविति शब्द इति ॥**

यद्वा, यः कश्चनासावेकः शब्दः प्राणे इत्यर्थभ्रान्तिनिरासायाऽह– **असौशब्दोऽसाविति शब्द इति ॥** असुशब्दस्य सप्तम्यन्तमिदमिति ज्ञापनाय भाष्ये प्राण इति सप्तमीप्रयोग इत्याशयेन कथं तेन तज्ज्ञापनमित्यतोऽपेक्षितमध्याहरति– **इति वक्तीति शेष इति ॥** एवं चाऽसाविति शब्दः प्राणे इत्यर्थं वक्तीत्युक्त्या सप्तम्यन्तोऽयमसुशब्दः प्राणप्रतिपादक इति भाष्यार्थः सम्पद्यते । शेषपूरणाभावे त्वेकोऽसाविति प्रथमान्तः शब्दः प्राणे वर्तते । प्राणविषयतया व्याख्यातव्य इति भाष्यार्थः प्रतीयेतेति भावः ॥

भाष्ये प्राण इत्यतः परं श्रूयमाणस्य स्थित इत्यस्य वैयर्थ्यशङ्कायां पूर्वभाष्यार्थविवरणपूर्वकं तद्व्यावर्त्यां शङ्कामुत्थापयति– **यद्यसुः प्राण इति ॥**

असुशब्दः प्राणवाचकः । तस्य सप्तमी असाविति । ततश्चासौ प्राणे । इत्यर्थो यदि स्यादित्यर्थः ॥ **अस्येति** ॥ असाविति सप्तम्यन्तस्येत्यर्थः । कुत इत्यत आह– **क्रियापेक्षत्वादिति** ॥ असावित्यधिकरणसप्तमीत्वात् क्रियाश्रययोः कर्तृकर्मणोराधारस्य चाधिकरणत्वात् क्रियापेक्षत्वमधिकरणस्येत्यर्थः ॥ **क्रियाध्याहारेणेति** ॥ क्रियाश्रयकर्तृवाचकस्थितपदाध्याहारेणेत्यर्थः । अत्र टीकायां स्थित इतीत्येव प्रतीकग्रहणमुचितम् । तस्यैवोक्तशङ्कानिवर्तकत्वात् । भाष्येऽपि प्राणे इत्यतः परं स्थित इति पाठदर्शनात् **'प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः'** इत्येतन्मन्त्रव्याख्यानरूपे बृहद्भाष्योदाहृतप्रमाणे प्राण इत्यतः परं स्थित इति क्रियाध्याहारस्य स्पष्टत्वेन तदनुसारेणात्रापि भाष्ये प्राण इत्यतः परं स्थित इति पाठस्याऽवश्यकत्वाच्च । यस्मिन्नितीति प्रतीकग्रहणं तु प्रकृतानुपयुक्तत्वादयुक्तम् । उत्तरत्रावतारिकापूर्वकं तस्य व्याख्यास्यमानत्वाच्च । नच यस्मिन्निति वाक्यगतस्य स्थित इत्यस्य प्रकृतोपयोगाभिप्रायेण तत्प्रतीकग्रहणमिति वाच्यम् । तस्य प्रागध्याहृतानुवादरूपत्वेऽपि स्वयमध्याहाररूपत्वाभावेन क्रियाध्याहारेणान्वयं दर्शयतीति टीकाया अस्वारस्यप्रसङ्गात् । भाष्ये प्राण इत्यतः परं स्थित इति पाठस्य मूलकोशेषु दर्शनाच्चेति ॥

भाष्यकृद्व्याख्यानेऽसावसाविति शब्दयोरेकत्र श्रुतयोर्वैरूप्यं स्थित इत्यध्याहारं चासहमानः प्रकारान्तरमाशङ्कते– **असावसावितीति** ॥ **वीप्सार्थतयेति** ॥ प्रयोक्तुर्व्याप्तिविषया इच्छा वीप्सा तदर्थतयेत्यर्थः । 'यो यो धूमवानसावसावग्निमान्' इत्यादौ दृष्टत्वादिति भावः । किमध्याहारादिरेव भाष्यकृद्व्याख्याने दोष उत वीप्साया असिद्धिः । आद्ये आह– **एवं व्याख्यान इति** ॥ प्रतीकान्तरस्य सर्वप्रतीकोत्तमत्वं सूचयितुं प्राणाख्येत्युक्तम् । महार्थलाभादध्याहारादिर्गुण एव न दोषः । नहि मृगभयाद् बीजानामनवापः सम्भवतीति भावः । द्वितीयं दूषयति– **एकेनापि शब्देनेति** ॥ असाविति शब्देनेत्यर्थः । योयो धूमवानितिवद् यो धूमवानसावग्निमानितीत्युदा-

हरणवाक्यस्यापि सांव्यावहारिकत्वात् । अन्यथा तत्र वीप्साया असिद्धि-प्रसङ्गादिति भावः । नन्वेकेन शब्देन वीप्सासिद्ध्यङ्गीकारे 'नित्यवीप्सयोः' (पा.अष्टा.८-१-४) इत्येतत्सूत्रविरोधः । नित्यवीप्सयोः । 'सर्वस्य द्वे' इत्य-नुवर्तते । नित्यमाभीक्ष्ण्यं, वीप्सा व्याप्तिप्रतिपादनेच्छा । नित्ये वीप्सायां चार्थे तद्वर्तते[1] तस्य द्वे भवतः । नित्ये 'पचतिपचति' इत्यादि । वीप्सायां 'ग्रामोग्रामो रमणीयः' । 'वृक्षंवृक्षं सिञ्चति' इत्यादि । अत्र वीप्सायां द्विर्भावस्य विहितत्वादिति चेत्, मैवम् । 'ब्राह्मणो न हन्तव्यः' इत्यादौ व्यभिचारेण नित्यवीप्सयोः इत्यस्यानित्यताया दुर्घटवृत्त्यादावुक्तत्वेनात्र द्विर्भावाभावसम्भवा-दित्याशयात् । ननु दर्शनप्रार्थनप्रकरणे योऽसावित्यादिस्वरूपप्रतिपादन-मसङ्गतमित्यतः 'पश्यामि' इति पूर्वेणान्वयमङ्गीकृत्य श्रुतियोजनाप्रकारं दर्शयति– **तथा चेति** ।। एवं योऽसावित्यादेः पूर्वेण एकवाक्यत्वमङ्गीकृत्य तं च पश्यामीति पूर्वेण सम्बन्धो दर्शितः । तस्मिन् पक्षे भगवद्रूपेषु भेदशङ्का-निवर्तकस्यान्यस्याभावात् तन्निवर्तकतया भिन्नवाक्यतामङ्गीकृत्य योजनान्तरमाह– **अथवेति** ।। अयमत्र योजनाक्रमः । अथवा तत्र भेदशङ्कायामिदमाहेत्य-न्वयः । तत्र प्राणाद्यनेकप्रतीकस्थभगवद्रूपेषु भेदशङ्कायामधिष्ठान-भेदप्रयुक्तभेदशङ्कायामिदमाह । योऽसावित्यादिवाक्यमभेदप्रतिपादनायाऽ-हेत्यर्थः । ननु पूर्वं भगवतः पूषाद्यनेकप्रतीकस्थत्वोक्तावपि प्राणादिस्थत्वानुक्तेः कथं तत्र भेदशङ्केत्यत उक्तम्– **पूषादिशब्दैरुपलक्षणयेत्यादि** ।। विशिष्य लक्षणायां नियामकाभावात् पूषादिशब्दैरित्युक्तम् । अजहल्लक्षणेति सूचनायोप-लक्षणयेत्युक्तमिति । नन्वेवमपि योऽसावित्यादिपरिहारवाक्यासङ्गतिरेव । तत्र योऽसौ = प्रसिद्धः, असौ= प्राणे स्थितः पुरुषः । स एवाहेयत्वनित्यास्ति-तामानाभ्यामहमस्मिशब्दवाच्यतयोपासकेषु स्थित इति योजनया प्राणप्रतीकस्थ-स्योपासकप्रतीकस्थस्य च विष्णोरभेदोक्तावपि पूषादिप्रतीकस्थस्य तदनुक्तेरित्यत-स्तद्वाक्यतात्पर्यमाह– **सर्वप्रतीकेष्विति** ।। एक एवेति वदता श्रुतौ तदध्या-हर्तव्यमिति सूचितम् ।। १७ ।।

१. अत्र यद् वर्तते इति पाठेन भाव्यमिति भाति ।

ततश्च योऽसौ=प्रसिद्धः, असौ प्राणे स्थितः यश्चाहमस्मिशब्दवाच्यतयोपासकेषु स्थितः, उपलक्षणमेतत् । यश्च पूषादिशब्दवाच्यतया पूषादिषु स्थितः । स सर्वोऽप्येक एव नाधिष्ठानभेदप्रयुक्तभेदवान् । 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते'(ऐतरेयारण्यकम्) इति श्रुतेरिति योजनोक्ता भवतीति ॥ १७ ॥

## (दुर्गमवाक्यार्थविवरणम्)

**उपासकेष्वित्यर्थ इति** ॥ उपासकानामेव भगवदापरोक्ष्यप्रतीकत्वादिति भावः । अत्रान्तर्यामिविवक्षा कुतोऽवगम्यत इत्यत आह– **योग्यतेति** ॥ तत्तत्प्रतीकान्तर्गतस्यैव विष्णोरापरोक्ष्यप्रार्थनादेव ज्ञायत इति भावः । एकस्याधिकारिणोऽनेकप्रतीकेषु दर्शनं कथं सम्भवतीत्यतो योग्यताभेदेनेत्युक्तम् । उत्तमाधिकारिलक्षणयोग्यतावैलक्षण्यादिति भावः । मन्दाधिकारिणां हि तन्न सम्भवति । नानाप्रतीकेषु यज्ञनाम्नो विष्णोरापरोक्ष्यं प्रार्थयतः स्वायम्भुवस्य मनो उत्तमाधिकारिदेवेष्वपि उत्तमत्वेनैतद्युक्ततरमेवेत्याशयः ।अत एव पूर्वमपि 'सर्वभूतेषु चाऽत्मानमनुपश्यति' इति सर्वान्तर्गतपरमात्मदर्शनस्यैव फलत्वमुक्तमिति ॥

यद्वा, अधिकारिणां योग्यताभेदेन तत्र तत्र प्रतीकदर्शनयोग्यत्वात् तत्तत्कटाक्षेण वा प्रतीकेषु मन्त्रद्रष्टा भगवदापरोक्ष्यं प्रार्थयते । अधिकारिकटाक्षस्तु प्राग् भुञ्जीथा इत्यादिमध्यमपुरुषप्रयोगादिनैव ज्ञायत इत्यर्थः । प्रतीके सदापरोक्ष्यप्रार्थनमिति कुतः प्रतीतमिति चेत्, नारायणकृष्णाद्यसाधारणनामानि विहाय तत्तद्देवतावाचिशब्दोपादानादेवावगतमिति जानीहि । 'योऽसावसौ पुरुषः' इत्यत्र प्राणस्य स्फुटं प्रतीकत्वोक्तेश्च ॥ **प्रकृतपरित्याग इति** ॥ ननु अनिर्देश्यं परमं सुखमित्यत्र 'तेषां सुखं शाश्वतं नेतरेषाम्' इति ज्ञानिसुखस्य प्रकृतत्वेऽपि तद्विहाय सुखशब्दस्य विष्णुविषयतोक्तेरत्रापि प्रकृतं परित्यज्य एवं व्याख्याने को दोष इति चेत्, मैवम् । तत्र ज्ञानिसुखग्रहणे सूर्यादीनां तदधीनप्रकाश्यत्वादिबाधकवदत्र तदभावात् निर्निमित्तं चैवं सति प्रकरणेन कुत्रापि तात्पर्यावगतिर्न स्यादिति भावः । पौनरुक्त्यपरिहाराय

**स्वरूपं बाह्यं** चेत्युक्तम् । **ते प्रसादादिति** द्वितीयवारमुपात्तस्य त इत्यस्यार्थः । अनेनैकेन चारितार्थ्यादपरं व्यर्थमिति परिहृतम् ॥ **आदित्येति** ॥ ननु रश्म्याद्यपगमनमात्रेण मण्डलान्तर्गतप्रतीत्यसम्भवेऽपि हिरण्मयेनेत्यत्र तस्याप्यप्रतिबन्धकता प्रार्थनाप्रतीतिः सम्भवतीति चेन्मैवम् । संराधनेऽप्यव्यक्तस्वभावस्य ब्रह्मणः आवरणनिवृत्तिमात्रेणापगतावरणघटादिवद्दर्शनासम्भवादित्याशयात् । अन्यथा तदन्तर्गतप्रतीत्यसम्भव एवावक्ष्यत् । अस्मत्पक्षे तु परमादरोपेतपरोक्षावबोधविस्तृतौ सत्यां प्रसन्नोऽनन्तशक्तिश्च परमात्माऽव्यक्तमपि स्वात्मानं दर्शयति ॥

अत एव भगवत्तमो बादरायणः 'प्रकाशश्च कर्मण्यभ्यासात्'(३.२.२३), 'अतोऽनन्तेन तथा हि लिङ्गम्' (३.२.२७) इत्यभाणीदिति न काऽप्यनुपपत्तिरिति भावः । सामानाधिकरण्यभ्रान्तिं वारयितुमुक्तम्– **असाविति** ॥ प्राणे स्थित इतीत्यत्र इतिशब्दान्वयाप्रतीतेराह– **इति वक्तीति** ॥ ननु असावितिशब्दः प्राणे स्थित इत्यर्थं कथं वक्ति? असावित्यस्य प्रथमान्तताप्रतीतेः । अदःशब्दार्थाभिधेयत्वेऽपि पदस्य प्रतिविशेषनिरूपितान्वयस्य पदान्तरसमभिव्याहारलभ्यत्वादिति चेत्, सत्यम् । स्थित इत्यस्याध्याहारमभिप्रेत्य एवमुक्तत्वादित्याशयेनाऽह– **यद्यसुरिति** । इदमुक्तं भवति । असौ शब्दः प्राणे स्थित इति वक्तीत्येव सम्बन्धः । स्थित इति तु अन्वयप्रदर्शनायाध्याहारप्रदर्शनमिति । ननु एवं कुत्र प्राणाख्यप्रतीकान्तरलाभः । अन्यत्र तु वीप्सासिद्धिरित्युभयत्राप्यविशेष एव । अतः कथमेकत्र पक्षपात इत्यत आह– **एकेनेति** ॥ अयं भावः । न हि वयं मुख्यप्राणस्य प्रतीकत्वलाभायैवं व्याचिनुमः । किं नाम, एकस्यासाविति शब्दस्य वैयर्थ्यभयादपि,वीप्सालाभार्थं तदिति चेन्न । योऽल्पसुखः सोऽस्वतन्त्र इत्यादिवदेकेनापि शब्देन वीप्सासिद्धेः, तथा च वीप्सापरत्वेऽप्यस्य वैयर्थ्यानिस्ताराद् एवमेव व्याख्यानमिति । ननु भगवदापरोक्ष्यप्रार्थनावसरे प्रकृतावसङ्गतमिदं किमुच्यते । कथं च प्राणस्य दर्शनप्रतीकतालाभ इत्यतः पश्यामीत्यस्यानुवृत्तिमभिप्रेत्य वाक्यार्थमाह– **तथा चेति** ॥

अनेन भगवत्परत्वेऽप्येकस्य वैयर्थ्यमिति निरस्तम् । एकस्य प्रसिद्ध्यर्थता-स्वीकाराद् यः प्राणे स्थितः स एव सर्वजीवेषु स्थित्वा अहमस्मिशब्दाभ्या-मुच्यत इत्यर्थः । पश्यामीत्यनुवृत्तिं विना प्रकारान्तरेण वाक्यं सङ्गमयति– **अथवेति ॥ भेदशङ्कायामिति ॥** नानास्थानेषु स्थितस्य परमेश्वरस्य स्थान-भेदेन भेदे ह्यनेकस्थानेषु तदापरोक्ष्यशासनमयुक्तं स्यात् । स्वप्राप्यरूपदर्शनस्यैव प्रार्थनीयत्वाद् अन्यविद्ययाऽन्यगतेरयोगात् । किञ्च अनेजदित्यादिना यदेक-त्रावस्थितस्यैव भगवद्रूपस्य सर्वत्रावस्थानादिरूपाचिन्त्यमाहात्म्यमुक्तम् । तदप्यसमञ्जसमापद्यते । परमेश्वररूपाणां परस्परं भेदे ह्यनुग्राह्यानुग्राहक-भावप्रसक्त्या सर्वत्र निर्दोषाशेषगुणपरिपूर्णत्वं च न स्यात् । अतोऽनेक-प्रतीकतोक्त्या प्राप्तभेदशङ्कानिरासाय इदमाहेत्यर्थः । कथमनेन तन्निरास इत्यतस्तात्पर्यमाह– **सर्वेति ॥**

इदमनेनोक्तं भवति । योऽसौ प्रसिद्धोऽसौ मुख्यप्राणादिसर्वप्रतीकेषु स्थितः परमेश्वरः स एव मदादिसर्वजीवेषु संस्थितोऽहमस्मिशब्दाभ्याम् उच्यत इति । एतच्च 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (ब्र.सू.३.२.११) इत्यादिना भगवतैव सप्रपञ्चमुपपादितमवगन्तव्यम् । सोऽहमस्मीत्यस्य सार्थक्यमप्यनेनोक्तं भवति । पूर्वं व्याख्याने तु फलितार्थमादायोक्तभाव इत्यादिस्वारस्यं द्रष्टव्यम् ॥ १७ ॥

**(उपनिषत्)**

**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥ १८ ॥**

**ओ३म् क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १९ ॥**

**(भाष्यम्)**

**[1]यस्मिन्नयं स्थितः सोऽप्यमृतः । किमु परः? अः ब्रह्मैव निलयनं यस्य वायोः सोऽनिलम् ।**

---

१. 'यस्मिन् प्राणे स्थितः' ह.

**'अतिरोहितविज्ञानाद् वायुरप्यमृतः स्मृतः ।**
**मुख्यामृतः स्वयं रामः परमात्मा सनातनः'**

**इति रामसंहितायाम् ॥ १८ ॥**

**'भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः ।**
**अनुग्रहोन्मुखत्वं तु नैवान्यत् क्वचिदिष्यते' इति ब्रह्मतर्के ॥ १९ ॥**

## (टीका)

'वायुरनिलममृतम्' इत्येतद्वाक्यं मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेदं हित्वाऽधिदैवमात्मनम् अनिलममृतं प्रपद्यताम् । अथेदं शरीरमग्नौ हुतं भस्मान्तं भूयादिति केचिद्व्याचक्षते । तदसत् ।अवश्यम्भाविन्यर्थे प्रार्थनानुपयोगात् । प्रकरणादप्युपपत्तेः बलीयस्त्वात् । अतो लिङ्गव्यत्ययेन विभक्तिव्यत्ययेन वा समानाधिकरणान्येतानि पदानि । ननु तर्हि प्रकृतासङ्गतानि स्युः । 'वायुरनिलम्' इति पुनरुक्तिः स्यादित्यत आह– **यस्मिन्निति ॥** यस्मिन्वायौ अयं परमेश्वरः सोऽपि वायुरपि अमृतः किमु परोऽमृत इति वक्तव्यमिति शेषः । नन्वस्मिन् वाक्ये 'वायुरमृतम्' इत्येवोच्यते । न तु यस्मिन् वायावयं स्थित इति । तत्कुतः कैमुत्यं लभ्यते ? न हि वायोरमृतत्वमात्रेणेश्वरामृतत्वसिद्धिरिति चेन्मैवम् । अस्यार्थस्यानिलपदेनोक्तत्वात् । तत्कथमित्यतस्तात्पर्यतो व्याख्यातं तदिदानीं निर्वक्ति– **अः ब्रह्मैवेति ॥** निलं निलयनमाश्रयः । यथाश्रुतस्यानुवादोऽयमित्यतोऽनिलमित्युक्तम् । अनेन पुनरुक्तिरपि परिहृता भवति । ननु 'यस्मिन्नयं स्थितः' इत्यनेन वायुरीश्वराश्रय इत्युक्तम् । अनेन निर्वचनेनेश्वरो वायोराश्रय इति लक्ष्यते । तत्कथमनिलपदार्थोऽसाविति चेन्मैवम् । 'यस्मिन्नयं स्थितः' इत्यनेनापि यस्मिन् वायावयं परमेश्वरो नियामकत्वेन स्थित इति वायोरीश्वराश्रितत्वस्यैव कथित्वात् । अथवा यस्मिन् परमेश्वरेऽयं वायुः स्थितः, यदधीनो वर्तत इति यावत्, स वायुरपि यदाऽमृतः तदा किमु वक्तव्यं स परोऽमृत इति व्याख्येयम् ॥

ततश्चेदमुक्तं भवति। सोऽहमस्मीति जीवान्तर्गतस्य परमेश्वरस्य नित्यास्तित्वं कल्याणतमरूपत्वं चोक्तम्। तन्न युक्तम्। प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनात्। देहनाशे च तदन्तर्गतस्य परमेश्वरस्य जीववन्मरणाद्यवश्यम्भावादित्याशङ्क्येदमुक्तम्– **वायुरनिलमिति** ॥ अयमर्थः। यद्यपीदं शरीरं भस्मान्तम्। तथाऽपि तदन्तर्गतस्य परमेश्वरस्य न मरणादिदोषप्रसङ्गः। कुतः? अनिलः परमेश्वराश्रितो वायुरपि यदाऽमृतः अथ तदा परमेश्वरः किं वक्तव्य इति तदमृतत्वस्य कैमुत्यसिद्धत्वादिति ॥

ननु संसारिणो वायोः कथममृतत्वं सम्भवति। यद्युपचारेण तर्हीश्वरस्यापि किं तथाविधममृतत्वमस्तीत्याशङ्कां स्मृत्यैव परिहरति– **अतिरोहितेति** ॥ देहनाशेऽपि तत्कार्यविज्ञानतिरोभावाभावसादृश्यादित्यर्थः। अतिरोहितविज्ञानादिति भावप्रधानो निर्देशः। मुख्यामृतः देहनाशादिरहितः। परमात्मा सनातन इति तत्र युक्तिद्वयम् ॥ १८ ॥

अथ प्रणवप्रतीकं प्रार्थयते– **ओमिति** ॥ ओतत्वादिगुणयुक्त क्रतो मां स्मर। मया कृतं ध्यानादिकं च स्मरेति। अभ्यासस्तात्पर्यार्थः। अत्र स्मरणं नाम प्रसिद्धमेवेति प्रतीतिं स्मृत्यैव परिहरति– **भक्तानामिति** ॥ भक्तकर्मकं यद्विष्णोः स्मरणं तदनुग्रहोन्मुखत्वमेव। विष्णौ यः स्मरणशब्दः प्रयुज्यते स स्मरणकार्यानुग्रहोन्मुखत्व एव लक्षणया वर्तत इति यावत्। नैवान्यत् संस्कारकारणकं ज्ञानमित्यर्थः। न केवलं भक्तविषय एवं किं तु सर्वत्रापीत्युक्तम्– **क्वचिदिति** ॥ कुतः? नित्यज्ञप्तिस्वरूपतः। स्मरणं ह्यनुभवनाशे तज्जन्यसंस्कारसहकृतेन मनसा जायते। ईश्वरश्च नित्यज्ञानस्वरूप इति तस्य स्मरणासम्भवाल्लक्षणाश्रयणमिति भावः ॥ १९ ॥

## (प्रकाशिका)

विभक्तिव्यत्ययेनेत्यत्र वायुरिति प्रथमायाः 'सुपां सुलुक्' इति वचनाद् द्वितीयाकरणे वायुमनिलममृतमाहुरिति योजनासम्भवात्। लिङ्गव्यत्यासे तु

वायुरनिलः अमृत इति योजनासम्भवादिति भावः । प्रकृतासङ्गतानीत्यत्र भगवत एव प्रकृतत्वेन वायोः कथनं कथं सङ्गच्छत इति शङ्कितुरभिप्रायः ॥ १८–१९ ॥

## (ईशावास्यभाष्यटीकाविवृतिः)

'वायुरनिलममृतम्' इति वाक्यस्य भाष्यकृद्व्याख्यानदृढीकरणायापव्याख्यानमनूद्य दूषयति– **वायुरनिलममृतमित्येतद्वाक्यमित्यादि ॥** इत्येतद्वाक्यमित्यस्य 'इति केचिद् व्याचक्षते' इत्यनेनान्वयः ॥ **अवश्यम्भाविनीति ॥** मरिष्यतः प्राणो वायुं प्रतिपद्यत इत्यस्यार्थस्य प्रार्थनाभावेऽपि सिद्धत्वात् प्रार्थनानुपयोगः । कथञ्चित् तस्य देवतानुस्मरणरूपत्वेन प्रार्थनीयत्वेऽपि देहभस्मीभावस्यातथारूपस्यावश्यम्भाविनः प्रार्थनानुपयोग एवेति भावः । ननु 'तत् ते पश्यामि' इति प्रार्थनाप्रकरणत्वादिदमपि प्रार्थनापरत्वेन व्याख्यायते । अन्यथा प्रकरणविरोधप्रसङ्गादित्यत आह– **प्रकरणादपीति ॥ उपपत्तेरिति ॥** प्रार्थनानुपयोगरूपोपपत्तेरित्यर्थः । 'वायाविन्द्रः सोम आदित्यो बृहस्पतिः' इत्यत्र वायुशब्दस्य 'पृथिव्यामृभवो लीयन्ते वरुणेऽश्विनावग्नावग्नयः'(ब्र.सू.भा. ४-२-६) इति भूतप्रकरणे पठ्यमानस्य भूतवायुपरत्वशङ्कायामिन्द्रादिलयाधिकरणत्वरूपोपपत्तिविरोधेन प्रकरणं बाधित्वा मुख्यवायुपरतायाः 'भूतेषु तच्छ्रुतेः' (ब्र.सू.४-२-५) 'प्रधानवायुस्त्विह वायुनामा भूतेष्विति प्रोक्त गतेऽपि युक्त्या' इत्यादिना शास्त्रे व्यवस्थापितत्वेन प्रकरणादुपपत्तेर्बलीयस्त्वमित्यर्थः ॥

अपव्याख्याननिराकरणफलमाह– **अत इति ॥** 'वायुरनिलं प्रपद्यताम्' इति वैयधिकरण्येन व्याख्यानस्यायुक्तत्वाद् वायुरनिलममृतमित्येतानि पदानि समानाधिकरणानि प्रथमां विभक्तिमादायैकविभक्तिकानीत्यर्थः । ननु वायुरनिलममृतमिति स्पष्टं व्यधिकरणत्वात् कथं समानाधिकरणानीत्यतः, किं भिन्नलिङ्गत्वाद् व्यधिकरणत्वमाशङ्कसे ? उत पुल्लिङ्गत्वेन समानलिङ्गत्वेऽपि

भिन्नविभक्तिकत्वात् । नाऽद्यः । 'शब्दः प्रमाणम्' इत्यादौ भिन्नलिङ्गानामपि विशेषणविशेष्यभावदर्शनात् ॥

ननु तत्रोभयोर्नियतलिङ्गत्वेन भिन्नलिङ्गत्वस्यादोषत्वेऽपि प्रकृतेऽनिलामृत-शब्दयोरनियतलिङ्गत्वादनियतलिङ्गानां विशेष्यनिघ्नत्वावश्यम्भावात् कथं भिन्नलिङ्गानां विशेषणविशेष्यभाव इत्यत उक्तम्– **लिङ्गव्यत्ययेनेति** ॥ अनिलममृतमिति नपुंसकयोः पुल्लिङ्गत्वेन व्यत्ययेनेत्यर्थः । न द्वितीय इत्याह – **विभक्तिव्यत्ययेनेति** ॥ अनिलममृतमिति द्वितीयायाः प्रथमात्वेन व्यत्ययेनेत्यर्थः । 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति स्मरणादुभयव्यत्ययोपप-त्तिरिति भावः ॥ **प्रकृतासङ्गतानीति** ॥ भगवन्माहात्म्याप्रतिपादकत्वादिति भावः । यस्मिन्नित्यस्य पूर्वप्रकृतप्राणपरामर्शकत्वे यत्तदोः समानविषयत्वात् सोऽप्यमृत इत्यत्रापि प्राणपरामर्शो वाच्यः । न चासौ युक्तः । 'वायुरनिलममृतम्' इति श्रुतिविरोधापातात् । अतो व्याचष्टे– **यस्मिन् वायाविति** ॥ प्राणस्य वायुत्वाकारेण वा वायोरेव बुद्ध्या प्रकृतत्वाद् वाऽयं परामर्श इति भावः । 'अयं वायुः' इति भ्रमनिरासाय ब्रह्मशब्दप्रकृतस्य वा बुद्ध्या प्रकृतस्य वा परामर्श इति भावेनाऽह– **अयं परमेश्वर इति** ॥ किमु पर इत्यस्यानन्वयादपेक्षितं पूरयति– **अमृत इति वक्तव्यमिति शेष इति** ॥ अमृत इत्यस्याऽवृत्त्या किमु पर इत्यनेन सम्बन्धे इतीत्यादिकमेव शेष इति द्रष्टव्यम् । **अस्यार्थ-स्येति** ॥ यस्मिन् वायावयं परमेश्वरः स्थित इत्यस्यार्थस्येत्यर्थः ॥ **तात्पर्यतो व्याख्यातमिति** ॥ 'यस्मिन्नयं स्थितः' इत्यनेनेति शेषः । भाष्ये निलयन-मित्येतच्छ्रौतनिलमित्यस्य व्याख्यानमिति ज्ञापनायाऽह– **निलं निलयन-मिति** ॥ तद् व्याचष्टे– **आश्रय इति** ॥

ननु भाष्ये सोऽनिल इति वक्तव्यं वायुविशेषणत्वात् । नच श्रुत्य-नुसारेणानिलमित्युक्तिरिति वाच्यम् । लिङ्गविभक्तिव्यत्ययेन तत्राप्यनिल इति व्याख्यातव्यत्वस्योक्तत्वादित्यत आह– **यथाश्रुतस्येति** ॥ लिङ्गादिव्यत्यय-रहितस्येत्यर्थः । भाष्ये यथाश्रुतानुवादोऽपि '**अदोषत्वाद इत्युक्तो वायुस्तन्निलयो**

**यतः । अनिलं तत एवासावमृतं चेति कीर्त्यते'** (बृ.उप.भाष्यम् - ७-२०-३) इत्यन्यत्रोदाहृतप्रमाणानुसारेणेति ज्ञातव्यम् । अत्र प्रमाणे अ इत्युक्त इत्यतः परं हरिरिति शेषो द्रष्टव्यः । **अनेनेति ॥** अनिलशब्दस्य यौगिकत्वाश्रयणेन वायुरनिलमिति पुनरुक्तिः परिहृतेत्यर्थः । **तत्कथमिति ॥** यस्मिन्नयं स्थित इत्यादेरप्यनिलपदार्थत्वस्योक्तत्वाद् विरुद्धयोश्चैकपदार्थत्वासम्भवादिति भावः । अस्मिन् पक्षे नियामकत्वेनेत्यध्याहारो भवतीत्यतः **'तदाश्रयोऽपि ह्यमृतः किमु साक्षात् स्वयं हरिः'** इत्यन्यत्रोदाहृतप्रमाणानुसारेण पक्षान्तरमाह– **अथवेति ॥** ननु यच्छब्देन परमेश्वरपरामर्शे सोऽपीति तच्छब्देन तस्यैव ग्रहणावश्यम्भावेन किमु पर इति कैमुत्योक्तिरयुक्ता स्यादित्यतस्तात्पर्यार्थमाह **–यदधीन इति ॥** अनेन यदाश्रयोऽपीति प्रमाणस्यापीदमेव तात्पर्यमुक्तं भवति ॥ १८ ॥

ननु वायुरनिलममृतमिति विशेषणानाममृतत्वरूपभगवन्माहात्म्यप्रतिपादकत्वेऽपि तत्प्रतिपादनस्य का पूर्वेण सङ्गतिः ? 'अथेदं भस्मान्तं शरीरम्' इत्यस्य तु सर्वथा नोपयोगं पश्याम इत्यत आह–**ततश्चेदमुक्तं भवतीति ॥ कल्याणतमरूपत्वं चेति ॥** इदं चाहेयत्वोक्तिलब्धमिति ज्ञातव्यम् । यद्वा आदित्यान्तर्गतस्योक्तं कल्याणरूपत्वं सर्वजीवान्तर्यामिसाधारणमित्यभिप्रेत्येदमुक्तम् – **मरणादीति ॥** आदिपदेन दुःखादिप्रयुक्तमकल्याणरूपत्वं द्रष्टव्यम् । 'तथाऽपि' इत्यादि 'प्रसङ्गः' इत्यन्तं श्रुतौ शेषकथनम् ॥ **परमेश्वर इति ॥** अचिन्त्यैश्वर्यवानित्यर्थः । अनेन जीववदिति दृष्टान्तवैषम्यमुक्तं भवति । यद्वा, परमेश्वराश्रितस्य वायोरमृतत्वोक्त्यैवाचिन्त्यशक्तिमत्त्वेन जीववैषम्यमुक्तमिति ज्ञातव्यम् ॥

नन्वेतच्छङ्कायाः पूर्वार्धेनैव परिहारादुत्तरार्धवैयर्थ्यमित्यतस्तद्व्यावर्त्यमाह **–यदीति ॥** 'अतिरोहितविज्ञानात्' इत्येतद् वायोरमृतशब्दवाच्यत्वे निमित्तकथनमिति भ्रमनिरासाय व्याचष्टे– **विज्ञानतिरोभावेति ॥** अनेन नामृतशब्दस्य वायौ मुख्यवृत्तिः । येन संसारित्वविरोधः । किन्तु गौणी ।

तत्र योगप्रदर्शनायातिरोहितेत्यादिविशेषणमित्युक्तं भवति । विज्ञानं च न स्वरूपमित्याशयेनोक्तम्–**तत्कार्येति ॥** देहकार्येत्यर्थः। वृत्तिरूपेति यावत् । अत्र विज्ञानतिरोभावाभाववत्त्वेनैव वायोर्मुक्तसादृश्यम् । तच्च विज्ञानं मुक्तानां स्वरूपभूतं वायोस्तु वृत्तिरूपमिति योज्यम् । ननु वृत्तिज्ञानतिरोभावाभाववत्त्वेनैव सादृश्यम् । मुक्तेषु वृत्तिज्ञानप्रसक्तेरभावात् । ननु वृत्तिज्ञानतिरोभावाभावस्य रुद्रादिसाधारणत्वात् को विशेषो वायोरित्यत उक्तम्– **देहनाशेऽपीति ॥** प्रलये देहनाशेऽपीत्यर्थः। अत एवोक्तमन्यत्र भगवत्पादैः– **'प्रलयेऽप्यविलुप्तज्ञानो वायुः'** इति । **'प्रलयेऽपि प्रतिभातपरावरः। मुख्यवायुर्नित्यसमः'** (अनु.व्या.२-३-२०) इति च । रुद्रादीनां तु प्रलये वृत्तिज्ञानतिरोभाव एवेति भावः । अत्र वायोरिव भारत्या अपि प्रलये वृत्तिज्ञानतिरोभावाभावो ज्ञातव्यः ॥

वियदधिकरणे **'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः'** इति (ब्र.सू.भाष्योदाहृतभाल्लवेयश्रुतिः २-३-४) । **'अथ यान्यनित्यानि प्राणः श्रद्धाभूतानि भौतिकानि'** इत्येतद्व्याख्यानावसरे तत्त्वप्रकाशिकायाम् । आत्मा परमात्मा, पुरुषादिपदैः जीवचैतन्यप्रकृतिस्वरूपकालप्रवाहा उच्यन्ते । तदभिमानिप्रकृतिश्च । प्राणो मुख्यवायुः, श्रद्धा तत्पत्नी । पुरुषपदेन गृहीतयोरप्यनयोश्चैतन्यमात्रादधिकमपि नित्यमस्तीति दर्शयितुं पुनः सपरिकरयोर्ग्रहणमित्युक्तम् । चैतन्यमात्रादधिकं च वृत्तिज्ञानमेव । एतदुत्तराधिकरणान्ते तत्वप्रकाशिकायाम् । अत्र वायोः परात्परनित्यत्वं स्वातन्त्र्यलक्षणं देहादेरपि नित्यत्वं च नास्त्येव । तथाऽपि सम्यगनित्यताशून्येभ्यो वियदादिभ्यः स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणातिशयेन नित्यतोच्यत इत्युक्तत्वात् । ननु प्रलये वृत्तिज्ञानतिरोभावाभावे वायोः सुप्त्यनुपपत्तिः । वृत्त्युपरमस्यैव सुप्तित्वात् । नच नास्त्येव वायोः प्रलये सुप्तिरिति वाच्यम् । **'सुषुप्तिसंस्थान् ब्रह्मादिकान्'** इति तदुक्तिविरोधापातात् । ब्रह्मग्रहणेन वायोरपि गृहीतत्वात् । नच ब्रह्मादिकानित्यतद्गुणसंविज्ञानो बहुव्रीहिः । **'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः'** इति विशेषप्रमाणविरोधादिति चेत्, मैवम् ।

यतस्तेषां साऽस्मत्स्वप्नावस्थासदृशी । मनोवृत्तेः सद्भावात् । बाह्यव्यापाराभावाच्च । एवं च स्वप्नसुषुप्त्युभयसाधारणसुप्तिशब्दस्य तस्यामवस्थायां गौण्या वृत्त्या प्रयोगः । सुप्तिशब्दस्योभयसाधारणत्वं कुत इति चेत् । उक्तं च बृहद्भाष्ये– स्वप्नसुषुप्त्युभयाभिप्रायेण तानि सुप्त इत्युक्तमिति । उक्तं च षट्प्रश्नभाष्यटीकायां– 'स्वापो द्विविधः । स्वप्नः सुषुप्तिश्चेति' (४-१) इति । ततश्च वायोर्वृत्तिज्ञानाविरोधिस्वप्न एव प्रमाणे सुषुप्तिशब्दार्थो नतु वृत्तितिरोभावरूपा प्रसिद्धा सुप्तिः । अतो न कश्चिद् दोषः । ननु प्रलयेऽन्येषामपि जीवानां मनोवृत्तिसद्भावेन कथं वायोरेवायं विशेषः । नच तत्र प्रमाणाभावः । **'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः'** (का.उ.२-२-८) इति श्रुतेः परमेश्वरस्य स्वाप्नपदार्थस्रष्टृत्वे 'निर्मातारम्' इति सूत्रभाष्ये प्रमाणत्वेनोपन्यासात् । 'एषु जीवेषु प्रलयादिषु सुप्तेषु' इति काठकभाष्ये प्रलयपरत्वेनास्या एव श्रुतेर्व्याख्यातत्वाच्च तदुभयपर्यालोचनया च प्रलये परमेश्वरस्य स्वाप्नपदार्थनिर्मातृत्वसिद्धिसम्भवात् । नच प्रलये निर्माणमात्रमत्रोच्यते; नतु तत्कालीनमिति वाच्यम् । **'भुञ्जानो नोत्सृजेद् वाचम्'** इत्यादाविव प्रकरणप्राप्तत्वात् । स्वाप्नपदार्थज्ञानं च वृत्तिरूपमेवेति सिद्धोऽन्येषामपि प्रलये वृत्तिसद्भाव इति चेन्मैवम् । सुप्तेष्वित्यत्र सुप्तिशब्देनेदानीन्तनसुप्तिविवक्षायां स्वाप्नपदार्थनिर्माणस्य, प्रलयकालीनसुप्तिविवक्षायां ब्रह्मादिमनोवृत्तेः कालक्षणादेश्च निर्माणस्य श्रुत्यर्थतया विवक्षितत्वेन सर्वजीवानां प्रलये स्वाप्नपदार्थनिर्माणासिद्धेः । तस्मात् प्रलये वृत्तिज्ञानतिरोभावाभावो वायोरेवेति युक्तमिति ॥

नन्वतिरोहितविज्ञानादित्यस्य बहुव्रीहित्वेन वायुपरत्वात् तेन सादृश्यं विरुद्धम् । तिरोभावाभावसादृश्यादित्यर्थ इति चायुक्तमित्यत आह– **अतिरोहितविज्ञानादिति भावप्रधान इति ॥** अतिरोहितविज्ञानस्य वायोर्भावो विज्ञानतिरोभावाभाव एव । अतो युक्तं तेन सादृश्यमुक्तं व्याख्यानं चेति भावः । परमात्मेत्यादिविशेषणद्वयस्य वैयर्थ्यं परिहरति– **परमात्मेति ॥** रामः

देहनाशादिरहितः । परमचेतनत्वात् सनातनत्वाच्चेति तत्र मुख्यामृतत्वे युक्तिद्वयमित्यर्थः । ननु सनातनत्वं नाम नित्यत्वं देहनाशादिरहितत्वमेवेति साध्यावैशिष्ट्यमिति चेत्, मैवम् । नादेन सहितः सनादनः सनादन एव सनातनः । 'तृतीयोऽतिशये' इति सूत्रात् । देहनाशादिरहितत्वेन श्रुतिप्रमित इति यावत् । अतो न साध्यावैशिष्ट्यम् । उक्तं च 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' (भ.गी.२-२४) इत्यत्र नित्यपदेन पौनरुक्त्यमाशङ्क्य गीतातात्पर्यनिर्णये, नादेन सह वर्तत इति सनादन एव सनातन इति ॥

**ततश्च योऽसावसावित्यादिसार्धमन्त्रस्यायमर्थः ॥** प्राणादिप्रतीकस्थं भगवन्तं प्रार्थयते– **योऽसावित्यादि ॥** योऽसौ प्रसिद्धोऽसौ प्राणवाचकस्यासुशब्द सप्तम्यन्तमिदम् । प्राणे नियामकतया स्थितः पुरुषः स एवोपासकान्तर्गतो अहं=अहेयत्वादहंशब्दवाच्यः । अस्मि=नित्यास्तित्वेन प्रमितत्वादस्मिशब्दवाच्यः । तं च पश्यामि । अथवा पूषन्नित्यादिना पूषादिशब्दैरुपलक्षणया प्राणाद्यनेकप्रतीकस्थत्वं विष्णोरुक्तं, तत्र भगवतोऽधिष्ठानभेदप्रयुक्तभेदशङ्कायां योऽसावित्याद्यर्थः प्रवर्तते । योऽसौ प्रसिद्धोऽसौ प्राणे स्थितः यश्चाहमस्मिशब्दवाच्यतयोपासकेषु स्थितः । उपलक्षणमेतत् । यश्च पूषादिशब्दवाच्यतया पूषादिषु स्थितः स सर्वोऽप्येक एव । नाधिष्ठानभेदप्रयुक्तभेदवान् । ननु सोऽहमस्मीति जीवान्तर्गतस्य परमेश्वरस्य नित्यास्तित्वमहेयत्वेन कल्याणतमरूपत्वं चोक्तम् । तन्न युक्तम् । प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनात् । देहनाशे च तदन्तर्गतस्य जीववन्मरणाद्यवश्यम्भावादित्याशङ्कानिरासायोक्तम्– **वायुरनिलमित्यादि ॥** यद्यपीदं शरीरं भस्मान्तम् । तथाऽपि न तदन्तर्गतस्य परमेश्वरस्य मरणादिदोषप्रसङ्गः । कुत इत्यतः कैमुत्येन परमेश्वरस्यामृतत्वसिद्धेरित्याशयेनोक्तम्– **वायुरनिलममृतमिति ॥** अनिलं व्यत्ययेनानिलः । अः ब्रह्मैव निलं निलयनम् आश्रयो यस्यासौ तथोक्तः । परमेश्वराश्रितो वायुरपि यदाऽमृतं अमृतः, अथ तदा परमेश्वरोऽमृत इति **किमु वक्तव्यमिति** ॥ १८ ॥

विशकलिततया टीकोक्तस्य मन्त्रार्थस्य बुद्ध्यारोहाय सङ्ग्रहान्न दोषः शङ्कनीयः । एवमन्यत्रापि । उत्तरं भाष्यमवतारयितुमोमित्यादिश्रुतिप्रतिपाद्यं तावदाह– **अथ प्रणवप्रतीकमिति** ॥ प्रणवप्रतीकमिति बहुव्रीहिः । भगवन्तमिति शेषः । अग्निप्रतीकं भगवन्तमिति वक्ष्यमाणत्वात् । ॐ ओं प्रतीकात्मकेति व्याख्यानम् अकारवाच्येन तत्पदार्थेनोकारवाच्यस्य त्वम्पदार्थस्याभेदो मकारेणोच्यत इति व्याख्यानं चानुपपन्नमप्रामाणिकत्वात् । प्रमाणविरुद्धत्वाच्चेत्याशयेन **'ओतमत्र जगद्यस्मादों तस्माद् भगवान् हरिः'** इत्यादिप्रमाणं मनसि निधाय व्याचष्टे– **ओतत्वादिगुणेति** ॥ जगदाधारत्वादिगुणयुक्तेत्यर्थः । **मां स्मरेति** ॥ अनेन श्रुतौ मामित्यध्याहर्तव्यमित्युक्तं भवति । ततश्च क्रतो स्मर । यन्मम कर्तव्यं तस्य कालोऽयं प्रत्युपस्थितः । अतस्तत् स्मरेति व्याख्यानमयुक्तम् । कृतश्रवणादिकेन मोक्षार्थं साक्षात्काराय भगवदनुग्रहस्य प्रार्थनीयत्वेऽपि स्वकर्तव्यस्मरणस्याप्रार्थनीयत्वाद् भगवतः स्मरणासम्भवेन तत्प्रार्थनानुपपत्तेश्चेति भावः ॥ **ध्यानादिकं चेति** ॥ अनेन अग्रे यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मरेति व्याख्यानमयुक्तमित्युक्तं भवति । भक्तानामिति कर्तरि षष्ठीति भ्रमनिरासायाऽऽह– **भक्तकर्मकमिति** ॥ अनेन कर्मणि षष्ठीत्युक्तं भवति ॥ **अनुग्रहोन्मुखत्वमेवेति** ॥ अनेनैवशब्दसम्बन्धो दर्शितः । नन्वनुग्रहोन्मुखत्वं न स्मरणाभिन्नम् । नापि तत्पदवाच्यम् । तत् कथं सामानाधिकरण्यमित्यत आह– **विष्णाविति** ॥ शक्यसम्बन्धसूचनाय स्मरणकार्येत्युक्तम् । मुख्यार्थानुपत्त्यभावान्न लक्षणाऽङ्गीकार्येत्याशयेन शङ्कते– **कुत इति** ॥ १९ ॥

## (दुर्गमवाक्यार्थविवरणम्)

प्रार्थनाप्रकरणत्वेन तत्परतयैव व्याख्यानं युज्यत इत्यत आह– **प्रकरणादिति** ॥ **ननु तर्हीति** ॥ ततश्च पूर्वपक्ष्यभिहितार्थे एतद्दोषद्वयाभावात् स एव युक्त इवाऽऽभातीति भावः ॥ **नहीति** ॥ यस्य कस्यचिद् अमृतत्वमात्रेणान्य-

स्यामृतत्वसिद्धावीश्वरस्य नित्यमुक्तत्वादिनाऽन्यस्यापि तत्प्रसङ्ग इति भावः । **तात्पर्य इति ॥** यस्मिन्नयं स्थित इत्यनेनेति भावः । ननु मूले सोऽनिल इति वक्तव्ये कथं सोऽनिलमित्युक्तिरित्यत आह– **यथाश्रुतस्येति अनेनेति ॥** अनिलपदस्य यौगिकत्वाश्रयणेनेत्यर्थः । नन्वनेन प्रकृतासाङ्गत्यं कथं परिहृत-मित्यत आह– **ततश्चेति ॥** सोऽहमस्मीत्यनेन नित्यास्तित्वं सोऽहमस्मीति सर्वप्रतीकान्तर्गतपरमेश्वरस्योक्त्या जीवान्तर्गतस्य कल्याणतमरूपत्वं चोक्तमिति भावः । **देहनाशे चेति ॥** नाशप्रसक्त्यैव जरादिदोषप्रसक्त्या कल्याणतमरूपत्वं चायुक्तमिति भावः । नन्वेवमप्यथेदं भस्मान्तं इत्यनन्वितं प्रतीयत इत्यतो वाक्यं योजयितुमाह– **अयमिति ॥ देहनाशेऽपीति ॥** स्वीयदेहनाशेऽपि तत्कार्यो देहनाशकार्यो विज्ञानातिरोभावः, तदभावरूपसादृश्यादित्यर्थः । **पर-मात्मेति ॥** वायुर्गौणामृतत्वमङ्गीकृत्य तर्हि अमृतत्वेन कैमुत्यलाभमीश्वरा-मृतत्वमपि तादृशमेव स्यादित्याशङ्क्य विष्णोर्मुख्यामृतत्वे युक्तिद्वयमुच्यत इत्यर्थः ॥

अयमभिप्रायः । सकलशरीरान्तर्गतस्य परमेश्वरस्य शरीरनाशादिना मरणादिदोषो नाऽशङ्कनीयः । कुतः? यतः परमेश्वराश्रितस्य मुख्यवायोः तत्प्र-सादेन स्वीयप्राकृतशरीरनाशेऽप्यमृतत्वमेवोच्यते । तदा किमु वक्तव्यम् । पूर्णशक्तिचिदानन्दमूर्तेरप्राकृतविग्रहस्य परमोत्कृष्टचेतनस्यानादेर्भगवत इतरसर्व-शरीरेषु नियामकत्वेनाऽस्थितस्य तन्नाशादिना मरणाद्यवद्यगन्धलेशोऽपीति । अत एव भगवान् [१]'नाऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र.सू.२.३.१७)इति मुख्यनित्यतामेवाऽह । अनेनैव सर्वशरीरगस्य विष्णोर्जीववद् दुःखादिदोष-प्रसङ्गः । तथा च शुक्रमित्यादिविशेषणानि अयुक्तानीति च परास्तम् । अत एव 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (१.२.८.) इत्यनेनाशेषात्माधिपतिः बादरायणोऽपि सर्वत्रोच्यमानस्य नारायणस्य जीवेन सह शरीरेऽवस्थितौ समानभोगप्राप्तिमाशङ्क्य सामर्थ्यवैशेष्यादिना निराचकार । **'सर्वज्ञाल्पताभेदात्**

१. 'आत्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति मुद्रितपुस्तके ।

**सर्वशक्त्यल्पशक्तितः । स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः'** (१.२.८.) इति च भाष्यम् । शरीरोत्पत्तौ तदन्तर्गतस्य भगवतो जनिप्रसङ्ग इत्यप्यनेन न्यायेन परास्तम् । 'स प्राणमसृजत' (प्रश्न. उप. ६.४.) इत्यादिना देहत उत्पत्तिमत्तया प्रमितस्यापि 'सा वा एषा देवताऽनादिर्येयं पवते' इत्यादिना यदा ज्ञानाविस्मृतेर्हेतोरनुत्पत्तिरेवोक्ता । तदा किं वाच्यम्? स्वतन्त्रस्य परमात्मनः कथमपि जनिर्नास्तीति । अत एव शारीरकमीमांसायां 'एतेन मातरिश्वा व्याख्यातः' (२.३.८.) इति सूत्रेण वायूत्पत्त्यनुत्पत्ति-श्रुत्योर्देहोत्पत्तिज्ञानाविस्मृतिभ्यां व्यवस्था कृता भगवता । यथाऽऽह भगवान् भाष्यकारः **'ज्ञानाविस्मृत्या वा वायावपि व्यवस्थेत्यतिदेशः'** इति । बह्वृचोपनिषदि 'स एष मृत्युश्चैवामृतं च तदुक्तमृषिणा अपाङ् प्राङेति स्वधया गृभीत' (ऐ.उप. २.१.८.) इत्यादिना महिदासाभिधेन प्रभुणोदाहृतमन्त्र-व्याख्यानावसरे 'अमर्त्यो मर्त्येना सयोनिः' इत्यंशोऽमरशीलशरीरैः सहाव-स्थिता वायुदेवता अमृतेत्येवं परतयावृतः । तथा च भाष्यम्– 'अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः' इति । तत्राप्यतिरोहितेत्युक्तन्यायेन शरीरकृतलेपा-भावेनामृतत्वं बोध्यम् ।। १८ ।।

प्रणवस्यानेकार्थत्वाद् ओतत्वादिशब्दः । यथाऽऽह– **'ओतत्वादवनान्मानाद् अधिकोच्चत्वकारणात् । आनन्दादोजसश्चैव भरणादोमुदाहृतः'** इति । कृतं स्मर इत्यत्र कृतं कर्मेत्यर्थाङ्गीकृतौ मोक्षस्य कर्मासाध्यत्वेन तदुक्तेर्वैयर्थ्यं स्यादिति कृतमनुष्ठितं ध्यानमित्युक्तम् । 'नैवान्यत्' इति वाक्ये क्वचित् कुत्रापि भक्तविषयेऽन्यन्नैवेत्यर्थोऽवभासते, प्रकरणादिदं चायुक्तम् । विष्णोः कुत्रापि विषये स्मरणाभावाद् विशेष्योक्त्यसम्भवात्, अन्यथा नित्यज्ञप्तिस्वरूपत्वहेतोर-प्रयोजकत्वापाताद् अत एवाऽह– **न केवलमिति** ।। ननु विष्णोः स्मरण-शब्दस्यानुग्रहोन्मुखत्वलक्षणायां मुख्यार्थानुपपत्तौ वाच्यायां 'नित्यज्ञप्ति-स्वरूपतः' इति किमुच्यत इत्यतो लक्षणाबीजानुपपत्तिसाधनायैवेदमित्याशयेनाऽ-ह **ईश्वरश्चेति** ।। १९ ।।

(उपनिषत्)

*(भगवत्साक्षात्कारानन्तरं मोक्षार्थं प्रार्थना)*

अग्ने नयं सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमं उक्तिं विधेम ॥ २०॥

इति याज्ञीयमन्त्रोपनिषत् समाप्ता ॥

(भाष्यम्)

वयुनं ज्ञानम् । 'त्वद्दत्तया[1] वयुनयेदमचष्ट विश्वम्' इति वचनात् । जुहुराणं अस्मानल्पीकुर्वत्[2] । युयोधि वियोजय ।

'यदस्मान् कुरुतेऽत्यल्पांस्तदेनोऽस्मद् वियोजय ।
'नय नो मोक्षवित्तायेत्यस्तौद् यज्ञं मनुः स्वराट्' इति स्कान्दे ।

'युयु वियोगे' इति धातुः । भक्तिज्ञानाभ्यां भूयिष्ठां नमउक्तिं विधेम ॥

पूर्णशक्तिचिदानन्दश्रीतेजःस्पष्टमूर्तये ।
[3]ममाभ्यधिकमित्राय नमो नारायणाय ते ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं
ईशावास्योपनिषद्भाष्यम् समाप्तम् ॥

—०—

(शान्तिमन्त्रः)

ॐ ॥ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

---

१. 'यद्दत्तया' ह. २. 'अल्पं कुर्वत्' ह ३. 'ममात्यधिकमित्राय' ह.

(टीका)

साक्षात्कारप्रार्थनानन्तरमग्निप्रतीकं भगवन्तं मोक्षार्थं प्रार्थयते–**अग्न इति ॥** वयुनानि कर्माणीति केषाश्चिद् व्याख्यानम् । तदसत् । मोक्षस्य कर्मसाध्यत्वाभावेन तदुक्तेर्वैयर्थ्यप्रसङ्गादित्यभिप्रेत्य वयुनशब्दार्थमाह– **वयुनमिति ॥** वयुनशब्दस्य ज्ञानवाचित्वं कुत इति चेत् प्रयोगं दर्शयति– **त्वद्दत्तयेति ॥** जुहुराणं कुटिलमित्यन्यथाप्रतीतिनिरासायाऽऽह– **जुहुराणमिति ॥** अस्मानित्यन्वय-सिद्ध्यर्थमावर्तितम् । युयोधीत्यप्रतीतार्थपदं व्याख्याति– **युयोधीति ॥** कुतोऽयं पदद्वयार्थ इत्यतः समाख्यानादित्याह– **यदिति ॥** युयोधीत्यस्य वियोगार्थसिद्धये धातुसूत्रमपि पठति– **युयु वियोग इति धातुरिति ॥** धातुव्याख्यानमित्यर्थः । नमउक्तेः भूयिष्ठत्वमभ्यस्तत्वम् । अतोऽभ्यधिकार्थं वदन् नमस्कारस्य कथमुक्तित्वमित्याशङ्कां परिहरति– **भक्तीति** ॥

**ततश्चायमर्थः ।** हे अग्ने अस्मान् सुपथा पुनरावृत्तिवर्जितेनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय । कुतः? हे देव अस्मदनुष्ठितानि विश्वानि सम्पूर्णानि, मोक्षाय पर्याप्तानीति यावत्, वयुनानि ज्ञानानि भवान् वेद । प्रारब्धकर्मभिः बद्धस्य कथं मोक्ष इत्यत उक्तम् - **युयोधीति ॥** अस्मान् जुहुराणमल्पीकुर्वत्, संसारे परिवर्तयदिति यावत्, एनः पापमनिष्टं कर्मेति यावत्, अस्मद् युयोधि अस्मत्तो वियोजय । वयं तुभ्यं भूयिष्ठां नमउक्तिं विधेम । न तु तत्प्रतिकर्तुं शक्नुम इति ॥ २० ॥

(टीका)

अथ समापितभाष्योऽपि भगवानाचार्यो 'यत्ते रूपं कल्याणतमं' 'योऽसावसौ पुरुषः' इत्यादिना प्रतिपादितं नारायणं स्तुतिनतिभ्यां प्रीणयति– **पूर्णेति ॥** पूर्णशक्तिचिदानन्दश्रीतेजांस्येव मूर्तिर्यस्येत्युक्ते करचरणादिमान् विग्रहो नास्तीति प्रतीतिः स्यात् । अत उक्तम्– **स्पष्टेति ॥** स्पष्टा प्रसिद्धा । करचरणादिमतीत्यर्थः । अभ्यधिकमित्रं निरतिशयोपकारकम् । अतिपरमप्रतीतिविषयश्चेति ॥

कमलावदनाम्भोजराजहंसाय विष्णवे ।
नमो जगज्जनिस्थेमहेतवे परमात्मने ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचितस्य याज्ञीयमन्त्रभाष्यस्य विवरणं श्रीमज्जयतीर्थभिक्षुविरचितं सम्पूर्णम् ॥**

—०—

## (प्रकाशिका)

मोक्षप्राप्तये 'तेऽर्चिषमभिसम्भवन्ति' इति श्रुत्युक्तार्चिर्नामकाग्निकुमारलोकस्याग्निशिखाद्वारा प्राक् प्राप्यत्वाद् गजतुरगशिबिकादिना राजमन्दिरं गच्छतोऽपि नदीनिरोधपरिहाराय नद्युत्तारकपुरुषप्रार्थनवत्, राजान्तःपुरप्रवेशाय प्राक् प्रतिहारप्रार्थनवद्वा 'अग्ने नय' इत्यग्निस्थभगवत्प्रार्थनमिति भावेनाऽह – **अग्निप्रतीकमिति** ॥ यद्वा 'कुर्वन्नेवेह कर्माणि' इति कर्मानुष्ठानस्योक्तत्वात्, कर्मानुष्ठातॄणां च 'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः' इति स्मृतेरग्नेरपेक्षितत्वादग्निप्रार्थनमिति ज्ञातव्यम् ॥ २० ॥

नियुङ्क्ते देहिनो योऽन्तः स्वयं भुङ्क्ते सुखानि च ।
तदन्ते मुक्तिदस्तं ते भजन्ते चिन्तितार्थदम् ॥

ग्रन्थेनानेन भगवानिन्दिरारमणः प्रभुः ।
नन्दितीर्थमुनेर्बन्धुः स दद्यात् सकलेप्सितम् ॥

**इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिता ईशावास्योपनिषद्भाष्यटीकाप्रकाशिका सम्पूर्णा ॥**

—०—

### (ईशावास्यभाष्यटीकाविवृतिः)

अग्ने नयेति प्रार्थनस्य पूर्वेण सङ्गतिमाह– **साक्षात्कारेति** ॥ भाष्ये 'त्वद्दत्तया' इत्येतद् भागवते भगवन्तं प्रति ध्रुवस्य वचनम् । नन्वस्मानल्पीकुर्वदित्य-

युक्तम् । अस्मानित्यस्य नयेत्यनेनान्वितत्वादित्यत आह – **अस्मानित्यन्वयसिद्ध्यर्थमावर्तितमिति ॥** अस्मानित्यावर्तितमित्यन्वयः । आवर्तनप्रयोजनकथनमन्वयसिद्ध्यर्थमिति । जुहुराणमित्यस्यान्वयसिद्ध्यर्थमित्यर्थः । अस्मानित्यस्यान्वयसिद्ध्यर्थमावर्तितमिति पाठे । अस्य जुहुराणमित्यन्वयसिद्ध्यर्थमस्मानित्यावर्तितमिति योजना द्रष्टव्या । **समाख्यानादित्याहेति ॥** यद्यपि भाष्ये पूर्वार्धेनैव पदद्वयं व्याख्यातम् । तथाऽपि समाख्यानत्वज्ञापनायास्मानित्यावृत्तेः प्रामाणिकत्वज्ञापनाय चोत्तरार्धोदाहरणमिति ज्ञातव्यम् ॥ **धातुसूत्रमिति ॥** धातुव्याख्यानरूपं सूत्रमित्यर्थः । ननु युयु इत्यस्य धातुत्वेऽपि विशिष्टस्य तदभावाद् धातुरित्ययुक्तमित्यत आह– **धात्विति** ॥ २० ॥

**अर्चिरादिमार्गेणेति ॥** एतच्चोपलक्षणम् । स्वोत्तमदेवतासु लयेन चेत्यपि द्रष्टव्यम् । यथाश्रुते स्वायम्भुवादिदेवानामर्चिरादिमार्गरहितानां प्रार्थनानुपपत्तेः । **मोक्षाख्यवित्तायेति ॥** अनेन, राये धनाय । कर्मफलभोगायेत्यर्थ इति व्याख्यानमपास्तं भवति । 'नय नो मोक्षवित्ताय' इति समाख्याविरुद्धत्वात् । एतदर्थं चोत्तरार्धोदाहरणं कृतम् । 'विश्वं पूर्णमिहोच्यते' इति प्रमाणानुसारेणाऽह– **सम्पूर्णानीति ॥** भवदितरेषामसम्पूर्णज्ञानत्वादाह– **मोक्षायेति ॥** प्रारब्धपुण्यस्यापि मोक्षप्रतिबन्धकत्वात् पापमात्रग्रहणमयुक्तमित्यतो विशेषशब्दस्य सामान्ये लक्षणेत्यभिप्रेत्याऽह– **कर्मेति यावदिति ॥** प्रारब्धपुण्यपापात्मकमित्यर्थः ॥ **अनिष्टमिति ॥** परमपुरुषार्थविरोधीत्यर्थः । एतच्च स्वरूपकथनम् । सञ्चितेष्टनाशस्यापुरुषार्थत्वेन सञ्चितानिष्टपुण्यस्यैव नाश्यत्वेन सञ्चितपुण्ये इष्टानिष्टपुण्यविभागसद्भावेऽपि प्रारब्धे पुण्यमात्रस्य भोगनाश्यत्वेन व्यावर्त्याभावादिति ज्ञेयम् । **वियोजयेति ॥** भोगेन नाशयेत्यर्थः । **भूयिष्ठामिति ॥** भक्तिज्ञानाभ्यामिति शेषः । तेन, भूयिष्ठां बहुतरामिति व्याख्यानं निरस्तं भवति । नमउक्तिं नम इत्युक्तिम् । इतिशब्दस्य ततश्चायमर्थ इत्यनेनान्वयः ॥ २० ॥

समापितभाष्योऽपीत्यपिपदेन न भगवतो भाष्यकारस्य समाप्त्युद्देशेन नत्याद्यनुष्ठानम् । येन समाप्त्यनन्तरं तद् व्यर्थमिति शङ्क्येत । किन्तु स्वभाव इति सूचयति । भाष्ये पूर्णेत्यादिविशेषणद्वयोपादानस्याभिप्रायमाह– **यत्ते रूपमित्यादि** ।। अत्र पूर्णशक्तीत्याद्येन विशेषणेन 'यत्ते रूपं कल्याणतमम्' इत्येतत्प्रतिपादितस्य नारायणस्य स्तुतिः कृता भवति । रूपशब्दं मूर्तिपरतया व्याख्याय मूर्तेः कल्याणतमत्वस्य पूर्णशक्त्याद्यात्मकत्वकथनेनोपपादनात् । 'ममाभ्यधिकमित्राय' इति द्वितीयविशेषणेन 'योऽसावसौ पुरुषः' इति प्राणप्रतीकस्थतयोक्तनारायणस्य स्तुतिः कृता वेदितव्या । अधिकमित्रत्वोक्त्या प्रतीकान्तरे भगवदुपासनापेक्षया प्राणप्रतीके भगवदुपासनस्य भगवदतिप्रीतिहेतुत्वेनाऽवश्यकत्वोपपादनादिति द्रष्टव्यम् ।। **स्तुतिनतिभ्यामिति** ।। नम इत्युक्तेर्नतित्वं प्रागेव समर्थितं वेदितव्यम् । मूर्तेः पूर्णशक्त्यादिनिर्मितत्वादिप्रतीतिं निरस्यन् स्पष्टपदव्यावर्त्यमाह– **पूर्णशक्तीत्यादि** ।। **करचरणादिमतीत्यर्थ इति** ।। अत्र च 'सज्ज्ञानानन्दशीर्षोऽसौ' इत्यादिप्रमाणं पूर्वोदाहृतमनुसन्धेयम् ।।

ननु 'प्रत्युपकारनिरपेक्षयोपकारकृत्सुहृत्, क्लेशस्थानं निरूप्य यो रक्षां करोति स मित्रम्' (गी.भा.६.९) इति गीताभाष्ये 'अनिमित्तस्नेहवांस्तु सुहृज्ज्ञात्वोपकारकृत् । मित्रम्' इत्यादिगीतातात्पर्ये च मित्रादिलक्षणमुक्त्वा 'सुहृदेषु विशिष्यते' इति सुहृदो मित्रापेक्षयाऽऽधिक्यस्योक्तत्वादत्रापि ममाभ्यधिकसुहृदे इति वक्तव्यम् । तत् कथं मित्रायेत्युक्तमित्यतोऽभ्यधिकमित्रत्वोक्त्या सुहृत्त्वमेवोक्तं भवतीत्यभिप्रेत्य सुहृच्छब्दसमानार्थतया तत्पदं व्याचष्टे– **अभ्यधिकमित्रं निरतिशयोपकारकमिति** ।। निरतिशयोपकारश्च स्वस्य संसारावस्थायामेव 'वायुरनिलममृतम्' इत्युक्तामृतत्वप्रदानरूपोऽतिविशदानादिसार्वज्ञप्रदानादिरूपश्च । यथोक्तम् 'भक्तानुकम्पादतिशुद्धसंविद्दात्रे' इति । तद् व्याख्यातं सुधायाम्– 'भक्ते मय्यनुकम्पात्' इति ।। 'प्रेयसे मे

सुपूर्णाय' इत्यादिभगवत्पादोक्तिं मनसि निधाय प्रकारान्तरेण व्याचष्टे– **अतिपरमप्रीतिविषयश्चेति** ॥ इतिशब्दः समाप्तौ ॥

अथ समापितभाष्यव्याख्यानो भगवांष्टीकाकारः 'मङ्गलान्तानि कार्याणि वीर्यवन्ति भवन्ति' इत्युक्तत्वादन्तेऽपि स्तुतिनतिभ्यां भगवन्तं प्रीणयति– **कमलेति** ॥ परमेष्टत्वाद् विष्णोरेव वन्द्यत्वमित्यभिप्रायेण कमलेत्याद्युक्तम् । अनेन कमलाऽपि वन्दिता भवति । विशिष्टत्वाच्च तस्यैव तदित्याशयेन पर-मात्मन इत्युक्तम् । आत्मशब्दश्चेतनपर्यायः । विशिष्टत्वोपपादनायोक्तम्– **जगज्जनिस्थेमहेतव इति** ॥ स्थेम स्थितिः । संहाराद्युपलक्षणमेतत् ॥

केचित्तु, न पालकत्वं भगवतोऽस्ति सृष्टिसंहारकर्तृत्वात् । सत्यां च सृष्टौ यावत्संहारं जगत्स्थितेः स्वत एव सिद्धेः । संहर्तुरसंहारव्यतिरिक्तस्यैव रक्षादि-रूपस्यायोगात् । अन्यस्य तु सृष्ट्यादिकर्तृत्वे सम्भवति निवारणादिव्यापारः । एतेनावान्तरोपद्रवनिवारणं च प्रत्युक्तम् । तत्रापि स्वयं कर्तृत्वात् । अतो न विष्णोः पालकत्वमिति वदन्ति । तन्न । असंहारव्यतिरिक्तस्य धारण-पोषणादिव्यापारस्य 'नैतावदेनापरो','अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' इत्यादिश्रुतिसिद्धत्वेन पालकत्वस्यावश्यमङ्गीकार्यत्वादित्याशयेन स्थेम्नः स्वशब्देनोपादानम् ॥

यद्यपि 'अजिरशिशिरशिथिलस्थिर'(उणादि-१-५३) इत्युणादिसूत्रेण स्था-धातोः किरच्प्रत्यये 'आतो लोपः'इति धात्वाकारलोपे च निष्पन्नस्य दृढार्थ-स्थिरशब्दस्य दृढादित्वेन 'वर्णदृढादिभ्यः (पा.अष्टा. ५-१-१२३) इतीमनिच्प्रत्यये प्रियस्थिरेत्यादिना स्थादेशे निष्पन्नस्य स्थेमशब्दस्य दार्ढ्ये प्रसिद्धिर्नतु स्थितौ । तथाऽपि 'उणादयो बहुलम्' (पा.अष्टा.३-३-१) इति बहुलग्रहणाद् जनिमवेमेत्यादिवत् स्थाधातोर्भावे इमनिच्प्रत्यये गुणे च निष्पन्नस्थेमशब्दस्य स्थित्यर्थत्वोपपत्तेः । 'अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रात-रक्षैकदीक्षे । श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन्

शेमुषी भक्तिरूपा ॥' इति रामानुजनान्दीश्लोके 'द्राघीयांसः संहतस्थेमभाजः' इत्याद्यन्यत्रापि स्थितावभियुक्तप्रयोगाच्च । एतच्च स्थेम स्थितिरिति श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां स्पष्टमिति ॥

रघुनाथेन याज्ञीयमन्त्रभाष्यस्य पञ्चिका ।
अनूदिता तत्सुकृतं मद्गुरूनेव गच्छतु ॥

**इति श्रीमद्रघुनाथतीर्थविरचिता**
**ईशावास्यभाष्यटीकाविवृतिः**
**सम्पूर्णा ॥**

—०—

## (दुर्गमवाक्यार्थविवरणम्)

विशिष्टमपि जुहुराणपदव्याख्यानमिति भ्रान्तिं वारयति– **अस्मानितीति ॥ अर्चिरादीति** ॥ ननु स्वायम्भुवमनोर्देवोत्तमस्य कथमर्चिरादिप्राप्तिः ? येन तत्प्राप्तिप्रार्थनं सङ्गच्छेत । देवानां स्वोत्तमेषु देहलयादेव भगवत्प्राप्तेर्भगवता बादरायणेन 'वाङ् मनसि दर्शनाच्छब्दाच्च' (ब्र.सू.४.२.१.) इति तथा निर्णयप्रणयनात् **'उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात् सुराः'** (अणु भा.४.४)इति भगवता भाष्यकृता भाषितत्वाच्चेति चेन्नैवम् । अंशावतरणे कथितत्वात् सपरिवारस्य प्रार्थनाच्च । यद्वा सुपथेत्यनेन स्वप्राप्यदेवतायां देहक्षयलक्षणमार्गोऽभिमतोऽस्तु टीकायां ज्ञानिसाधारण्येनोक्तिरित्यादि बोध्यम् ॥ **अस्मद्युयोधीति** ॥ 'उपमर्दं च' (३.४.१६.) इत्यादिन्यायोऽत्रानुसन्धेयः । योऽसावसाविति मुख्यप्राणस्यात्यतिशयितत्वादेव हि तस्य मुख्यत एव भगवत्प्रतीकतया ग्रहणम् । इतरसर्वापेक्षयाऽतिशयश्चेन्दिरारमणे प्रीत्यतिशययोगेनैव यथोक्तं 'तस्माद्विष्ण्वभिसम्बन्धात् पारावर्यं सुरेष्विदम्' इति 'वायुरनिलममृतम्' इत्यत्र च परब्रह्माख्यनारायणप्रसादात् संसारिण एव वायोरमृतत्वमभिहितम् । तादृशत्वं च न कुत्रापीति वायोर्नारायणो

निरतिशयोपकारकश्चेति लभ्यते । अः ब्रह्मैव निलं निलयनं यस्य वायोरिति परमप्रियत्वं च द्योतितम् । ब्रह्मणः प्रमितं च बळित्थेत्यादिना रुद्रादिसुरवराराधितस्य वायोरंशभूतोऽयमानन्दतीर्थमुनिः सुजनेष्टचिन्तामणिरिति ॥२०॥

अथ भाष्यव्याख्यां समाप्य स्वग्रन्थस्य पुरुषार्थहेतुतालाभायान्ते परमात्मानं स्तुतिनतिभ्यां प्रीणयति– **कमलेति ॥** विष्णवे नम इत्येतन्मात्रोक्तावस्याधिकृतत्वं न प्रतीयेत । आत्मैवेत्यत्रोच्यते । अतः परमात्मन इति विशेषणम् । आत्मशब्देन विष्णुरेवाभिप्रेयते । तस्यैव परमात्मत्वेनाऽत्मशब्दमुख्यार्थत्वादिति भावः । नम्यत्वोपपादकं याथातथ्यत इत्यादिनोक्तं तन्माहात्म्यमाह– **जगदिति ॥** विष्णोर्जगत्सृष्ट्यादिप्रवृत्तिश्च नाऽनन्दातिशयलाभार्थं,किं नाम? आनन्दोद्रेकादेव, कमलाभर्तृत्वेन पूर्णानन्दत्वावगमादित्याशयेनाऽह– **कमलेति ॥** रमापतित्वमभिधाय तस्य जगत्कारणत्वोक्त्याऽशेषजगदुत्पत्त्यादौ रमाया अङ्गत्वं योजयति । स्मर्यते च 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' (भ.गी.९.१०) इति, 'आकाश एव तदोतं च प्रोतं च' (बृ.उप. ३.८.७) इति श्रुतिः । सकलवाङ्मनसविशिष्टायाः भाग्याधिदेवतायार्महालक्ष्म्या अपि तच्छेषतया वन्द्यत्वलाभाय च कमलेत्यादिविशेषणम् । तदुपपादनाय तन्मुखाम्भोजविषये राजहंससाम्यं विष्णोरुक्तम् । एवं चेन्दिरायां निरतिशयप्रीतेर्लाभाद् वन्दिता च सा परब्रह्मविषयिणीं रमणीयविद्यां सम्पूर्णं च भाग्यं प्रयच्छति महालक्ष्मीः ॥

नमो नमोऽस्तु हरये गुणसर्वस्वमूर्तये ।
इन्दिरामध्वहृदये वसतेऽभीष्टदायिने ॥ १ ॥

रमाभृङ्गवरालीढसौन्दर्यरससौरभम् ।
नवंनवं सदा विष्णोर्भाति श्रीमुखपङ्कजम् ॥ २ ॥

श्रीकेरेशमुखान् सर्वान् जयतीर्थपराभिधान् ।
नरसिंहार्यवर्यांश्च भक्त्या वन्दे निरन्तरम् ॥ ३ ॥

नारायणपदाम्भोजे भ्रमरायितमानसान् ।
पूर्णबोधगुरून् वन्दे सर्वविद्याविचक्षणान् ॥ ४ ॥

तच्छिष्याणां कनिष्ठेन नृसिंहाख्येन तुष्टये ।
विष्णोरत्यल्पमतिना कृतेयं भावदीपिका ॥ ५ ॥

**॥ इति श्रीपूर्णबोधाचार्यशिष्यनृसिंहाचार्यकृतं याज्ञीयमन्त्रोपनिषद्भाष्यटीकादुर्गमवाक्यार्थविवरणं समाप्तम् ॥**

—०—

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितभाष्यभूषिता

# तलवकारोपनिषत्

श्रीव्यासतीर्थविरचितविवरणेन,
श्रीवादिराजतीर्थविरचितप्रकाशिकया,
श्रीवेदेशतीर्थविरचितविवरणेन च संवलिता

(शान्तिमन्त्रः)

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदम्। माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत्। अनिराकरणमस्त्वनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥
ॐ शान्तिश्शान्तिश्शान्तिः ॥

## (उपनिषत्)

*॥ हरिः ओ३म् ॥*

ओ३म् ॥ केनेषितं पतति प्रेषितं मनः
केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति
चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥

*(हृषीकेशस्य सर्वेन्द्रियप्रेरकत्ववर्णनम्)*

श्रोत्रस्य श्रोत्रं मनसो मनो यद्
वाचो ह वाचं स उ प्राणस्य प्राणः ।
चक्षुषश्चक्षुरतिमुच्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥

*(इन्द्रियप्रेरकस्यापि ब्रह्मण इन्द्रियातीतत्ववर्णनम्)*

न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः ।
न विद्म न विजानीमो यथैतदनुशिष्यात् ॥ ३ ॥

अन्यदेव तद् विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥ ४ ॥

यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ५ ॥

यन्मनसा न मनुते येनाऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ६ ॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ७ ॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ८ ॥

यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ९ ॥

॥ इति प्रथमः खण्डः ॥

—०—

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं भाष्यम्

*(मङ्गलाचरणम्)*

ओ३म् ॥ अनन्तगुणपूर्णत्वादगम्याय सुरैरपि ।
सर्वेष्टदात्रे देवानां नमो नारायणाय ते ॥ * ॥

*(तलवकारोपनिषदः पूर्वपीठिका)*

वैजयन्ते समासीनमेकान्ते चतुराननम् ।
विष्णोर्विविदिषुस्तत्त्वं पर्यपृच्छत् सदाशिवः ॥

[1]यदिदं पुरुषावश्यं तत्रतत्र पतेन्मनः ।
केन तत् प्रेरितं याति प्राणः सर्वोत्तमस्तथा ॥

१. 'यदि सत्पुरुषावश्यं' ह

चक्षुः श्रोत्रं तथा वाचं को देवो विनियोजयेत् ।
इति पृष्टस्तदा ब्रह्मा प्राह देवमुमापतिम् ॥

ध्यात्वा नारायणं देवं सर्वाधारमनूपमम् ।
सर्वज्ञं सर्वशक्तिं च सर्वदोषविवर्जितम् ॥ * ॥

यः प्राणस्य प्रणेता च चक्षुरादेश्च सर्वशः ।
[1]अगम्यः सर्वदेवैश्च परिपूर्णत्वहेतुतः ॥

प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः ।
सर्वोत्तमश्च सर्वत्र स विष्णुरिति धार्यताम् ॥ * ॥

॥ इति प्रथमखण्डभाष्यम् ॥

## (श्रीव्यासतीर्थविरचितं विवरणम्)

जडाजडात्मकं विश्वं कृत्वाऽधिष्ठाय संहरन् ।
स्वभावात् क्रीडते यस्तं वन्दे श्रीमध्ववल्लभम् ॥

योऽसुरानजयद् देवहृदयस्थस्तदर्थतः ।
ददौ चाभीष्टमिष्टेभ्यस्तं वन्दे मध्ववल्लभम् ॥

तलवकारोपनिषदं यथावद् व्याचिख्यासुर्भगवानानन्दतीर्थमुनिस्तदुक्तगुणैरुपश्लोकयन्नारायणं प्रणमति–**अनन्तेति** ॥ 'न तत्र चक्षुर्गच्छति' इत्यादिना सुरैरप्यगम्यत्वमुक्तं तत्सर्वथा दर्शनायोग्यत्वात् किमित्यत उक्तम्–**अनन्तगुणपूर्णत्वादिति** ॥ 'ब्रह्म ह देवेभ्यो विजिग्ये' इत्यादिनोक्तं सर्वेष्टदातृत्वम् । इषितमिष्टं साध्वसाधु वा प्रति मनः पतति तत्करणत्वान्मनसः स्वतो न युक्तम् । अतः केन प्रेषितं प्रेरितं पतति । प्रथमो मुख्यः । युक्तो नियुक्तः । इमां वाचं केन इषितां प्रेरितां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्तीति प्रश्नः यन्मनआदिप्रेरकं त्वया पृष्टं स उ इति परिहारश्च प्रतीयते ।

१. 'अगम्यं सर्वदेवैश्च' ह

प्रष्टा उत्तरप्रदाता च काविति न ज्ञायते अतस्तत्प्रश्नवाक्यं व्याचष्टे– **वैजयन्त इति** ॥ वैजयन्तो नाम कश्चित् पर्वतः । इतः पूर्वं कस्याप्यप्रकृतत्वात् स उ इति कथं तच्छब्देन परामर्श इत्यतो ध्यानप्रकृतत्वेन तद्धटयन् 'श्रोत्रस्य श्रोत्रम्' इत्यादिपरिहारवाक्यं व्याचष्टे– **ध्यात्वेति** ॥ यः प्राणस्य प्रणेता चक्षुरादेश्च प्रणेता स विष्णुरवधार्यतामिति सम्बन्धः । चक्षुरादिप्रणेतृत्ववेत्तुः फलमाह– **अतिमुच्येति** ॥ अस्माल्लोकात् प्रेत्य गत्वाऽतिमुच्य संसारादमृता भवन्तीति सम्बन्धः । कीदृशं भगवतः प्राणादिप्रेरकत्वमिति जिज्ञासायां तत्र चक्षुराद्यप्रवृत्तेः कीदृशं तदिति न जानीम इत्याह– **न तत्र चक्षुरिति** ॥ तद् व्याचष्टे– **अगम्य इति** ॥ सर्वात्मना चक्षुराद्यगम्यस्तर्हीत्यत आह– **अन्यदेवेति** ॥ विदिताज्जगतोऽविदिताच्छशविषाणादेरन्यदेव तत् । तत्राधीत्यस्यार्थमाह– **सर्वोत्तमश्च सर्वत्रेति** ॥ 'न तत्र चक्षुर्गच्छति' इत्यादि विवृण्वन् मनोगोचरजीवात्मकत्वात् कथं मनोगोचरत्वमिति शङ्कां च परिहरति– **यद्वाचाऽनभ्युदितमित्यादिना** ॥ येन चक्षूंषि पश्यन्ति दृश्यन्ते । ते तव उप आस तदेव ब्रह्म विद्धि । 'यद्वाचाऽनभ्युदितम्' इत्यादिवाक्यजातं व्याचष्टे– **प्राणादीनामिति** ॥ प्रथमः खण्डः ॥ १ ॥

## (श्रीवादिराजयतिविरचिता प्रकाशिका)

दद्याद् विद्यां हयग्रीवः पद्मा दद्याच्छ्रियं मम ।
विद्वान् मध्वो बुद्धिशुद्धिं दद्यादद्य महर्द्धिमान् ॥

प्रणम्य कमलाकान्तमनन्तं चिन्तितार्थदम् ।
कुर्वे तलवकारोपनिषद्भाष्यस्य टिप्पणीम् ॥

तलवकारोपनिषदं व्याचिख्यासुर्भगवानानन्दतीर्थमुनिः तदुक्तगुणवत्तया भगवन्तं स्तुवन् प्रणमति– **अनन्तगुणपूर्णत्वादिति** ॥ 'तन्न व्यजानन्त किमिदं यक्षम्' इत्यस्यार्थकथनम्– **'अगम्याय सुरैरपि'** इति । **'तस्मिन्नेवाऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्'** इति पार्वतीमुखेनेन्द्रादीनां

ज्ञानदानस्योक्तत्वात् 'देवानां सर्वेष्टदात्रे' इत्युक्तम् । वैजयन्तो नाम बहुयोजनवान् मेरोः शृङ्गविशेषः । तत्राप्येकं ब्रह्मणो मन्दिरमस्ति । तत्राऽसीनं ब्रह्माणमित्यर्थः ॥

**'केनेषितं पतति प्रेषितं मनः'** इत्यादिना मनआदीन्द्रियाणां प्रवृत्तिप्रेरकः कः? इति प्रश्नः क्रियते । इन्द्रियाणां स्वस्वविषयेषु गमनस्य स्वाभाविकत्वाद् व्यर्थोऽयं प्रश्न इति न मन्तव्यम् । इन्द्रियाणां जडत्वेन घटवत् स्वतःप्रवृत्त्ययोगेन प्रवर्तकप्रश्नस्य न्यायप्राप्तत्वात् । तर्हि तत्तज्जीवा एव स्वस्वेन्द्रियाणि प्रवर्तयन्तु, चेतनत्वेन तेषां प्रवर्तकत्वसम्भवादिति च न मन्तव्यम् ॥

**'वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् ।**
**वि मे मनश्चरति दूर आ धीः किंस्विद् वक्ष्यामि किमनू मनिष्ये ॥'**

इति कर्णादीन्द्रियाणां तत्तज्जीवानधीनत्वोक्तेः । मनआदीन्द्रियप्रेरकैरिन्द्रियाभिमानिदेवैः मनआदीन्द्रियाणां प्रवृत्तिरस्तु । किं प्रेरकान्तरप्रश्नेनेति चेन्न ॥

**'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् ।**
**न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवञ्चित्रमर्च ॥ '**

इति श्रुत्या इन्द्रियगणप्रवर्तनाय सर्वेन्द्रियगणाधिपतेरेकस्येन्द्रियगणेषु निषुसीदेति सन्निधानस्य प्रार्थनात् । तदुक्तं भागवते–

**'अन्तर्बहिश्चाखिललोकपालकैरदृष्टरूपो विचरस्युरुश्च नः ।**
**स ईश्वरस्त्वं य इदं वशे नयन्नात्मा यथा दारुमयीं नरः स्त्रियम् ॥**
**यं लोकपालाः किल मत्सरज्वराः हित्वा यतन्तोऽपि पृथक् समेत्य च ।**
**त्रातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपः स्थास्नु यदत्र दृश्यते ॥'** इति ।

इदं च मत्स्यतनुं हरिं प्रति मनोः प्रार्थनम् । अत इयमुपनिषत् प्राकृतभाषया यामिकसनाम्ना शङ्काकृतश्चोरान् दूरे धुनोतीत्यत उपपन्नतरः प्रश्न इति श्रुतेरभिसन्धिरनुसन्धेयः ॥

**'केनेषितं पतति प्रेषितं मनः'** इत्यादेरर्थमाह– **यदिदमिति** ॥ मन इषितमिष्टं प्रति केन प्रेषितं पतति गच्छति । स्वानभीष्टस्वजिह्वादंशनादावपि मनसः प्रवृत्तिदर्शनात् पततीत्युक्तम् । बलात् पततीत्यर्थः । स्वादुतरवस्त्वास्वादनसमये हरिं विस्मृत्य स्वतृप्तिमेवोद्दिश्य तत्स्वादुस्वीकाराख्यदोषपरिहाराय बलात् स्वभक्तकृपालुना हरिणा प्रेरितं मनस्तत्र बलाद् गच्छतीति भावः । इदमपि पदं प्रेरकान्तरावश्यम्भावसूचकम् । अत एवाऽह भगवान् भाष्यकारः– **पुरुषावश्यमिति** ॥ पुरुषेण वशीकर्तुमशक्यं पुरुषावश्यमित्यर्थः । मनआदीन्द्रियाभिमानिदेवैः सह पठितोऽपि प्राणो न तत्समानयोगक्षेम इति भावेनोक्तम्– **प्राणः प्रथम** इति ॥ तस्यार्थमाह– **सर्वोत्तम इति** ॥ सर्वेभ्य इन्द्रियाभिमानिदेवेभ्योऽप्युत्तम इत्यर्थः । **'स उ प्राणस्य प्राणः'** इत्यत्र प्राक् कस्यापि परामर्शाभावात् तच्छब्दः स्वबुद्धिस्थवस्तुपरामर्शीति भावेनोक्तम्– **ध्यात्वेति** ॥

**॥ इति प्रथमखण्डभाष्यप्रकाशिका ॥**

—०—

## (श्रीवेदेशतीर्थविरचितं विवरणम्)

प्राणादेरीशितारं निखिलगुणनिधिं सर्वदेवाद्यगम्यं
व्यक्ताव्यक्तात् परं तं परमसुखनिधिं सर्वदोषातिदूरम् ।
सर्वज्ञं सर्वदेवेष्टदमपि निखिलं भासयन्तं स्वभासा
वन्दे विष्णुं सदाऽहं निखिलगुणसमूहात् परं मुक्तगम्यम् ॥ १ ॥

निखिलाद्वैतसिद्धान्तप्राप्ताज्ञानविनाशकः ।
श्रीमदाचार्यसूर्योऽयं दद्यात् तत्त्वप्रकाशनम् ॥ २ ॥

श्रीमदाचार्यसान्निध्यबलाद् यस्तस्य भाववित् ।
प्रकटीकृत्य तं सम्यक् जयतीर्थोऽभिभासते ॥ ३ ॥

येन वेदान्तभाष्याणि विवृतानि महात्मना ।
तं वन्दे व्यासतीर्थाख्यं वेदान्तार्थप्रसिद्धये ॥ ४ ॥

रघूत्तमगुरुर्भूयान्मम ज्ञानाय सर्वदा ।
श्रीमध्वशास्त्रं संशोध्य यः सम्यग् ज्ञानमाप्तवान् ॥ ५ ॥

नत्वा रमापतिं सर्वदेवानामिष्टदं हरिम् ।
भाष्यं तलवकारस्य व्याख्यास्येऽहं यथामति ॥ ६ ॥

इह हि विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमादिमतोऽधिकारिणो मोक्षार्थं भगवत्स्वरूपप्रतिपादनाय प्रवृत्तां तलवकारोपनिषदमन्यैरन्यथाव्याख्यातत्वेनाप्रवृत्तामिव मन्यमानो भगवानानन्दतीर्थमुनिस्तां यथावद् व्याचिख्यासुः प्रारिप्सितनिर्विघ्नपरिसमाप्त्यादिप्रयोजने उपनिषत्प्रतिपाद्यगुणवन्नारायणस्तुतिनती शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति– **अनन्तेति** ॥ अगम्याय साकल्येन ज्ञातुमशक्याय । पृथग् जनैरज्ञेयत्वं देवादिसाधारणमित्यत उक्तम् –**सुरैरपीति** ॥ अपिशब्दः कैमुत्यद्योतनार्थः । सर्वज्ञकल्पैरपीति वा । रमाब्रह्मादावविद्यमानं साकल्येन ज्ञातुमशक्यत्वमस्यैव कुत इत्यत उक्तम्– **अनन्तेति** ॥ वक्ष्यति चैतत् 'न तत्र चक्षुर्गच्छति' इत्यादिना । अनेन नम्यत्वोपपादकं विशिष्टत्वमुक्तं भवति । तदुपपादकमिष्टत्वं चाऽह– **सर्वेति** ॥ इदमपि **'ब्रह्म ह देवेभ्यः'** इत्यादिना वक्ष्यति । सर्वदाऽपरोक्षीकृतनारायणोऽपि भगवान् ग्रन्थकरणसमये विशेषतोऽपि तमपरोक्षीकृतवानिति त इत्यपरोक्षनिर्देशः । अनेन नारायणो विषयः, सर्वेष्टमेव प्रयोजनं, तदर्थं तज्जिज्ञासुरधिकारीति सूचितम् । तेन युक्तमेतदुपनिषदो व्याख्यानम् । ननु श्रुतौ 'केनेषितम्' इत्यादिप्रश्नः **'श्रोत्रस्य श्रोत्रम्'** इत्यादिपरिहारश्च प्रतीयते । तत्र प्रष्टा परिहर्ता च काविति न ज्ञायते । अतस्तौ दर्शयति– **वैजयन्त इति** ॥ वैजयन्तो नामान्तरिक्षस्थं ब्रह्मसदनम् । **'जयन्तं त्वन्तरिक्षगम्'** इति वचनात् । इदानीं केनेत्यादिप्रश्नवाक्यं व्याचष्टे– **यदिदमिति** ॥ तत्र तत्र साधुष्वसाधुषु वा

विषयेषु अनेनेषितमित्येतदुक्तार्थम् । प्रेषितमित्यस्यार्थः– **प्रेरितमिति ॥** नच मनः स्वत एव याति । करणस्य कर्तृप्रयोज्यत्वनियमात् । नच जीवप्रेर्यं मनः तदवश्यत्वादित्याह– **पुरुषावश्यमिति ॥** नच मुख्यप्राणो जीवप्रेरित एव यातीति वाच्यम् । तस्यास्मदादिसर्वजीवोत्तमत्वात् । नच स त्वत्-प्रेरितः । त्वत्समत्वात् । नापि रमाप्रेरितः । तस्या अपि परतन्त्रत्वेन मुख्यतः प्रेरकत्वायोगादिति भावेनाऽऽह– **सर्वोत्तम इति ॥** अनेन प्रथमशब्दो व्याख्यातः । उपलक्षणमेतत् । तथाशब्दः केन प्रेरितो यातीत्यस्यानुकर्षणार्थः, समुच्चयार्थो वा । समुच्चयार्थकद्वितीयतथाशब्देन श्रौत उशब्द उक्तार्थः । चक्षुरादीनां जीवावश्यत्वस्य प्रत्यक्षत एव सिद्धत्वात् स्वातन्त्र्यादिलक्षण-क्रीडावान् देव एव तन्नियामको वक्तव्यः । स क इत्यर्थः । यदि नारायण एव मनआदिप्रेरकः तर्हि स किंलक्षणक इति प्रश्नाशयः । श्रुतौ **'तस्मै स होवाच'** इत्यादिपरिहारवाक्यत्वज्ञापकाभावात् **'श्रोत्रस्य श्रोत्रम्'** इत्यादिपरिहारवाक्यमिति न प्रतीयते । अतो मध्ये वक्तव्यमाह– **इति पृष्ट इति ॥** ननु यच्छ्रोत्रस्य श्रोत्रं त्वया पृष्टं तत् स उ स एवेति परिहारवाक्ये स इति कस्य परामर्शः । पूर्वं कस्याप्यप्रकृतत्वादित्यतः चतुर्मुखध्यानप्रकृत-नारायणपरामर्शोऽयमिति भावेनाऽऽह– **ध्यात्वेति ॥** यद्वा भगवत्स्वरूपोपदेशाय वक्ष्यमाणोपनिषत्प्रतिपाद्यगुणवद्भगवद्ध्यानलक्षणं मङ्गलं कृतं ब्रह्मणेत्याह– **ध्यात्वेति ॥ 'श्रोत्रस्य श्रोत्रम्'** इत्यादिना तत्र तत्र स्थितस्य तत्तन्नियामकत्वोक्त्या वा 'यदिदमुपासते' इत्यनेन विनियामकतया तत्तज्जीवसमीपस्थत्वोक्त्या वा येन प्राणः प्रणीयत इति सर्वनियामकप्राणनियामकत्वोक्त्या वा सर्वाधा-रत्वम् । **'अन्यदेव तद् विदितात्'** इत्यादिनाऽनुपमत्वं **'येन वागभ्युद्यते'** इत्यादिना सार्वज्ञं पूर्वोक्तरीत्या तत्तन्नियामकत्वोक्त्या वा **'ब्रह्म ह देवेभ्यो विजिग्ये'** इति सर्वदैत्यदानवजयोक्त्या वा सर्वशक्तित्वम् । **'यत्प्राणेन न प्राणिति'** इति पारतन्त्र्याभावोक्त्या तदुपलक्षितसर्वदोषवर्जितत्वं चोक्तमिति ज्ञेयम् । इदानीं 'श्रोत्रस्य श्रोत्रम्' इत्यादिपरिहारवाक्यं व्याचष्टे– **यः**

येन वेदान्तभाष्याणि विवृतानि महात्मना ।
तं वन्दे व्यासतीर्थाख्यं वेदान्तार्थप्रसिद्धये ॥ ४ ॥

रघूत्तमगुरुर्भूयान्मम ज्ञानाय सर्वदा ।
श्रीमध्वशास्त्रं संशोध्य यः सम्यग् ज्ञानमाप्तवान् ॥ ५ ॥

नत्वा रमापतिं सर्वदेवानामिष्टदं हरिम् ।
भाष्यं तलवकारस्य व्याख्यास्येऽहं यथामति ॥ ६ ॥

इह हि विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमादिमतोऽधिकारिणो मोक्षार्थं भगवत्स्वरूपप्रतिपादनाय प्रवृत्तां तलवकारोपनिषदमन्यैरन्यथा-व्याख्यातत्वेनाप्रवृत्तामिव मन्यमानो भगवानानन्दतीर्थमुनिस्तां यथावद् व्याचि-ख्यासुः प्रारिप्सितनिर्विघ्नपरिसमाप्त्यादिप्रयोजने उपनिषत्प्रतिपाद्यगुणवन्ना-रायणस्तुतिनती शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति– **अनन्तेति** ॥ अगम्याय साकल्येन ज्ञातुमशक्याय । पृथग् जनैरज्ञेयत्वं देवादिसाधारणमित्यत उक्तम् –**सुरैरपीति** ॥ अपिशब्दः कैमुत्यद्योतनार्थः । सर्वज्ञकल्पैरपीति वा । रमा-ब्रह्मादावविद्यमानं साकल्येन ज्ञातुमशक्यत्वमस्यैव कुत इत्यत उक्तम्– **अनन्तेति** ॥ वक्ष्यति चैतत् 'न तत्र चक्षुर्गच्छति' इत्यादिना । अनेन नम्य-त्वोपपादकं विशिष्टत्वमुक्तं भवति । तदुपपादकमिष्टत्वं चाऽह– **सर्वेति** ॥ इदमपि **'ब्रह्म ह देवेभ्यः'** इत्यादिना वक्ष्यति । सर्वदाऽपरोक्षीकृतनारायणोऽपि भगवान् ग्रन्थकरणसमये विशेषतोऽपि तमपरोक्षीकृतवानिति त इत्यपरोक्ष-निर्देशः । अनेन नारायणो विषयः, सर्वेष्टमेव प्रयोजनं, तदर्थं तज्जिज्ञासुरधि-कारीति सूचितम् । तेन युक्तमेतदुपनिषदो व्याख्यानम् । ननु श्रुतौ 'केनेषितम्' इत्यादिप्रश्नः **'श्रोत्रस्य श्रोत्रम्'** इत्यादिपरिहारश्च प्रतीयते । तत्र प्रष्टा परिहर्ता च काविति न ज्ञायते । अतस्तौ दर्शयति– **वैजयन्त इति** ॥ वैजयन्तो नामान्तरिक्षस्थं ब्रह्मसदनम् । **'जयन्तं त्वन्तरिक्षगम्'** इति वचनात् । इदानीं केनेत्यादिप्रश्नवाक्यं व्याचष्टे– **यदिदमिति** ॥ तत्र तत्र साधुष्वसाधुषु वा

विषयेषु अनेनेषितमित्येतदुक्तार्थम् । प्रेषितमित्यस्यार्थः– **प्रेरितमिति ॥** नच मनः स्वत एव याति । करणस्य कर्तृप्रयोज्यत्वनियमात् । नच जीवप्रेर्यं मनः तदवश्यत्वादित्याह– **पुरुषावश्यमिति ॥** नच मुख्यप्राणो जीवप्रेरित एव यातीति वाच्यम् । तस्यास्मदादिसर्वजीवोत्तमत्वात् । नच स त्वत्-प्रेरितः । त्वत्समत्वात् । नापि रमाप्रेरितः । तस्या अपि परतन्त्रत्वेन मुख्यतः प्रेरकत्वायोगादिति भावेनाऽह– **सर्वोत्तम इति ॥** अनेन प्रथमशब्दो व्याख्यातः । उपलक्षणमेतत् । तथाशब्दः केन प्रेरितो यातीत्यस्यानुकर्षणार्थः, समुच्चयार्थो वा । समुच्चयार्थकद्वितीयतथाशब्देन श्रौत उशब्द उक्तार्थः । चक्षुरादीनां जीवावश्यत्वस्य प्रत्यक्षत एव सिद्धत्वात् स्वातन्त्र्यादिलक्षण-क्रीडावान् देव एव तन्नियामको वक्तव्यः । स क इत्यर्थः । यदि नारायण एव मनआदिप्रेरकः तर्हि स किंलक्षणक इति प्रश्नाशयः । श्रुतौ **'तस्मै स होवाच'** इत्यादिपरिहारवाक्यत्वज्ञापकाभावात् **'श्रोत्रस्य श्रोत्रम्'** इत्यादिपरिहारवाक्यमिति न प्रतीयते । अतो मध्ये वक्तव्यमाह– **इति पृष्ट इति ॥** ननु यच्छ्रोत्रस्य श्रोत्रं त्वया पृष्टं तत् स उ स एवेति परिहारवाक्ये स इति कस्य परामर्शः । पूर्वं कस्याप्यप्रकृतत्वादित्यतः चतुर्मुखध्यानप्रकृत-नारायणपरामर्शोऽयमिति भावेनाऽह– **ध्यात्वेति ॥** यद्वा भगवत्स्वरूपोपदेशाय वक्ष्यमाणोपनिषत्प्रतिपाद्यगुणवद्भगवद्ध्यानलक्षणं मङ्गलं कृतं ब्रह्मणेत्याह– **ध्यात्वेति ॥ 'श्रोत्रस्य श्रोत्रम्'** इत्यादिना तत्र तत्र स्थितस्य तत्तन्नियामकत्वोक्त्या वा 'यदिदमुपासते' इत्यनेन विनियामकतया तत्तज्जीवसमीपस्थत्वोक्त्या वा येन प्राणः प्रणीयत इति सर्वनियामकप्राणनियामकत्वोक्त्या वा सर्वाधा-रत्वम् । **'अन्यदेव तद् विदितात्'** इत्यादिनाऽनुपमत्वं **'येन वागभ्युद्यते'** इत्यादिना सार्वज्ञं पूर्वोक्तरीत्या तत्तन्नियामकत्वोक्त्या वा **'ब्रह्म ह देवेभ्यो विजिग्ये'** इति सर्वदैत्यदानवजयोक्त्या वा सर्वशक्तित्वम् । **'यत्प्राणेन न प्राणिति'** इति पारतन्त्र्याभावोक्त्या तदुपलक्षितसर्वदोषवर्जितत्वं चोक्तमिति ज्ञेयम् । इदानीं 'श्रोत्रस्य श्रोत्रम्' इत्यादिपरिहारवाक्यं व्याचष्टे– **यः**

**प्राणस्येति ॥** श्रुतौ क्रमाविवक्षयोक्तावपि स्वयं मुख्यत्वक्रममनुसृत्य 'प्राणस्य प्रणेता च' इत्यादावुक्तम् । आदिपदेन श्रोत्रवाङ्मनसां ग्रहणम् । न केवल-मेतावत एव नियामकः किन्त्वन्येषां ज्ञानकर्मेन्द्रियाणामपीत्याह– **सर्वशः सर्वस्येति ॥** अनेन श्रुतौ प्रश्नपरिहारवाक्यगतं मनआदिपदमुपलक्षणपरमिति सूचितम् । यच्छब्दस्य स विष्णुरित्युत्तरेण तच्छब्देनान्वयः । **'न तत्र चक्षुर्गच्छति'** इत्यादिवाक्यं चक्षुरादिपदेन जडेन्द्रियमात्रमुच्यत इति प्रतीतिनिरासाय व्याचष्टे– **अगम्यः सर्वदेवैश्चेति ॥** श्रुत्युक्तमुपलक्षणमिति भावेन वा, **'न विद्म न विजानीमः'** इति ब्रह्माज्ञेयत्वोक्त्या तदवरसर्वदेवाज्ञेयत्वमुक्तप्राय-मेवेति भावेन वा सर्वदेवैरित्युक्तम् । **'येन प्राणः प्रणीयते'** इति वाक्यं व्याचष्टे – **प्राणादीनामिति ॥** अत्रापि श्रुत्युक्तमुपलक्षणमिति भावेन वा रुद्रादि-सर्वनियामकप्राणनियामकत्वोक्त्या तन्नियामकत्वमुक्तप्रायमेवेति भावेन वा प्राणादीनामित्यादिपदप्रयोगः । **'येन वागभ्युद्यते', येनाऽहुर्मनो मतं, येन चक्षूंषि पश्यन्ति, येन श्रोत्रमिदं श्रुतम्'** इति वाक्यजातस्य तात्पर्यमाह– **सर्ववेत्ता चेति ॥** रमादीनामपि सर्ववेत्तृत्वादाह– **सर्वशः सर्वापेक्षयेति ॥** **'अविदितादधि'** इत्युक्ताधीत्यस्यार्थमाह– **सर्वोत्तम इति ॥** देशाकालान्तरयोरन्यः सर्वोत्तमः किं नेत्याह– **सर्वत्रेति ॥** प्रथमः खण्डः ॥ १ ॥

## (श्रुत्यर्थः)[1]

**तथाचायं श्रुत्यर्थः ॥** सदाशिवो ब्रह्माणं पृच्छति– **केनेति ॥** मनः केन प्रेषितं प्रेरितं सद् इषितमिष्टं साध्वसाधु वा प्रति पतति याति मनस्तावत् करणत्वात् केनचित्प्रेर्यम् । नच जीव एव तत्प्रेरकः । मनसस्तदधीनत्वेना-दर्शनात् । अतो जीवभिन्नः कश्चित् तत्प्रेरको वाच्यः स क इति भावः । प्राणो मुख्यप्राणः केन युक्तो नियुक्तः प्रेरितः प्रैति प्रकर्षेण स्वव्यापारं करोति । नच तस्य कश्चिन्मदादिर्जीव एव प्रेरकः । तस्यास्मदादिसर्वोत्तमत्वादिति

१. यद्यपि मुद्रितपुस्तके द्वितीयखण्डभाष्यव्याख्यानानन्तरं प्रथमखण्डमन्त्रार्थः दृश्यते । तथाऽपि अध्येतॄणां सौकर्यायात्रैव निवेशितः ।

भावेनाऽह– **प्रथम इति ॥** सर्वजीवोत्तम इत्यर्थः । तव तु तत्समत्वात्, रमायाश्च परतन्त्रत्वान्न मुख्यतस्तत्प्रेरकत्वम् । मुख्यप्रेरक एव मया पृष्ट इति भावः । इमां प्रमाणप्रसिद्धां वाचं केन देवेनेषितां प्रेरितां वदन्ति विद्वांसः । उशब्दश्चशब्दार्थः । चक्षुः श्रोत्रं चेति सम्बन्धः । द्वन्द्वैकवद्भावोऽयं, भिन्नपदं वा । युनक्ति प्रेरयति । वागादीनां जीवानधीनत्वदर्शनात् कश्चिद्देवो नियामको वाच्यः । स च क इत्यर्थः । यदि मनआदीनां प्रेरको देवो नारायणस्तर्हि स किंलक्षणक इत्याशयः । अत्र मनोवाक्चक्षुःश्रोत्रशब्दैस्तद-भिमानिदेवाश्च ग्राह्याः । अत एव मुख्यप्राणप्रेरकप्रश्नो युक्तः । अन्यथेन्द्रिय-प्रेरकप्रश्नप्रस्तावेऽनिन्द्रियभूतमुख्यप्राणप्रेरकप्रश्नोऽसङ्गत इति ज्ञातव्यम् । उपलक्षणमेतत् । इतरेन्द्रियनियामकप्रश्नोऽपि द्रष्टव्यः ॥ १ ॥

एवं शिवेन पृष्टश्चतुर्मुखो नारायणं ध्यात्वा परिहारमाह– **श्रोत्रस्येति ॥** यत् श्रोत्रस्य श्रोत्रं श्रोत्रत्वप्रदं त्वया पृष्टं, यन्मनसो मनो मनस्त्वप्रदं पृष्टं, यच्च वाचो वाक्त्वप्रदं पृष्टं, यश्च प्राणस्य मुख्यप्राणस्य प्राणत्वप्रदः पृष्टः, यच्चक्षुषश्चक्षुष्ट्वप्रदं पृष्टम्, उपलक्षणमेतत् । यच्चान्येन्द्रियनियामकं पृष्टं तत् स उ स एव मम ध्यानविषयीभूतो नारायण एवेत्यर्थः । श्रोत्रादीन्द्रिय-देवतानियामको नारायण इति वेत्तुः फलमाह– **अतिमुच्येति ॥** धीरा मनो-धैर्यवन्तः **'श्रोत्रस्य श्रोत्रम्'** इत्याद्युक्तप्रकारेण नारायणं प्रेत्य प्रकर्षेण ज्ञात्वा तमपरोक्षीकृत्येति यावत् । अस्माल्लोकाच्चरमत्वेन प्रसिद्धाच्छरीरात् प्रेत्य हृदयाग्रप्रज्वलनप्रकाशितद्वारत्वादिलक्षणप्रकर्षेण गत्वा अतिमुच्य प्रारब्ध-कर्मणेति शेषः । अमृता मुक्ता भवन्तीत्यर्थः ॥ २ ॥

अस्त्वेवं श्रोत्रादिनियामको नारायणः । स किंलक्षणकः? इत्यपेक्षायां साकल्येन सर्वदेवाज्ञेयत्वं तावत् तस्य लक्षणमाह– **न तत्रेति ॥** चक्षुश्चक्षुरभिमानी देवस्तत्र नारायणविषये न गच्छति न जानातीत्यर्थः । एवमुत्तरत्रापि । उपलक्षणमेतत् । न तत्र श्रोत्रं गच्छतीत्याद्यपि ग्राह्यम् । ननु चक्षुराद्यभिमानिसूर्याद्यज्ञेयोऽपि भगवान् सर्वदेवोत्तमत्वेन त्वया ज्ञेयः

स्यादित्यत आह– न **विद्म इति** ॥ सामान्यविशेषज्ञाननिषेधार्थं वा परोक्षापरोक्षज्ञाननिषेधार्थं वाऽदरार्थं वा द्विरुक्तिः । यद्वा, सूर्यादीनां स्वतो नारायणज्ञानासम्भवेऽपि सर्वदेवोत्तम इति त्वदुपदेशेन ज्ञानं स्यादित्यत आह– **न विद्म इति** ॥ एतत् नारायणस्वरूपं यथा यथावद् अनुशिष्याद-नुशिष्यां युष्मदादिषूपदेशं कुर्या तथा न विद्म इत्यर्थः । यद्वा, त्वमपि किं सर्वात्मना न जानासि इत्यपेक्षायामाह– **यथेति** ॥ यथा लोके जन इदं गवयादिकं वस्तु एतद् गवादिसदृशमित्यनुशिष्यात् जानीयात् तथा पर-मात्माख्यं वस्तु एतत्सदृशमिति वयं न विद्म इत्यर्थः ॥ ३ ॥

तर्हि कथं जानीथेत्यपेक्षायां कार्यकारणात्मकजगद्विलक्षणत्वेनैव जानीम इति भावेनाऽह– **अन्यदेवेति** ॥ तत् परं ब्रह्म विदिताद् व्यक्तात् कार्यादन्यदेव विलक्षणमेव नतु तत्सदृशम् । न केवलमेतावत्, किन्तु अविदि-तादथो अव्यक्तात् प्रकृत्यादिकारणादपि अन्यदेवेत्यर्थः । ननु कार्यकारणवैल-क्षण्योक्त्या कथं माहात्म्यविशेषलाभः ? नहि कार्यवैलक्षण्यं कारणे, कारण-वैलक्षण्यं च कार्येऽस्तीत्येतावता तत्र माहात्म्यविशेषलाभ इति चेन्न । कार्य-कारणवैलक्षण्यं हि तद्विरुद्धलक्षणवत्त्वम् । तच्च सर्वोत्तमत्वमेवेति तल्लाभसम्भव इति भावेनाऽह– **अधीति** ॥ विदितादविदिताच्च सर्वस्मादधि अधिकत्वेन वर्तमानमित्यर्थः । अनेनानुपमत्वं सर्वोत्तमत्वं चेति लक्षणान्तरमुक्तं भवति । इदं न केवलं स्वकल्पितमित्याह– **इतीति** ॥ ये व्यासादयो नोऽस्मभ्यं तद् ब्रह्मस्वरूपं व्याचचक्षिरे व्याख्यातवन्तः तेषां पूर्वेषां वचनमिति शुश्रुमे-त्यर्थः । पूर्वेषां सकाशादिति वा ॥ ४ ॥

लक्षणान्तराण्यपि वदन् लक्षणोक्तेः प्रयोजनमाह– **यद्वाचेत्यादिना** ॥ यद्वाचा वागिन्द्रियेणानभ्युदितं सम्यगुदितं न भवति । यन्मनसा न मन्यते न ज्ञायते पुरुषेण न पश्यति न शृणोति पुरुषः । उपलक्षणमेतत् । अनेनें-न्द्रियागोचरत्वलक्षणमुक्तं भवति । **'यद्वाचाऽनभ्युदितम्'** इत्यनेन साकल्येन सर्ववेदाप्रतिपाद्यत्वं चोच्यते । एतेन साकल्येन सर्वदेवाज्ञेयत्वमपि इन्द्रिया-

गोचरत्वेनोपपादितं भवति । यथा देवाः परमात्मस्वरूपं सम्यङ् न जानन्तीत्यसर्वज्ञास्तथा परमात्माऽपि किं नेत्याह– **येन वागभ्युद्यत इत्यादि-वाक्यचतुष्टयेन ॥** वाग् वागिन्द्रियविषयभूतं शब्दजातं येनानूद्यते । वाक्शब्दो वेदादिसर्ववाक्समूहवाचको वा ॥ ५ ॥

मनो मनोविषयीभूतं पदार्थजातं येन मतं मनोविषयीकृतमाहुर्विद्वांसः ॥६॥

चक्षूंषि चक्षुर्विषयभूतानि वस्तूनि । येन पश्यन्ति दृश्यन्ते ॥ ७ ॥

इदं प्रसिद्धं श्रोत्रं श्रोत्रविषयीभूतं वस्तु येन श्रुतं श्रोत्रेन्द्रियविषयीकृतं, तदेव ब्रह्म विद्धीत्यर्थः । अनेन सर्वज्ञत्वं लक्षणमुक्तं भवति । एवकारव्यावर्त्य-माह– **नेदमिति ॥** तद् ब्रह्म इदं जीवस्वरूपं न विद्धि तथाज्ञानस्य मिथ्या-ज्ञानत्वेनानर्थहेतुत्वादिति भावः । अनेन जीवभेदज्ञापनमेव लक्षणोक्तिप्रयोजन-मुक्तं भवति । यदि जीवस्वरूपं न ब्रह्म तर्हि किं तद् इत्यत आह– **यदिदमिति ॥** यदिदं प्रसिद्धम् उप त्वदुपलक्षितजीवस्य समीपे आसते विनियामकतया आस्ते तदेव ब्रह्मेत्यर्थः ॥ ८ ॥

यत् प्राणेन प्रेरितं सत् न प्राणिति न चेष्टते । किन्तु स्वत एवेत्यनेन पारतन्त्र्योपलक्षितसर्वदोषाभावरूपं लक्षणान्तरमुक्तं भवति । येन प्राणो मुख्यप्राणः प्रणीयते सम्यङ् नीयत इति सकलनियामकप्राणनियामकत्वोक्त्या सर्वनियामकत्वमेव लक्षणमुक्तं भवति ॥

**प्रथमः खण्डः ॥ १ ॥**

—०—

## अथ द्वितीयः खण्डः

*(ब्रह्मणः साकल्येन अज्ञेयत्वप्रतिपादनम्)*

यदि मन्यसे सुवेदेति दहरमेवापि[1] नूनं
त्वं वेत्थ ब्रह्मणो रूपम्।
यदस्य त्वं यदस्य देवेष्वथ नु
मीमांस्यमेव ते मन्ये(ऽ) विदितम् ॥ १ ॥

नाहमन्ये सुवेदेति नो न वेदेति वेद च।
यो नस्तद् वेद तद् वेद नो न वेदेति वेद च ॥ २ ॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥

*(साकल्येनाज्ञेयस्यापि ब्रह्मणो जीवयोग्यतानुसारेण ज्ञेयत्वकथनम्)*

प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।
आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ।

इह चेदवेदीदथ सत्यमस्ति
नचेदिहावेदीन्महती विनष्टिः ।
भूतेषुभूतेषु विचिन्त्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ५ ॥

इति द्वितीयः खण्डः



---

१. 'दह्लमेवापि'

(भाष्यम्)

यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः ।
सर्वात्मना विजानामीति तु यस्य मतं भवेत् ॥

तस्याज्ञातः स भगवान् यो नैवं मन्यते सदा ।
ज्ञातस्तस्य तथाऽस्यैव निःशेषमननं कृतम् ॥

इति यो मन्यते नास्य मतः स पुरुषोत्तमः ।
नातिवेद्यो नचावेद्यस्तस्मात् स परमेश्वरः ॥ * ॥

नेदं जीवस्वरूपं तद् ब्रह्म विष्ण्वाख्यमव्ययम् ।
किन्तु यत् ते समीपस्थमास ते विनियामकम् ॥

तदेव ब्रह्म विद्धि त्वं विष्ण्वाख्यं परमव्ययम् ।
नियामकं तद् देवानां मर्त्यानां किमुतोत्तमम् ॥

तत्प्रसादं विना जीवे मन्तव्या न प्रवृत्तयः ।
किमु जीवस्य तद्भावो न मन्तव्य इतीर्यते ॥ * ॥

॥ इति द्वितीयखण्डभाष्यम् ॥

—०—

(व्यासतीर्थीयम्)

तद्वाक्यजातस्य तात्पर्यमाह– **यं सम्यगिति** ॥ ब्रह्म साकल्येन ज्ञातुमशक्यमित्युक्तमुपपादयति– **यदीति** ॥ यदि त्वं ब्रह्म अहं सुवेदेति मन्यसे तर्हि त्वमपि नूनं दहरमेव ब्रह्मणो रूपं वेत्थ ब्रह्मणोऽनन्तत्वादित्यर्थः । यद् यस्माद् दहरमेव वेत्थ । अथ तस्मात् त्वं त्वयि देवेषु चास्य ब्रह्मणो यद्रूपं तत्ते मीमांस्यमेव । अस्तु त्वदतिरिक्तः सर्वोऽपि जनः ब्रह्म न सम्यग् वेदेति त्वं तु सम्यग् वेत्थेत्यत आह– **मन्य इति** ॥ मामन्ये अयं ब्रह्म सु सम्यग् वेदेति वदन्ति अहं तु ब्रह्म विदितं न मन्य इति योजना ।

१. 'विजानामीति यस्य'

तर्हि त्वमपि ब्रह्म न वेत्थ किमित्यत आह– **नो न वेदेति** ।। न वेदेति नो किन्तु वेद चेति । ब्रह्मणः साकल्येनाज्ञेयत्वमुपपाद्य उपसंहरति– **यो न इत्यादिना** ।। नोऽस्माकं मध्ये यस्तु ब्रह्म अहं वेदेति वदति स तन्नो वेद । तत् कुतः ? परिच्छिन्नत्ववेदनात् । अहं न वेदेति यो वदति असौ वेद च । कुतः ? ब्रह्मणोऽपरिच्छिन्नत्वज्ञानात् । यस्य ब्रह्माविदितमिति मतं तस्य ब्रह्म विदितम् । उक्तहेतोः । यस्य ब्रह्म मतमिति मतं स न वेद । वयं ब्रह्म सम्यगपरोक्षतो विद्म इति विजानतामविज्ञातम् । उक्त-हेतोः । उक्तवैपरीत्येन विजानतां विज्ञातम् उक्तहेतोः । अत्र श्रवणमनना-परोक्षज्ञानानां साकल्यागोचरत्वमुच्यते ब्रह्मणः । अप्रतीतेः 'यो नस्तद्वेद' इत्यादि व्याचष्टे– **सर्वात्मनेत्यादिना** ।। 'यो नस्तद्वेद ' इत्यादेस्तात्पर्यमाह– **नातिवेद्य इति** ।। नेदं यदिदमित्येतदन्तरितमप्रतीतेर्व्याचष्टे– **नेदमित्या-दिना** ।। जीवब्रह्मणोरभेदाभावे स्वयं मूलाभिमतां नियामकत्वादिलक्षणाम् उपपत्तिमाह– **नेदमित्यादिना** ।। अस्तु ब्रह्म साकल्येनागोचर इति । इतरेषां कथं तेनाभीष्टसिद्धिरित्यत आह– **प्रतिबोधेति** ।। ब्रह्म श्रुतं मतं प्रतिबोधविदितं चेदमृतत्वं हि विन्दत इत्यर्थः । ज्ञानेनामृतत्वं विन्दत इत्युक्तम् । तत्र किं ज्ञानेन सर्वाभीष्टसिद्धिरित्यतो ज्ञानोत्तरकर्मणा चेत्याह– **आत्मनेति** ।। आत्मना ज्ञानोत्तरकालीनयज्ञादिप्रयत्नेन वीर्यमानन्दातिशयं विन्दते । विद्ययाऽ-मृतम् अविद्यानिवृत्तिमिति । अस्तु ब्रह्मज्ञानं मोक्षसाधनम् । तत्कालान्तरे सम्पादयिष्यत इत्यत आह– **इहेति** ।। अथ तर्हि सत्यं भद्रमस्ति । भद्रं विनष्टिभावाद् धीरा भूतेषु भूतेष्वित्यादि योज्यम् ।।

**।। द्वितीयः खण्डः ।। २ ।।**

## (प्रकाशिका)

'सर्वात्मना विजानामि' इत्यत्र सर्वान् विजानामि विशेषतो जानामि अपरोक्षतो जानामीत्यर्थः । तस्य स भगवानज्ञातः सम्यगपरोक्षतो न ज्ञात इत्यर्थः । असङ्ख्यातगुणस्य ब्रह्मणः सामस्त्येन ज्ञानायोगादिति भावः । य

एवं सर्वात्मना विजानामीति न मन्यते तेन स भगवान् परोक्षतो ज्ञात एव । सामस्त्येनाज्ञातस्य हरेर्यथायोग्यं ज्ञानस्यैवानुमतत्वात् । यथाऽपरोक्षज्ञाने विभागोऽस्ति तथा मननाख्यपरोक्षज्ञानेऽपि विभागोऽस्तीत्याह– **तथेति** ।। पूर्ववदेव योजना । तस्मात् पूवोक्तन्यायान्नातिवेद्यः । अतिशयेन वेद्योऽतिवेद्यः, सामस्त्येन वेद्यो नेत्यर्थः । अवेद्यः सर्वथा शशविषाणवदवेद्यश्च अवेद्योऽपि न, किन्तु स्वस्वयोग्यतानुसारेण वेद्य इति भावः ।।

**'न विद्म न विजानीमः'** (ख.१) इत्युपनिषद्वाक्यस्य एतद् ब्रह्म यथाऽनुशिष्याज्जगन्नियमयेत् एतद् [1]आन्तं विद्म विदामेत्याशां च न कुर्मः । 'आशिषि लिङ्लोटौ' (पा.अष्टा.३.३.१७३) इत्याशिषि लोटोऽनुशासनात् । अत एव न विजानीमः तादृशं ज्ञानं वर्तमानमप्यस्माकं नास्तीत्यर्थः । वर्तमाने हि लट् । अतो न पौनरुक्त्यम् ।।

**'नेदं यदिदमुपास ते'** (ख.१) इति बहुशोऽभ्यस्तवाक्यस्यार्थमाह– **नेदमिति** ।। हे जीव विष्ण्वाख्यं तद् ब्रह्म इदं परिदृश्यमानं जीवाख्यं तव स्वरूपं न । तथा सति जीवस्यैव विष्णुत्वेन सर्वेन्द्रियप्रेरकत्वसम्भवात् 'केनेषितम्' इत्यादिप्रश्नस्यासङ्गतिप्रसङ्गः । यत्ते उप समीपे हृदीत्यर्थः, आस ते नियामकतया आस्ते । जीवानां हृदि जडगगनस्यापि सत्त्वेन तस्य च ब्रह्मत्वायोगाच्छ्रुतिः नियामकत्वमभिप्रैति । अत एवोक्तं भाष्ये– 'ते विनियामकम्' इति । यदिदमुपासते लोकाः इदं ब्रह्म न, किन्तु तदेव ब्रह्मेति व्याख्याने तच्छब्देन परामर्शयोग्ययच्छब्दोदितार्थस्य पूर्वमभावादुत्तरत्र चाभावाद् वाक्यमपरिपूर्णं स्यात् । 'साकाङ्क्षं वाक्यमनर्थकम्' इति हि प्राचां वाच इत्यान्तरानुपपत्तिः 'अथातो ब्रह्मजिज्ञासा' इति जिज्ञासारूपोपास्तिविषयत्वस्य ब्रह्मण्येव सूत्रकृता विधानाद् बाह्यानुपपत्तिश्चेत्युभयतःपाशा रज्जुः परस्य । न च तत्रापि वेदान्तानामेवोपास्यत्वं न ब्रह्मण इति वाच्यम् । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । **'येन चक्षूंषि पश्यति'** (ख.१) इत्यत्र अन्यत्रादृष्टम-

१. अत्र **'आन्तम्'** इत्यधिकमिति भाति । तत्स्थाने 'न' इति पदं स्यात् ।

तीन्द्रियेन्द्रियद्रष्टृत्वं कथं भगवत इति चोद्यं चक्षूंषीति विलक्षणप्रयोगेन श्रुतिरेव दूरीचकार । येन परमात्मना तत्कृपयेत्यर्थः । रमाब्रह्मादियोगिनां समूहोऽपि चक्षूंषि पश्यति तस्य दर्शने शक्तिः किं वाच्येति हेतुमुपलक्षणतयोपपाद्य तस्मात् तेन चक्षूंषि दृश्यत इति साध्यमपि श्रुतिः सूचयतीत्यर्थः ।

**'दहरमेवापि नूनम्'** इत्यत्र दहरमल्पमित्यर्थः । **'यदस्य त्वम्'** इत्यत्र त्वं त्वयि अस्य परमात्मनो यद्रूपमस्वतन्त्रत्वदिन्द्रियप्रेरकदेवेष्वप्यस्य परमात्मनो यद्रूपं तत्ते नु मीमांस्यमेव विचार्यमेव । देवेष्विति सप्तमीपङ्क्तिपतितत्वात् त्वम्पदमपि सप्तम्यन्तमिति भावः । अन्यथा प्रायपाठविरोधः स्यात् । 'यो नस्तद्वेद' इत्यत्र नोऽस्माकं ज्ञानिनां मध्ये यस्तद् ब्रह्म वेदेति वेद स तद् ब्रह्म नो वेदेति वेदपदस्याऽवृत्त्या योजना । न वेदेति यो वेद सः तद् ब्रह्म वेद चेति पदानां परस्परमन्वयो ज्ञेयः ॥ २ ॥

**॥ इति द्वितीयखण्डभाष्यप्रकाशिका ॥**

## (वेदेशीयम्)

**'यदि मन्यसे सुवेदेति'** इत्यारभ्य **'नाहमन्ये सुवेद'** इत्यन्तवाक्ये रुद्रब्रह्मभ्यामेव साकल्येनाज्ञेयत्वं विष्णोरुक्तं न सर्वैरित्यतस्तत्कैमुत्यसिद्धमिति भावेन तत्तात्पर्यमाह– **यमिति** ॥ सम्यगित्यस्य विवरणम्– **निरवशेषत** इति । **'यो नस्तद्वेद तद्वेद नो'** इति वाक्यमल्पमात्रभगवत्स्वरूपज्ञानिनोऽपि अज्ञानित्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे– **सर्वात्मनेति** ॥ तस्य तेन अज्ञातः, तस्य भगवत्परिच्छिन्नत्वज्ञानित्वादिति भावः । 'न वेदेति वेद च' इति वाक्यमज्ञानिनो ज्ञानित्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे– **यो नैवमिति** ॥ एवं सर्वात्मना विजानामीति । तस्य भगवदपरिच्छिन्नत्वज्ञानित्वादिति भावः । यद्वा **'अविज्ञातं विजानतां विज्ञातमविजानताम्'** इति वाक्यं व्याचष्टे– **सर्वात्मनेत्यादिना** ॥ 'मतं यस्य न वेद सः' इत्येतत् पूर्वोक्तशङ्कापरिहाराय व्याचष्टे– **तथाऽस्यैवेति** ॥ अस्तु 'सर्वात्मना विजानामि'

इत्यादिज्ञान्यज्ञानी । एवं न जानामीत्यादिज्ञानी तु ज्ञानी, ततः किमित्यत आह– **नेति** ॥ यस्मात् तथा ज्ञान्यज्ञानी तस्मात् परमेश्वरो नातिवेद्यः साकल्येन ज्ञातुमशक्य इति सिद्धम् । यस्मात् तथा ज्ञानी सम्यग् ज्ञानी तस्मात् सर्वात्मनाऽवेद्योऽपि न, किन्तु किञ्चिद् वेद्यश्चेति सिद्धमित्यर्थः । अप्रतीतेः 'नेदं यदिदमुपासते' इति वाक्यं व्याचष्टे– **नेदमिति** ॥ इदमित्यनुवादेन जीवस्वरूपमिति व्याख्यानम् । तद् ब्रह्मेत्युक्त्या श्रुतौ नेदमित्यत्र तद् ब्रह्मेत्यनुवर्तनीयमित्युक्तं भवति । किन्त्विति शेषः । उपेत्यस्यार्थः– **समीपस्थमिति । आसते** आस्ते । ननु हृदयावकाशादेरपि समीपस्थत्वात् कथं तद् ब्रह्म स्यादित्यत आह– **विनियामकमिति** ॥ तत्त्वाभिमानिदेवताव्यवच्छेदाय विशेषार्थकवीत्युपसर्गः । **'तदेव ब्रह्म'** इत्येतत् पराभिमतनिर्गुणब्रह्मपरमिति प्रतीतिनिरासायाऽह– **विष्ण्वाख्यमिति** ॥ ब्रह्मणो जीवस्वरूपत्वाभावः कुत इति चेत्; **'श्रोत्रस्य श्रोत्रम्'** इत्यादिना देवनियामकत्वस्योक्तत्वात् । नहि नियम्यनियामकयोरभेदः सम्भवति । तद्भावस्य भेदव्याप्तत्वादिति भावेनाऽह – **नियामकमिति** ॥ तर्हि देवैरेव भेदः सिद्ध्यतु, नतु मर्त्यैः, तन्नियामकत्व-स्यानुक्तत्वादित्यत आह– **मर्त्यानामिति** ॥ नियामकमिति वर्तते । यदाऽमराणां देवानां नियामकतया ब्रह्मोक्तं तदा मर्त्यनियामकत्वमुक्तप्रायमेवेति भावः । अधीत्युक्तयुक्त्यन्तरमाह– **उत्तममिति** ॥ 'आत्मना विन्दते वीर्यम्' इत्यादिवाक्याभिप्रेतयुक्त्यन्तरमाह– **तत्प्रसादमिति** ॥ **प्रवृत्तयो** मोक्षसाधनानुष्ठानरूपाः । प्रसादं प्रेरणमिति वा ॥

**॥ द्वितीयः खण्डः ॥ २ ॥**

## (श्रुत्यर्थः)

ननु यदुक्तं नो मन इति मनोभिमानिदेवताऽज्ञेयं ब्रह्मेति तदयुक्तम् । तदभिमानीन्द्राद्यज्ञेयत्वेऽपि मया सम्यग् ज्ञातुं शक्यत्वादिति रुद्रस्याऽशङ्कां परिहरति– **यदीति** ॥ हे रुद्र त्वं यदि ब्रह्माहं सुवेदेति मन्यसे तर्हि त्वमपि इतरवद् ब्रह्मणो रूपं स्वरूपं नूनं दहरमल्पमेव वेत्थ ब्रह्मस्वरूपमात्रज्ञानित्वेऽ-

पि तस्य साकल्येनाज्ञेयत्वाज्ञानात्, तस्यापरिच्छिन्नत्वात्, तव च तत्परिच्छिन्नत्ववेत्तृत्वाद् वेति भावः । यद्यस्मात् त्वं दहरमल्पमेव वेत्थ जानीयाः अथ तस्माद् अस्य ब्रह्मणो यद्रूपं त्वं, प्रथमा सप्तम्यर्थे, त्वयि वर्तते । अस्य ब्रह्मणो यद्रूपं देवेषु वर्तते तत् ते त्वया नु इदानीमपि मीमांस्यमेव ।। १ ।।

तर्ह्यस्तु त्वदतिरिक्तः सर्वोऽपि जनो ब्रह्म न सम्यग् वेदेति । त्वं तु ब्रह्म सम्यग् वेत्थ तथा व्यवहारात् । तथाच न देवाज्ञेयं ब्रह्मेत्यत आह– **मन्य इति ।।** अहं मया ब्रह्म विदितं न मन्य इति सम्बन्धः । तर्हि कथं व्यवहार इत्यत अज्ञानमूलकोऽयं व्यवहार इति भावेनाऽह– **अहमन्ये सुवेदेतीति ।।** अन्ये अज्ञानिन एव जना अहं ब्रह्म सुवेदेति वदन्तीत्यर्थः । तर्हि त्वया ब्रह्म किं सर्वात्मनाऽविदितं नेत्याह– **नो इति ।।** सर्वात्मना ब्रह्म न वेदेति नो, किन्तु अल्पं वेद च । ननु यदि त्वं ब्रह्म सम्यङ् न वेत्थ तर्हि अज्ञानी, स्या इत्यतो न ममाज्ञानित्वं, किन्तु ज्ञानित्वमेव । मया ब्रह्म सम्यग् विदितमिति जानत एवाज्ञानित्वात् । मया ब्रह्म सम्यङ् न विदितमिति जानतस्तु ज्ञानित्वादिति भावेन साकल्येनाज्ञेयत्वं किञ्चिद् ज्ञेयत्वं चोपपादयति– **य इति ।।** नः अस्माकं मध्ये यः पुरुषः अहं तद् ब्रह्म सम्यग् वेदेति वेद स तद् ब्रह्म नो वेद न जानाति । तस्य परिच्छिन्नत्वज्ञानात् । यश्चाहं तद् ब्रह्म सम्यङ् न वेदेति वेद, स ब्रह्मस्वरूपं वेद । तस्यापरिच्छिन्नत्वज्ञानात् । यस्य येन मया ब्रह्म अमतं सम्यङ्मननविषयीकृतं न भवतीति मतं मननविषयीकृतम् । तस्य तेन ब्रह्म मतं मननविषयीकृतम् । ब्रह्मापरिच्छिन्नत्वमननात् । यस्य येन मया ब्रह्म सम्यक् मतमिति मतं ज्ञातं स न वेद । तस्य परिच्छिन्नत्वज्ञानात् ।। २ ।।

विजानतां मया ब्रह्म सम्यग् ध्यानविषयीकृतमिति ध्यायतां ध्यायद्भिरविज्ञातम् । अविजानतां मया ब्रह्म विशेषेण ध्यातं न भवतीति जानतां ध्यायतां ध्यायद्भिर्विज्ञातं विशेषेण ध्यातम् । अस्तु साकल्येनाज्ञेयं ब्रह्मेतरेषां

किं तत इत्यत आह– **प्रतिबोधेति ॥** येन ब्रह्मोक्तप्रकारेण प्रतिबोधविदितम् अपरोक्षज्ञानविषयीकृतं स अमृतत्वं विन्दत इत्यर्थः। यदि ब्रह्म प्रतिबोधविदितं तर्हि अमृतत्वं विन्दते वेदयति प्रापयतीति वाऽर्थः । प्रतिबोधः कथं स्यादित्यत आह– **मतमिति ॥** उपलक्षणमेतत् । ननु **'अपाम सोममममृता अभूम'** इत्यादिश्रुतौ कर्मणोऽमृतत्वसाधनत्वेनोक्तत्वात् कथं ज्ञानस्य मोक्षसाधनत्वमिति चेन्न । प्रवृत्तकर्मणो मोक्षसाधनत्वायोगेन निवृत्तकर्मण एव तत्साधनत्वं वाच्यम् । तत्र किं ज्ञानपूर्वं कृतस्य तस्य मोक्षसाधनत्वं ज्ञानोत्तरं कृतस्य वा । नाऽद्यः । तस्य ज्ञानजन्मन्येवोपयोगात् । द्वितीये त्वाह– **आत्मनेति ॥** ज्ञानोत्तरकृतकर्मजन्यात्मप्रसादेन वीर्यं मुक्तावानन्दातिशयं विन्दते । अमृतम् अमृतत्वम् अविद्यानिवृत्तिरूपां मुक्तिं तु विद्ययैव विन्दत इत्यर्थः ॥ ३ ॥

अस्त्वेवं ब्रह्मज्ञानं मोक्षसाधनं, तत् कालान्तरे सम्पादयिष्यत इत्यत आह– **इहेति ॥** इह मदादिरूपे सद्गुरौ प्राप्ते सति चेद् यदि भवदादिरवेदीत् ब्रह्मस्वरूपम् अथ तर्हि सत्यं भद्रं मोक्षादिरूपम् अस्ति सद्गुरूपदेशजन्यज्ञानस्यैव मोक्षसाधनत्वात् । चेत् यदि इह ब्रह्मस्वरूपं नावेदीत् । तर्हि महती विनष्टिरन्धन्तमःप्राप्तिरूपा ।

**'असुराणां तमः प्राप्तिस्तदा नियमतो भवेत् ।**
**यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत्परम्'** इति वचनात् ।

एवं सद्गुरूपदेशोल्लङ्घनेऽनर्थप्राप्तिसद्भावाद् धीरा धीमन्तो भूतेषु सर्वभूतेषु मध्ये भूतेषु गुरुत्वेन प्राप्तेषु सत्सु विचिन्त्यायं मम समग्रानुग्रहपूर्वकं ब्रह्मोपदेक्ष्यतीति निश्चित्य अस्मात् समग्रानुग्रहकर्तृत्वेन निश्चितात् लोकात् लोक्यतेऽनेनेति लोको गुरुस्तस्मात् तदुपदेशेनेति यावत् । प्रेत्य सम्यक् पर-ब्रह्मस्वरूपं ज्ञात्वा स्वयमपरोक्षीकृत्य च । अस्माल्लोकात् चरमत्वेन निश्चितात् शरीरात् प्रेत्यामृता भवन्तीत्यर्थ इति ॥ ४ ॥

**॥ इति द्वितीयः खण्डः ॥**

## अथ तृतीयः खण्डः

*(ब्रह्मणोऽज्ञेयत्वोपपादिकाऽऽख्यायिका)*

ब्रह्म ह देवेभ्यो विजिग्ये। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति तद्धैषां विजज्ञौ ॥ १ ॥ तेभ्यो ह प्रादुर्बभूव। तन्न व्यजानत। किमिदं यक्षमिति। तेऽग्निमब्रुवन्। जातवेद एतद् विजानीहि किमेतद् यक्षमिति। तथेति। तदभ्यद्रवत्। तमभ्यवदत् कोऽसीति। अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति। तस्मिंस्त्वयि किं वीर्यमित्यपि। इदं सर्वं दहेयं यदिदं पृथिव्यामिति। तस्मै तृणं निदधावेतद् दहेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाक दग्धुम्। स तत एव निववृते। नैतदशकं विज्ञातुं यदेतद् यक्षमिति ॥ २ ॥ अथ वायुमब्रुवन्। वायवेतद् विजानीहि किमेतद् यक्षमिति। तथेति। तदभ्यद्रवत्। तमभ्यवदत् कोऽसीति। वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति। तस्मिंस्त्वयि किं वीर्यमित्यपि। इदं सर्वमाददीयं यदिदं पृथिव्यामिति। तस्मै तृणं निदधावेतदादत्स्वेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाकाऽदातुम्। स तत एव निववृते नैतदशकं विज्ञातुं यदेतद् यक्षमिति। अथेन्द्रमब्रुवन्। मघवन्नेतद् विजानीहि किमेतद्

यक्षमिति । तथेति तदभ्यद्रवत् । तस्मात् तिरोदधे । स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् । तां होवाच किमेतद् यक्षमिति ॥ ३ ॥

इति तृतीयः खण्डः

—०—

(भाष्यम्)

इत्यत्राऽऽख्यायिकां वच्मि शृणु तां त्वं महेश्वर ।
स्थित्वा देवेषु तद् ब्रह्म व्यजयद् दैत्यदानवान् ॥
देवेभ्योऽर्थाय विजयं ते[1] देवा मेनिरे स्वकम् ।
आविष्टा असुरैस्तेषां प्रबोधाय जनार्दनः ॥
यक्षरूपः प्रादुरभूदुमाशिवसमन्वितः ।
ब्रह्मणा चापि सहित एतेभ्योऽपि परो ह्यहम् ॥
'एतेऽपि मे भृत्यभूताः परिवार्य व्यवस्थिताः ।
इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः ।
यूयमेतानपि ज्ञातुमशक्ताः किमु मामिति ॥ * ॥
तज्ज्ञानार्थं हुताशश्च नासिक्यो वायुरेव च ।
इन्द्रश्च क्रमशो जग्मुस्तं ज्ञातुं नैव चाशकन् ॥
तत्रेन्द्रोऽधिकबुद्धित्वात् पृच्छतीति जनार्दनः ।
मत्तः शिवाद् ब्रह्मणश्च श्रोतुं नैवापि शक्तिमान् ॥
इति ज्ञापयितुं तत्र नादृश्यत स केशवः ।
एषैव ज्ञानदाने ते योग्योमेति व्यदर्शयत् ॥ * ॥

॥ इति तृतीयखण्डभाष्यम् ॥

—०—

१. 'तं देवा मेनिरे स्वयम्' ह

## (व्यासतीर्थीयम्)

ब्रह्मादृश्यमत्यद्भुतमित्युक्तम् । तत्रार्थे काञ्चनाऽऽख्यायिकामाह– **ब्रह्म हेत्यादिना** ॥ तत् तेषामहङ्कारं तेभ्यो ह प्रादुर्बभूव । ब्रह्मादिसहित-मिति शेषः । तद्वाक्यजातं व्याकरोति– **इत्यत्रेत्यादिना** ॥ ब्रह्मादिभिः सहाऽगमनस्य जिज्ञापयिषितं प्रयोजनमाह– **एतेभ्योऽपीति** ॥ प्रयोजनान्तरमाह– **यूयमिति** ॥ इन्द्रे समागच्छति किमर्थं तिरोदधे ब्रह्मेत्यतस्तस्य प्रयोजनमाह– **तत्रेति** ॥ पृच्छतु किमशक्यमित्यत आह– **मत्त इति** ॥ दैत्यदूषितत्वान्न शक्तिमान् । उमास्थापने प्रयोजनमाह– **एषेति** ॥

**॥ इति तृतीयः खण्डः ॥ ३ ॥**

## (प्रकाशिका)

**'ब्रह्म ह देवेभ्यो विजिग्ये'** इत्यत्र देवेभ्य इति चतुर्थी । देवानामर्थ इत्यर्थः । **'तद्धैषाम्'** इत्यत्र तत् त ऐक्षन्तेत्युक्तमस्माकमेवायं महिमेतीक्षण-मर्थः । **'तेभ्यो ह प्रादुर्बभूव'** इत्यत्र तेभ्य इति चतुर्थी । देवानां प्रयोजनाये-त्यर्थः । **'किं वीर्यमित्यपि'** इत्यत्र किं वीर्यमित्यपीत्यप्यभ्यवददिति पूर्वेणाऽन्वय इति ज्ञेयम् । **'तत एव निववृते'** इत्यत्र ततस्तदुक्तकार्यकरणासामर्थ्यादेव निववृत इत्यर्थः । 'तस्मात्तिरोदधे' इत्यत्र यस्मात् त्वं कोऽसीति मां प्रत्येव प्रश्नकरणकौशलवानिन्द्र आजगाम, असुराविष्टमनस्कं प्रति मयैव प्रतिवक्तुमनुचितं तस्माद्धेतोरेव तिरोदध इत्यर्थः । **'स्त्रियम् उमां ताम्'** इत्यस्य पार्वत्या इन्द्रं प्रति साक्षाद् गुरुत्वात् त्वमेव तत्त्वं ब्रूहीति भगवताऽऽज्ञप्तां स्त्रियमित्यर्थः । साक्षाद्गुरुश्च साक्षान्माता अप्रक्षालितमलं पुत्रमिव शिष्ये किञ्चिदवद्यमस्ति चेत्तमनुगृह्णीयादिति लोकन्यायः ॥ ३ ॥

**॥ इति तृतीयखण्डभाष्यप्रकाशिका ॥**

## (वेदेशीयम्)

**अथ भाष्यार्थः–** इदानीं **'ब्रह्म ह देवेभ्यो विजिग्ये'** इत्यादिकं प्रकृतासङ्गतं किमर्थमुच्यत इत्याशङ्कापरिहाराय तस्य सङ्गतिं करोति–

**इत्यत्रेति** ।। ब्रह्मणः साकल्येन देवाज्ञेयत्वे । इदानीं तद्वाक्यं व्याचष्टे – **स्थित्वेति** ।। यदि ब्रह्म रामकृष्णाद्यवताररूपेण दैत्यदानवानजयत् तदा तज्जये कथं देवानां स्वकीयत्वभ्रमः स्याद् विशेषदर्शनसत्त्वादित्यत उक्तम्– **स्थित्वा देवेष्विति** ।। दैत्यदानवानिति शेषोक्तिः । देवेभ्य इत्येतत् प्रश्नमीति भ्रमनिरासाय तदनूद्य विभक्त्यर्थमाह– **देवेभ्योऽर्थायेति** ।। अनेन तादर्थ्ये चतुर्थीत्युक्तं भवति । अथ 'तस्य ह ब्रह्मणः' इत्यारभ्य 'अयं महिमा' इत्यन्तवाक्यं व्याचष्टे– **विजयं तमिति** ।। ब्रह्मज्ञानिनां देवानामेवं भ्रमः कुतः? इत्यत आह– **आविष्टा इति** ।। **'तेभ्यो ह प्रादुर्बभूव'** इति वाक्यं व्याचष्टे– **तेषामिति** ।। **'किमिदं यक्षमिति'** इत्याद्युत्तरवाक्यानुसारेण यक्षरूप इत्युक्तम् । किं सर्वेषामपि देवानां भ्रमः? नेति भावेनाऽह– **उमेति** ।। एवशब्द इन्द्रादिव्युदासाय । अत्र यद्यपि 'तस्मिन्नेवाऽकाशे स्त्रियमाजगाम' इत्युत्तर-वाक्यपर्यालोचनया उमासहित एव प्रादुरभूदिति ज्ञायते । तेन चोमाया एव नैतादृशभ्रमवत्त्वमिति गम्यते । तथाऽपि उमायास्तादृशभ्रमाभावे तदधिकस्य शिवस्य ततोऽधिकस्य ब्रह्मणश्च सुतरामेवंविधभ्रमाभावः सिद्ध इति भावेन शिवसमन्वितो ब्रह्मणा चैव सहित इत्युक्तम् । ननूमादीनां तादृशभ्रमाभावेऽपि तैः सह प्रादुर्भावे किं कारणम् ? नचेन्द्रोपदेशार्थं तैः सह प्रादुर्भावः । तथाऽपि रुद्रब्रह्मसाहित्यस्य व्यर्थत्वाद् इत्याशङ्कां परिहरति–**एतेभ्योऽपीति** ।। यदाऽहमेतेभ्यो भवदुत्तमेभ्योऽपि पर उत्तमः । किमु भवद्भ्यः । युष्मद-धिका एतेऽपि मे भृत्यभूताः, किमु यूयम् । तथा च मदीय एवायं विजय इति न युष्माभिस्तथा भ्रमः कार्य इति ज्ञापयितुं तैरपि सहोपागत इत्यर्थः । प्रयोजनान्तरमाह– **यूयमिति** ।। 'इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः' इति पूर्वेण सम्बन्धः । तेऽग्निमब्रुवन्, अथ वायुमब्रुवन्, अथ हेन्द्रमब्रुवन् इति प्रकरणत्रयस्य तात्पर्यमाह–**तज्ज्ञानार्थमिति** ।। यक्षरूपब्रह्मज्ञानार्थम् । इन्द्रश्चेत्येत एवेति एवशब्दसम्बन्धः । ननु **'तस्मात् तिरोदधे'** इति इन्द्रागमने ब्रह्मतिरोभाव उक्तः । तत्र किं कारणमित्यत आह–**तत्रेति** ।। तेषु मध्य

इत्यर्थः । पृच्छतीति नादृश्यतेति सम्बन्धः । पृच्छतु को दोषः स्वस्य स्वोपदेशासामर्थ्याभावादित्यत आह– **मत्त इति** ॥ तर्हि शिवब्रह्मभ्यां ब्रह्मस्वरूपश्रवणं स्यादित्यत आह– **शिवाद् ब्रह्मणश्चेति** ॥ अपिशब्दस्य शिवादित्यनेन सम्बन्धः । नैव शक्तिमान् । इदानीमसुरावेशदुष्टत्वादिति भावः । तत्र इन्द्रे समागते । ननु यदि शिवब्रह्माणौ अतिरोहितौ तथैव स्तः तर्हि अधिकबुद्धिरिन्द्रो यक्षस्वरूपं तावेव पृच्छेत् । तथाच ताभ्यामपि तत्स्वरूपमिन्द्राय वक्तव्यमेवेत्याशङ्कापरिहाराय केशव इत्युक्तम् । कश्च ईशश्च केशौ ताभ्यां वर्तत इति अनेन ताभ्यां सह नादृश्यतेत्युक्तं भवति । उमामात्रदर्शने कारणमाह– **एषैवेति** ॥ इति ज्ञापयितुमित्यनुवर्तते । तामिति शेषः ॥

## ॥ इति तृतीयः खण्डः ॥ ३ ॥

### (श्रुत्यर्थः)

साकल्येन देवाज्ञेयः परमात्मेत्यत्रार्थे काञ्चनाऽख्यायिकामाह चतुर्मुखः –**ब्रह्मेति** ॥ ब्रह्म देवान्तर्यामिरूपं देवेभ्यो देवार्थं देवानाम् ऐश्वर्यप्राप्त्यर्थं विजिग्ये व्यजयत् । 'दैत्यदानवान्' इति शेषः । तस्य देवान्तर्यामिणो ब्रह्मणः दैत्यादिविजये सति देवा अमहीयन्त । अहङ्कारं कृतवन्तः । कथम्? ते देवा अयं विजयो दैत्यदानवविजयोऽस्माकमेव 'न ब्रह्मणः । तथाचायं महिमाऽस्माकमेवेत्यैक्षन्त ज्ञातवन्तः । एवं देवैः अहङ्कारे कृते सति तद् देवान्तर्यामिरूपं ब्रह्म एषां देवानां तद् अहङ्कारं विजज्ञौ ज्ञातवत् ॥ १ ॥

एवं ज्ञात्वा तेभ्यो देवेभ्यो देवानां स्वस्वरूपज्ञापनाय यक्षरूपं सद् ब्रह्मवायुशेषगरुडरुद्रैः सभार्यैः सह प्रादुर्बभूव । एवं ब्रह्मणि प्रादुर्भूते ते देवाः तत् प्रादुर्भूतं न व्यजानत न ज्ञातवन्तः । प्रत्यक्षतो दर्शनात् कथं न व्यजानतेत्यत आह– **किमिति** ॥ इदं परिदृश्यमानं यक्षं किमिति किंरूपमिति न व्यजानतेति सम्बन्धः । ते प्रादुर्भूतयक्षरूपब्रह्माज्ञानिनो देवा

अग्निमब्रुवन् । किमिति ? हे जातवेदः एतद् विजानीहि । एतदित्युक्तं विवृणोति– **किमिति ॥** एवं देवैरुक्तोऽग्निस्तथेति अहं यक्षस्वरूपं विजानामीत्युक्त्वा तद् यक्षरूपं ब्रह्म प्रत्यभ्यद्रवत् । तमागतम् अग्निं त्वं कोऽसीत्यभ्यवदत् । 'यक्षरूपो हरिः' इति शेषः । उत्तरमाह– **अग्निर्वा इति ॥** यक्षः पुनः पृच्छति–**तस्मिन्निति ॥** किं वीर्यं सामर्थ्यं वर्तत इति । उत्तरमाह– **अपीदमिति ॥** यदिदं पृथिव्यां वर्तते इदं सर्वमपि दहेयमित्यग्निरब्रवीत् । एवमग्निना स्वस्य दाहकत्वसामर्थ्योक्तौ यक्षः हे अग्ने त्वं यदि दाहकत्वसामर्थ्यस्तर्हि एतद् दहेति तस्मै तृणं निदधौ स्थापितवान् । एवमुक्तः सोऽग्निः तद् यक्षस्थापितं तृणं सर्वजवेनोपप्रेयाय प्राप्तवान् । प्राप्तोऽपि तत् तृणं दग्धुं न शशाक । सोऽग्निस्तत एव यक्षस्थापिततृणदाहनसामर्थ्याभावादेव एतद् विज्ञातुमहं नाशकमिति निववृते निवृत्तवान् । एतदित्युक्तं विवृणोति– **यदेतद् यक्षमिति ॥** यच्छब्दः किंशब्दार्थः । **'यतश्चोदेति सूर्यः'** इत्यादौ तथा दर्शनात् । एवमुत्तरत्रापि व्याख्येयम् ॥ २ ॥

अथाग्निनिवृत्त्यनन्तरम् । वायुं नासिक्यवायुम् । तस्मादिन्द्रगमनाद् इन्द्रगमनं निमित्तीकृत्य, यक्षरूपं ब्रह्म उमाव्यतिरिक्तब्रह्मादिभिः सह तिरोदधे । यस्मिन् प्रदेशे यक्षरूपं ब्रह्म चतुर्मुखादिभिः सह तिरोहितं तस्मिन्नेवाऽकाशे प्रदेशे स्त्रियं दृष्ट्वा तां प्रत्याजगाम । का सा स्त्रीत्यतः तां विशिनष्टि– **बह्विति ॥** हैमवतीं हिमवतः पुत्रीम् एतद् एतावत्कालं दृष्टं यक्षं किमिति तामुवाच महेन्द्रः ॥

**॥ इति तृतीयः खण्डः ॥**

—०—

## अथ चतुर्थः खण्डः

*(देवतातारतम्यनिरूपणम्)*

ब्रह्मेति होवाच। ब्रह्मणो वा एतद्विजयेऽमहीयध्वमिति। ततो हैव विदाञ्चकार ब्रह्मेति। तस्माद् वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुः ॥ १ ॥ ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति। तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २ ॥

*(ब्रह्मोपदेशः)*

तस्यैष आदेशो यदेतद् विद्युतो [१]अभिव्यद्युतदा३ इति। न्यमीमिषदा३ इत्यधिदैवतम्। अथाध्यात्मम्। यदेतद् गच्छतीव च मनोऽनेन[२] वै तदुपस्मरत्यभीक्ष्णं सङ्कल्पस्तद्ध। तद्धनं नाम। तद्धनमित्युपासितव्यम् ॥ ३ ॥ स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति। उपनिषदं भो ब्रूहीति। उक्ता त उपनिषत्। ब्राह्मीं वाव त उपनिषदमब्रूमेति। तस्यै तपो दमः कर्मेति प्रतिष्ठा। वेदाः सर्वाङ्गानि सत्यमायतनम्। यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ४ ॥

इति चतुर्थः खण्डः

---

१. 'व्युद्युतदा' इति अभिरहितः पाठः प्रचलितः। प्रकाशिकाटिप्पण्यनुसारेणाभिना योजितः।

२. 'अनेन चैनदुप स्मरन्ति' इ.

(शान्तिमन्त्रः)

ओ३म् ॥ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदम्। माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत्। अनिराकरणमस्त्वनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥

॥ इति श्रीतलवकारोपनिषत् ॥

(भाष्यम्)

उमा सा सम्यगाचष्ट तस्मै विष्णुं परं पदम्।
यस्माद् ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा।
सभार्या गर्विणो नाऽसन् सुरेभ्यस्तेऽधिकास्ततः ॥

इन्द्रस्तु प्रथमं ब्रह्म व्यजानात् तेन तूत्तमः।
दक्षादिभ्यस्तथा [१]कामस्तज्ज्ञातुं पूर्वमुक्तवान् ॥

दक्षो बृहस्पतिश्चैव मनुः कामात्मजस्तथा।
सूर्याचन्द्रमसौ धर्मो [२]वरुणश्चोचुरोमिति ॥

नासिक्यवायुरग्निश्च प्रथमं तदपश्यताम्।
सर्वदेवाधिकास्तस्मादेते देवाः प्रकीर्तिताः।
एतेभ्यश्चेन्द्रकामौ तु ताभ्यां ब्रह्मादयोऽधिकाः ॥

एतेषामवमो वह्निः परमो विष्णुरुच्यते।
अन्तराळे स्थितास्त्वन्ये ब्रह्माद्याः पूर्वमीरिताः ॥

---

१. 'कामः स ज्ञातुम्' ह.
२. 'वरुणश्च पुरोमिति' ह

अग्निः पश्चाद् व्यजानात् तदिन्द्रवाक्यात् ततोऽवमः ।
तस्माद् विष्ण्वभिसम्बन्धात् पारावर्यं सुरेष्विदम् ॥ ॥

व्यद्योतयद् विद्युदादीन् कपिलाख्यस्तु यो हरिः ।
[१]अक्ष्णोर्निमेषणं कृत्वा यः शेते क्षीरसागरे ॥

स एवैकः परं ब्रह्मेत्येव तस्योपदेशनम् ।
अधिदैवे तथाऽध्यात्मे यं मनो गच्छतीव च ॥

सम्यङ् न गच्छति क्वापि मनो येन स्मरत्यपि ।
सोऽनिरुद्धाख्य ईशेशः परं ब्रह्मेति कीर्त्यते ॥ ॥

स विष्णुस्तद्वनं नाम ततत्वाद् वननीयतः ।
एवमेनं तु यो वेद भवेत् सर्वैरपेक्षितः ॥ ॥

एतच्छ्रुत्वा हरोऽपृच्छद् ब्रह्माणं पुनरेव तु ।
विद्याकारं मम ब्रूहीत्युक्तो ब्रह्माऽऽह तं पुनः ॥

विद्यावेद्यं तव प्रोक्तमास्थानं ते वदाम्यहम् ।
तपोदमस्वधर्मेषु ये [२]स्थितास्तेषु तिष्ठति ॥

'विद्या स्थानानि तस्यास्तु वेदा अङ्गानि निर्णयः ।
वैदैतामेवमखिलां यो विष्णौ प्रतितिष्ठति'

इत्यादि [३]ब्रह्मसारे ॥ ॥

[४]विद्युतः सूर्यादिप्रकाशान् आ समन्ताद् व्यद्युतत् प्राकाशयत्[५]–

'यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
'यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम्' इति वचनात् ॥

'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति च ॥

न्यमीमिषदा आ समन्तान्निमीलिताक्षमभवत्–

---

१. 'अक्ष्णोर्निमीलनं' २. 'स्थिरास्तेषु' ह ३. 'ब्रह्मपारे' ह
४. 'विद्युत्सूर्यादिप्रकाशान्' ह. ५. 'प्रकाशयत्'

स वै किलायं पुरुषः पुरातनो
य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे
निमीलितात्मा निशि सुप्तशक्तिषु' इति वचनात् ।। पूर्णत्वाच्च आः ।

अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम् । सङ्कल्पकमित्यर्थः[१] ।।

सप्रतिष्ठां सायतनामुपनिषदं ब्रूहीत्युक्ते सम्यगेव मयोपनिषत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्यायाः प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा–

'निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् ।
'श्रुतिस्मृत्युदितं सर्वं [१]व्यस्तं मीमांसयैतया ।
'सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चया' इति शब्दनिर्णये ।।

'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् ।
'मूलरामायणं चैव पुराणं भगवत्परम् ।।

'वेदा इत्युच्यते सद्भिः [२]शिक्षाद्याः स्मृतयस्तथा ।
'अङ्गानि सत्यं मीमांसा तद् विद्यायतनं त्रयम्'
इति विद्यानिर्णये ।। ❊ ।।

यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान् परः ।
नमोऽस्तु विष्णवे तस्मै प्रेयसे मे परात्मने ।।

इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
श्रीतलवकारोपनिषद्भाष्यं सम्पूर्णम् ।

—०—

१. 'व्यक्तं' ह. २. शीक्षाद्यं

## (व्यासतीर्थीयम्)

**'तस्माद्वा'** इति परामृष्टो हेतुः क इति न ज्ञायते । **'एते देवा अतितरामिवान्यान् देवान्'** इत्यन्यदेवतातिशयिता देवाश्च क इत्यतस्तद्वाक्यं व्याचष्टे– **यस्मादिति** ।। अथवा **'तस्माद्वा एते देवा अतितरामिवान्यान् देवान्'** एते इत्युक्ताः के यदग्निर्योऽयमग्निर्वायुरिन्द्रस्तस्मादिति परामृष्टं हेतुमेव विशदमाह– **ते ह्येनं नेदिष्ठं पस्पृशुरिति** ।। नेदिष्ठमतिसमीपस्थम् । स्पर्शनमेव विवृणोति– **ते ह्येनत् प्रथमः प्रथमं विदाञ्चकार चक्रुरिति** ।। 'यदग्निर्वायुरिन्द्रः' इत्युक्तेन्द्रस्याग्न्यादिसाम्यं प्रतीयते । तां परिहरति– **तस्माद्वा इन्द्र इति** ।। तद्व्याचष्टे– **इन्द्रस्त्विति** ।। 'तस्माद्वा एते देवाः' इति वाक्यं प्रकारान्तरेण व्याचष्टे– **दक्षादिभ्य इत्यादिना** ।। ॐइति यक्षं विचार्यमेवेत्यूचुः । **'नासिक्यवायुः'** इत्युक्तरीत्या व्याख्यानान्तरम् । ब्रह्मादीनामुक्तमप्याधिक्यं प्रसङ्गप्राप्तं पुनराह– **एतेभ्य इति** ।। **'यदग्निर्वायुः'** इत्युक्त्याऽग्नेः श्रेष्ठत्वप्रतीतिं निवारयन् तारतम्ये कः प्रथमः कोऽन्तिम इत्यत आह– **एतेषामिति** ।। **पूर्वमीरिताः** उत्तरकक्ष्यात्वेनेति शेषः । अग्नेः सर्वावमत्वे कारणमाह– **अग्निरिति** ।। **विष्णवभिसम्बन्धाद्** विष्णुज्ञानादितारतम्याभिसम्बन्धात् । अधिदैवमध्यात्मं वोपास्यं रूपमुपदिशति– **तस्यैष इत्यादिना** ।। अप्रतीतेस्तद्वाक्यजातं व्याचष्टे– **व्यद्योतयदित्यादिना** ।। रूपाणां स्थानभेदकृतो भेदो न मन्तव्य इति भावेनोक्तं– **स एवैक इति** ।। येन प्रेरितं मनो विषयान् स्मरति । **वननीयतः** भजनीयत्वात् । **'तद्वनम्'** इत्युपासकस्य फलमाह– **स य एतदिति** ।। तद्व्याचष्टे– **एवमिति** ।। उपनिषद्विद्याया उपदिश्यमानत्वात् **'उपनिषदं भो ब्रूहि'** इति प्रश्नस्य 'उक्ता त उपनिषत्' इत्यादिपरिहारस्य चायुक्तत्वं प्रतीयतेऽतस्तात्पर्यं व्यञ्जयन् व्याचष्टे– **एतदित्यादिना** ।। विद्या क्रियते निरूप्यते येन प्रतिपाद्यभेदेनेति । प्रतिपाद्यं पृच्छसि किं वोत्पन्नायास्तस्या अवस्थानकारणानि उत वा तस्याः कारणानीत्याशयवान् ब्रह्माऽऽह– **उक्ता त इत्यादिना** ।। तद्व्याचष्टे– **विद्यावेद्यमिति** ।। कानि विद्यास्थानानि ?

इत्यतस्तस्याः वेदाः षडङ्गानि निर्णयः कारणानीति योजना । सत्यमित्यस्य निर्णय इति व्याख्यानम् । एतदुपनिषद्वेत्तुः फलमाह–**यो वा एतामिति** ॥ स्वर्गे स्वरूपभूतरमणज्ञानवति लोके प्रकाशरूपे ज्येये श्रेष्ठे प्रतितिष्ठति । यत्प्रसिद्धस्वर्गरूपफलं प्रतीयते तद् अनन्तफलब्रह्मविद्याभ्यासिनामनुपपन्न-मतस्तद्व्याचष्टे– **वेदेति** ॥ प्रमाणेन व्याख्यातमपि व्यद्युतदा इत्यादि स्व-वाक्येन विशदयति–**विद्युत इति** ॥ सूर्यादिप्रकाशो भगवदधीन इत्युक्तम् । तत्स्मृतिश्रुत्युदाहरणेन समर्थयते– **यदिति** ॥ भगवानादौ निमीलिताक्षोऽभव-दिति कुत इत्यत आह–**स इति** ॥ य एको गुणेभ्यः परो विशेषः पुरातनः पुरुषः अग्रे निशारूपे प्रलयकाले कारणेषु सुप्तशक्तिषु जगदीश्वरे आत्मनि निधाय निमीलितात्मा आत्मनि स्वस्मिन्नेवाऽसीत् सोऽयं किलेति सम्बन्धः । **'न्यमीमिषदा'** इत्यत्राऽकारस्य समन्तादित्यर्थ उक्तः । अर्थान्तरं चाऽह– **पूर्णत्वादिति** ॥ यदेतदाः पूर्णं तन्यमीमिषदित्यन्वयः । अभीक्ष्णं सङ्कल्प इति कस्य विशेषणमिति न ज्ञायतेऽत आह– **अभीक्ष्णमिति** ॥ लिङ्गव्यत्ययोऽयमित्याशयवान् तदर्थमाह– **सङ्कल्पकमिति** ॥ 'उपनिषदं भो ब्रूहि' इति प्रश्ने तस्यै तपो दमः कर्मेति प्रतिष्ठा' इत्यपृष्टोक्तिः कथमित्यतः प्रश्नाभिप्रायकथनेन घटयन्नाह– **सप्रतिष्ठामिति** ॥ निर्णय इत्येतत् सत्यपदेन व्याख्यातत्वेऽपि अस्पष्टत्वात् पुनर्व्याकरोति– **सत्यमिति** ॥ ननु 'सत्यमिति मीमांसा' इति कुतः ? सत्यवचने प्रसिद्धत्वादित्यतो निर्वचनप्रमाणेन समर्थयते – **निर्णीयत इति** ॥ ननु विद्यास्थानानां चतुर्दशत्वात् कथं 'वेदाः सर्वाङ्गानि सत्यमायतनम्' इति स्थानत्रित्वोक्तिरित्यतो विद्यास्थानानां चतुर्दशत्वेऽपि विवक्षाभेदात् त्रित्वोक्तिरित्याह– **ऋग्यजुरित्यादिना** ॥ शिक्षाद्यं तथा स्मृतय-श्चाङ्गानीत्युच्यन्ते । मीमांसा तर्कशास्त्रं च सत्यमित्युच्यते । यतस्तस्माद्विद्यायतनं त्रयमित्युक्तमित्यर्थः । मङ्गलावसानस्य शास्त्रस्य प्रचयादिहेतुत्वाद् भाष्यं समाप्यान्तेऽपि स्वेष्टदेवतास्तुतिनमनरूपं मङ्गलमाचरति– **य इति** ॥

१. **'तदुपनिषत्'** इति मुद्रितपुस्तकस्थः पाठः प्रामादिकः ।

यत्पदं मुनिभिर्ध्यातं वेदान्तश्रान्तमानसैः ।
तं वन्दे परमात्मानं विष्णुं श्रीमध्ववल्लभम् ॥

**इति श्रीमदानन्दतीर्थभगवत्पादविरचित-**
**तलवकारोपनिषद्भाष्यस्य विवरणं**
**श्रीमज्जयतीर्थपूज्यचरणशिष्यव्यासतीर्थविरचितं**
**सम्पूर्णम् ॥**

—०—

## (प्रकाशिका)

**'ब्रह्म व्यजानात्'** इत्यत्र उमामुखात् स्वयं व्यजानात् पश्चाद्देवान् प्रत्युक्तवान् । तथा कामोऽपि दक्षादिभ्य उत्तमः । यतः स कामो देवेभ्यः पूर्वमेवेन्द्रं प्रति तज्ज्ञातुमुक्तवान् । एवं च 'कर्ता कारयिता च' इति न्यायेन द्वावपि समाविति भावः । 'सर्वदेवाधिकास्तस्मात्' इत्यत्र सर्वे देवाः **'उक्तशेषाः शतस्थाः'** इत्यत्र प्रोक्तदेवाः । तेभ्योऽधिका इत्यर्थः । **'एते देवाः'** इन्द्रादीनामाज्ञया प्राग्गतावग्निवायू ज्ञातुमिन्द्रस्योमित्यनुमतिकर्तारो दक्षाद्या वरुणपर्यन्ता देवा इत्यर्थः । न चात्र शङ्कनीयम् इन्द्रादपि पूर्वगमनादग्निवायू इन्द्रादप्युत्तमाविति । निष्फलगमनकर्त्रोरपेक्षया सफलगमनकर्तुरिन्द्र-स्योत्तमत्वावश्यम्भावात् । अस्तु तर्ह्यगन्तृभ्यो दक्षादिभ्योऽप्यनयोरुत्तमत्वमिति चेन्न । निष्फलगमनकर्त्रोरपेक्षया सफलगमनानुमन्तृणामेव फलोपयोगित्वेनोत्तम-त्वौचित्यात् । गत्वा ज्ञानदातुरिन्द्रात्, प्रथममिन्द्रगमनोत्थापकात् कामाच्च दक्षादीनामवमत्वस्य च न्यायप्राप्तत्वादुपनिषद्युक्तदेवतातारतम्यस्यैव स्पष्टीकरणादिति ज्ञेयम् ॥

**'तस्माद्वा एते देवा अतितरामिवान्यान् देवान्'** इत्यत्र इवशब्देम यथाऽन्ये देवा ऋष्यादिभ्योऽतितरामतिशयेन वर्तन्त एवमेते वाय्वग्नीन्द्राख्या देवा अन्यान् देवानतितरामतिशयेन वर्तन्त इत्युपमया तारतम्यान्तरं सूचितमिति

ज्ञेयम् । एवमुत्तरत्रापि यथा दक्षादयोऽग्निवायुभ्यामधिका एवमिन्द्रो दक्षादिभ्योऽप्यतितरामतिशयेन वर्तत इति देवेष्ववान्तरतारतम्यमपि सूचितमिति ज्ञेयम् । अव्ययानामनेकार्थत्वादवधारणार्थो वा । ब्रह्मरुद्रशेषगरुडानामसुरावेशाभावादेते देवा असुरावेशादहङ्कारकर्तृभ्य एतेभ्यो देवेभ्योऽतितरामिवातिशयेन वर्तन्त एवेत्युपनिषदोऽभिसन्धिः । एवं चोपनिषदङ्गना रमा पूर्वोत्तरपर्यालोचनायां स्वतनयपवनतनयमध्वस्याध्वानमेव स्थिरीचकार ॥

**पस्पृशुः** भगवन्तं स्वहृदि स्थिरीचक्रुः । **विदाञ्चकार** व्यजानात् । इन्द्रः प्रथमो विदाञ्चकार । तदुपदेशेन तेऽपि विदाञ्चक्रुरिति योजना ॥

क्षणिकविद्युन्मात्रप्रकाशकत्वस्यातिमहिमसम्पादकत्वाभावाद् विद्युतः विशेषेण द्युतः प्रकाशमानानिति योगमाश्रित्यार्थमाह भाष्यकारो **विद्युतस्सूर्यादिप्रकाशानिति** । आ इत्युपसर्गमनूद्य तस्यार्थमाह– **आ समन्तादिति** । अभि अभितः वि विशेषेणेत्यर्थकोपसर्गद्वयपूर्वकस्य **'द्युती प्रकाशने'** इति धातोरन्तर्णीतणिजन्तत्वमभिप्रेत्यार्थमाह– **प्राकाशयदिति** । **'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्'** इति काव्यकारेणाप्युक्तत्वात् स्मृतिसमाख्यया च विद्युत्पदं न विद्युन्मात्रवाचकमिति भावेन स्मृतिश्रुती पठति– **'यदादित्यगतम्'** इति । श्रुतौ सर्वमिति सामान्येनोक्तत्वाद् विशेषार्थकस्मृतेरादौ ग्रहणम् ॥

यद्यपि पञ्चरात्रवाक्ये न्यमीमिषदा इति वाक्यं क्षीरसागरशायिनः कपिलाख्यहरेः प्रतिपादकमित्युदितम् । तथाऽपि तदङ्गीकुर्वन्नेव भाष्यकारो ब्रह्मशतवर्षपर्यन्तं वटपत्रशायिनि हरौ आ इत्युपसर्गार्थस्याभिव्याप्तेः सिद्धेः सोऽप्यर्थ इति भावेनाऽह – **स वै किलायमिति ॥** आ इत्यस्यार्थान्तरमप्याह – **पूर्णत्वादिति ॥** आ समन्ताद् विद्यमान इति व्युत्पत्त्या आशब्दो भगवत एव पूर्णत्ववाचको भवतीति भावः । अनेनैकैकमूर्त्या एकैकत्र स्थितस्य हरेस्सर्वगतत्वं नास्तीति शङ्का निरस्ता ॥

'यदेतद् गच्छतीव' इत्यत्र एतन्मनः गच्छतीवेति यत् तदनेन वै जीवान्तर्नियामकतया स्थितेनानिरुद्धेन । इवशब्देन च क्वचिन्न गच्छतीति

सूचितम् । वैशब्देन **'अनिरुद्धः सर्वजीवो हृषीकेशो मनःपतिः'** इति स्मृतिप्रसिद्धिं सूचयति । सर्वे जीवाः यस्मात् प्रवर्तन्त इति वा, सर्वान् जीवयतीति वा सर्वजीव इत्यर्थः । सर्वजीवात्मक इत्यर्थकथनं तु **'सर्वातिशायी कः सर्वाध्यक्षः सर्वेश्वरेश्वरः'** इत्युपक्रमवाक्येन, 'ब्रह्मरुद्राद्युत्कृष्टचेतनः । शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः' इत्युपरितनवाक्येन च विरुद्धम् । अभीक्ष्णं बहुशः सङ्कल्पः सङ्कल्पात्मकं मन उपस्मरतीति यत् तदप्यनेन वै इत्यर्थमभिप्रेत्याऽऽह भाष्यकारः– **अभीक्ष्णमिति** ।। मनसो विशेषणीकृत-सङ्कल्पपदेन इदमिदं करोमीत्यादिरूपो यः सङ्कल्पः सोऽपि भगवदधीन इति सूचितम् । हेतुगर्भविशेषणानां **'तं देवं पितरं पतिं गुरुतमम्'** इत्यादौ बहुलमुपलम्भात् । सङ्कल्पपदस्य नित्यपुल्लिङ्गत्वात् सङ्कल्पो मन इत्यपि **'वेदाः प्रमाणम्'** इतिवद् युज्यते । सङ्कल्पकमिति तु तात्पर्यकथनम् ।।

तत् परं ब्रह्म तन्नाम । तदिति नाम यस्य तत् तन्नाम । 'तनु विस्तारे' इति धातोरौणादिके डतुप्रत्यये कृते तदिति शब्दनिष्पत्तिः प्रसिद्धेति हशब्देनाऽऽह श्रुतिः । तत् परं ब्रह्म वनंनाम । 'वन सम्भजने' इति धातोः भजनीयत्वाद्वनशब्दवाच्यमित्यर्थः ।।

**'उपनिषदं भो ब्रूहि'** इति हरेण पृष्टे उपनिषदेव वक्तव्या । 'तस्यै तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतनम्' इति प्रतिष्ठायतनयोः कुतो निरूपणम्? अपृष्टपरिभाषणत्वप्रसङ्गात् । अतः प्रश्नवाक्येऽपि 'सप्रतिष्ठां सायतनाम्' इत्युपस्कर्तव्यमिति भावेनाऽऽह भाष्यकारः– **सप्रतिष्ठामिति** ।। एवं च भारतीभावं भारतीपतिरेव वेद, नापर इति ज्ञेयम् । 'उपनिषदं भो ब्रूहि' इति प्रश्नवाक्ये च वाक्यमात्रकथनस्य नायं प्रश्नः । चतुर्मुखमुखादेव स्वयोग्यसकलवेदानां हरेणापि प्रागेव पठितत्वात् । अत उप वाक्यस्य समीपे, वाक्यस्थपदानां समीपे च यन्नितरां वेदप्रतिपाद्यत्वेनाभिमतदेवादिभ्यः कर्मादिभ्यश्चातिशयेन, महायोगेन विद्वद्रूढ्या चेति यावत्, सीदति 'षदॣ

विशरणगत्यवसादनेषु' इति धातोर्वाक्यसमन्वयेन वाक्यानां, पदसमन्वयेन पदानां च विषयतया तिष्ठतीति व्युत्पत्त्या सकलोपनिषत्प्रतिपाद्यं परं ब्रह्मैवोपनिषदित्युच्यते । तां च प्रकर्षेण प्रमात्येभिरिति व्युत्पत्त्या प्रमास्थिरीकरणहेतुभूततपआदिकरणैः सह प्रमाया मूलाधारभूतायतनशब्दवाच्यप्रमाणैः सह ब्रूहीति प्रश्नवाक्यार्थः । अत एव **'उक्ता त उपनिषत्'** इत्युक्त्वा **'ब्राह्मीं वाव त उपनिषदमब्रूम'** इति श्रुतिः स्वयमेव ब्राह्मीमित्युक्त्या प्रतिपाद्यब्रह्मविषयोऽयं प्रश्न इति सूचयति । एतत्प्रश्नपरिहाराय च प्रतिपाद्यब्रह्ममहिमरूपसकलेन्द्रियप्रेरकत्वसकलदेवोत्तमत्वादिगुणविशिष्टतया अस्या एव उपनिषद उक्तिकाले प्रतिपाद्यब्रह्मस्वरूपमप्युक्तमिति ज्ञेयम् । अवशिष्टप्रश्नद्वयोत्तरं तूत्तरवाक्येनैवोच्यत इति विज्ञेयम् । **'उक्ता त उपनिषत्'** इति वाक्यस्य उपनिषत् उपनिषत्स्वरूपमुक्तव्युत्पत्त्या उपनिषत्पदवाच्यं ब्रह्मस्वरूपं ते उक्तमित्यर्थः ॥

सत्यं सत्यवचनमिति भ्रमनिवारणायाऽह– **सत्यमिति ॥ मीमांसेति ॥** व्यस्तं मीमांसयेत्यत्र व्यस्तं व्यासेन प्रपञ्चेन सहितं यथा भवति तथा व्यस्तमित्यर्थः । प्रमाकरणानां पञ्चरात्रभारतमूलरामायणवैष्णवपुराणानां तपआदिनियमस्वरूपप्रमापकवैष्णवस्मृतीनां च सत्त्वात् कथं त्रित्वेन पर्यवसानमित्यत आह– **ऋग्यजुरिति ॥** वेदापेक्षिततपआद्यङ्गप्रतिपादकस्मृतीनां वेदस्वरूपतदर्थप्रमापकत्वेन वेदाङ्गभूतशिक्षादिष्वेवान्तर्भावेनोक्तम्– **शिक्षाद्याः स्मृतयस्तथा । अङ्गानि'** इति ॥ ४ ॥

नियन्ता सर्वदेवानां निहन्ता सर्वरक्षसाम् ।
स मन्ता कमलाकान्तः समन्तात् सुखदोऽस्तु मे ॥

**इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचिता तलवकारोपनिषद्भाष्यप्रकाशिका समाप्ता ॥**

—०—

## (विदेशीयम्)

**'ब्रह्मेति होवाच'** इति वाक्यमपेक्षितपूरणेन व्याचष्टे– **उत्तमेति** ॥ हेत्यस्यार्थः– **सम्यगिति** ॥ **'तस्माद्वा एते देवा अतितरामिवान्यान् देवान्'** इत्येतावदेव वाक्यम् । एते देवा इत्युक्ताः क इत्याशङ्कां परिहरन् तस्मादित्युक्तहेतुप्रदर्शनपूर्वकं व्याचष्टे–**यस्मादिति** ॥ अत्र वायुवीन्द्रशेषाणां सभार्याणां ग्रहणेन पूर्वमुमाशिवसमन्वित इत्यत्रैतेऽप्युपलक्षणीया इति ज्ञायते । ननु 'तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्र इत्यग्निवाय्विन्द्राणां स्वव्यतिरिक्तदेवोत्तमत्वमुच्यते, तदयुक्तम् । तेषां ब्रह्माद्युत्तमत्वाभावात् । नच **'सुरेभ्यस्तेऽधिकाः'** इति इन्द्राद्युत्तमत्वस्य तेषामभिहितत्वात् तद्व्यतिरिक्तदेवोत्तमत्वमेवात्रोच्यत इति वाच्यम् । इन्द्रस्य स्वव्यतिरिक्तकामोत्तमत्वाभावेन नासिक्यवायोर्दक्षाद्युत्तमत्वाभावेनाग्नेश्च सूर्याद्युत्तमत्वाभावेन तस्याप्यनुपपत्तेरिति चेन्न । 'यदग्निर्वायुरिन्द्रः इत्यग्र्यादिशब्दैरिन्द्राग्निमध्यवर्तिनां कामादीनामप्युपलक्षणया ग्रहणेनाग्र्यवरसर्वदेवाधिकत्वमेवेन्द्रकामादीनामत्र विवक्षितमिति सूचयन् अग्निवाय्विन्द्राणामधिकत्वे **'ते ह्येनम्'** इति निमित्तकथनादस्तु सर्वदेवाधिकत्वम् । नतु कामादीनां, तत्र निमित्तकथनाभावाद् इत्याशङ्कापरिहारायेन्द्राद्युत्तमत्वे निमित्तकथनमुपलक्षणपरमित्याशयेनाऽह– **इन्द्रस्त्वित्यादिनाऽपश्यतामित्यन्तेन** ॥ यक्षरूपं ब्रह्मेति व्यजानाद् उमोपदेशेनेत्यर्थः । द्वितीयस्तुशब्दोऽवधारणार्थः । तथाशब्दस्तुशब्दार्थः । कामस्तु तद् ज्ञातुम् आविर्भूतयक्षस्वरूपज्ञानाय पूर्वं दक्षादिभ्य उक्तवान् । तेन स उत्तम इत्यर्थः । वरुणश्चेत्येते ओमित्यूचुः कामेन यक्षस्वरूपं ज्ञातव्यमित्युक्ते तथैव कर्तव्यमित्युक्तवन्तः । तेन त उत्तमा इत्यर्थः । तद् यक्षरूपम् । तेन तावुत्तमावित्यर्थः । इन्द्रस्तु प्रथमं ब्रह्म व्यजानात् नासिक्यवायुरग्निश्च प्रथमं तदपश्यतामित्यनेन वाय्वग्न्योः प्रथमं यक्षरूपे ब्रह्मत्वज्ञानाभावात् **'ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति'** इत्युक्तमनुपपन्नमिति शङ्का परास्ता । तथाच श्रुतौ निमित्तकथनमुपलक्षण-

परमिति भावः। यद्वा, 'यदग्निर्वायुरिन्द्रः' इत्यत्राग्न्यादिशब्दानामितरोपलक्षकत्वं कुतोऽङ्गीकर्तव्यमित्यतः 'ते ह्येनत् प्रथमो विदाञ्चकार' इति वाक्यशेषे इन्द्रकामादीनां सर्वेषामप्युत्तमत्वे निमित्तकथनादिति भावेन तद्वाक्यं कः कथं विदाञ्चकारेति शङ्कानिरासाय व्याचष्टे– **इन्द्रस्त्वित्यादिना** ॥ अस्त्वेवमुक्तरीत्या एतेषां देवानामुत्तमत्वं, तथाऽपि 'तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रः, इति श्रुत्यर्थः क इत्यत आह– **सर्वेति** ॥ यस्मादुक्तरीत्या इन्द्रकामाद्या उत्तमास्तस्मादेते पूर्वोक्ताः सर्वेऽपीन्द्राद्याः अग्र्यवरसर्वदेवाधिकाः श्रुतावुपलक्षणया कीर्तिता इत्यर्थः ॥

नन्वस्त्वेते देवा अग्र्यवरसर्वदेवाधिकाः। तथाऽपि किमेते परस्परं समाः, अथ तेषु कश्चिदुत्तम इत्याशङ्कापरिहाराय श्रुतौ 'तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान्' इत्यभिहितम्। तत्रेन्द्रशब्दोऽपि उपलक्षणपर इति भावेन तद् व्याचष्टे– **एतेभ्य इति** ॥ वचनविपरिणामेनाधिकावित्यनुवर्तते। पूर्वं सुरेभ्यस्तेऽधिका इति ब्रह्माद्युमान्तानां देवोत्तमत्वं यदुक्तं तन्नेन्द्रकामवद् दक्षाद्याधिक्यमात्रं किन्त्वित्यत आह – **ताभ्यामिति** ॥ भाष्ये **'नासिक्यवायुरग्निश्च'** इत्युक्त्या श्रुतौ यदग्निर्वायुरित्युक्त्या चाग्नेर्वायुसाम्यं प्रतीयते– इत्याशङ्कायां पूर्वप्रसक्तानां यक्षरूपविष्णुदेवानां मध्ये कोऽवमः कः श्रेष्ठ इत्यपेक्षायां चाऽह – **एतेषामिति** ॥ उच्यते। **'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः'** इति श्रुतावित्यर्थः। ब्रह्माद्या इत्यादिशब्देनाग्र्यवमा अपि देवा ग्राह्याः किम्? नेति भावेनोक्तम्– **पूर्वमीरिता इति**। अग्नेः सर्वावमत्वे कारणमाह– **अग्निरिति** ॥ कामादयः सर्वे इन्द्रेण सहैवोमोपदेशेन ब्रह्मस्वरूपं ज्ञातवन्तः। अग्निस्तु पश्चादिन्द्रवाक्यात् तद् यक्षरूपं ब्रह्मेति व्यजानाद् यत इत्यर्थः। यद्वा उमोपदिष्टेनेन्द्रेण यक्षरूपब्रह्मस्वरूपे कामादिभ्य उपदिष्टे सति तद्वाक्यात् कामादयो वरुणान्ताः यक्षरूपब्रह्मस्वरूपं पूर्वं ज्ञातवन्तः। अग्निश्च पश्चाद् व्यजानादित्यवम इत्यर्थः। अस्त्वेवम्। सर्वेष्वपि देवेषु परावरभावे किं कारणमित्यत आह– **तस्मादिति** ॥ यस्मात्

पूर्वं ब्रह्मज्ञानिनोऽधिकाः पश्चात् तज्ज्ञान्यवमः । तस्माद्विष्ण्वभिसम्बन्धाद् ज्ञानादिना विष्ण्वभिसम्बन्धपारावर्येण विष्णुविषयकज्ञानादिपारावर्येणेति यावत् ।

**'तस्यैष आदेशः'** इत्यादि **'इत्यधिदैवतम्'** इत्यन्तं वाक्यमप्रतीतेर्व्याचष्टे – **व्यद्योतयदित्यादिनाऽधिदैव इत्यन्तेन** ॥ श्रुतौ विद्युच्छब्द उपलक्षक इति भावेन विद्युदादीनित्युक्तम् । अभिव्यद्युतदित्यस्यार्थः– **व्यद्योतयदिति** ॥ कपिलाख्य इत्यनेन यदेतदित्युक्तैतच्छब्दार्थ उक्तः । न्यमीमिषदित्यत्रापि यच्छब्दोऽनुवर्तनीय इति भावेन तस्यार्थमाह– **अक्ष्णोरिति** ॥ श्रुतौ यच्छब्दस्य तच्छब्दाभावेनानन्वयशङ्कां तदध्याहारेण परिहरन् अभिव्यद्युतदा इत्यत्र न्यमीमिषदा इत्यत्र चोक्तस्य आ इत्यस्यार्थमाह– **स एवेति** ॥ स्थानभेदेन भेदो न शङ्कनीय इति भावेनोक्तम्– **एक इति** ॥ **'अथाध्यात्मम्'** इत्यारभ्य **'तद्ध'** इत्यन्तं वाक्यं व्याचष्टे– **तथाऽध्यात्म** इत्यादिना ॥ यम् अनिरुद्धाख्यम् । उत्तरत्रानुवादात् । तेन श्रुतावेतच्छब्दार्थ उक्तः । इवशब्दार्थं व्यनक्ति– **सम्यगिति** ॥ स्मरति स्मरणसाधनं भवति । चापिशब्दावितरेतरसमुच्चये । तद्धेत्यस्यापेक्षितस्य आ इत्यस्यानुवृत्त्यर्थमाह– **स इति** ॥ तद्धेत्यस्य तद्वनं नामेत्युत्तरत्राप्यन्वयमभिप्रेत्य सिद्धार्थत्वप्रतीतिनिरासाय व्याचष्टे– **स विष्णुरिति** ॥ ततत्वात् तत् । वननीयत्वतो वनमित्यर्थः । 'य एतदेवं वेद' इति फलवाक्यं व्याचष्टे– **एवमिति** ॥

**'अथ हैनं सर्वाणि भूतानि संवाञ्छन्ति उपनिषदं भो ब्रूहि'** इत्येकवाक्यता प्रतीयते । तदसत् । **'उक्ता त उपनिषत्'** इत्युत्तरवाक्यानुपपत्तेरिति भावेन संवाञ्छन्तीत्यनन्तरं वक्तव्यमाह– **एतच्छ्रुत्वेति** ॥ उपनिषच्छब्दार्थो विद्याकारमिति विद्याप्रतिपाद्यमित्यर्थः । सप्रतिष्ठां सायतनामित्यपि ग्राह्यम् । 'उक्ता त उपनिषत्' इत्यस्यार्थमाह– **विद्यावेद्यमिति** ॥ अब्रूमेत्यनन्तरं वक्तव्यमाह– **आस्थानमिति** ॥ **'तस्यै तपः'** इति वाक्यं व्याचष्टे– **तप इति** ॥ विद्या तेषु तिष्ठतीति सम्बन्धः । **'वेदाः सर्वाङ्गानि सत्यमायतनम्'**

इत्यस्यार्थमाह– **स्थानानीति** ॥ निर्णय इति सत्यशब्दार्थः । **'यो ह वा एताम्'** इति फलवाक्यं प्रसिद्धस्वर्गलोके तिष्ठतीति प्रतीतिनिरासाय व्याचष्टे – **वेदेति** ॥ अखिलां सप्रतिष्ठां सायतनां यच्छब्दश्रवणात् तच्छब्दलाभः । 'यदेतद्विद्युतोऽभिव्यद्युतदाः' इति वाक्यं प्रमाणेन यद् एतत् प्रसिद्धं विद्युतोऽभिव्यद्युतत् स एव आः परं ब्रह्मेति व्याख्यातम् । इदानीमा इत्येतद् आङ्रूपोपसर्गभूतं तद् व्यद्युतदित्यत्रापि सम्बध्यत इति भावेन तद्व्याचष्टे – **विद्युत इति** ॥ विद्युच्छब्दस्योपलक्षणत्वं 'ज्योतिःश्रेष्ठो दिवाकरः' इति वचनात् सूर्यस्य ज्योतिःप्राधान्यं चाङ्गीकृत्य सूर्यादिप्रकाशानित्याह । आ इत्यनुवादेन समन्तादिति व्याख्यानम् । तत्र प्रमाणमाह– **यदादित्येति** ॥ अत्र सूर्यादिसर्वप्रकाशकत्वं न लभ्यत इति प्रमाणान्तरमाह– **तमेवेति** ॥ प्रकाशयन्तं तमन्वेव सर्वं सूर्यादि प्रकाशयति । तस्य भासा प्रकाशेन सर्वं जगत् प्रकाशत इत्यर्थः ।

न्यमीमिषदा इत्येतदपि अनूद्य पूर्ववदेव व्याचष्टे– **न्यमीमिषदिति** ॥ अत्रोभयत्र छन्दसि परेऽपि व्यवहिताश्चेत्युक्तमनुसन्धेयम् । परमात्मनो निमीलिताक्षत्वे प्रमाणमाह– **स वा इति** ॥ गुणेभ्यः सत्वादिगुणेभ्योऽग्रे तदुत्पत्तेः पूर्वम् । **निशि** महाप्रळये । सुप्तशक्तिषु सत्वादिशक्तिषु य एकः प्रधानः पुरातनः पुरुषः पूर्णषड्गुणः । निमीलितात्मा निमीलिताक्षस्वरूपः सन् न विद्यते विशेष अधिको यस्मात् स तथोक्तस्तस्मिन् जगदात्मनि जगदादानादिकर्तरि ईश्वरे आत्मनि स्वस्मिन् आसीत् । स एवायं कृष्णः किलेति सम्बन्धः । प्रमाणे आ इत्येतत् परब्रह्मवाचकमिति व्याख्यातम् । तत्र निमित्तमाह– **पूर्णत्वाच्चेति** ॥ इत्युच्यते परंब्रह्मेति शेषः । चशब्दो व्याख्यानान्तरसमुच्चयार्थः । 'अभीक्ष्णं सङ्कल्पः' इति कस्य विशेषणमिति न ज्ञायते । अत आह– **अभीक्ष्णमिति** ॥ ननु सङ्कल्पो नाम मनोवृत्तिविशेषः, 'कामः सङ्कल्पः' इति श्रुतेः । तत्कथं मनसो विशेषणमित्यत आह– **सङ्कल्पक-मित्यर्थ इति** ॥ ननु 'उपनिषदं भो ब्रूहि' इति पृष्टे **'उक्ता त उपनिषत्'**

इत्येव वक्तव्यम् । नतु तस्या इत्यादिना विद्यायाः प्रतिष्ठायतने वक्तव्ये । तयोरपृष्टत्वात् ॥

किञ्चोपनिषदं विद्यावेद्यं सम्यग् ब्रूहीति हि प्रश्नाभिप्रायः । अन्यथा विद्यावेद्यस्योच्यमानत्वेन तत्सिद्धार्थत्वप्रसङ्गात् । तथाच कथं तत्र 'उक्ता त उपनिषत्' इति परिहारः । यावद् विद्यावेद्यस्वरूपस्य सम्यगकथितत्वादित्यत प्रश्नपरिहारवाक्ययोरभिप्रायमाह– **सप्रतिष्ठामिति** ॥ परिहारवाक्यानुसारेण प्रश्नवाक्येऽपि तद् ग्राह्यमिति भावः ॥ **सम्यगेवेति** ॥ विद्यावेद्यस्वरूपस्य सम्यगुक्तिर्नाम स्वेन साकल्येनाज्ञेयत्वोक्तिरेव । नतु यावत्तत्स्वरूपोक्तिः । तथात्वे उपनिषत्स्वरूपं सम्यग् वक्तुं न शक्यत इत्येव वक्तव्यतयोक्ता त उपनिषदिति परिहारानुपपत्तेः । स्वेन साकल्येनाज्ञेयत्वं च 'न विद्म न विजानीमः' इत्यादावुक्तमिति भावः । नास्ति इत्याहेति शेषः । 'तस्यै तपो दमः कर्मेति प्रतिष्ठा' इति वाक्ये पदानां व्यवहितत्वेनान्वयं दर्शयति – **तप इति** ॥ तस्यै इति चतुर्थी षष्ठ्यर्थ इति भावेनोक्तम्– **विद्याया इति** । प्रतिष्ठाशब्दस्याऽयतनशब्दागतार्थतासिद्ध्यर्थं तदभिप्रायमाह– **तद्वस्त्विति** ॥ नतु विद्यायतनत्वं नाम विद्योत्पत्तिकारणत्वम् । तथाच सत्यशब्दार्थस्य सत्यवचनस्य तपआदिवद् विद्याप्रतिष्ठापकत्वमेवोचितम् । ननु विद्यायतनत्वमित्यतः सत्यशब्दार्थमाह– **सत्यमिति** ॥ **'मीमांसा उच्यते'** इति शेषः । प्रसिद्धिविरोधपरिहाराय तत्र प्रमाणमाह – **निर्णीयत इति** ॥ सम्यक् सत्यमिति परमार्थसत्यमितीत्यर्थः । इदमित्यस्य विवरणम्– **श्रुतीति** ॥ स्फुटमित्यस्य विवरणम्–**व्यक्तमिति** ॥ ब्रह्मणो निश्चयो यया सेति विग्रहः । अनेन सत्यशब्दस्य निर्णय इति प्रमाणकृतं व्याख्यानमपि समर्थितम् ॥

ननु विद्यायतनानाम् ऋगादिचतुष्टयमितिहासः पुराणानि शिक्षादिषडङ्गानि मन्वादिस्मृतिर्मीमांसा चेति चतुर्दशत्वात् कथं वेदाः सर्वाङ्गानि सत्यमायतनमिति त्रित्वोक्तिरित्यतश्चतुर्दशत्वेऽपि विवक्षाभेदेन त्रित्वोक्तिर्युज्यत इति भावेन

प्रमाणमाह– **ऋगिति** ।। पञ्चरात्रं भारतं मूलरामायणमिति इतिहास-प्रभेदोक्तिः । भगवत्परमेवेति सम्बन्धः । सत्यमित्यनुवादेन मीमांसेति व्याख्यानम् ।। चतुर्थः खण्डः ।।

**(श्रुत्यर्थः)**

एवमिन्द्रेण पृष्टा सोमा एतद् यक्षं युष्मदन्तर्यामिब्रह्मेति ह सम्यगुवाच । तस्य ब्रह्मण एव एतद् एतस्मिन् विजये सति यूयममहीयध्वम् अस्माकमेवायं विजय इति अहङ्कारं कृतवन्तः । तत एवोमोपदेशेनैव स इन्द्र इदं यक्षरूपं ब्रह्मेति विदाञ्चकार ज्ञातवान् । यस्माद् ब्रह्मवायुशेषगरुडरुद्राः सभार्याः स्वान्तर्यामिणो ब्रह्मणो विजयेऽस्माकमेवायं विजय इति गर्विणो नाऽसन् तस्माद् वा तस्मादेव एते देवा अन्यान् देवान् इन्द्रादीन् अपेक्ष्यातितरामिव अतिशयिता एव । इन्द्रादीनां गर्वित्वादिति भावः । यद्वा, 'तस्माद् यद् ये अग्निर्वायुरिन्द्रश्चेत्येते देवा अन्यान् देवान् अग्र्यवरसर्वदेवानपेक्ष्यातितरामिव अधिका एवेत्यर्थः । अत्रेन्द्रादिशब्दैः कामदक्षादयोऽपि ग्राह्याः । तस्मादित्युक्तं हेतुं विशदयति– **ते हीति** ।। हि यस्मात् ते अग्निवाय्विन्द्रा देवा एनद् यक्षरूपं भगवन्तं नेदिष्ठं समीपस्थं पस्पृशुः स्पृष्टवन्तः तस्मादिति पूर्वेण सम्बन्धः ।। १ ।।

तदेव विवृणोति– **ते हीति** ।। ते प्रागुक्ता देवा एनद् यक्षरूपं ब्रह्म प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुः ज्ञातवन्तः । किमिति ? ब्रह्मेति । अत्रेन्द्र उमोपदेशेन प्रथमं ब्रह्म व्यजानात् । वाय्वग्नी तु प्रथमं यक्षरूपम् अपश्यतामिति विवेकः । उपलक्षणमेतत् । दक्षादीनामुत्तमत्वेऽपि भाष्योक्तं निमित्तं ग्राह्यम् । इन्द्राद्या अपि देवाः किं परस्परं समाः ? नेति भावेनाऽह– **तस्माद्वा इति** ।। इन्द्रशब्देनात्र कामोऽप्युपलक्षणीयः । अन्यान् देवान् दक्षादीन् । इन्द्रस्योत्तमत्वे निमित्तमाह– **स हीति** ।। तदेव विवृणोति– **स हीति** ।। उमोपदेशेन भगवत्स्वरूपं प्रथमत इन्द्रो व्यजानात् । पश्चादिन्द्रोपदेशेनेतरेषां भगवज्ज्ञानमिति भावः ।। २ ।।

इत्येव वक्तव्यम् । नतु तस्या इत्यादिना विद्यायाः प्रतिष्ठायतने वक्तव्ये । तयोरपृष्टत्वात् ॥

किञ्चोपनिषदं विद्यावेद्यं सम्यग् ब्रूहीति हि प्रश्नाभिप्रायः । अन्यथा विद्यावेद्यस्योच्यमानत्वेन तत्सिद्धार्थत्वप्रसङ्गात् । तथाच कथं तत्र 'उक्ता त उपनिषत्' इति परिहारः । यावद् विद्यावेद्यस्वरूपस्य सम्यगकथितत्वादित्यत प्रश्नपरिहारवाक्ययोरभिप्रायमाह– **सप्रतिष्ठामिति** ॥ परिहारवाक्यानुसारेण प्रश्नवाक्येऽपि तद् ग्राह्यमिति भावः ॥ **सम्यगेवेति** ॥ विद्यावेद्यस्वरूपस्य सम्यगुक्तिर्नाम स्वेन साकल्येनाज्ञेयत्वोक्तिरेव । नतु यावत्तत्स्वरूपोक्तिः । तथात्वे उपनिषत्स्वरूपं सम्यग् वक्तुं न शक्यत इत्येव वक्तव्यतयोक्ता त उपनिषदिति परिहारानुपपत्तेः । स्वेन साकल्येनाज्ञेयत्वं च 'न विद्म न विजानीमः' इत्यादावुक्तमिति भावः । नास्ति इत्याहेति शेषः । 'तस्यै तपो दमः कर्मेति प्रतिष्ठा' इति वाक्ये पदानां व्यवहितत्वेनान्वयं दर्शयति – **तप इति** ॥ तस्यै इति चतुर्थी षष्ठ्यर्थ इति भावेनोक्तम्– **विद्याया इति** । प्रतिष्ठाशब्दस्याऽयतनशब्दागतार्थतासिद्ध्यर्थं तदभिप्रायमाह– **तद्वस्त्विति** ॥ नतु विद्यायतनत्वं नाम विद्योत्पत्तिकारणत्वम् । तथाच सत्यशब्दार्थस्य सत्यवचनस्य तपआदिवद् विद्याप्रतिष्ठापकत्वमेवोचितम् । ननु विद्यायतनत्वमित्यतः सत्यशब्दार्थमाह– **सत्यमिति** ॥ **'मीमांसा उच्यते'** इति शेषः । प्रसिद्धिविरोधपरिहाराय तत्र प्रमाणमाह – **निर्णीयत इति** ॥ सम्यक् सत्यमिति परमार्थसत्यमितीत्यर्थः । इदमित्यस्य विवरणम्– **श्रुतीति** ॥ स्फुटमित्यस्य विवरणम्–**व्यक्तमिति** ॥ ब्रह्मणो निश्चयो यया सेति विग्रहः । अनेन सत्यशब्दस्य निर्णय इति प्रमाणकृतं व्याख्यानमपि समर्थितम् ॥

ननु विद्यायतनानाम् ऋगादिचतुष्टयमितिहासः पुराणानि शिक्षादिषडङ्गानि मन्वादिस्मृतिर्मीमांसा चेति चतुर्दशत्वात् कथं वेदाः सर्वाङ्गानि सत्यमायतनमिति त्रित्वोक्तिरित्यतश्चतुर्दशत्वेऽपि विवक्षाभेदेन त्रित्वोक्तिर्युज्यत इति भावेन

प्रमाणमाह– **ऋगिति** ॥ पञ्चरात्रं भारतं मूलरामायणमिति इतिहास-प्रभेदोक्तिः । भगवत्परमेवेति सम्बन्धः । सत्यमित्यनुवादेन मीमांसेति व्याख्यानम् ॥ चतुर्थः खण्डः ॥

**(श्रुत्यर्थः)**

एवमिन्द्रेण पृष्टा सोमा एतद् यक्षं युष्मदन्तर्यामिब्रह्मेति ह सम्यगुवाच । तस्य ब्रह्मण एव एतद् एतस्मिन् विजये सति यूयममहीयध्वम् अस्माकमेवायं विजय इति अहङ्कारं कृतवन्तः । तत एवोमोपदेशेनैव स इन्द्र इदं यक्षरूपं ब्रह्मेति विदाञ्चकार ज्ञातवान् । यस्माद् ब्रह्मवायुशेषगरुडरुद्राः सभार्याः स्वान्तर्यामिणो ब्रह्मणो विजयेऽस्माकमेवायं विजय इति गर्विणो नाऽसन् तस्माद् वा तस्मादेव एते देवा अन्यान् देवान् इन्द्रादीन् अपेक्ष्यातितरामिव अतिशयिता एव । इन्द्रादीनां गर्वित्वादिति भावः । यद्वा, 'तस्माद् यद् ये अग्निर्वायुरिन्द्रश्चेत्येते देवा अन्यान् देवान् अग्र्यवरसर्वदेवानपेक्ष्यातितरामिव अधिका एवेत्यर्थः । अत्रेन्द्रादिशब्दैः कामदक्षादयोऽपि ग्राह्याः । तस्मादित्युक्तं हेतुं विशदयति– **ते हीति** ॥ हि यस्मात् ते अग्निवाय्विन्द्रा देवा एनद् यक्षरूपं भगवन्तं नेदिष्ठं समीपस्थं पस्पृशुः स्पृष्टवन्तः तस्मादिति पूर्वेण सम्बन्धः ॥ १ ॥

तदेव विवृणोति– **ते हीति** ॥ ते प्रागुक्ता देवा एनद् यक्षरूपं ब्रह्म प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुः ज्ञातवन्तः । किमिति ? ब्रह्मेति । अत्रेन्द्र उमोपदेशेन प्रथमं ब्रह्म व्यजानात् । वाय्वग्नी तु प्रथमं यक्षरूपम् अपश्यतामिति विवेकः । उपलक्षणमेतत् । दक्षादीनामुत्तमत्वेऽपि भाष्योक्तं निमित्तं ग्राह्यम् । इन्द्राद्या अपि देवाः किं परस्परं समाः ? नेति भावेनाऽह– **तस्माद्वा इति** ॥ इन्द्रशब्देनात्र कामोऽप्युपलक्षणीयः । अन्यान् देवान् दक्षादीन् । इन्द्रस्योत्तमत्वे निमित्तमाह– **स हीति** ॥ तदेव विवृणोति– **स हीति** ॥ उमोपदेशेन भगवत्स्वरूपं प्रथमत इन्द्रो व्यजानात् । पश्चादिन्द्रोपदेशेनेतरेषां भगवज्ज्ञानमिति भावः ॥ २ ॥

तस्य भगवत अधिदैवमध्यात्मं चोपास्यरूपमुपदिशति– **तस्येति ॥** अधिदैवतं तस्य भगवत एष वक्ष्यमाण आदेश उपदेश इति सम्बन्धः । एतत् प्रसिद्धं यत् कपिलाख्यं रूपं विद्युतो विद्युदादिप्रकाशान् आ समन्ताद् अभिव्यद्युतद् व्यद्योतयत् प्राकाशयत् । स एव आः पूर्णत्वादाकारवाच्यं परं ब्रह्मेति तस्याऽदेश इत्यर्थः । यदेतदित्यत्रापि सम्बध्यते । यदेतत् कपिलाख्यं आ समन्तात् न्यमीमिषत् निमीलिताक्षमभवत् । अक्ष्णोर्निमेषणं कृत्वा क्षीरसागरे शेते स एव आः पूर्णत्वादाकारवाच्यं परं ब्रह्मेति तस्याऽदेश इत्यर्थः । अथ अधिदैवमुपास्यरूपकथनानन्तरमध्यात्मं तस्याऽदेशप्रकार उच्यत इत्यर्थः । यदेतत् प्रसिद्धम् अनिरुद्धाख्यं रूपं प्रति अभीक्ष्णं निरन्तरं सङ्कल्पः सङ्कल्पकं मनो गच्छतीव क्वापि सम्यक् न गच्छति । चशब्दो वक्ष्यमाणविशेषणसमुच्चये । अनेनैवानिरुद्धाख्येन भगवता प्रेरितं तन्मन उपस्मरति स्मरणसाधनं भवति । तद्ध तदेव । आ इत्यनुवर्तते आः परं ब्रह्मेत्यर्थः । अनिरुद्धाख्यविष्णोर्नामान्तरमाह– **तद्ध तद्वनमिति ॥** तदनिरुद्धाख्यं भगवद्रूपं तद्वनं नाम ततत्वात् तत्, वननीयत्वाद् वनमिति तद्वनशब्दाभिधेय-मित्यर्थः । किं तत इत्यत आह– **तद्वनमित्युपासितव्यमिति** ॥ ३ ॥

एवमुपासकस्य फलमाह– **य इति ॥** योऽधिकारी एतदनिरुद्धाख्यं भगवद्रूपम् एवं तद्वनमिति वेदोपास्ते, अथोपासनानन्तरम् एनमुपासकं सर्वाणि भूतानि संवाञ्छन्ति । मुक्त्यादावपि सर्वैरपेक्षितो भवेदित्यर्थः । एवमधिदैवमध्यात्मं चोपास्यभगवत्स्वरूपं श्रुत्वा हरः पुनरपि ब्रह्माणं पृच्छति– **उपनिषदमिति ॥** भो ब्रह्मन् सप्रतिष्ठां सायतनाम् उपनिषदं विद्यां तद्वेद्यमिति यावत् । सम्यग् ब्रूहीति हरोऽपृच्छदिति शेषः । एवं पृष्टो ब्रह्मा परिहारमाह– **उक्तेति ॥** ते तव उपनिषद् विद्या मयोक्ता । तदेव विशदयति– **ब्राह्मीमिति ॥** ते तव ब्राह्मीं ब्रह्मप्रतिपादिकाम् उपनिषदं विद्याम् अब्रूमेति ब्रह्मोवाच । वावेति प्रसिद्धिद्योतकं निपातद्वयम् । सम्यगेव मयोपनिषत्स्वरूपमुक्तं साकल्येनागोचरत्वस्योक्तत्वात् । अतस्तत्र वक्तव्यं

नास्तीति भावः । इदानीं विद्याप्रतिष्ठामाह– **तस्या इति ॥** तपश्चान्द्रायणा-दिकम् । दम इन्द्रियनिग्रहः । कर्म अश्वमेधादिरूपं चेत्येतत् । तस्यै तस्या उपनिषदो विद्यायाः प्रतिष्ठा । विद्या तपआदिमत्सु प्रतितिष्ठतीत्यर्थः । इदानीं विद्यासाधनमुपदिशति– **वेदा इति ॥** वेदा ऋगादयः, अङ्गानि शिक्षादीनि सत्यं मीमांसा तस्या विद्याया आयतनमुत्पत्तिकारणमित्यर्थः । प्रतिष्ठाय-तनसहितोपनिषत्स्वरूपवेत्तुः फलमाह– **य इति ॥** योऽधिकारी एतां सप्रतिष्ठां सायतनाम् उपनिषदं वेद स पाप्मानमपहत्य अनन्ते देशतः कालतो गुणतश्च परिच्छेदशून्ये स्वर्गे स्वरूपभूतरमणज्ञानरूपे लोके प्रकाशरूपे ज्येये सर्वोत्तमे विष्णौ प्रतितिष्ठति । द्विरुक्तिरादरार्था ॥ चतुर्थः खण्डः ॥

एवं समापितभाष्यो भगवानाचार्योऽन्तेऽपि भगवत्स्तुतिनतिरूपं मङ्गल-माचरति– **य इति ॥**

श्रीमदानन्दतीर्थार्यहृत्सरोजे व्यवस्थितः ।
आनन्दादिगुणोद्रिक्तः प्रीयतां कमलापतिः ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य तलवकारोपनिषद्भाष्यस्य विवरणं वेदेशतीर्थभिक्षुविरचितं समाप्तम् ॥**

—o—

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितभाष्यभूषिता

# काठकोपनिषत्

श्रीव्यासतीर्थविरचितविवरणेन,
श्रीवादिराजतीर्थविरचितप्रकाशिकया,
श्रीवेदेशतीर्थविरचितविवरणेन च संवलिता

(शान्तिमन्त्रः)

हरिः ओ३म् ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं कर-
वावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## (उपनिषत्)

*॥ हरिः ओ३म् ॥*

उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ। तस्य ह नचिकेता
नाम पुत्र आस। तं ह कुमारं सन्तं दक्षिणासु
नीयमानासु श्रद्धाऽऽविवेश। ॥ १ ॥

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥ २ ॥

स होवाच पितरं तात कस्मै मां दास्यसीति द्वितीयं तृतीयम्।
तं होवाच मृत्यवे त्वा ददानीति ॥ ३ ॥

## (श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं काठकोपनिषद्भाष्यम्)

*(मङ्गलाचरणम्)*

ओ३म्॥ नमो भगवते तस्मै सर्वतः परमाय ते।
सर्वप्राणिहृदिस्थाय वामनाय नमो नमः ॥ * ॥

*(यागस्य मोक्षसाधनत्वप्रतिपादनम्)*

अग्नौ विष्णुं सदा ध्यायंस्त्रिशोऽग्निं नाचिकेतकम्।
यश्चयीत स तु प्राप्य स्वर्गं तत्र भयातिगः।
उष्य मन्वन्तरं कालममृतत्वं भजेत् क्रमात्' इति ब्रह्मसारे ॥

इच्छन् वाजश्रवोनप्ता ददौ सर्वस्वदक्षिणाम्।
उद्दालकः स्वर्गलोकं ददौ गाश्च निरिन्द्रियाः ॥ * ॥

**मां दत्वाऽपि न ते गावो दातव्या ईदृशा इति ।**
**उवाच पुत्रस्तं बालस्तं शशाप पिता स्वयम्** ॥ * ॥

## (श्रीव्यासतीर्थविरचितविवरणम्)

**यत्पदं मुनिभिर्ध्यातं वेदान्तश्रान्तमानसैः ।**
**वन्दे तं परमात्मानं विष्णुं श्रीमध्ववल्लभम् ॥**

**यो देवः परमत्वेन सर्वदेवैरुपास्यते ।**
**हृदये वामनाख्यं तं वन्दे श्रीमध्ववल्लभम् ॥**

इहामुत्र भोगविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणोऽनिष्टनिवृत्तीष्टावाप्तिसाधनप्रतिपादिकां काठकोपनिषदं यथावद् व्याचिख्यासुर्भगवानानन्दतीर्थमुनिरादौ मङ्गलाचरणं चिकीर्षितपरिसमाप्त्यादिकारणमित्याशयवांस्तदुक्तगुणवत्तया भगवन्तं स्तुवन् प्रणमति– **नम इति** ॥ सर्वतः परमत्वम् 'इन्द्रियेभ्यः पराः' इत्यारभ्य 'अव्यक्तात् पुरुषः परः' इत्यन्तेनोक्तम् । 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इत्यत्र सर्वप्राणिहृदिस्थत्वं 'मध्ये वामनमासीनम्' इति वामनत्वं चोक्तम् । भक्त्याद्याधिक्यद्योतकेन नमनाभ्यासेन तद्युक्तमेव मङ्गलाचरणं चिकीर्षितसमाप्त्यादिकारणमिति सूचयति । यमादेर्ऋषित्वावगमाच्छन्दसोऽक्षरगणनयाऽवगतिसम्भवान्न तदुक्तिः । न केवलं ब्रह्मविद्या मोक्षैकफला, किन्तु पुष्पनिभस्वर्गफलाऽपि भवतीत्याशयवान् श्रोतुः श्रद्धाजननाय ब्रह्मविद्यामाख्यायिकयाऽऽह वेदपुरुषः– **उशन्नित्यादिकया ॥** उशन् स्वर्गादीच्छन् ॥

पीतमेवोदकं याभिर्न तु पातव्यमस्ति । जग्धमेव तृणं नतु जग्धव्यमस्ति । दुह्यत इति दोहः क्षीरं, दुग्ध एव दोहो नतु दोग्धव्यमस्ति यासां तास्तथोक्ताः । न विद्यते नन्दः सुखं येषु ते अनन्दाः तान् स गच्छति ता ददिति मन्वानः स पितरमुवाच । द्वितीयं तृतीयं द्विवारं त्रिवारं चोवाच ॥ १–३ ॥

## (श्रीमद्वादिराजपूज्यचरणविरचिता प्रकाशिका)

'उशन् ह वै वाजश्रवसः' इत्यत्र वाजश्रवो नाम कश्चिदृषिः । तस्य नप्ता पौत्रपुत्रः उद्दालकाख्यः वाजश्रवस इत्युच्यते । वाजश्रवःशब्दात् सम्बन्धार्थेऽण्प्रत्यये कृते सति वृद्धौ च कृतायां पूर्वाकारस्थाने आदिश्यमानवृद्धिरप्याकार एवेति वाजश्रवस इत्येव शब्दो निष्पन्न इति ज्ञेयम् ।

'पीतोदका जग्धतृणाः' इत्यत्र जरठायाः गोः प्रशिथिलदन्तत्वेन पुनः तृणाग्रहणे शक्त्यभावात् प्राग्जग्धमेव तृणं याभिर्न तु जग्दव्यमस्ति ता जग्धतृणाः । अत एव दूरगमने शक्त्यभावाच्च पिपासाभावात् पीतमेवोदकं याभिर्न तु पातव्यमस्तीति ताः पीतोदकाः ॥

## (श्रीवेदेशतीर्थविरचितविवरणम्)

प्रणम्य वामनं देवं श्रियं मध्वं गुरूंस्तथा ।
काठकोपनिषद्भाष्यव्याख्यानं क्रियते मया ॥

इह हि विषयविरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिण आत्यन्तिकानिष्टनिवृत्तीष्टप्राप्तिहेतुभगवत्स्वरूपज्ञापनाय प्रवृत्ताऽपि काठकोपनिषदन्यथाव्याख्यानावरुद्धत्वेन न तज्ज्ञापनसमर्थेति मन्यमानो भगवानानन्दतीर्थमुनिस्तां यथावद् व्याचिख्यासुः प्रारिप्सितपरिसमाप्त्यादिप्रयोजनतया शिष्टाचारावगतामेतदुपनिषत्प्रतिपाद्यदेवताप्रणतिं शिष्यशिक्षणार्थम् आदौ निबध्नाति–**नम इति** ॥ भगवते ऐश्वर्यादिषड्गुणसम्पन्नाय । तस्मै वेदादिप्रसिद्धाय वामनाय नम इति परोक्षतो नमस्कृत्यापरोक्षतोऽपि नमस्करोति । ते वामनाय नमो नम इति । अपरोक्षीकृते भगवद्रूपे भक्त्यतिशयद्योतनाय नमो नम इति द्विरुक्तिः । नम्यत्वोपपादकविशिष्टत्वोपपादनाय 'सर्वतः परमाय' इत्युक्तम् । सर्वतः इन्द्रियादेरव्यक्तान्तात् । सर्वतः परमत्वं च न राजादिवन्मन्तव्यमित्याह–**सर्वेति** ॥ सर्वतः परमस्योपासनार्थं न दूरे गन्तव्यमिति वाऽऽह–**सर्वेति** ॥ उपनिषत्प्रतिपाद्यभगवन्मूर्तिकथनं–**वामनायेति** ॥ वक्ष्यते च 'ईशानो भूतभव्यस्य'

इत्यादिना ऐश्वर्यादिरूपं भगवत्त्वम् । 'ब्रह्मजज्ञम्' इत्यत्र ब्रह्मजेत्यनेन वेदादिप्रसिद्धत्वम् । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना सर्वतः परमत्वम् । 'विद्धि त्वमेतं निहितं गुहायाम्' इत्यादिना सर्वप्राणिहृदिस्थत्वम् । 'मध्ये वामनमासीनम्' इत्यनेन वामनत्वं च ज्ञातव्यम् । ननु ऋषिदेवताच्छन्दो-ब्राह्मणपरिज्ञान एव विद्या फलति । अन्यथाऽनर्थोक्तेः । तथाहि श्रुतिः । 'यो हवा अविदितार्षच्छन्दोदैवतब्राह्मणेन' इत्यादि । ततस्तदत्र वक्तव्यमिति चेत् । सत्यम् । 'वामनाय' इत्यनेन दैवतोक्तैव । यमादेः स्पष्टं ऋषित्वावगमादक्षरपरिगणनया छन्दःपरिज्ञानसम्भवात् । विनियोजकवाक्यपर-ब्राह्मणपदोपलक्षितार्थज्ञानस्य व्याख्यानादेव सम्भवात् तदनुक्तिरिति । अत्र वामनस्य विषयत्वोक्त्यैव यत्परैरुक्तमस्या विद्यायाः परब्रह्म प्रत्यगात्मभूतं विषय इति तदपि परास्तम् । यथा चैतत् तथा वक्ष्यत्याचार्यः स्वयमेव । अत्र 'उशन् हवै वाजश्रवसः' इत्याख्यायिका विद्याप्रशंसया श्रोतॄणां श्रद्धा-तिशयजननार्थम् । स्मर्यते हि श्रद्धादीनां तत्वज्ञानहेतुत्वं 'श्रद्धावान् लभते ज्ञानम्' इति ॥

ननु 'स्वर्गे लोके न भयं किञ्चनास्ति' इत्यादिना स्वर्गलोकं प्रशस्य 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो' इत्यत्राग्नेः स्वर्गसाधनत्वमुच्यते तदयुक्तम् । अग्निमात्रस्य स्वर्गसाधनत्वेऽकृताग्निचयनस्यापि स्वर्गप्राप्त्यापत्तेः । नच 'योऽग्निं नाचिकेतं चिनुते' इति यजुर्वेदोक्तिबलादत्राप्यग्निचयनस्यैव स्वर्ग्यत्वं विवक्षितमिति वाच्यम् । अग्निचयनस्यापि स्वर्गमात्रं प्रति हेतुत्वसम्भवेऽपि 'स्वर्गलोका अमृतत्वं भजन्ते' इत्युक्तस्य स्वर्गप्राप्त्यनन्तरं मोक्षं प्रति हेतुत्वस्यानुपपत्तेः । 'तमेवं विद्वान्' इत्यादिश्रुतिविरोधादित्यतः प्रमाणेन तद्व्याचष्टे– **अग्नाविति** ॥ अत एव नाग्निचयनमात्रेण पूर्यत इति भावेन 'य एवं विद्वांश्चिनुते नाचिकेतम्' इत्युत्तरत्र । 'य उ चैनमेवं वेद' इति शाखान्तरेऽप्युक्तमिति भावः । त्रिशश्चयीतेति सम्बन्धः । 'त्रिनाचिकेतः'

इत्यादिप्रयोगात् त्रिश इत्युक्तम् । 'तत्र भयातिगः' इत्यनेन 'स्वर्गे लोके न भयं किञ्चनास्ति' इत्यस्य तात्पर्यमुक्तम् । न तत्र त्वमिति स्वर्गलोके मृत्योरभाव उक्तः । स न युक्तः । पुनरावृत्तिसद्भावेन सर्वथा मरणाभावायोगादित्यत उक्तम्– **उष्य मन्वन्तरं कालमिति** ।। तथाच मन्वन्तरकालपर्यन्तं न तत्र त्वमिति व्याख्येयमिति भावः । 'स्वर्गलोका अमृतत्वं भजन्ते' इत्यस्यार्थमाह– **अमृतत्वमिति** ।। मोक्षमित्यर्थः । ब्रह्मणा सहैव मोक्षप्राप्तेः स्वर्गप्राप्त्यनन्तरमेव तदभावात् क्रमादित्युक्तम् । एतेन स्वर्गलोका अमृतत्वममरणतां देवत्वं भजन्त इत्येतदपव्याख्यानमित्युक्तं भवति । प्राप्तस्वर्गलोकानां सर्वथा मरणाभावस्य बाधात् । मन्वन्तरादिकालमात्रवासित्वं चेन्न तत्र त्वम् इत्यनेनैव गथार्थत्वात् । अमरणतां देवत्वं भजन्त इत्यर्थ इति चेत्, न । तस्य योग्यतामात्रसाध्यत्वेन कर्मिमात्रस्य तदभावात् । मोक्षोऽपि योग्यमात्रसाध्य एवेति चेत् । सत्यम् । 'अग्नौ विष्णुं सदा ध्यायन्' इति समाख्याबलान्मोक्षयोग्यपरत्वस्य कल्पनात् । नच तथा त्वत्पक्षे किञ्चिज्ज्ञापकमस्तीति ।।

ननु 'उशन्ह्वै वाजश्रवसः' इत्यादिप्रथमत एवाव्याख्याय मध्यमवाक्यं किमर्थमादौ व्याख्यायते ? नच स्पष्टत्वात् तदुपेक्ष्येदं वाक्यं व्याकृतमिति वाच्यम् । उत्तरत्राऽदितोऽपि व्याख्यानात् । उच्यते । सङ्करेण हि स्वभाष्ये अथ काठकोपनिषद्वल्लीनां सुखार्थप्रतिबोधनार्थमल्पग्रन्थावृत्तिरारभ्यत इति प्रतिज्ञायोपनिषच्छब्दार्थविचारः कृतः । उपनिषदिति उपनिपूर्वस्य सदेर्विशरणगत्यवसादनार्थकस्य क्विप्प्रत्ययान्तस्य रूपम् । उपनिषदिति व्याचिख्यासितग्रन्थप्रतिपादितवेद्यवस्तुविषया विद्योच्यते । कस्मात् ? ये मुमुक्षवोऽपि दृष्टानुश्राविकविषयवितृष्णाः सन्त उपनिषच्छब्देन वाच्यां वक्ष्यमाणलक्षणां विद्यामुपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद् विनाशात् ब्रह्मविद्योपनिषदित्युच्यते । तथाच वक्ष्यते 'निचाय्य

तं मृत्युमुखात् प्रमुच्यते' इति । पूर्वोक्तविशेषणान् मुमुक्षून् एतद् ब्रह्म गमयतीति गमयितृत्वेन योगेन वा ब्रह्मविद्योपनिषदित्युच्यते । तथा च वक्ष्यति– 'ब्रह्मप्राप्तो विरजोऽभूद् विमृत्युः' इति । लोकादिर्ब्रह्मजो योऽग्निस्तद्विषयायाः विद्यायाः द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोक-फलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रवसम्बन्धस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन योगेन साऽपि विद्योपनिषदि-त्युच्यते । तथा च वक्ष्यति– 'स्वर्गलोका अमृतत्वं भजन्ते' इत्यादीनि ॥

तदेतद्दूषयितुं 'स्वर्गलोका अमृतत्वं भजन्ते' इति वाक्यतात्पर्यमादा-वेवोक्तम् । तथाहि । यदुक्तं 'लोकादिर्ब्रह्मजो योऽग्निः' इत्यादि तदयुक्तम् । स्मृतिसमाख्यया द्वितीयवरेण प्रार्थ्यमानाया अपि विद्याया अग्निस्थविष्णु-विषयतया तस्या अपि मोक्षहेतुत्वेन स्वर्गमात्रहेतुत्वाभावात् । किञ्चोप-निषदिति ग्रन्थप्रतिपादितवेद्यवस्तुविषया विद्योच्यत इत्यसत् । विद्यायामुप-निषच्छब्दप्रयोगादर्शनात् । 'सर्वासु शाखास्वारणमावर्तयेदारणमावर्तयेदुप-निषदमावर्तयेदुपनिषदमावर्तयेत्' इत्यादिश्रुतौ 'उपनिषदमधीमहे अध्यापयामः' इति लौकिकव्यवहारे उपनिषच्छब्दस्य ग्रन्थ एव प्रयोगाच्च । नच संसार-हेत्वविद्यादिविशरणादेर्धात्वर्थस्य ग्रन्थमात्रेऽसम्भवाद् विद्यायां च सम्भवाद् विद्यायामेवोपनिषच्छब्दो मुख्यः ग्रन्थस्य तु तादर्थ्येन तच्छब्द इति वाच्यम् । ग्रन्थस्यापि ज्ञानद्वाराऽविद्यानिवृत्त्यादिहेतुत्वसद्भावात् । नहि यत्र प्रयोगो वर्तते तत्र शब्दोऽमुख्यः। यत्र तु स नास्ति तत्र मुख्य इति दृष्टचरमिति । एवं परकीयादिभाष्यनिरासाय 'स्वर्गलोका अमृतत्वं भजन्ते' इति वाक्यमादौ व्याख्यायेदानीम् अप्रतिपत्तिविप्रतिपत्तिनिरासायाऽदित एव व्याचक्षाणस्तावद् 'उशन् हवै' इति प्रथमवाक्यं प्रमाणेनैव व्याचष्टे– **इच्छन्निति** ॥ उशन् इत्यस्यार्थः– **इच्छन्निति** ॥ वश इच्छायामिति धातोः । वकारस्योकारः । उश इच्छायामित्येव वा धातुः । उक्तं च–'उश इच्छा प्रकीर्तिता' इति । वश कान्तौ कान्तिरिच्छेति वा । स्वर्गलोकमिच्छन्नित्यन्वयः । स्वर्गलोकमिति

इत्यादिप्रयोगात् त्रिश इत्युक्तम् । 'तत्र भयातिगः' इत्यनेन 'स्वर्गे लोके न भयं किञ्चनास्ति' इत्यस्य तात्पर्यमुक्तम् । न तत्र त्वमिति स्वर्गलोके मृत्योरभाव उक्तः । स न युक्तः । पुनरावृत्तिसद्भावेन सर्वथा मरणाभावायोगादित्यत उक्तम्– **उष्य मन्वन्तरं कालमिति** ॥ तथाच मन्वन्तरकालपर्यन्तं न तत्र त्वमिति व्याख्येयमिति भावः । 'स्वर्गलोका अमृतत्वं भजन्ते' इत्यस्यार्थमाह– **अमृतत्वमिति** ॥ मोक्षमित्यर्थः । ब्रह्मणा सहैव मोक्षप्राप्तेः स्वर्गप्राप्त्यनन्तरमेव तदभावात् क्रमादित्युक्तम् । एतेन स्वर्गलोका अमृतत्वममरणतां देवत्वं भजन्त इत्येतदपव्याख्यानमित्युक्तं भवति । प्राप्तस्वर्गलोकानां सर्वथा मरणाभावस्य बाधात् । मन्वन्तरादिकालमात्रवासित्वं चेन्न तत्र त्वम् इत्यनेनैव गथार्थत्वात् । अमरणतां देवत्वं भजन्त इत्यर्थ इति चेत्, न । तस्य योग्यतामात्रसाध्यत्वेन कर्मिमात्रस्य तदभावात् । मोक्षोऽपि योग्यमात्रसाध्य एवेति चेत् । सत्यम् । 'अग्नौ विष्णुं सदा ध्यायन्' इति समाख्याबलान्मोक्षयोग्यपरत्वस्य कल्पनात् । नच तथा त्वत्पक्षे किञ्चिज्ज्ञापकमस्तीति ॥

ननु 'उशान्ह्वै वाजश्रवसः' इत्यादिप्रथमत एवाव्याख्याय मध्यमवाक्यं किमर्थमादौ व्याख्यायते ? नच स्पष्टत्वात् तदुपेक्ष्येदं वाक्यं व्याकृतमिति वाच्यम् । उत्तरत्राऽदितोऽपि व्याख्यानात् । उच्यते । सङ्करेण हि स्वभाष्ये अथ काठकोपनिषद्वल्लीनां सुखार्थप्रतिबोधनार्थमल्पग्रन्थावृत्तिरारभ्यत इति प्रतिज्ञायोपनिषच्छब्दार्थविचारः कृतः । उपनिषदिति उपनिपूर्वस्य सदेर्विशरणगत्यवसादनार्थकस्य क्विप्प्रत्ययान्तस्य रूपम् । उपनिषदिति व्याचिख्यासितग्रन्थप्रतिपादितवेद्यवस्तुविषया विद्योच्यते । कस्मात् ? ये मुमुक्षवोऽपि दृष्टानुश्राविकविषयवितृष्णाः सन्त उपनिषच्छब्देन वाच्यां वक्ष्यमाणलक्षणां विद्यामुपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद् विनाशात् ब्रह्मविद्योपनिषदित्युच्यते । तथाच वक्ष्यते 'निचाय्य

तं मृत्युमुखात् प्रमुच्यते' इति । पूर्वोक्तविशेषणान् मुमुक्षून् एतद् ब्रह्म गमयतीति गमयितृत्वेन योगेन वा ब्रह्मविद्योपनिषदित्युच्यते । तथा च वक्ष्यति– 'ब्रह्मप्राप्तो विरजोऽभूद् विमृत्युः' इति । लोकादिर्ब्रह्मजो योऽग्निस्तद्विषयायाः विद्यायाः द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रवसम्बन्धस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन योगेन साऽपि विद्योपनिषदित्युच्यते । तथा च वक्ष्यति– 'स्वर्गलोका अमृतत्वं भजन्ते' इत्यादीनि ॥

तदेतद्दूषयितुं 'स्वर्गलोका अमृतत्वं भजन्ते' इति वाक्यतात्पर्यमादावेवोक्तम् । तथाहि । यदुक्तं 'लोकादिर्ब्रह्मजो योऽग्निः' इत्यादि तदयुक्तम् । स्मृतिसमाख्यया द्वितीयवरेण प्रार्थ्यमानाया अपि विद्याया अग्निस्थविष्णुविषयतया तस्या अपि मोक्षहेतुत्वेन स्वर्गमात्रहेतुत्वाभावात् । किञ्चोपनिषदिति ग्रन्थप्रतिपादितवेद्यवस्तुविषया विद्योच्यत इत्यसत् । विद्यायामुपनिषच्छब्दप्रयोगादर्शनात् । 'सर्वासु शाखास्वारणमावर्तयेदारणमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तयेत्' इत्यादिश्रुतौ 'उपनिषदमधीमहे अध्यापयामः' इति लौकिकव्यवहारे उपनिषच्छब्दस्य ग्रन्थ एव प्रयोगाच्च । नच संसारहेत्वविद्यादिविशरणादेर्धात्वर्थस्य ग्रन्थमात्रेऽसम्भवाद् विद्यायां च सम्भवाद् विद्यायामेवोपनिषच्छब्दो मुख्यः ग्रन्थस्य तु तादर्थ्येन तच्छब्द इति वाच्यम् । ग्रन्थस्यापि ज्ञानद्वाराऽविद्यानिवृत्त्यादिहेतुत्वसद्भावात् । नहि यत्र प्रयोगो वर्तते तत्र शब्दोऽमुख्यः। यत्र तु स नास्ति तत्र मुख्य इति दृष्टचरमिति । एवं परकीयादिभाष्यनिरासाय 'स्वर्गलोका अमृतत्वं भजन्ते' इति वाक्यमादौ व्याख्यायेदानीम् अप्रतिपत्तिविप्रतिपत्तिनिरासायाऽदित एव व्याचक्षाणस्तावद् 'उशन् हवै' इति प्रथमवाक्यं प्रमाणेनैव व्याचष्टे– **इच्छन्निति** ॥ उशन् इत्यस्यार्थः– **इच्छन्निति** ॥ वश इच्छायामिति धातोः । वकारस्योकारः । उश इच्छायामित्येव वा धातुः । उक्तं च–'उश इच्छा प्रकीर्तिता' इति । वश कान्तौ कान्तिरिच्छेति वा । स्वर्गलोकमिच्छन्नित्यन्वयः । स्वर्गलोकमिति

श्रुतौ शेषोक्तिः । वाजश्रवोनप्रेत्यनेन वाजश्रवा इति कश्चिदृषिस्तस्यापत्यं वाजश्रवस इति व्याख्यानमसदित्युक्तं भवति । सर्ववेदसमित्यस्यार्थः– **सर्वस्वदक्षिणामिति ॥** उद्दालको नामतः । कथं तर्ह्यौद्दालकिरित्युत्तरत्र प्रयोगः । उद्दालक एवौद्दालकिरिति व्याख्यानात् । यद्वा, एततपितुरपि उद्दालक इति नाम । अतो नानुपपत्तिः । 'सर्ववेदसं ददौ' इत्येतदनन्तरमध्याहार्यमाह– **ददाविति ॥** 'निरिन्द्रियाः' इति वक्ष्यमाणविशेषणोपलक्षणम् । अन्यथा दक्षिणासु नीयमानासु कुमारस्य श्रद्धाप्रवेशे कारणाभावप्रसङ्गः । पीतोदका इत्याद्यनुवादासम्भवश्चेति भावः ॥

ननु सर्वस्वदक्षिणादानावसरे देयकोटौ प्रवेशाभावात् 'तात कस्मै मां दास्यसि' इति वचने किं निमित्तमित्यतस्तदभिप्रायमाह– **मामिति ॥** ते त्वया ईदृशाः ईदृश्यः गावो न दातव्याः । नचैवं गोदानप्रतिज्ञाभङ्गः । मां दत्वाऽपि तस्याः पूरणीयत्वादित्यर्थः । 'स होवाच पितरम्' इत्यस्यार्थः– **उवाचेति ॥** 'तं होवाच मृत्यवे त्वा ददानि' इति वाक्यस्य यथाश्रुतमात्रार्थ-प्रतीतिनिरासायाभिप्रेतमर्थमाह– **तमिति ॥** त्वं म्रियस्व । मृत्वा मृत्यो-र्गृहान् गच्छ । तदपि प्रवसन्तं मृत्युं प्रति गन्ताऽसि । तस्य गृहे तिस्रो रात्रीरनश्नन्नेव वसतादित्यादि शशापेत्यर्थः । तथाचोक्तं यजुर्वेदकाठके– 'सहोवाच । तात कस्मै मां दास्यसीति । द्वितीयं तृतीयम् । तं ह परीत उवाच मृत्यवे त्वा ददानीति । परेहि मृत्योर्गृहान् मृत्यवे त्वाऽदामिति । तं वै प्रवसन्तं गन्ताऽसीति होवाच । तस्य स्म तिस्रो रात्रीरनश्नन् गृहे प्रवसतात् । स यदि त्वा पृच्छेत् कुमार कति रात्रीरवात्सीरिति तिस्र इति प्रतिब्रूतात् । किं प्रथमां रात्रिमाश्ना इति प्रजां त इति । किं द्वितीयामिति पशूंस्त इति । किं तृतीयामिति साधुकृत्यां त इति' इति । एवं चात्र श्रुतौ 'मृत्यवे त्वां ददानि' इति उपलक्षणम् । अत एव शाखान्तरोक्तस्यापि सङ्ग्रहाभिप्रायेणैव 'तं शशाप' इति सामान्येनोक्तम् ॥

## (खण्डार्थः)[1]

ततश्चोशन् हवा इत्यादेरेवमक्षरयोजना–उशन् स्वर्गलोकमिच्छन् । वाजश्रवसः नप्ता वाजश्रवोनप्ता । सर्ववेदसं सर्वस्वदक्षिणां ददौ । हवा इति निपातौ वृत्तार्थस्मरणार्थौ । निरिन्द्रिया गाश्च ददाविति शेषः । तस्य ऋषेर्नचिकेता नाम पुत्र आस ह किल । तं सन्तं कुमारं तासु गोषु दक्षिणासु नीयमानासु दक्षिणात्वेन दीयमानासु सतीषु । श्रद्धा पितुर्हितकामप्रयुक्तास्तिक्य-बुद्धिराविवेश । हेत्याश्चर्ये । कुमारस्यापि श्रद्धा जातेति ॥ १ ॥

स आविष्टश्रद्धो नचिकेता एवममन्यत । कथं पीतमेव नतु पातव्यमुदकं याभिस्ताः पीतोदकाः, जग्धं भक्षितमेव नतु भक्षणीयं तृणं यासां ता जग्धतृणाः, दुह्यत इति दोहः क्षीरं, दुग्धमेव दोहो नतु दोह्यमस्ति यासां तास्तथोक्ताः, निरिन्द्रियाश्चक्षुःपादादीन्द्रियशून्याः, अप्रजननसमर्था वा, या गावस्ता ददत् प्रयच्छन् यः पुरुषः स ये ते प्रसिद्धाः अनन्दा नाम लोकास्तान् गच्छतीति । अत्र प्रामादिकैकगोदानव्यावृत्त्यर्थं पीतोदका इत्यादि बहुव-चनम् । नन्वन्यत्रानन्दशब्दस्तमःपरतया व्याख्यातः । यथोक्तम्– 'नित्यदुःख-स्वरूपत्वादनन्दं तत् तमो मतम्' इति । तत् कथमेतादृग्गोदानमात्रेण तमः प्राप्तिरिति । सत्यम् । अत्रापि गोदानकर्तुस्तमोयोग्यत्वेऽनन्दशब्दस्य तमःपरत्वमन्यथा तादृगनित्यनरकपरत्वमित्यङ्गीकारादिति ॥ २ ॥

एतादृशगोदानकर्तुरेवमनर्थः । अयं च तादृशीरेव गाः प्रयच्छति । अतोऽस्यानर्थो भविष्यति । पुत्रेण च सता मया स परिहर्तव्य इति मन्यमानः स कुमारो मां दत्वाऽपि ते न गावो दातव्या ईदृश्य इति भावेन पितर-मुवाच । किमिति ? हे तात मां कस्मै दास्यसीति । एवमुक्ते बालकत्वाद् यत्किञ्चिद् वदतीति मन्यमानेन पित्रोपेक्ष्यमाणः स द्वितीयं तृतीयं द्विवारं

१. यद्यपि मुद्रितपुस्तके द्वितीयखण्डभाष्यव्याख्यानानन्तरं प्रथमखण्डमन्त्रार्थः दृश्यते । तथाऽपि अध्येतॄणां सौकर्यायात्रैव निवेशितः ।

त्रिवारमप्येवमेवोवाच । नायं बालकस्वभाव इति मत्वा क्रुद्धः सन् तं कुमारं प्रत्युवाच । किमिति ? त्वा त्वां मृत्यवे यमाय दास्यामीति । त्वं म्रियस्वेति शशाप । उपलक्षणमेतत् । मृत्वा मृत्योर्गृहान् गच्छ । तदाऽपि प्रवसन्तं मृत्युं प्रति गन्ताऽसि । तस्य गृहे तिस्रो रात्रीरनश्नन्नेव वसतात् । स देशान्तरादागतो यमो यदि त्वां पृच्छेत् । कुमार कति रात्रीरवात्सीरिति तदा तिस्र इति प्रतिब्रूयात् । किं प्रथमरात्रावाश्ना इति यदि पृच्छेत् तदा ते प्रजामिति प्रतिब्रूतात् । किं द्वितीयरात्रावाश्ना इति पृच्छेत् तदा पशूंस्त इति प्रतिब्रूयात् । किं तृतीयरात्रावाश्ना इति पृच्छेत् साधुकृत्यां त इति प्रतिब्रूतादिति शशापेति ग्राह्यम् । एतादृशं पुत्रं प्रत्यपि साक्षात् पिताऽप्येवमुक्तवानिति आश्चर्यद्योतनाय हेत्युक्तम् ॥ ३ ॥

**(उपनिषत्)**

*(उद्दालकशापस्य नचिकेतसः प्रतिक्रिया)*

**बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।**
**कि॒ स्विद् यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति ॥ ४ ॥**

**अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे ।**
**सस्यमिव मर्त्यः पच्यते सस्यमिव जायते पुनः ॥ ५ ॥**

*(अतिथिसत्कारस्य प्राशस्त्यप्रतिपादनम्)*

**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।**
**तस्यैता॒ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ६ ॥**

**आशाप्रतीक्षे सङ्गतं॒ सूनृतां**
**चेष्टापूर्ते पुत्रपशू॒श्च सर्वान् ।**
**एतद् वृङ्क्ते पुरुषस्याल्पमेधसो**
**यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ७ ॥**

## (भाष्यम्)

**स जगाम यमं बालो ब्रह्मचारी यमस्य तु।**
**पत्न्या सम्पूज्यमानोऽपि जग्राहार्घ्यादिकं नतु।**
**आगते तु यमे प्राह यमं सोदकमाहर** ॥ * ॥

## (व्यासतीर्थीयम्)

मृत्यवे त्वा ददानीति म्रियस्वेति शप्तश्चाऽह– **बहूनामित्यादि** ॥ बहूनां मृतानां मध्येऽहं प्रथमो यममेमि तदा यमस्य मया कर्तव्यं किमासीद्यत्करिष्यतीत्यादियोजना ॥

विद्यमानस्यैव मरणस्य दत्तत्वान्न तत्र मम क्लेश इत्याह–**अनुपश्येति** ॥ पूर्वे यथा मृतास्तदनुपश्य तथा परे भविष्यन्तीति प्रतिपश्य । देहिनो मरणं नियतमित्युक्तमर्थं दृष्टान्तेनाऽह–**सस्यमिति** ॥ स मृतो यमनसदनं गतः ॥

तदा यमो लोकान्तरादागतः । आगतं यमं भार्योवाचेति वैश्वानर इत्यस्य प्राग् ग्राह्यम् । अतिथिर्ब्राह्मणो वैश्वानरः सन् गृहान् प्रविशतीति योजना । एतां श्रुत्याद्युक्ताम् ॥

अतिथिपूजाऽकरणेऽनिष्टमाह– **आशेति** ॥ आशा प्राप्तेच्छा । अप्राप्तेच्छा प्रतीक्षा । सङ्गतं सुहृत्सङ्गतिम् ॥ ४–७ ॥

## (प्रकाशिका)

'बहूनामेमि मध्यमः' इत्यत्र मध्यमः मध्यस्थः सन् । मरणं तावत् सार्वजनीनम् । एवं च ममानेन न काऽपि हानिरिति भावेन बहूनामित्याद्युक्तम् । 'अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे' इत्यत्र पूर्वं मृतानां पुंसां मृत्यनुसारेणमरणस्य दृष्टत्वात् श्रुतत्वाच्चानुपश्येत्युक्तम् । उपरि म्रियमाणानां प्राङ् मृतप्रतिमतयाऽनुमेयत्वात् प्रतिपश्येत्युक्तमिति ॥

'आगतं यमं भार्योवाच' इति 'वैश्वानरः' इत्यस्य प्राग् ग्राह्यम्' इति व्यासतीर्थीये । अन्यथा भार्यावचनस्यानवसरस्थत्वादिति ज्ञेयम् । अत एव स्मृत्याऽपि सङ्गतिघटनाय 'स जगाम यमं बालः' इति श्रुत्यभिमत-योग्यप्रमेयाध्याहारः कृतः । श्रुतिस्तु विवेकिनः कुमारस्याप्रियत्वाद्यमलोकगमनं नोदाजहारेति ज्ञेयम् । सति भर्तरि पृथगतिथिपूजने भार्याया अनधिकार इति कुमारस्य भावविवेचनायाऽह– **जग्राहार्घ्यादिकं न त्विति** ।। श्रुतिस्तु भर्तरि देशान्तरं गते सत्यग्निहोत्राहुतावपि भार्याया अधिकारः किमुतातिथिपूजन इति भावेन न तत्स्पष्टमाह कुमारोऽपि प्रबलतमवरस्वीकाराय यमचेतसि कृपां जनयितुं न तया कृतपूजां जग्राहेति ज्ञेयम् ।।

'एतद् वृङ्क्ते' इत्यत्र एतत्सर्वं वृङ्क्ते, वृञ् छेदन इति धातोः छिनत्तीत्यर्थः ।।

## (वेदेशीयम्)

यथाश्रुते सङ्गत्यदर्शनाद् 'वैश्वानरः प्रविशति' इत्यतः प्रागध्याहार्यमाह– 'स जागाम' इत्यादिना 'यमं सा' इत्यन्तेन ।। यमं प्रसवन्तमिति शेषः । 'तं वै प्रवसन्तं जगाम' इति शाखान्तरोक्तेः । अत एव 'यमस्य पत्न्या सम्पूज्यमानोऽपि' इत्युक्तम् । अर्घ्यादिकं न जग्राह । पित्रा यमलोकं प्रति गत्वाऽपि तस्य गृहे त्रिरात्रं न भोक्तव्यमित्युक्तत्वात् । तथाचोक्तम्– 'तस्य स्म तिस्रो रात्रीः' इत्यादि । हरापरहरेति प्रतीतिनिवारणाय 'हर वैवस्वतोदकम्' इत्यस्यार्थमाह– **उदकमाहरेति** ।। 'इत्युक्तः' इतीतिशब्दस्य पूर्वोत्तराभ्यां सम्बन्धः । अनेन 'वैश्वानरः' इत्यादिकं यमामात्यादिकानां वचनमित्येतदप-व्याख्यानमित्युक्तं भवति ।।

**(वि.ख.)** एवं शप्तः पुत्र आह– **बहूनामिति** ।। यद्यप्यहमद्य बहूनां पुरुषाणां मध्ये प्रथमो मुख्यः सन् यममेमि । वर्तमानसामीप्याद् वर्तमानव्यपदेशः । एवं बहूनां पुरुषाणां मध्यमः सन् वा यममेमि । तथाऽपि यमो मया यत्

करिष्यति तत् कर्तव्यं यमस्य किंस्वित्किमेव ? न किमपि । तथा च व्यर्थमेव त्वदीयं दानमिति भावः । अप्रयोजकतया गमने त्वया न तस्य प्रयोजनमित्यत उक्तम्– **प्रथमः सन्नेमीति** ॥ मुख्यत्वेनाऽगतस्य शुश्रूषाद्यनङ्गतया न तस्य त्वया प्रयोजनमित्यत उक्तम्– **मध्यमः सन्निति** ॥ तच्छुश्रूषकाणां नियतत्वेन तन्मध्ये मम प्रवेशायोगादिति भावः ॥ ४ ॥

त्वदीयं दानं व्यर्थं भवतीत्येव मम क्लेशो नतु मम मरणं दत्तमिति । देहिनां मरणस्य नियतत्वादिति भावेनाऽह– **अनुपश्येति** ॥ हे पितस्त्वं यथा पूर्वे देहिनः सर्वे मृता अभवन् तदनुपश्य विजानीहि । पूर्वेषां मृतत्वेऽप्यपरेषां मरणं कुत इति चेत्, यथा पूर्वे मृतास्तथाऽपरे मरिष्यन्तीति प्रतिपश्य विजानीहि । देहित्वाविशेषादिति भावः । देहिनां मरणं नियतमित्येतमर्थं दृष्टान्तेन साधयति– **सस्यमिवेति** ॥ यथा सस्यं पच्यते परिपक्वं भवति । ततश्च जीर्यते । एवं मर्त्योऽपि जरादिना परिपक्वस्सन् नश्यतीत्यर्थः । न घटादिवद् देहिनः सर्वथा नाश इति लभ्यते सस्य दृष्टान्तकथनेन । यद्वा देहिनां मरणस्य नियतत्वेऽपि बाल्यावस्थायामेवेति नियमाभावाद् बालकस्य मम त्वया मरणं दत्तमित्यपि न क्लेश इति भावेनाऽह– **सस्यमिवेति** ॥ अवश्यम्भाविन्यर्थे का व्यथेति भावः । स बाल एवं पितृसन्निधावुक्त्वा तं प्रवसन्तं यमं प्रति जगाम । यमे प्रवासाय गते तद्गृहं प्रति जगामेति यावत् । अतस्तस्य पत्न्या सम्पूज्यमानोऽप्यर्घ्यादिकं न जग्राह । स च यमागमनमेवावेक्षमाणस्तस्य गृहे तिस्रो रात्रीरनश्नन्नेवोवास । ततो यमो लोकान्तरादागत इति मध्ये वक्तव्यम् ॥ ५ ॥

आगते तु यमे यमभार्या यमं प्रत्याह– **वैश्वानर इति** ॥ हे वैवस्वत सूर्यस्य पुत्र । अतिथिर्ब्राह्मणः गृहिणां गृहान् वैश्वानरो अग्निः सन् प्रविशति । अतस्तस्यातिथिरूपवैश्वानरस्यैतां श्रुत्याद्युक्ताम् अर्घ्यादिरूपां शान्तिं शान्तिकारणं कुर्वन्ति । अन्यथा वैश्वानरेणेवातिथिना दाहः स्यात् । अतो अर्घ्याद्यर्थमुदकं हर आहर ॥ ६ ॥

किञ्चानश्नन् ब्राह्मणो यस्याल्पमेधसः पुरुषस्य गृहे वसति एतत् एतस्य आशाप्रतीक्षे अप्राप्तस्य प्राप्त्यर्थमिच्छा आशा । इदमेतस्मिन् काले सिद्ध्यतीति निश्चित्य तत्कालप्रतीक्षणं प्रतीक्षा, ते आशाप्रतीक्षे सङ्गतं सुहृत् सङ्गतं सूनृतां च साध्वीं वाणीमिष्टापूर्ते इष्टापूर्तजन्यं फलं सर्वान् पुत्रपशूंश्च वृङ्क्ते छेदयति । अयं च मत्कृतां पूजाम् अगृह्णन्नेवाऽस्त इति ॥ ७ ॥

**(उपनिषत्)**

**तिस्रो रात्रीर्यदवात्सीर्गृहे मे-**
**ऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः ।**
**नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु**
**तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥ ८ ॥**

*(नचिकेतसा प्रार्थितः प्रथमो वरः)*

**शान्तसङ्कल्पः सुमना यथा स्याद्**
**वीतमन्युर्गौतमो माऽभि मृत्यो ।**
**त्वत्प्रसृष्टं माऽभि वदेत् प्रतीत**
**एतत् त्रयाणां प्रथमं वरं वृणे ॥ ९ ॥**

**यथा पुरस्ताद् भविता प्रतीत**
**औद्दालकिरारुणिर्मत्प्रसृष्टः ।**
**सुखं रात्रीः शयिता वीतमन्यु-**
**स्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम् ॥ १० ॥**

*(नचिकेतसा प्रार्थितो द्वितीयो वरः)*

**स्वर्गे लोके न भयं किञ्चनास्ति**
**न तत्र त्वं न जरया बिभेति ।**

उभे तीर्त्वा अशनायापिपासे
शोकातिगो मोदते स्वर्गलोके ॥ ११ ॥

स त्वमग्निँ स्वर्ग्यमध्येषि मृत्यो
प्र ब्रूहि तँ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त
एतद् द्वितीयेन वृणे वरेण ॥ १२ ॥

प्र ते ब्रवीमि तदु मे निबोध
स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां
विद्धि त्वमेतं निहितं गुहायाम् ॥ १३ ॥

**(भाष्यम्)**

**इत्युक्तः स यमस्तं तु सम्पूज्यादाद् वरत्रयम् ।**
**सौमनस्यं पितुश्चैव नाचिकेताग्निगं हरिम् ।**
**मृते स्थितं च तं विष्णुमिति प्रादाद् वरत्रयम्' इति गतिसारे ॥ * ॥**

**(व्यासतीर्थीयम्)**

भार्योक्तो यमोऽर्घ्यादिपूजां कृत्वा वक्ति– **तिस्र इति** ॥ तस्मात् प्रति तस्य प्रतीकाराय त्रीन् वरान् वृणीष्व ॥ ८ ॥

वरान् वृणोति– **शान्तेत्यादिना** ॥ मदनिष्टे शान्तसङ्कल्पः माऽभि मां प्रति वीतमन्युरपगतकोपः । त्वत्प्रसृष्टं प्रेषितं प्रतीतः प्रत्यभिज्ञावान् । यथेति सर्वत्रानुवर्तनीयम् ॥ ९ ॥

प्रत्यभिज्ञापूर्वं तं वरं ददाति– **यथेति** ॥ पुरस्ताद् ग्रामान्तरादागते त्वयि यथा प्रतीतो भवति तथा मत्प्रसृष्टः मया प्रेरितः । उद्दालकस्यापत्यमौद्दालकिः । अरुणाया अपत्यमारुणिः । प्रतीतो भवति ॥ १० ॥

स्वर्ग्याग्निस्वरूपज्ञानलक्षणं द्वितीयं वरं याचितुं हेतुतया तत्फलस्वर्गस्वरूपं निरूपयति– **स्वर्ग इति** ॥ ११ ॥

स्वर्ग्यं स्वर्गसाधनम् अध्येषि जानासि । ज्योतिष्टोमादावप्रवृत्तस्य रोचकफलं स्वर्गः, प्रधानफलं तु मोक्ष इत्याशयवानाह– **स्वर्गेति** ॥ एतद् द्वितीयेन वरेण वृणे द्वितीयं वरं वृणे ॥ १२ ॥

'स्वर्गलोका अमृतत्वं भजन्ते ' इति ज्योतिष्टोममात्रान्मोक्षः प्रतीयते । सा 'तमेवं विद्वान्' इत्यादिश्रुतिविरुद्धा । अतस्तत्प्रमाणेन घटयन्नाह– **अग्नाविति** ॥ 'स त्वमग्निम्' इत्यत्र स्वर्ग्याग्निज्ञानमात्रस्य याचितत्वात् 'प्रते ब्रवीमि' इत्यादौ तावन्मात्रस्यैव ज्ञापितत्वाच्च कथमेवं व्याख्येत्याशङ्कां 'अग्नौ' इति प्रमाणेन निवृत्तामपि दाढर्याय निवारयन् आदित एव प्रमाणेन व्याचष्टे– **इच्छन्निति** ॥ ते ईदृश्यो गावो न दातव्याः । सर्वस्वदक्षिणाप्रतिज्ञाऽपि मां दत्वा पूरयितव्येति बालः पुत्रस्तमुवाचेति योजना । तमग्निं तस्मै उवाच । कथम्भूतमग्निम् अनन्तलोकाप्तिमित्यादियोजना । तत्प्रसिद्धाग्र्यादि-मात्रपरत्वप्रतीतिं निवारयन् व्याचष्टे– **अग्र्यत्वादिति** ॥ अनन्तस्य लोकः आप्यते येन, अनन्तलोक आप्यते येनेति सोऽनन्तलोकाप्तिरिति द्वावप्यर्थाविति तत्पदं व्याचष्टे– **लोक इति** ॥ १३ ॥

## (प्रकाशिका)

'औद्दालकिरारुणिः' इत्यत्र औद्दालकः पिता । अरुणा माता । पूर्वदेहस्य मृतत्वेऽपि अभिनवदेहे त्वयि पुत्रवात्सल्यात् पूर्ववन्मातापितरौ प्रीतिं कुरुतामित्यभिप्रायेणवरदानमिति भावः । प्रजानन्नित्यत्र नचिकेत इति सम्बुद्धिः । नचिकेता इति हि तस्य नामेति ज्ञेयम् ॥

## (वेदेशीयम्)

'नमस्तेऽस्तु ब्रह्मन्' इत्यादिकं कस्य वचनमिति न ज्ञायते । विशेषानुक्तेर्यमभार्यावचनमिति च प्रतीयते अत आह– **इत्युक्त इति** ॥

तथाचोक्तम्– 'नमस्ते अस्तु भवत इति होवाच' इति । तमागत्य पप्रच्छेति पूर्वं यमस्य प्रस्तुतत्वेन यमवाक्यमिदम् । किं तद्वरत्रयमित्यत आह– **सौमनस्यमिति ॥** एवशब्दश्चशब्दार्थः । हरिमित्यनेन सम्बन्धः । इति तेन याचितमिति शेषः । 'सौमनस्यं पितुः' इत्यनेन 'शान्तसङ्कल्पः' इत्यादि-प्रथमप्रश्नवाक्यं 'यथा पुरस्ताद् भविता प्रतीतः' इति परिहारवाक्यं चोक्त-तात्पर्यकम् । 'नाचिकेताग्निगं हरिम्' इत्यनेन द्वितीयप्रश्नप्रतिवचनयोरग्निमात्र-विषयत्वमसदित्युक्तं भवति । हरिं हरिज्ञानमित्यर्थः । एवमुत्तरत्रापि । 'येयं प्रेते विचिकित्सा' इत्यादिप्रश्नपरिहारवाक्यतात्पर्यम् अन्यथाप्रतीतिनिरासायाऽह– **मुक्ते स्थितमिति ॥** 'मृते स्थितम्' इति क्वचित् पाठः ॥

**(वि.खं)** एवमुक्तो यमस्तं कुमारं पप्रच्छ । कुमार कति रात्रीरवात्सी-रिति । तिस्र इति प्रत्युवाच । किं प्रथमां रात्रिमाश्ना इति प्रजां त इति किं द्वितीयामिति पशूंस्त इति किं तृतीयामिति साधुकृत्यां त इतीति शाखान्तरोक्तं ग्राह्यम् ॥ एवं कुमारोक्तो यम आह– **तिस्र इति ॥** हे ब्रह्मन् नमस्यो नमस्कारार्होऽतिथिस्त्वं यत् यस्मान्मे मम गृहे तिस्रो रात्रीरन-श्नन्नेवावात्सीर्वासमकार्षीस्तस्माद् हे ब्रह्मन् ते तुभ्यं नमोऽस्तु मे मह्यं स्वस्त्य-स्तु मङ्गलमस्तु प्रति तस्य प्रतीकाराय । त्रीन् वरान् वृणीष्व ॥ ८ ॥

एवमुक्तो नचिकेताः प्रथमं वरं वृणोति– **शान्तसङ्कल्प इति ॥** मृत्यो गौतमो गोतमगोत्रापत्यं मम पिता । मामभि मां प्रति वीतमन्युर्विगतकोपो त एव मदनिष्टे शान्तसङ्कल्पः सुमनाः प्रसन्नमनाश्च यथा स्यात् । किञ्च त्वत्प्रसृष्टं त्वया प्रेषितं मां प्रतीतः स एवायं पुत्र इति प्रत्यभिजानन् यथाऽभिवदेत् सम्यग् वदेत् । एतत् पूर्वोक्तत्रयाणां वराणां मध्ये प्रथमं वरं वृणे ॥ ९ ॥

एवमुक्तो यमस्तथा भवत्वित्याह– **यथेति ॥** औद्दालकिरुद्दालक एव औद्दालकिः, उद्दालकस्यापत्यं पुमानिति वा । औद्दालकिरारुणिररुणाया अपत्यं पुमानारुणिस्तव पिता मृत्युमुखात् प्रमुक्तं त्वां ददृशिवान् पश्यन्

मत्प्रसृष्टो मत्प्रेरितो वीतमन्युः सन् पुरस्तात् पूर्वं त्वां प्रति यथा येन प्रकारेणावर्तत तथा भविता। प्रतीतः प्रत्यभिज्ञावांश्च भविता। रात्रीः सुखं शयिता। अत्र 'यथा पुरस्ताद् भविता' इत्यनेन 'सुखं रात्रीः शयिता' इत्यनेन च शान्तसङ्कल्पत्वं सुमनस्कत्वं चोक्तं भवति ॥ १० ॥

नचिकेता द्वितीयं वरं प्रार्थयितुमाह– **स्वर्ग इति ॥** हे मृत्यो स्वर्गे लोके भयं किञ्चन किमपि नास्ति। क्षुद्रभयाभावेऽपि मरणं स्यादित्यत उक्तम्– **न तत्र त्वमिति ॥** न तत्र मन्वन्तरकालपर्यन्तं मृत्युरस्तीत्यर्थः। जरया न बिभेति। अशितुमिच्छा अशनाया पातुमिच्छा पिपासा ते उभे तीर्त्वा शोकमतिक्रम्य गच्छतीति शोकातिगः स्वर्गलोके मोदते ॥ ११ ॥

किं तत इत्यत आह– **स त्वमिति ॥** हे मृत्यो स त्वं मम वरदाता त्वं स्वर्ग्यं पूर्वोक्तमाहात्म्यवत् स्वर्गसाधनीभूतमग्निमग्निस्थमग्र्यत्वादग्निनामानं विष्णुमध्येषि अधिकं जानासि। तं श्रद्दधानाय मह्यं प्रब्रूहि सम्यक् कथयेत्येतद् द्वितीयेन वरेण वृणे। न केवलं ज्योतिष्टोमाग्निस्थविष्णुज्ञानिनः स्वर्ग एव फलम्। किन्तु स्वर्गप्राप्त्यनन्तरं मोक्षोऽपीत्याह– **स्वर्गलोका इति ॥** स्वर्गो लोको येषां ते स्वर्गलोकाः स्वर्गे विद्यमाना जना वा अमृतत्वं मोक्षं क्रमाद् भजन्ते ॥ १२ ॥

एवमुक्तो यम आह– **प्र ते ब्रवीमीति ॥** हे नचिकेतः! स्वर्ग्यं स्वर्ग-साधनीभूतमग्निमग्निस्थमग्निनामकं भगवन्तं प्रकर्षेण जानन्नहं ते तं ब्रवीमि। त्वं तु मे मम सकाशात् तत् त्वदीप्सितं वस्तु निबोध विजानीहि। एवं प्रतिज्ञायाग्निस्थभगवत्स्वरूपमाह– **अनन्तेति ॥** हे नचिकेतस्त्वम् एतं त्वया पृष्टमग्निस्थम् अग्निनामकं भगवन्तम् अनन्तलोकाप्तिम् अनन्तस्य लोक आप्यते येनेति, अनन्तलोक आप्यते येनेति वा अनन्तलोकाप्तिस्तम्। अथो इति विशेषणान्तरसमुच्चयार्थः। प्रतिष्ठां सर्वलोकस्य धारकं गुहायां सर्वेषां हृद्गुहायां निहितं विद्धि जानीहि ॥ १३ ॥

(उपनिषत्)

*(इष्टकास्थितभगवद्रूपविषयकप्रश्नः)*

लोकादिमग्निं तमुवाच तस्मै
या इष्टका यावतीर्वा यथा वा।
स चापि तत् प्रत्यवदद् यथोक्त-
मथास्य मृत्युः पुनराह तुष्टः ॥ १४ ॥

तमब्रवीत् प्रीयमाणो महात्मा
वरं तवेहाद्य ददानि भूयः।
तवैव नाम्ना भविताऽयमग्निः
शृङ्कां चेमामनेकरूपां गृहाण ॥ १५ ॥

*(नाचिकेताग्निचयनानुष्ठातृफलनिरूपणम्)*

त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं
त्रिकर्मकृत् तरति जन्ममृत्यू।
ब्रह्मजज्ञं देवमीड्यं विदित्वा
निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥ १६ ॥

त्रिनाचिकेतस्त्रयमेतद् विदित्वा
य एवं विद्वाꣳश्चिनुते नाचिकेतम्।
स मृत्युपाशान् पुरतः प्रणोद्य
शोकातिगो मोदते स्वर्गलोके ॥ १७ ॥

एष तेऽग्निर्नचिकेतः स्वर्ग्यो
यमवृणीथा द्वितीयेन वरेण।

एतमग्निं तवैव प्रवक्ष्यन्ति जनास-
स्तृतीयं वरं नचिकेतो वृणीष्व ॥ १८ ॥

(भाष्यम्)

अग्र्यत्वादग्निनामाऽसौ नाचिकेताग्निगो हरिः ।
लोको विष्णोरनन्तस्य तज्ज्ञानान्नित्य आप्यते ॥

'प्रतिष्ठा सर्वलोकस्य स विष्णुः सर्वहृद्गतः ।
स एव सर्वलोकादिस्तं ज्ञात्वा मुच्यते ध्रुवम्' इति च ॥ * ॥

या इष्टका या इष्टकादेवताः ।

इष्टकादेवतां विष्णुं षष्ट्युत्तरशतत्रिकम् ।
यथावदेव विज्ञाय मुच्यते कर्मबन्धनात्' इति च[1] ॥ * ॥

'त्रिभिरेत्य सन्धिम्' [2]वेदैरविरुद्धः । वेदोक्तप्रकारेण भगवत्तत्वादिकं जानन्नित्यर्थः । 'त्रिकर्मकृत्' यज्ञदानतपःकर्ता ।

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' इति वचनात् ॥ * ॥

त्रयमेतत् या इष्टका इत्यादि ।

*('ब्रह्मजज्ञः' इति भगवन्नामनिरुक्तिः)*

ब्रह्मेति वेद उद्दिष्टस्तस्माद् व्यक्तो यतो हरिः ।
ब्रह्मजस्तेन कथितः स एव ज्ञोऽखिलज्ञतः' इति
[3]नामनिरुक्तौ ॥ * ॥

अनेकरूपां [4]स्वर्णमयीम्–

बहुरूपं च पुरटं कार्तस्वरमितीर्यते' इत्यभिधानम् ।

---

१. 'इति' ह.
२. 'वेदैरविरुद्धम्' ह.
३. 'नामनिरुक्ते' ह.
४. 'सुवर्णमयीं' ह.

यमोऽनुवादसन्तुष्टो वह्नेस्तन्नामतामपि ।
[१]'शृङ्कां स्वर्णमयीं चैव कण्ठमालामदाद् विभुः' इति पाद्मे ॥ ✻ ॥

*(नचिकेतसा याचितस्य अग्न्यन्तर्गतब्रह्मविद्याख्यद्वितीयवरस्य निरूपणम्)*

**लोकादिः प्रतिष्ठा ब्रह्मजज्ञोऽनन्तलोकाप्तिरित्यादिविशेषणैश्चं भगवानेव । 'स्तोममहदुरुगायं प्रतिष्ठाम्' इति परामर्शाच्च । भगवतो ह्युरुगायनाम प्रसिद्धम् । गुहानिहितत्वं च तस्यैव विशेषतः प्रसिद्धम् ॥**

**नचाग्निपरिज्ञानमात्रेणानन्तलोकाप्तिः, भगवज्ज्ञानं विना । 'तद् वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्त-वदेवास्य तद् भवति' इत्यादिश्रुतेः । नच मुख्ये सम्भवत्यमुख्यार्थो युज्यते ॥**

## (व्यासतीर्थीयम्)

इष्टकासङ्ख्यापरिमाणयोर्व्यक्तत्वात् तयोश्च 'यावतीर्वा यथा वा' इत्युक्तत्वाद्या इति व्यर्थमित्यतस्तद् व्याचष्टे– **या इति** ॥ तेनोक्तेष्टकादेवता का इष्टका-सङ्ख्या च केत्यत आह–**इष्टकेति** ॥ प्रत्यवदद् अनूदितवान् ॥ १४ ॥

अस्य तुष्टो मृत्युः पुनराह यदाह तत्तुष्ट्यवसर एवाऽह । नतु कालान्तर इत्याह–**तमब्रवीदिति** ॥ अयमग्निस्तव नाम्नैव भवितेति वरमदात् ॥ १५ ॥

स्वयं यमस्तथा प्रायुङ्क्त चेत्याह– **त्रिनाचिकेत इति** ॥ नचिकेतसोऽयं नाचिकेतः । त्रिवारं नाचिकेतो यस्यासौ त्रिनाचिकेतः । 'त्रिभिरेत्य सन्धिम्' इत्येतदनुवदन्नप्रतीतेर्व्याचष्टे– **त्रिभिरिति** ॥ वेदाविरुद्धत्वं च केन प्रकारेणेत्यतस्तात्पर्यार्थमाह– **वेदेति** ॥ यजनाध्ययनदानाख्यत्रिकर्मकृदित्य-न्यथाप्रतीतिनिरासाय अनुवदन् व्याचष्टे– **त्रिकर्मकृदिति** ॥ कुतोऽत्र यज्ञा-दयोऽर्थ इत्यतस्तेषामावश्यकत्वेनोक्तत्वादित्याह– **यज्ञेति** ॥ यजनादेरपि षट्-कर्मत्वेनाऽवश्यकतयोक्तत्वात् कथमेवमित्यतो यजनादेर्यज्ञादिष्वन्तर्भावादिति

१. 'सृङ्कां' ह.

द्रष्टव्यमित्यर्थः । त्रिकर्मकृत्त्वमात्रेण जन्ममृत्यू तरति किमित्यतः 'त्रिभिरेत्य सन्धिम्' इत्युक्तवेदोक्तभगवत्तत्वादिकं जानंश्चेत्याह– **ब्रह्मजज्ञमिति** ॥ निचाय्य विचार्य इमां वक्ष्यमाणां यो विद्वानेतत् त्रयं विदित्वा एवं ज्ञात-प्रकारेण चिनुते स इत्यादियोजना । तत्र त्रयमित्येतदप्रतीतेर्व्याचष्टे–**त्रय-मिति** ॥ सिंहावलोकनन्यायेन ब्रह्मजज्ञपदमप्रतीतेर्व्याचष्टे– **ब्रह्मेति** ॥ नन्वेवं तर्हि अनेकरूपपदमप्रतीयमानार्थमुर्वरितमित्यतस्तद् व्याचष्टे–**अनेकरूपा-मिति** ॥ भवत्वेवं व्याख्या यदि बहुरूपशब्दस्य सुवर्णवाचित्वं सिद्ध्येत् । तदेव कुतः ? इत्यतोऽभिधानेन समर्थयते– **बहुरूपमिति** ॥ अस्त्वनेकरूपा सुवर्णमयीति । अत्र सेति कुत इत्यत आह– **यम इति** ॥ 'स त्वमग्निं स्वर्ग्यम्' इति 'स्वर्ग्यमग्निं नचिकेतः' इति पृष्टमुक्तं च अग्निगहरिस्वरूपमिति व्याख्यानरूपागमैः सिद्धमेव । आन्तरोपपत्तिभिश्च तत् साधयति लोकादि-रित्यादिना । लोकादिरित्यादिविशेषणैश्च विशेषणानामन्यत्रासम्भवात् पृष्टोऽग्निरुक्तश्च भगवानेवेत्यर्थः । इतोऽपि नाग्निमात्रं पृष्टमुक्तं चेत्याह– **स्तोममहदिति** ॥ उत्तरत्र परामर्शाच्च । उरुगायनाम्नो भगवति प्रसिद्धौ खलु प्रश्नपरिहारयोर्भगवत्परत्वमित्यत आह– **भगवत इति** ॥ हिशब्देन 'श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः' इति, 'विचक्रमा-णस्त्रेधोरुगायः' इति स्मृतिश्रुतिभिः प्रसिद्धिं स्फुटयति । प्रकृतमर्थं लिङ्गान्तरेण च समर्थयते– **गुहानिहितत्वं चेति** ॥ 'विद्धि त्वमेतं निहितं गुहायाम्' इत्युक्तं गुहानिहितत्वं च तस्यैव भगवत एव । **'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः'** इत्यादौ, अत्र च 'मध्ये वामनमासीनम्' इत्यादौ विशेषतः प्रसिद्धमित्यतोऽप्यग्निगहरिस्वरूपमेव पृष्टमुक्तं चेत्यर्थः । अनन्तलोका-प्तित्वादिविशेषणानामन्यत्रापि घटमानत्वे कथं प्रश्नपरिहारयोर्विष्णुस्वरूप-विषयत्वनिश्चय इत्यतो मैवमग्निपरिज्ञानादनन्तलोकाप्तिश्रवणादित्याशयवांस्तस्या-ग्रावसम्भवं समर्थयितुं प्रतिजानीते– **नचाग्नीति** ॥ कुतोऽग्निपरिज्ञानादेरनन्त-

लोकाख्यभावोऽवगत इत्यत आह– **तद्वा इति** ॥ जुहोति ददाति । बहूनि वर्षसहस्राणि तपस्तप्यते तत्सर्वमन्तवदेवान्तवत्फलं भवतीति योजना । ननु स्वर्गो बहुकालीनत्वादनन्त इत्युच्यतेऽतस्तत्प्रापकोऽग्निरप्यनन्तलोकाप्तिरित्युच्यतेऽतः काऽत्र युक्तिरित्यत आह– **नचेति** ॥ बाधकाभावेन मुख्यार्थे सति युक्ते सति । प्रीत्या स्वदत्तं वरमवधारयति– **एतमिति** ॥ तवैव नाम्ना प्रवक्ष्यन्ति जनाः ॥

## (प्रकाशिका)

'या इष्टकाः' इत्यत्र इष्टकापदेन परितो यज्ञकुण्डबन्धनाय कुलालकृतचतुरस्रप्रादेशपरिमितमृण्मयपदार्था गृह्यन्ते । 'यथोक्तम्' – यावत्परिमाणतया यावत्सङ्ख्याकतया यथा शास्त्रे कथितं तथा प्रत्यवददित्यर्थः । तुष्टः पुनराहेत्यस्यैव विवरणं– **तमब्रवीदिति** ।। तदैवाब्रवीन्न तु कालान्तर इति ज्ञेयम् । 'तथा प्रायुङ्क्त च' इत्यत्र तथा नाचिकेत इति तन्नामानुस्यूततयैव प्रायुङ्क्त । त्रिवारं कृतनाचिकेताग्निपूज इति हि तस्यार्थः । सृङ्कां कण्ठमालाम् । अनेकरूपां स्वर्णमयीमित्यर्थः । 'यज्ञादिष्वन्तर्भावात्' इत्यत्र यजनाध्ययनयोः यज्ञपदेनैव गृहीतत्वादिति ज्ञेयम् । इदं चोपलक्षणम् । यजनादिषट्कर्मस्वपरिगणिततपसोऽपि सङ्गृहीतत्वादयमेव विभागः श्रेयानित्यपि द्रष्टव्यम् । 'तपसा ब्रह्म विजिज्ञासस्व' इति हि श्रुतिः । त्रिकर्मकृदिति प्रागनुक्तत्वात् पुनस्त्रयमेतद्विदित्वेत्यस्य कोऽर्थ इत्यत आह– **त्रयमेतद्या इष्टका इत्यादीति** ।। 'या इष्टकाः' इत्यादिश्रुतौ त्रयं या इष्टकादेवताः, यावतीरिति या सङ्ख्या, यथा वेति यदिष्टकाप्रमाणं चेति त्रयमुदितं तदेव त्रयमत्र विवक्षितम् । न तु पूर्वोक्तमतो न पौनरुक्त्यम् । अत एव तत्र त्रिकर्मकृदित्युक्तम् । अत्र तु विदित्वेत्युक्तमिति ज्ञेयम् । ब्रह्मजं जनि प्रादुर्भाव इति धातोः वेदवचनैरभिव्यक्तस्वरूपमित्यर्थः । जानातीति ज्ञम् । ज्ञेयविशेषानुक्तेः सङ्कोचे कारणाभावाच्च सर्वज्ञमित्यर्थः ॥

## (वैदेशीयम्)

'स त्वमग्निं स्वर्ग्यम्' इत्यादिद्वितीयप्रश्नपरिहारयोः श्रूयमाणोऽग्निशब्दस्तदन्तर्गतभगवत्पर इत्युक्तम् । तत् केन निमित्तेनेत्याशङ्कां परिहरन् 'अनन्तलोकाप्तिम्' इति वाक्यं प्रसिद्धाग्निपरमित्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे– **अग्र्यत्वादिति** ॥ अग्र्यत्वादग्रेभवत्वादुत्तमत्वादिति यावत् । अग्रशब्दात् सप्तमीसमर्थाद् भवार्थे निप्रत्यये रशब्दलोपश्चेति भावः । 'अनन्तलोकाप्तिम्' इत्यस्यार्थमाह– **लोक इति** ॥ 'अनन्तस्य' इत्यनुवादेन 'विष्णोः' इति व्याख्यानम् । अनेन अनन्तस्य लोक आप्यते येन सोऽनन्तलोकाप्तिरिति विग्रह इत्युक्तं भवति । अनन्तो लोक आप्यते येन सोऽनन्तलोकाप्तिरित्यपि विग्रहं दर्शयन्ति–**नित्य इति** ॥ नित्यो लोक इत्यन्वयः । स्वरूपसतस्तस्यानन्तलोकाप्तिसाधनत्वेऽपि प्रसङ्गात् तज्ज्ञानादित्युक्तम् । एतेनानन्तलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमिति व्याख्यानमपास्तम् । स्वर्गलोकस्यानन्तलोकत्वाभावात् । स्वर्गलोकोऽपि अनन्तस्य देशतोऽपरिच्छिन्नस्य लोको भवत्येवेति चेत्, अथाप्यसाधारण्येनैव व्यपदेशाद् अनन्तत्वाभावाच्चार्थान्तराङ्गीकारो युक्तः । प्रतिष्ठाशब्देन धारकत्वमुक्तम् । 'प्रतिष्ठा धारकः पुमान्' इति वचनात् । तत् कस्य धारक इत्यत आह– **प्रतिष्ठेति** ॥ 'निहितं गुहायाम्' इत्यस्यार्थमाह– **स विष्णुरिति** ॥ एतेन 'निहितं गुहायाम्' इत्यस्य विदुषां बुद्धौ प्रविष्टमिति व्याख्यानमपास्तम् । किञ्च 'आत्माऽस्य जन्तोर्निहितो गुहायाम्' इत्यादावुत्तरत्राऽऽत्मनो जीवहृद्गुहानिहितत्वमेवोच्यते । त्वयाऽपि तथैव व्याख्यानात् । एवं चात्रापि हृद्गुहानिहितत्वमेवोच्यत इति किं न व्याक्रियते । नचाग्नौ तस्यासम्भवादेवं व्याख्यानमिति वाच्यम् । तत एव विष्णुपरत्वाङ्गीकारौचित्यात् । अन्यथा प्रायपाठविरोधादिति ॥

'लोकादिम्' इत्यस्य लोकानामादिं प्रथमशरीरत्वादिति व्याख्यानमसत् । अग्नेः प्रथमशरीरत्वे मानाभावात् । 'तत्तेजोऽसृजत' इति श्रुतिरस्तीति चेत् । न । 'आत्मन आकाशः सम्भूतः' इत्यपि विद्यमानत्वादिति भावेन व्याचष्टे–

**स एवेति** ।। 'त्रिभिरेत्य सन्धिम्', 'तरति जन्ममृत्यू', 'निचाय्येमां शान्तिमत्यन्तमेति' इत्यादेस्तात्पर्यमाह– **तं ज्ञात्वेति** ।।

या इष्टकाः श्रोतव्याः स्वरूपेण ताश्चोवाचेति व्याख्यानमसत् । इष्टकास्वरूपस्य प्रत्यक्षसिद्धत्वेनावक्तव्यत्वादिति भावेन तदनूद्य व्याचष्टे– **या इति** ।। किञ्च 'त्रिनाचिकेतस्त्रयमेतद् विदित्वा, शान्तिमत्यन्तमेति' इत्युत्तरत्र 'त्रयमेतद् विदित्वा' इत्यनेन या इष्टका इत्याद्युक्तत्रयपरिज्ञानिनो मोक्षः फलत्वेनोच्यते । नच प्रसिद्धेष्टकाग्रहणे तदुपपद्यते । ननु इष्टकादेवताग्रहणेऽपि कथं तदुपपत्तिः ? अन्यदेवताज्ञानेन मोक्षासम्भवादित्यतः स्मृत्यैवेष्टकादेवतास्वरूपं निरूपयन् 'यावतीर्वा' इत्युक्तेष्टकादेवतासङ्ख्यां च दर्शयन् यथा वेत्युक्तं विवृणोति– **इष्टकादेवतामिति** ।। यद्यप्यन्यत्राशीत्युत्तरसहस्ररूपमिष्टकासु संस्थितमित्युक्तम् । 'अशीत्युत्तरसहस्ररूपं वर्णेषु संस्थितम्' इत्युपक्रम्य 'रूपाणि विष्णोस्तावन्ति चेष्टकासु पृथक् पृथक्' इत्यैतरेयभाष्ये उक्तत्वात् 'अशीतिसहस्रं वाऽर्कलिन' इति श्रुतेश्च । तथाऽपि तत् कौण्ठरव्यमतमाश्रित्योक्तम् । 'अथ कौण्ठरव्य' इत्युपक्रम्य 'अशीतिसहस्रं वा अर्कलिनम्' इत्युक्तत्वात् । ऋषिमतान्तरमाश्रित्येदमुक्तमित्यविरोधः । यद्वा प्रत्येकमेकैकेष्टकायाम् अशीत्युत्तरसहस्ररूपपरं तद्वचनम् । अत एव 'पृथक् पृथक्' इत्युक्तम् । अत्र तु इष्टकानां षष्ट्युत्तरशतत्रयसङ्ख्याकत्वात् तत्तद्गतैकैकरूपविवक्षया षष्ट्युत्तरशतत्रिकमित्युक्तमित्यविरोधः ।।

'त्रिभिरेत्य सन्धिम्' इत्येतदप्रतीतेरनूद्य तात्पर्यमाह– **त्रिभिरिति** ।। त्रिभिः ऋग्यजुःसामाथर्वाख्यैः वेदैः सन्धिं सम्बन्धमेत्य प्राप्येत्यक्षरार्थमभिप्रेत्य तत्तात्पर्यमुक्तम्– **वेदैरविरुद्ध इति** ।। वेदविरुद्धत्वे वेदैः सह सम्बन्धायोगादिति भावः । ननु वेदाविरुद्धत्वं वेदाध्ययनवत्त्वं तदुक्तकर्मानुष्ठानवत्त्वं वा वाच्यम् । अन्यस्यासम्भवात् । नच तद्युक्तम् । अज्ञानामपि वेदाध्ययनादिसत्त्वेन जन्ममृत्यूत्तरणप्रसङ्गादित्यत आह– **वेदेति** ।। तथाच त्रिनाचिकेतस्त्रिकर्मकृज्जन्ममृत्यू तरति इत्युक्ते भगवज्ज्ञानेनैव मोक्षश्रवणात् कथमेतदित्या-

शङ्कायां ज्ञानद्वारैव कर्मणो मोक्षसाधनत्वमभिप्रेतं न साक्षादिति भावेन 'त्रिभिरेत्य सन्धिम्' इत्युक्तमिति भावः । एतेन त्रिभिः मातापित्राचार्यैः सन्धिम् सम्बन्धमेत्य । मात्राद्यनुशासनं यथावत् प्राप्येत्यर्थ इत्येतदपव्याख्यान-मित्युक्तं भवति । तस्यापि कर्ममात्रत्वेन साक्षाज्जन्ममृत्यूत्तरणहेतुत्वा-सम्भवात् । त्रिकर्मकृत् इज्याध्ययनदानानां कर्तेति व्याख्यानमसदिति भावेन तद्व्याचष्टे– **त्रिकर्मकृदिति** ॥ परोक्त एवार्थः किं न स्यादित्यतो यज्ञ-दानतपसामावश्यकत्वस्मरणादिति भावेनाऽऽह– **यज्ञेति** ॥ अध्ययनमपि न त्याज्यमिति चेत् । न । अत्र तपःशब्दस्य

'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥

मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥'

इत्युक्तत्रिविधतपःपरत्वेनाध्ययनस्यापि तदन्तर्गतत्वादिति भावः ॥

त्रयमेतदित्यत्रोक्तं त्रयं किमिति न ज्ञायते अत आह– **त्रयमेतदिति** ॥ 'ब्रह्मजज्ञम्' इत्येतस्य ब्रह्मणो हिरण्यगर्भाज्जायत इति ब्रह्मजः । स चासौ ज्ञश्चेति तथोक्त इति व्याख्यानमसदिति भावेन ब्रह्मजज्ञपदं स्मृत्यैव व्याचष्टे– **ब्रह्मेतीति** ॥

अनेकरूपां विचित्रामित्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे– **अनेक-रूपामिति** ॥ अनेकरूपशब्दस्य सुवर्णवाचित्वेऽभिधानमाह–**बहुरूपमिति** ॥ बहुशब्दोऽनेकपरः । अस्त्वनेकरूपशब्दः सुवर्णवाची, तथाऽपि प्रकृते सुवर्णपर इति कुत इत्याशङ्कां परिहरन् 'स चापि तत्प्रत्यवदद् यथोक्तम्' इत्यारभ्य 'शृङ्कां चेमामनेकरूपां गृहाण' इत्यन्तवाक्यव्याख्यानरूपां स्मृतिं

पठति– **यम इति** ॥ शृङ्कामित्यनुवादेन कण्ठमालामिति व्याख्यानम् । अनेन 'शृङ्कां शब्दवतीं' इत्येतदपव्याख्यानमित्युक्तं भवति ॥

एवं स्वर्ग्याग्निप्रकरणं तदन्तर्गतभगवत्परमित्यागमेन साधितम् । इदानीम् आन्तरोपपत्तिभिश्च तत् साधयति– **लोकादिरित्यादिना** ॥ यद्वा, नन्वस्त्वेतत् प्रकरणं विष्णुपरम् । प्रसिद्धाग्निपरमपि किं न स्यात् । उभयपरत्वे बाधका-भावात् । नच सर्वेषां शब्दानां भगवन्नामत्वेनाग्निशब्दस्यापि भगवद्वाचकत्वादन्य-त्रावृत्तिः। समाकर्षन्यायेनान्यत्रापि शब्दस्य वृत्त्यङ्गीकारादित्यत आह– **लोका-दिरिति** ॥ आदिपदेन गुहानिहितत्वजन्ममृत्यूत्तरणादिमोक्षहेतुज्ञानविषयत्वा-दीनां ग्रहणम् । चशब्देनोक्तागमसमुच्चयः । भगवानेव एतत्प्रकरणप्रतिपाद्य इति शेषः । एवशब्देनाग्निव्यावृत्तिः । सत्यमन्यत्रापि शब्दप्रवृत्तिरङ्गीक्रियत इति । तथाऽपि यत्रान्यग्रहणे बाधकाभावस्तत्रैव । यथा 'अव्यक्तात् पुरुषः परः' इत्यादावव्यक्तादिशब्दानां प्रकृत्यादिपरत्वम् । यत्र बाधकसद्भावस्तत्र भगवन्मात्रपरत्वम् । यथा 'जीवाद् भवन्ति भूतानि' इत्यादौ जीवादिशब्दा-नाम् । ततश्च प्रकृतेऽपि एतत्प्रकरणस्याग्निपरत्वाङ्गीकारे बाधकसद्भावाद् भगवानेवात्र प्रतिपाद्यः । लोकादित्वादीनां भगवत्येव सम्भावादग्नावसम्भवा-दिति भावः । नन्वेतेषां विशेषणानां भगवत्परत्वमेव कुत इति चेत्, न । उदाहृतवचनैस्तथा व्याख्यातत्वात् ॥

किञ्च 'कामस्याऽऽप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् । स्तोम महदुरुगायं प्रतिष्ठां दृष्ट्वा' इत्युत्तरमन्त्रे 'अनन्तलोकाप्तिमथो प्रतिष्ठाम्' इत्याद्यत्रोक्तमेव परामृश्यते । 'जगतः प्रतिष्ठाम्' इत्यनेन 'अथो प्रतिष्ठाम्' इत्यस्य 'क्रतोरानन्त्यम्' इत्यनेन 'अनन्तलोकाप्तिम्' इत्यस्य 'अभयस्य पारम्' इत्यनेन 'तरति जन्ममृत्यू' 'शान्तिमत्यन्तमेति' इत्यादेः, 'स्तोममहद्' इत्यनेन 'ब्रह्मज' इत्यस्य 'प्रतिष्ठाम्' इत्यनेन 'मोदते स्वर्गलोकम्' इत्यस्य परामर्शात् । तत्र चैतानि ह्युरुगायविशेषणानि कथ्यन्ते । अतोऽत्रापि अनन्तलोकाप्ति-मित्यादीनि भगवत एव विशेषणानि नाग्नेरित्याह– **स्तोमेति** ॥ इति वाक्ये

प्रतिष्ठात्वानन्तलोकाप्तित्वादीनामिति शेषः । यद्यप्यादित एवोदाहर्तव्या । तथाऽपि 'कामस्याऽऽप्तिम्' इत्यनेन कस्याप्यपरामर्शात् पूर्वार्धे उरुगायपदाभावात् सर्वोदाहरणे गौरवप्रसङ्गाच्चैतदेवोदाहृतम् ॥

ननु 'जगतः प्रतिष्ठाम्' इत्यादीनां उरुगायविशेषणत्वेऽपि भगवद्विशेषणत्वं कुत इति चेत्, न । 'विचक्रमाणस्त्रेधोरुगायः । अत्राऽह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ यः पार्थिवानि त्रिभिरिद्विगामभिरुरुक्रमिष्ठोरुगायाय जीवसे' इति विष्णुसूक्ते, 'ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते । त्वं विष्णुरुरुगायो नमस्य इति श्रुत्यन्तरे, 'श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः' इति भागवते चोरुगायशब्दस्य भगवत्येव प्रसिद्धत्वेन तेषामुरुगायविशेषणत्वे भगवद्विशेषणत्वस्यैव प्राप्तेरित्याह– **भगवत इति** ॥ हिशब्दो हेतौ । 'यदुक्तम्' इत्यादिविशेषणैरित्यनेन गुहानिहितत्वविशेषणेन भगवानेवेति तदयुक्तम् । जाठराग्निरूपेणाग्नेरपि गुहानिहितत्वसम्भवात् । अग्नेरपि देवत्वेन शरीरत्वाच्च तत्सम्भवः । तत् किं भगवत इत्यत आह– **गुहेति** ॥ तस्यैव भगवत एव । प्रसिद्धं 'यो वेद निहितं गुहायाम्' इत्यादिषु । 'हृदि ह्येष आत्मा' इति जीवेऽपि हृद्गुहानिहितत्वप्रसिद्धेर्विशेषत इत्युक्तम् । सत्यमग्नेरपि हृद्गुहानिहितत्वं प्रसिद्धमिति । तथाऽपि विशेषतः श्रुत्यादौ भगवत एव प्रसिद्धम् । विशेषतः प्रसिद्धमेव हि ग्राह्यम् । नहि 'मैथिलः पाञ्चालः' इत्युक्ते यः कोऽपि मिथिलायां पञ्चालेषु वा भवो गृह्यते । किन्तु प्रसिद्धस्तदधिपतिरेवेति भावः ॥

एवं प्रतिष्ठाब्रह्मजज्ञानन्तलोकाप्तिरित्यादिविशेषणानां भगवत्परत्वमुपपाद्यान्यत्रासम्भवप्रदर्शनायोपलक्षणत्वेनानन्तलोकाप्तिरिति विशेषणस्याग्नावसम्भवं दर्शयति– **नचेति** ॥ भगवदधिष्ठानत्वादिनाऽग्निपरिज्ञानस्यापि मोक्षहेतुत्वान्मात्रपदम् । तद्व्यवच्छेद्यमाह– **भगवज्ज्ञानं विनेति** ॥ ननु भगवज्ज्ञानाभावेऽपि अग्निपरिज्ञानपूर्वकं यज्ञादिकरणेनानन्तलोकाप्त्युपपत्तेरग्नावप्यनन्तलोकाप्तित्वं सावकाशमित्यतस्तदभावे श्रुतिमाह– **तद्धा इति** ॥ हे

गार्गि तदेतदक्षरमविदित्वा यदस्मिन् लोके जुहोति वैश्वदेवादिकान् होमान् करोति यजते अश्वमेधादियज्ञांश्च करोति बहूनि वर्षसहस्राणि तपस्तप्यते । अस्य भगवदज्ञानिनः तत् होमादिकं सर्वम् अन्तवदेवान्तवत्फलमेव भवतीत्यर्थः । जुहोति ददाति । यजते यज्ञादिकं करोतीति वा । जुहोति यज्ञादिकं करोति । यजति ददातीति वाऽर्थः ॥

नन्वग्निपरिज्ञानमात्रेणाप्यनन्तलोकाप्तिरस्त्येव । मोक्षप्राप्तेरभावेऽपि स्वर्गप्राप्तेः सत्त्वात् । नचास्यानन्तभावः । बहुकालावस्थानमात्रेण तथा व्यवहारोपपत्तेरित्यत आह– **नचेति** ॥ सति सम्भवतीत्यर्थः । अनन्तलोकशब्दस्य मोक्षो हि मुख्यार्थः । स्वर्गस्त्वमुख्यार्थः । नहि बाधकाभावेन मुख्यार्थे सम्भवत्यमुख्यार्थो युज्यत इत्यर्थः । नन्वस्त्वनन्तलोकशब्दो मोक्षपर एव । तथाऽप्यग्निपरिज्ञानस्यानन्तलोकाप्तिसाधनत्वमस्त्येव । साक्षान्मोक्षसाधनत्वाभावेऽपि परम्परया तत्साधनत्वादित्यत आह– **नचेति** ॥ मुख्ये साक्षात् साधनत्वे । नन्वनन्तलोकाप्तिरिति विशेषणस्याग्नावसम्भवेऽपि लोकादिरित्यादिविशेषणानि सम्भवन्त्येव । तथाहि । लोकानामादिः प्रथमशरीरत्वात् । प्रतिष्ठा जगत आश्रयः । ब्रह्मजो हिरण्यगर्भजो ज्ञः सर्वज्ञश्चेति ब्रह्मजज्ञो गुहानिहितो विदुषां बुद्धौ प्रविष्ट इति । तत् कथमेतैर्विशेषणैर्भगवानेवात्र प्रतिपाद्य इति निश्चय इति चेत्, न । अग्नेरपि मुख्यतो लोकादित्वविशेषणसम्भवात् । यथाकथञ्चित् सम्भवतीति चेत्, तत्राऽह– **नचेति** ॥ **(वे.खं)** श्रुतिः स्वयमाह– **लोकादिमिति** ॥ तं नचिकेतसा पृष्टं लोकादिं सर्वलोकादिम् । अग्निमग्निस्थं भगवन्तं तस्मै नचिकेतसे यम उवाच । न केवलमेतावत् । किन्तु इष्टकाः इष्टकादेवताः याः यत्स्वरूपाः । यावतीर्यावत्यो यावत्सङ्ख्याकाः, यथा वा येनैव प्रकारेण ज्ञातव्याः यत्परिमाणका वा तत्सर्वमप्युवाचेत्यर्थः । एवमुपदिष्टः स बालो नचिकेताः तत् मृत्युप्रोक्तं भगवत्स्वरूपं मृत्युना यथोक्तं तथैव प्रत्यवदत् अनूदितवांश्च । अथानुवादानन्तरमस्य नचिकेतसस्तुष्टः प्रसन्नो मृत्युः पुनराह ॥ १४ ॥

किमाहेत्यत उक्तमनुवदन्नाह– **तमिति** ॥ यद्वा, यदाह तत्प्रीत्यनन्तरमेवाऽह नतु कालान्तर इत्याह– **तमिति** ॥ प्रीयमाणो महात्मा यमस्तं नचिकेतसं प्रत्यब्रवीत् । किम् ? तवाद्येह प्रीतिनिमित्तं वरं भूयो ददामि । तं वरं दर्शयति– **तवैवेति** ॥ अयं मदुपदिष्टोऽग्निस्तवैव नाम्ना प्रसिद्धो भविता । इमामनेकरूपां स्वर्णमयीं शृङ्कां कण्ठमालां च गृहाणेति वरमदात् ॥ १५ ॥

'अनन्तलोकाप्तिम्' इत्यनेनाग्निस्थभगवज्ज्ञानमनन्तलोकाप्तिसाधनमित्युक्तम् । तत्र तज्ज्ञानमेव कथं स्यादित्याशङ्कां परिहरन्ननन्तलोकाप्तिमित्युक्तं विवृणोति– **त्रिनाचिकेत इति** ॥ नचिकेतसोऽयं नाचिकेतः, त्रिशश्चितो नाचिकेतोऽग्निर्येन सः त्रिनाचिकेतः त्रिकर्मकृद् 'यज्ञदानतपःकर्ता, त्रिभिः ऋग्यजुःसामाख्यैर्वेदैः सन्धिं सन्धानमेत्य वेदैरविरुद्धो भूत्वा, वेदोक्तप्रकारेण भगवत्तत्वादिकं ज्ञात्वेति यावत् । जन्ममृत्यू तरति । न वेदोक्तप्रकारेण भगवज्ज्ञानमपि साक्षान्मोक्षसाधनम् । किन्तु मननादिद्वारैव । मोक्षोऽपि न जन्ममृत्यूत्तरणरूप एव । किन्तु सुखरूपश्चेति भावेन प्रकारान्तरेणाप्यग्निस्थभगवज्ज्ञानं मोक्षसाधनमित्याह– **ब्रह्मजज्ञमिति** ॥ ब्रह्मणो वेदाज्जायते अभिव्यज्यत इति ब्रह्मजः सर्वं जानातीति ज्ञः । ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञस्तं देवं क्रीडादिगुणसम्पन्नम् ईड्यं स्तुत्यं तं विदित्वा निचाय्य विचार्य तथाऽपरोक्षतो निश्चित्येमामत्यन्तशान्तिम् आत्यन्तिकसुखरूपां शान्तिं मुक्तिमेति । 'मोक्षश्शान्तिश्च शरणं निर्वाणं चाभिधीयते' इति वचनात् ॥ १६ ॥

न केवलमग्निस्थभगवज्ज्ञानमेव मोक्षसाधनम् । किन्तु 'या इष्टकाः' इत्याद्युक्तेष्टकादेवताज्ञानमपीत्याह– **त्रिनाचिकेत इति** ॥ त्रिवारकृतनाचिकेतः त्रयमेतत् 'या इष्टका यावतीर्वा यथा वा' इत्युक्तेष्टकादेवतां विष्णुं तत्सङ्ख्यां षष्ट्युत्तरशतत्रयलक्षणां तत् परिमाणं च विदित्वा 'शान्तिमत्यन्तमेति' इति पूर्वेण सम्बन्धः । इदानीमुक्तरीत्या जानन् कर्मकर्ता योग्यश्चेद् भवति सायुज्यं च तस्य फलमित्याह– **य एवमिति** ॥ योऽधिकारी एवमुक्तप्रकारेणाग्निस्थविष्णुं विद्वान् नाचिकेतमग्निं चिनुते त्रिश इति शेषः । स पुरतः प्रथमतो मृत्युपाशान्

संसारमिति यावत् । प्रणोद्य शोकातिगः सन् स्वर्गलोके आनन्दज्ञानप्रकाश-रूपे विष्णौ प्रविष्टः सन् मोदते । 'स्तोममहदुरुगायं प्रतिष्ठाम्' इत्युत्तरत्र मोक्षे प्रवेशार्थकप्रतिष्ठाशब्दस्य पूर्वोक्तपरामर्शरूपत्वस्य भाष्ये उक्तत्वाद् अन्यस्य तत्परामृश्यस्य पूर्वमभावात् । स्वर्गलोक इत्येतदेव तत्परामृश्यमिति एवं व्याख्यातम् । यद्वा, योऽधिकारी उक्तरीत्या विद्वान् कर्म करोति तस्य सर्वस्याप्युक्तं फलं भवतीत्याह– **एवमिति** ॥ स्वर्गलोके प्रसिद्धे मोदते । तदनन्तरं क्रमात् स्वर्गलोके विष्णुलोके मोदत इति व्याख्येयम् । न चायं स्वर्गलोकः प्रसिद्ध एव । 'स्वर्गलोका अमृतत्वं भजन्ते' इत्युपक्रमात् ॥ १७ ॥

प्रीत्या स्वदत्तं वरमवधारयति– **एष इति** ॥ त्वं यं द्वितीयवरेणावृणीथाः एष स्वर्ग्योऽग्निर्नाचिकेत इति ते तव नाम्ना प्रसिद्धो भविता । कथम् ? एतमग्निं तवैव नाम्ना जनासो जनाः प्रवक्ष्यन्ति । एवं द्वितीयं वरं दत्वा प्रीत्या स्वदत्तं वरं चावधार्येदानीं तृतीयं वरं प्रार्थयेत्याह– **तृतीयमिति** ॥ १८ ॥

**(उपनिषत्)**

*(नचिकेतसा याचितस्य तृतीयवरस्य निरूपणम्)*

**येयं प्रेते विचिकित्सा मनुष्ये**
**अस्तीत्येके नायमस्तीति चैके ।**
**एतद् विद्यामनुशिष्टस्त्वयाऽहं**
**वराणामेष वरस्तृतीयः** ॥ १९ ॥

*(भगवज्ज्ञानस्य दुःसाध्यत्वात् तत्रैव नचिकेतसाऽऽग्रहप्रदर्शनम्)*

**देवैरत्रापि विचिकित्सितं पुरा**
**न हि सुज्ञेयो अणुरेष धर्मः ।**
**अन्यं वरं नचिकेतो वृणीष्व**
**मा मोपरोत्सीरति मा सृजैनम्** ॥ २० ॥

देवैरत्रापि विचिकित्सितं किल
त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।
वक्ता चास्य त्वादृगन्यो न लभ्यो
नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २१ ॥

शतायुषः पुत्रपौत्रान् वृणीष्व
बहून् पशून् हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनं वृणीष्व
स्वयं च जीव शरदो यावदिच्छसि ॥ २२ ॥

एतत्तुल्यं यदि मन्यसे वरं
वृणीष्व वित्तं चिरजीविकां च ।
महाभूमौ नचिकेतस्त्वमेधि
कामानां त्वा कामभाजं करोमि ॥ २३ ॥

ये ये कामा दुर्लभा मर्त्यलोके
सर्वान् कामाँश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्या
न हीदृशा लम्भनीया मनुष्यैः ।
आभिर्मत्प्रत्ताभिः परिचारयस्व
नचिकेतो मरणं माऽनु प्राक्षीः ॥ २४ ॥

श्वोभावा मर्त्यस्य यदन्तकैतत्
सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव
तवैव वाहास्तव नृत्तगीतम् ॥ २५ ॥

न वित्तेन तर्पणीयो मनुष्यो
लप्स्यामहे वित्तमद्राक्ष्म चेत् त्वाम् ।
जीविष्यामो यावदीशिष्यसि त्वं
वरस्तु मे वरणीयः स एव ॥ २६ ॥

अजीर्यताममृतानामुपेत्य
जीर्यन्मर्त्यः क्वाधस्थः प्रजानन् ।
अभिद्ध्यायन् वर्णरतिप्रमोदा-
नतिदीर्घे जीविते को रमेत ॥ २७ ॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो
साम्पराये महति ब्रूहि नस्तत् ।
योऽयं वरो गूढमनुप्रविष्टो
नान्यं तस्मान्नचिकेता वृणीते ॥ २८ ॥

**इति श्रीकाठकोपनिषदि प्रथमाध्याये प्रथमा वल्ली समाप्ता ॥**

—०—

**(भाष्यम्)**

*(प्रेतशब्दार्थकथनम्)*

प्रेते मुक्ते मनुष्ये। नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति। नास्तीत्यज्ञाः। तस्य नियामकस्य रूपं यथावदहं विद्याम् ॥

'अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः। देहाद् विमुच्यमानस्य किमत्र परिशिष्यत एतद्वै तत्' इति परिहाराच्च मुक्ते स्थितो भगवान् पृच्छ्यत इति सिद्धम् । देहाद् विशेषेणमोचनं नाम मुक्तिरेव । मुक्तेरपि मरणात्मकत्वान्मरणमित्यपि भवति । स्थूलदेहपरित्यागस्तु विस्रंसमानस्येत्यनेनैवोक्तो भवति ॥

*(अग्निस्थपरमात्मज्ञानस्य पृथक्कथने कारणप्रदर्शनम्)*

अग्निस्थं परमात्मानं सामान्याज्ज्ञानतोऽपि तु ।
अजानतस्तु मुक्तौ च जीवान्तःस्थितमीश्वरम् ॥

नियामकं च जीवानां मुक्तानामपि सर्वदा ।
गुणान् सर्वोत्तमत्वादीनविज्ञाय हरेस्तथा ॥

नैव मुक्तिर्भवेत् तस्मात् कृच्छ्रात् तदवदद् यमः ।
तस्य गोप्यत्वविज्ञप्त्यै तथाऽप्यग्निस्थवेदनात् ।
सुखाधिक्यं भवेन्मुक्तौ तस्मात् तत् पृथगीरितम्' इति तत्वसारे ॥

*(मुक्तामुक्तनियामकभगवदुपदेश एव तृतीयवरः)*

'स्थाणुमन्येऽनु संयन्ति यथाकर्म यथाश्रुतम्' इत्युक्त्वा 'य[1] एषु सुप्तेषु जागर्ति कामङ्कामं पुरुषो निर्ममाणः' इति वचनाच्च जीवेषु स्थितो भगवान् पृच्छ्यत इति सिद्धम् । मृतजीवे स्थितो मुक्तजीवे स्थितश्चोभयात्मको भगवान् विवक्षित इत्येतस्माच्चाविरोधः–

'गुह्यं तत् परमं ब्रह्म म्रियमाणं शरीरिणम् ।
सम्प्राप्तमपि जीवेषु जागर्ति स्वपितेष्वपि' इति ब्रह्माण्डे ॥ * ॥

धारकत्वाद् धर्मो भगवान् ॥ * ॥ मरणे [2]स्थितं भगवन्तं माऽनुप्राक्षीः ॥ * ॥ महति साम्पराये मुक्तौ ॥ * ॥

## (व्यासतीर्थीयम्)

तृतीयं वरं वरयते– **येयमिति** ॥ प्रेते मनुष्ये प्रेरकोऽस्तीत्येके नायमस्तीति चैके, अतो विप्रतिपत्तेर्मम विचिकित्सा संशयो जायत इति विचिकित्सा या यद्विषया एतदेतस्य स्वरूपं त्वयाऽनुशिष्टोऽहं विद्यामिति

---

१. 'य एष सुप्तेषु' ह. २ 'स्थितभगवन्तं' ह.

योजना । तद्वाक्यं विदुषां विप्रतिपत्तिरिति प्रतीतिं निवारयन् योजयति– **प्रेत इति ॥** मरणानन्तरमपि जीवोऽस्तीत्येके तदनन्तरं नास्तीति चैके, अतो ममैवं विचिकित्सा जाता, एतद्विद्यामिति केषाञ्चिद् व्याख्या तां दूषयति– **अस्येति ॥** यन्नियामकं पृष्टं तदेतद्वै इति योजना । ननु नात्र वाक्ये मोक्षः प्रतीयते । येन मोक्षे नियामकोऽस्ति किम् ? अस्ति नियामक इति प्रश्नपरिहारौ प्रतीम इत्यतो ज्ञापकयुक्तिमाह– **देहादिति ॥** ननु 'मरणं माऽनुप्राक्षीः' इति वचनात् मरणानन्तरमपि जीवोऽस्ति किमिति पृष्टमित्यवगम्यत इत्यतो युक्तिः सावकाशेत्यत आह– **मुक्तेरपीति ॥** ननु देहाद् विमुच्यमानस्य स्थूलदेहपरित्याग एवार्थः किं न स्यादित्यतो विस्रंसमानस्येत्यनेन पुनरुक्तिप्रसङ्गान्नैषोऽर्थ इत्याह– **स्थूलेति ॥** द्वितीयप्रश्नस्येव तृतीयप्रश्नस्यापि ईश्वरपरत्वे अक्लेशेनाग्निस्थपरमात्मस्वरूपमुक्त्वा मा मोपरोत्सीरिति सङ्क्लिश्य शतायुष इत्यादिप्रलोभेन सर्वे वेदा इत्याद्युक्तिरयुक्ता । द्वयोरपि प्रश्नयोरेकविषयत्वादित्यतो द्वयोरपीश्वरविषयत्वेऽपि सङ्क्लिश्योक्तिं घटयति– **अग्निस्थमित्यादिना ॥** जीवान्तःस्थितत्वं च नाऽकाशस्येवेत्युक्तं **नियामकमिति ॥** तथा 'इन्द्रियेभ्यः पराः' इत्यादिनोक्तान् सर्वोत्तमत्वादिगुणान् अविज्ञाय वर्तमानस्य मुक्तनियामकत्वसर्वोत्तमत्वादिगुणज्ञानान्मोक्षसिद्धेः द्वितीयप्रश्नपरिहारावयुक्ताविति शङ्कां प्रयोजनकथनेन वारयति–**तथाऽपीति ॥** ईश्वरविषय एव तृतीयोऽपि प्रश्न इत्यत्र ज्ञापकान्तरं चाऽह–**स्थाणुमिति ॥**

ननु मुक्तजीवविषयश्चेत् प्रश्नः कुतस्तर्हि मुक्तानां योन्यादिप्राप्त्यभावाद् 'योनिमन्ये' इत्याद्युक्त्वा 'य एषु सुप्तेषु जागर्ति' इत्यत्र तन्नियामकत्वोक्तिर्विरुद्धेत्यतो विरोधं प्रश्नविवक्षोक्त्या परिहरति– **मृतेति ॥** 'येयं प्रेते' इत्यत्र मृतमुक्तस्थितोभयरूपो भगवान् विवक्षितः । तत्र मृतनियामकत्वमत्रोच्यत इत्येतस्मान्न विरोध इत्यर्थः । 'य एषु सुप्तेषु' इत्यत्र जाग्रद् वर्तते ब्रह्मेत्युक्तं तत् कुत इत्यतः समाख्यां तत्र पठति– **गुह्यमिति ॥** तृतीयप्रश्नविषयस्यातिदुर्ज्ञेयत्वमाह– **देवैरिति ॥** विचिकित्सितं सन्दिग्धम् । तत्राणुः

सूक्ष्मः एष धर्म इत्युक्तिः कथम्? भगवत्स्वरूपस्य प्रकृतत्वादित्यतस्तद्घटयन्नाह– **धारकत्वादिति ॥** एतस्य वरस्य तुल्योऽन्यो वरो नास्ति । अस्य वक्ता च त्वादृगन्यो न लभ्योऽतः त्वं ब्रूहीति योजना ॥ २१ ॥

नानाप्रलोभैरलुब्ध एवास्यां विद्यायामधिकारीति भावेन यमो गुह्यं वरं याचमानं प्रलोभयति– **शतायुष इत्यादिना ॥** हस्तिहिरण्यं हस्तिनो हिरण्यं च द्वन्द्वैकवद्भावः । यावज्जीवितुमिच्छसि तावतीः शरदो जीव ॥ २२ ॥

त्वदीयं वरमेतत्तुल्यं यदि मन्यसे तर्ह्येतद् वृणीष्व । नो चेदन्यच्च वित्तं वृणीष्व । चिरजीविकां क्षेत्रं च वृणीष्व । एधि एधस्व । शास्वेति यावत् ॥ २३ ॥

कामानां मध्ये कामभाजं करोमीत्युक्तमेव विशदमाह– **ये य इति ॥** छन्दत इच्छानुसारतः । इमा रूपादिगुणवतीः लोकस्था इति वा । परिचारयस्व सेव्यो भव ॥ २४ ॥

एवं प्रलोभितो नचिकेताः शतायुष इत्यादेरुत्तरमाह– **श्व इति ॥** अन्तक मर्त्यस्य यदेतत् य एते पुत्रादयः ते श्वोऽभावाः श्वोऽसन्तः । स्वरक्षणप्रयासेन सर्वेन्द्रियाणां तेजश्च जरयन्ति । स्वयं च जीवेत्यस्योत्तरमाह– **अपीति ॥** सर्वमपीत्यपिशब्दसम्बन्धः । 'इमा रामाः' इत्यस्योत्तरमाह–**तवैवेति** ॥ २५ ॥

'वृणीष्व वित्तम्' इत्यस्य उत्तरमाह– **न वित्तेनेति ॥** देवे दृष्टे पृथग् वित्तायुःप्रार्थनं न कार्यमेव, तयोरनुषङ्गसिद्धत्वाद् इत्याह–**लप्स्यामह इति ॥** आयुषः स्वयमीश्वरत्वाच्च न तत् पृथग् वरणीयमित्याह– **जीविष्याम इति** ॥ २६ ॥

अजीर्यताममृतानां देवानां सकाशमेत्य मर्त्यो जीर्यन् काधस्थोऽपकृष्टश्च केति लप्स्यामहे इत्यादि विवृण्वतोक्तम् । दीर्घजीवनस्योक्तदुःखहेतुत्वाच्च नैतद् वरणीयमित्याह–**अभिध्यायन्निति ॥** निवृत्तान् वर्णरतिप्रमोदान् ॥२७॥

इदं प्रेते मनुष्ये प्रेरकोऽस्तीति नास्तीत्युक्तप्रकारेण यस्मिन् विचिकित्सन्ति सन्दिग्धा भवन्ति । वरो वरविषयः गूढं गूढत्वम् । मरणस्याप्रकृतत्वात्[1] मरणं माऽनुप्राक्षीरित्युक्तिः कथमित्यतस्तद्घटयन्नाह– **मरण इति** ॥ अप्रतीतेः साम्परायशब्दार्थमाह– **साम्पराय इति** ॥ साम्परायशब्दस्य श्रेयोवाचित्वात् कथं मुक्त्यर्थो व्याख्यात इत्यत उक्तम्– **महतीति** ॥ **महत्त्वविशेषणान्मुक्त्यर्थो व्याख्यात इत्यर्थः** ॥ २८ ॥

**॥ इति श्रीमत्काठकव्यासतीर्थीये प्रथमाध्यायस्य प्रथमा वल्ली ॥**

## (प्रकाशिका)

'अस्य विस्रंसमानस्य शरीरस्थस्य' इत्यत्र अस्य विस्रंसमानस्य स्थूलदेहं त्यजतः । देहाद्विमुच्यमानस्य देहिन इति पुनरपि देहाद् विमोचनकथनाल्लिङ्गदेहाख्यदेहविमोचनमेव लभ्यते । लिङ्गदेहविमोचनं च मोक्षकाल एव । अत एव विमुच्यमानस्य विशेषेणमुच्यमानस्य द्विविधदेहादपि मुच्यमानस्येति मोक्षज्ञापनाय वीत्युपसर्गः प्रयुक्तः । एवं च द्वेधाऽपि मोक्षप्रकरणमिदमिति ज्ञातव्यम् । 'कृच्छ्रात्तदवदद् यमः' इत्यत्र सांसारिकाग्निस्थपरमात्मनि विवादाभावेन गोप्यत्वाभावात् तत्सुखेनैवोक्तम् । मुक्तिस्थपरमात्मा तु मुक्तावप्यैक्यं वदतां मायिनां नानुमतः । अत एव गोप्यं तत्त्वम् । एतादृशतत्त्वस्यापि स्पष्टतयैवोक्तौ दुर्मतप्रवृत्तेरभावप्रसङ्गादुपरोधपूर्वकं तदुक्तम् । उपरोधो नाम कृच्छ्रमिति ज्ञेयम् । 'स्थाणुमन्येऽनुसंयन्ति' इत्यत्र 'स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इति जीवमुक्त्वा 'य एषु सुप्तेषु जागर्ति' इति वाक्ये एषु जीवेषु सुप्तेषु सत्सु यः जागर्तीत्युक्तस्येश्वरविषयत्वावश्यम्भावादिति ज्ञेयम् । तर्हीदमेव वाक्यमलम्, 'स्थाणुमन्ये' इति शेषोदाहरणं किमर्थमिति चेत्सत्यम् । सुप्तेषु करणेष्वित्यर्थमुक्त्वा जीवो जागर्तीत्या-

१. 'अनुपक्रान्तत्वात्' पाठान्तरम् ।

पादयन्तं प्रति सुप्तो जीव एव पूर्वम् । तस्यैव प्रस्तुत्वादिति जीवप्रसञ्जनायेत्यर्थः । जीवप्रसञ्जनाय तस्यापि वक्तव्यत्वात् ॥

'आयुषः स्वयमीश्वरत्वात्' इत्यत्र मृत्युना ग्रासे सत्यायुषः क्षयाद् अग्रासे सत्यायुषो यथावत्स्थितेश्चाऽयुषो यम ईश्वर इति भावः । 'लप्स्यामह इत्यादि विवृण्वतोक्तम्' इत्यत्र विवृण्वता तत्राऽपातत एव त्वद्दर्शनेन सर्वप्राप्तिर्भवतीत्युक्तम् । वस्तुगत्या त्वद्दर्शने सति जातं भूमौ पुनर्भवनेन यद्वित्तादिकं तदप्यनित्यत्वान्न मम मनःप्रियमिति स्वाभिप्रायं विवृण्वतेत्यर्थः । मरणस्य सर्वानुभवसिद्धत्वेन प्रश्नाविषयत्वान्नचिकेतसा मरणस्यापृष्टत्वाच्च मरणं मृतिमुद्दिश्य माऽनुप्राक्षीरिति प्रश्नं न कुर्वित्युक्तिः कथमित्यत आह– **मरणे स्थितमिति** ॥ मोक्षेतरसकलभाग्यं विनिन्दन्नचिकेताः पितृसौमनस्याख्यमैहिकफलं कुतः प्रथमं प्रार्थितवानिति चेत् तस्य 'मातृदेवो भव । पितृदेवो भव' इत्यादिना शिक्षकैः पूर्वाचार्यैः मोक्षोपयोगितया कथ्यमानसत्कर्मसु पठ्यमानत्वेन तत्तत्प्रार्थनस्याऽवश्यकत्वात् ॥

**॥ इति प्रथमाध्यायस्य प्रथमा वल्ली ॥**

## (वैदेशीयम्)

'येयं प्रेते' इति तृतीयप्रश्नवाक्यस्येयं विचिकित्सा संशयः । प्रेते मनुष्ये अस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसम्बन्ध्यात्मेत्येके । नायमेवंविधोऽस्तीत्येके । अत्र चास्माकं न प्रत्यक्षेण नाप्यनुमानेन निर्णयो युज्यत इति व्याख्यानमसदिति भावेन स्वयं तद्वाक्यं व्याचष्टे– **प्रेत इति** ॥ प्रेतशब्दस्य मृतसामान्यवाचकत्वेऽपि तद्विशेषो मुक्तोऽत्र ग्राह्य इति भावेन मुक्त इत्युक्तम् । मनुष्यशब्दश्चेतनपरः । अज्ञानामपि केषाञ्चिन्मते भगवतो व्याप्तत्वाङ्गीकारेण मुक्ते मनुष्ये आकाशादिवत् सत्त्वमात्रमङ्गीक्रियत इत्यतो नियामकत्वेनेत्युक्तम् । नास्तीत्यज्ञा इत्यनेन ज्ञानिनामेवायं विवाद उच्यत इति यथाश्रुतप्रतीतिरपि परास्ता । एवं वदतां ज्ञानित्वाभावात् । ननु मुक्त-

नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति नास्तीत्यज्ञा इति जानतो नचिकेतसः संशयो निवृत्त एव । ज्ञानिमतस्यैव ग्राह्यत्वेन मुक्ते नियामकतया भगवानस्तीत्येव सिद्धत्वात् । अत एतद्विद्यामिति किं प्रार्थ्यत इत्यतस्तद् व्याचष्टे– **तस्येति** ।। एतच्छब्दार्थः– **तस्य नियामकस्य स्वरूपमिति** ।। तस्य संशयविषयीभूतस्येत्यर्थः । नात्र नचिकेतसा मुक्ते नियामकतया भगवानस्ति न वेति संशयसत्त्वात् तन्निर्णयः कथमिति प्रार्थ्यते किन्तु मुक्ते नियामकत्वेन भगवानस्तीति सिद्धमेव । तस्य नियामकस्य स्वरूपं यथावद् विद्यामित्येव प्रार्थ्यते अतो नानुपपत्तिरित्यर्थः ।।

ननु कुत एवं व्याख्येयं परोक्त एवार्थः किं न स्यादित्यतस्तज्ज्ञापकमाह– **अस्येति** ।। 'किमत्र परिशिष्यते' इत्यतः परमेतत्प्रश्नविषयस्यैवानुवादादिति शेषः । तेन चशब्दोपपत्तिः । 'येयं प्रेते विचिकित्सा' इत्यत्रोक्तस्यैवोत्तरत्र 'अस्य विस्रंसमानस्य' इत्यनेनानुवादे सति 'एतद्' इत्यनेन यत् पृष्टं तदेतदिति प्रतिज्ञाय 'न प्राणेन नापानेन' इत्यादिना जीवनहेतुत्वादिना भगवत्स्वरूपस्यैवोक्तत्वादत्रापि मुक्तस्थो भगवान् पृच्छ्यत इति सिद्धमित्यर्थः । स्यादेतत् । यदि 'अस्य विस्रंसमानास्य' इत्येतदेव मुक्तपरं स्यात् । तदेव कुत इत्यत आह– **देहादिति** ।। अन्यथा विशब्दस्य वैयर्थ्यादिति भावः । नन्वथाप्यस्य प्रश्नवाक्यस्य मुक्तविषयत्वं नोपपद्यते । 'नचिकेतो मरणं माऽनुप्राक्षीः' इति मरणविषये प्रश्नो न कर्तव्य इत्युक्त्या प्रश्नवाक्यस्य मरणविषयत्वप्रतीतेरित्यत आह– **मुक्तेरपीति** ।। भवत्युपपद्यते । यदुक्तं देहाद् विशेषेण मोचनं नाम मुक्तिरेवेति तदयुक्तम् । 'देहाद् विमुच्यमानस्य' इत्यस्य स्थूलशरीरं त्यजत इत्यर्थोपपत्तेरिति चेत्, न । 'विस्रंसमानस्य' इत्यनेनैवास्यार्थस्योक्तत्वेन पौनरुक्त्यापातादिति भावेनाऽह– **स्थूलेति** ।। व्याख्यानव्याख्येयभावस्त्वगतिका गतिरिति भावः ।।

यदुक्तं द्वितीयतृतीययोरुभयोरपि प्रश्नयोर्भगवद्विषयत्वमिति तदयुक्तम् । तथा सति द्वितीयप्रश्नस्य झटिति परिहाराभिधानं तृतीयप्रश्नस्य त्वतिकृच्छ्रेण

परिहाराभिधानमिति विशेषासम्भवात् । नचोभयोरपि प्रश्नयोर्भगवद्विषयत्वे एकस्य झटिति परिहाराभिधानेऽपरस्य कृच्छ्रेण तदभिधाने कारणमस्तीत्यतस्तत्र कारणविशेषं प्रमाणेनाऽह– **अग्निस्थमिति** ॥ अग्निस्थस्यैव परमात्मनो वक्ष्यमाणविशेषणप्रकारकज्ञानं भवत्येव मोक्षहेतुरत उक्तम्– **सामान्यादिति** ॥ तुशब्दोवधारणार्थः । सामान्यादेवेति सम्बन्धः । चशब्दात् संसारे च जीवान्तस्थत्वं नाऽकाशसाधारण्येनेत्याह– **नियामकं चेति** ॥ तथा हरेः सर्वोत्तमत्वादीन् गुणान् 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिनोक्तानविज्ञाय स्थितस्य नैव मुक्तिर्भवेदित्यर्थः । अत एव यमेन 'तं दुर्दर्शं गूढमनुप्रष्टिम्' इत्यादिना वक्ष्यमाणविद्याप्रशंसा क्रियते । मुक्तजीवनियामकहरिज्ञानमन्तरेण मोक्षप्राप्त्यभावेऽपि तद्रूपं किमिति कृच्छ्रेण वक्तव्यमित्यत आह– **तस्येति** ॥ तर्ह्यग्निस्थभगवन्निरूपणं पृथङ् न कार्यं स्यात् । तज्ज्ञानस्य मुक्तिसाधनत्वाभावेन व्यर्थत्वादित्यत आह– **तथाऽपीति** ॥ संसारनिवृत्तिलक्षणमोक्षहेतुत्वाभावेऽपीत्यर्थः । एवं च 'अमृतत्वं भजेत् क्रमात्' इति पूर्वत्रामृतत्वशब्दो मौक्तसुखाधिक्यपरतया व्याख्येय इति न तद्विरोध इति मन्तव्यम् । अनेन परव्याख्याने जीवस्यातिगोप्यत्वाभावात् कृच्छ्रेण परिहारोक्तिर्न स्यादिति बाधकं सूचितम् ॥

ईश्वरविषय एव तृतीयप्रश्न इत्यत्र ज्ञापकान्तरमाह– **स्थाणुमिति** ॥ 'य एषु सुप्तेषु' इत्युत्तरवाक्ये जीवेषु स्थितस्य भगवत एव कथनात् प्रश्नवाक्येऽपि जीवेषु स्थितो भगवानेव विषय इति वक्तव्यम् । अन्यथा प्रश्नोत्तरयोरनानुगुण्यापातात् । नच 'एषु सुप्तेषु' इत्यस्य जीवपरत्वं कुत इति वाच्यम् । 'स्थाणुमन्येऽनुसंयन्ति' इत्यव्यवहितपूर्ववाक्ये जीवानां प्रस्तुतत्वेन तेषामेव 'एषु' इत्यनेन परामर्शादित्यर्थः । 'य एषु सुप्तेषु' इत्यत्र संसारिजीवस्थब्रह्मस्वरूपं निरूप्यते । प्रश्नवाक्ये तु मुक्तस्य नियामको हरिर्विषयस्तथाच प्रश्नपरिहारयोरनानुगुण्यमेवेत्यतो जीवेष्विति सामान्येनोक्तम् । मुक्तामुक्तजीव-

मात्रस्थितभगवतः प्रश्नविषयत्वादत्रामुक्तजीवस्थभगवन्निरूपणं न प्रश्नानुगुणमिति भावः ॥

नन्वेतत् पूर्वोत्तरविरुद्धम् । मुक्ते स्थितो भगवान् पृच्छ्यत इति प्रागुक्तम् । इदानीं जीवेषु स्थितो भगवान् पृच्छ्यत इत्युच्यते इत्यतस्तं विरोधं प्रश्नवाक्याभिप्रायकथनेन परिहरति– **मृतेति** ॥ विवक्षितो 'येयं प्रेते' इति प्रश्नवाक्य इति शेषः । प्रेतशब्दस्योभयसाधारणत्वादिति भावः । न केवलं प्रश्नानानुगुण्याभावः । किन्तु विरोधश्च नास्तीति चशब्दार्थः । यद्वा, यदि 'येयं प्रेते' इत्यत्र मुक्तनियामकभगवत्स्वरूपं प्रश्नविषयः स्यात् तर्हि 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा मरणं प्राप्य आत्मा भवति गोतम' इति म्रियमाणजीवस्थभगवत्स्वरूपवचने प्रतिज्ञा विरुद्धा स्यात् । पृष्टस्यैव वक्तव्यत्वादिति चेत्, न । मुक्तेरपि मरणात्मकत्वादित्युक्तन्यायेन मरणं प्राप्येति मरणशब्दस्यापि मुक्तिपरत्वोपपत्तेर्विरोधाभावात् । प्रकारान्तरेणाप्यविरोधमाह– **मृतजीवे इति** ॥ पूर्वोक्तपरिहारसमुच्चयार्थश्चशब्दः । अविरोधो 'मरणं प्राप्य' इति वचनस्य प्रश्नवाक्येनेति शेषः ॥

ननु यदुक्तं 'य एषु सुप्तेषु' इति वचनात् प्रश्नवाक्यस्य भगवद्विषयत्वमिति । तदसत् । तस्यैव वाक्यस्येश्वरविषयत्वाभावात् । नहि तत्रेश्वरज्ञापकं किञ्चिदस्तीति चेत् । न । 'सुप्तेषु जागर्ति' इतीश्वरलिङ्गश्रवणात् स्वाप्नपदार्थनिर्मातृत्वश्रवणाच्च । नच तत्र निर्मातृत्वमात्रश्रवणेऽपि स्वाप्नपदार्थनिर्मातृत्वं न श्रूयत इति वाच्यम् । 'भुञ्जानो नोत्सृजेद् वाचम्' इत्यादाविव प्रकरणप्राप्तत्वात् । 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्' इति प्रतिज्ञातस्यैवात्र कथनाच्च । 'तदेव शुक्रं तद्ब्रह्म' इति वाक्यशेषाच्च । ननु वाक्यशेषे यो जीवः एषु प्राणेषु सुप्तेषु कामंकामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्ममाणो जागर्ति न स्वपिति तदेव शुक्रं शुद्धं ब्रह्म नान्यद् गुह्यं ब्रह्मास्तीति ब्रह्मैक्यमेव जीवस्योच्यत इति कथं तत्साधकम् इति चेत्, न । तस्य दूष्यत्वात् । 'तस्मिँल्लोकाः श्रिताः सर्वे' इत्युक्तविशिष्टे जीवैक्यानङ्गीकाराच्च ।

लक्षणा चागतिका गतिः । किञ्च 'एषु सुप्तेषु' इत्यत्रैतच्छब्देन 'स्थाणुमन्ये' इत्यव्यवहितपूर्ववाक्यप्रकृतजीवपरामर्श इत्येव युक्तम् । नतु सर्वात्मनाऽप्रकृतप्राणपरामर्श इति । नच ग्रन्थप्रकृतपरामर्शे सम्भवति बुद्धिस्थपरामर्शो युक्तः । अत एवोक्तं 'स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इत्युक्त्वेति ॥

ननु 'हन्त त इदं प्रवक्ष्यामि' इति प्रतिज्ञावाक्ये गुह्यं सनातनं ब्रह्म स्वाविद्यया मरणं प्राप्याऽत्मा संसारी यथा भवति तथा प्रवक्ष्यामीत्युक्तत्वेनात्रापि तदेव बोध्यत इति व्याख्येयमिति चेत्, न । मरणं प्राप्येत्यस्य म्रियमाणं जीवं प्राप्येत्यर्थोपपत्तेरिति भावेन श्रुत्यर्थनिश्चायकं प्रमाणमाह–**गुह्यमिति ॥** अपिशब्दौ चशब्दार्थौ वाक्यद्वयार्थसमुच्चयार्थौ। यद्वा म्रियमाणमपीत्यन्वयः । तेन जायमानमित्यस्य समुच्चयः । एतेन 'गुह्यं तत्परमं ब्रह्म' इत्यारभ्य 'योनिमन्ये' इत्यादेस्तात्पर्यमुक्तम् । स्वपितेष्वपि जीवेषु जागर्तीत्यनेन 'य एषु सुप्तेषु' इति वाक्यार्थ उक्तो भवति । 'सुप्तेषु जीवेषु' इत्युक्त्या एषु प्राणेष्वित्येतदपव्याख्यानमित्युक्तं भवति । न केवलं जागरितेषु सुप्तेष्वपीत्यपि शब्दः ॥

ननु 'एतद् विद्यामनुशिष्टस्त्वयाऽहम्' इति नचिकेतसा जीवगतभगवत्स्वरूपे पृष्टे 'नहि सुज्ञेयोऽणुरेष धर्मः' इति यमेन धर्मस्याणुत्वेन सुज्ञेयत्वाभावकथनम् असङ्गतम् । नहि धर्मस्वरूपं नचिकेतसा पृष्टमित्यतो धर्मशब्दं व्याचष्टे– **धारकत्वादिति ॥** सर्वं जगद्धत्त इति धर्मः । 'पृथिवी धर्ममूर्धनी' इति प्रयोगान्मोक्षधर्मे । 'धर्मो वा इदमग्र असीत्' इत्यादिश्रुतेश्चेति भावः । ननु 'नचिकेतो मरणं माऽनुप्राक्षीः' इति यमेन मरणं न प्रष्टव्यमिति कथमुच्यते । नहि नचिकेतसा मरणं पृष्टं किन्तु मृतस्थो मुक्तस्थो वा भगवानेवेत्यतस्तदपि यथावद् व्याचष्टे– **मरण इति ॥** म्रियमाण इत्यर्थः । एतेन मरणं मरणसम्बन्धिप्रश्नं प्रत्यस्ति नास्तीत्येवंरूपं माऽनुप्राक्षीरिति व्याख्यानमसदित्युक्तं भवति । मरणशब्दस्य लाक्षणिकत्वापातात् । अस्मत्पक्षे तु मरणशब्दस्य तदन्तर्गतभगवद्वाचकत्वात् । प्रश्नस्य प्रश्नविषयत्वाभावेन प्रश्नं माऽनुप्राक्षी-

रित्यस्यायोगाच्चेति । किञ्च 'एतद् विद्यामनुशिष्टस्त्वयाऽहम्' इत्यत्र मुक्तस्थो भगवानेव विषय इत्यङ्गीकर्तव्यम् । 'यस्मिन्निदं विचिकित्सन्ति मृत्यो साम्पराये महति ब्रूहि नस्तत्' इत्युत्तरवाक्ये यस्मिन् महति साम्पराये इदं ब्रह्मास्ति न वेति विचिकित्सन्ति तद् ब्रूहि' इति प्रार्थनादिति भावेन महति साम्पराय इत्यस्यार्थमाह– **महतीति** ।। साम्परायशब्दस्य श्रेयोमात्रवाचकत्वेऽपि महच्छब्दसमानाधिकृतस्य मुक्तिवाचकत्वोपपत्तेरित्यर्थः ।।

**इति प्रथमाध्यायस्य प्रथमा वल्ली ।। १ ।। १ ।।**

**(वे.खं)** एवमुक्तो नचिकेताः तृतीयं वरं वृणोति– **येयमिति** ।। प्रेते मुक्ते मृते वा मनुष्येऽयं भगवान्नियामकत्वेनास्तीत्येके ज्ञानिनो वदन्तीति शेषः । नास्तीत्यज्ञा वदन्ति । अतो विप्रतिपत्तेर्विचिकित्सा संशयोऽस्ति । किमिति ? प्रेते मनुष्येऽयं भगवान्नियामकत्वेनास्ति नवेति । किं ततः ? इयं विचिकित्सा या यद्विषया एतत्संशयविषयीभूतस्य मुक्तामुक्तनियामकस्य स्वरूपम् । त्वयाऽनुशिष्टो यथावद् विद्यां जानीयाम् । एषा एव त्वद्दत्तानां वरानां मध्ये तृतीयो वरो वृतो मया प्रार्थितः ।। १९ ।।

एवमुक्तो यमो मुक्तामुक्तजीवनियामकभगवज्ज्ञानमेव मोक्षसाधनं तच्चातिगोप्यम् अतः श्रोतुर्बुद्धिदार्ढ्याभावे न वक्तव्यमिति भावेन तद्बुद्धिपरीक्षणाय तस्य दुर्ज्ञेयत्वमाह– **देवैरिति** ।। हे नचिकेतः पुरा पूर्वमत्र मुक्तामुक्तजीवनियामकभगवद्विषये देवैरपि विचिकित्सितम् । कुतः ? हि यस्मादेष धर्मो धारकत्वाद्धर्मनामा भगवान् सुज्ञेयो न । कुतः ? यतोऽणुः सूक्ष्मः तस्मादन्यं वरं वृणीष्व । मा मां मोपरोत्सीरिदमेव वक्तव्यमित्युपरोधं मा कार्षीः । मा मां प्रति एनं वरम् अतिसृज विमुञ्चेत्यर्थः ।। २० ।।

एवमुक्तो नचिकेता आह– **देवैरिति** ।। हे मृत्यो त्वमेव यत् यस्माद् देवैरपि अत्र विचिकित्सितं किलेति पुरावृत्तद्योतनार्थः । अत एव भगवत्स्वरूपं सुज्ञेयं न भवतीत्यात्थ । तस्मात् स एव वरो मयाऽर्थितो

नान्यः । कुत इत्यत एतत्सदृशस्याभावादित्याह– **नान्य इति** ॥ अयमेव वरोऽन्यस्मात् सम्पाद्यतामित्यत आह– **वक्ता चेति** ॥ २१ ॥

एवमुक्तो यमः सर्वात्मना विषयविरक्तस्यैव मोक्षशास्त्रेऽधिकार इति ज्ञापनाय नचिकेतसः स्थैर्यनिरीक्षणाय नानाविषयैस्तं प्रलोभयति– **शतायुष इत्यादिना** ॥ शतं वर्षाण्यायूंषि येषां ते शतायुषस्तान् पुत्रपौत्रान् वृणीष्व । बहून् पशून् गोमहिष्यादिरूपान् हस्ती हिरण्यं च हस्तिहिरण्यमिति द्वन्द्वैकवद्भावः । अश्वान्, भूमेर्महदायतनं च, भूमेरिति पञ्चमी सप्तम्यर्थे । महद् विस्तीर्णमायतनमाश्रयं महाराज्याधिपत्यमिति यावत् । वृणीष्व । न केवलं पुत्रपौत्राणामेव शतायुष्ट्वं किन्तु स्वयं च यावज्जीवितुमिच्छसि तावतीः शरदो जीव । सर्वमेतदनर्थकं स्वयं चेदल्पायुरित्यतो वाऽऽह– **स्वयं चेति** ॥ २२ ॥

नन्वेवं त्वद्दत्तो वरो मृषैव जातः मत्प्रार्थितस्य त्वयाऽदानादित्यत आह– **एतत् तुल्यमिति** ॥ त्वदीयं वरमेतत्तुल्यम् एतस्य मया दीयमानस्य समं यदि मन्यसे तर्हि दीयमानं वित्तं चिरजीविकां च दीर्घजीवनहेतुक्षेत्रं दीर्घजीवनं वा उक्तोपलक्षणमेतत् । वृणीष्व । न चेदन्यदपि दास्यामीत्याह– **महाभूमाविति** ॥ हे नचिकेतः त्वं महाभूमौ निमित्तसप्तमीयम् । महाराज्याधिपत्ये सतीति यावत् । एधि अभिवृद्धो भव । त्वां कामानां काम्यानां मध्ये कामितभाजं करोमीत्यर्थः ॥ २३ ॥

एतदेव विवृणोति–**ये य इति** ॥ कामाः काम्याः छन्दत इच्छानुसारेण । तानेव विशिष्याऽह– **इमा इति** ॥ रथेन सह वर्तन्त इति सरथाः सतूर्याः सवादित्रा इमा रूपादिगुणवतीः मल्लोकस्था वा रामा रमणीयाः स्त्रियः प्रार्थयस्व । तासु विशेषमाह– **नहीदृशा इति** ॥ तर्ह्येतादृशीभिः किं मे प्रयोजनमित्यत आह– **आभिरिति** ॥ मत्प्रत्ताभिर्मद्दत्ताभिराभिः स्त्रीभिः परिचारयस्व नृत्तगानादिनाऽऽत्मनः परिचर्यां कारय । हे नचिकेतो मरणं मरणे स्थितं म्रियमाणजीवस्थितं भगवन्तं माऽनुप्राक्षीः ॥ २४ ॥

एवं प्रलोभितो नचिकेताः शतायुष इत्यादेरुत्तरमाह–**श्वोऽभावा इति** ॥ हे अन्तक मर्त्यस्य मरणशीलस्य पुरुषस्य यदेतत् य एते पुत्रपौत्रपश्वादयस्ते श्वोऽभावाः श्वोऽपि न विद्यते भावः सत्ता येषां ते श्वोऽभावाः क्षिप्रविनाशा इति यावत् । न केवलमेतावत् । किन्तु स्वसद्भावदशायां च सर्वेन्द्रियाणां तेजः सामर्थ्यं स्ववृद्धिक्षयचिन्तया जरयन्ति च । तस्मान्न ते मया प्रार्थ्याः । 'स्वयं च जीव शरदो यावदिच्छसि' इत्यस्योत्तरमाह– **अपि सर्वमिति** ॥ सर्वमपि जीवितं ब्रह्मकल्पपर्यन्तं जीवनमप्यल्पमेव । तस्यापि पर्यवसानात् । निरवधिकजीवनस्य मोक्षादन्यत्राभावात् । तस्मात् तदपि न प्रार्थये । 'इमा रामाः सरथाः सतूर्याः' इत्यादेरुत्तरमाह– **तवैवेति** ॥ वाहा रथास्तवैव तिष्ठन्तु ॥ २५ ॥

'वृणीष्व वित्तम्' इत्यस्योत्तरमाह– **न वित्तेनेति** ॥ महावित्तलाभेऽपि मनुष्यस्य तृप्त्यदर्शनादित्यर्थः । किञ्च त्वद्विधेभ्यो वित्तादिप्रार्थनं च न कार्यम् । तस्य नान्तरीयकतया सिद्धत्वादित्याह– **लप्स्यामह इति** ॥ चेद् यदि त्वामद्राक्ष्म तर्हि वित्तं लप्स्यामहे प्राप्स्यामह एव । त्वद्दर्शनमात्रेण वित्तलाभो भविष्यतीति न पृथक् प्रार्थनीयमिति भावः । जीवनमपि न पृथक् प्रार्थनीयम् । तस्य त्वदधीनत्वादित्याह– **जीविष्याम इति** ॥ त्वं यावदीशिष्यसि रक्षयिष्यसि तावज्जीविष्यामोऽतो नायं वरो वरणीयः । किन्तु मे मया वरणीयस्तु वरः स एव यः प्राक् प्रार्थित इत्यर्थः ॥ २६ ॥

कुत एवं निर्बन्ध इति चेत्, यतस्त्वादृशगुरुप्राप्तावपि भगवत्स्वरूपमविज्ञाय पुत्रपौत्रादिकं वृण्वतो मे तम एव भविष्यति । तथाहि श्रुतिः– **'इह चेदवेदीदथ सत्यमस्ति'** इत्यादिका । तस्मादेवं जानता मया न तत्प्रार्थ्यत इति भावेनाऽह– **अजीर्यतामिति** ॥ प्रजानन् मर्त्यः अजीर्यतां जराशून्यानाम् अमृतानां मरणशून्यानां त्वद्विधानां देवानामुपसमीपमेत्य भगवदुपदेशमप्राप्यैव जीर्यन् विनश्यमानः क्व न क्वापीत्यर्थः । जीवस्य स्वरूपतो नाशाभावात् । देहवियोगस्य भगवज्ज्ञानिनोऽपि सत्त्वात् जीर्यन्नित्युक्तं विवृणोति– **क्वाधःस्त**

**इति** ॥ अन्धन्तमसआद्यधोगतिस्थः क न कापीत्यर्थः । प्रजानन्निति यमस्य सम्बोधनं वा । दुःखहेतुत्वाच्च न दीर्घजीवनं वरणीयमित्याह– **अभिध्यायन्निति** ॥ वर्णेत्यतः पूर्वं स्त्रीपुत्रादीनामिति शेषः । वर्णः स्त्रीपुत्रादिरूपविशेषः । रतिः क्रीडा प्रमोदस्तदुत्थः सुखविशेषः वर्णरतिप्रमोदान्निवृत्तानिति शेषः । अतिदीर्घकालजीवने हि स्वजीवनमध्य एवान्येषां विनाशः स्यात् । तेषामतिदीर्घकालजीवननियमाभावात् । ततश्च तन्नाशे तेषां स्मरणेन तु दुःखं स्यात् । अतो न दीर्घजीवनं पुरुषार्थः । प्रत्युत अनर्थहेतुरिति भावः ॥ २७ ॥

पूर्वोक्तमेव निर्धारयति– **यस्मिन्निति** ॥ हे मृत्यो महति साम्पराये मुक्तौ नियामकतयेदं ब्रह्मास्ति नवेति यस्मिन् विचिकित्सन्ति तत् मुक्तनियामकभगवत्स्वरूपमेव नो ब्रूहीति योजना । श्रुतिः स्वयमाह– **य इति** ॥ योऽयं वरो गूढं गूढत्वमनुप्रविष्टः प्राप्तस्तमेव नचिकेता वृणीते न तस्मादन्यमित्यर्थः ॥ २८ ॥

**॥ इति प्रथमाध्यायस्य प्रथमवल्ली ॥**

—०—

## अथ प्रथमे द्वितीया वल्ली

### (उपनिषत्)

*(ब्रह्मविद्या-भोगपदार्थ-विवेचनम्)*

ओ३म् ॥ अन्यच्छ्रेयोऽन्यदुतेव प्रेय-
स्ते उभे नानार्थे पुरुष९ सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद् य उ प्रेयो वृणीते ॥ १ ॥

श्रेयश्च प्रेयश्च मनुष्यमेत-
स्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो धीरोऽभि प्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमान् वृणीते ॥ २ ॥

स त्वं प्रियान् प्रियरूपांश्च
कामानभिध्यायन्नचिकेतोऽ(न्यत्प्राक्षीः)त्यस्राक्षीः ।
नैतां शृङ्कां वित्तमयीमवाप्तो
यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥

*(ज्ञानाज्ञानमध्ये आन्तर्यप्रदर्शनम्)*

दूरमेते विपरीते विषूची
अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सितं नचिकेतसं मन्ये
न त्वा कामा बहवो लोलुपन्तः ॥ ४ ॥

अविद्यायामन्तरे वर्तमानाः
स्वयन्धीराः पण्डितम्मन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा
अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥

न साम्परायः प्रतिभाति बालं
प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी
पुनःपुनर्वशमापद्यते मे ॥ ६ ॥

*(तत्वज्ञानस्य दुस्साध्यत्वप्रतिपादनम्)*

श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा-
श्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥

**(भाष्यम्)**

[1]शृङ्कां शृङ्खलाम् ॥ * ॥

**(व्यासतीर्थीयम्)**

दीयमानमपि पुत्रादिकं प्रेयोपरनामानं परित्यज्य श्रेयोपरनाम्नीं ब्रह्मविद्यामभ्यर्थयमानं प्रशंसितुं श्रेयसः प्रेयसः सकाशात् को विशेषः । येन तदभ्यर्थयमानः प्रशस्यत इत्यतः मोचकत्वाद् प्रेयसो बन्धकत्वात् इत्याह– **अन्यदित्यादिना** ॥ इवशब्देन जानतां श्रेयःप्रेयसोरेकत्वं सूचयति अन्यत्वमेव

१. 'सृङ्कां' ह.

दर्शयति । ते उभे नानार्थे भिन्नप्रयोजने इति । सिनीतः बध्नीतः । 'षिञ् बन्धने' इति धातोः । प्रेय एव बन्धकत्वेन निरूपितं अर्थादिति ॥ १ ॥

तयोरित्युक्तप्रकारेण श्रेयसः साधुहेतुत्वात् प्रेयसो बन्धकत्वाद् धीरो विवेकतः श्रेयो वृणीयादित्याह– **श्रेयश्चेति ॥** मनुष्यम् आ इतः एतः मनुष्यं बन्धकत्वेन प्राप्य तिष्ठतः । धीरस्तौ सम्परीत्य ज्ञात्वा विविनक्ति विवेचयति । विवेकं कृत्वा धीरः प्रेयसः प्रेयोऽभितोऽवज्ञाय श्रेयो वृणीते । प्रेय एव दर्शयितुमुक्तं योगक्षेमान् कुशलानिति ॥ २ ॥

यत्प्रशंसार्थं श्रेयःप्रेयसोः स्वरूपं निरूपितं तमिदानीं प्रशंसति– **स त्वमिति ॥** मया प्रलोभितोऽपि त्वं कामानां दोषानभिध्यायन् वित्तमयीं सुवर्णमयीम् । तस्या रम्यत्वाभावान्नावाप्त इत्यत उक्तं यस्यामिति ॥३॥

योगक्षेमानिति स त्वं प्रियानिति च प्रेयसः स्वरूपं निरूपितम् । साम्प्रतमुभयस्वरूपं स्पष्टं निरूपयति– **दूरमिति ॥** विपरीते विरुद्धे इत्युक्तं विरुद्धत्वमेव विवरीतुमुक्तं विषूची विरुद्धगतिहेतू इति । लोलुपन्तो लोलुपयन्तः प्रलोभयन्तीति यावत् ॥ ४ ॥

श्रेयःकामः श्रेयानिति भावेन प्रेयःकामान्निन्दयति– **अविद्यायामिति ॥** स्वयन्धीराः आत्मानं स्वयमेव धीरान् वदन्तः दन्द्रम्यमाणा वक्रगतयः ॥५॥

नित्यं मोक्षाख्यं पुरुषार्थं श्रेयो विहाय कस्मादनित्यकामकामा इत्यतः श्रेयःसाधनादर्शनादित्याह– **न साम्पराय इति ॥** साम्परायः श्रेयःसाधनं भगवान् । तस्य कुतो न प्रतिभातीत्यत आह– **प्रमाद्यन्तमिति ॥** तं प्रमादमेव दर्शयति– **अयमिति** ॥ ६ ॥

न केवलं प्रमादात् साम्परायप्रतिभानाभावः । कारणान्तरं चाऽह– **श्रवणायापीति ॥** यः साम्परायः श्रवणायापि बहुभिर्न लभ्यः । शृण्वन्तोऽपि बहवो यं न विद्युरतोऽपि न साम्परायः प्रतिभातीत्यर्थः । श्रवणाय कस्मान्न लभ्य इत्यतस्तद्विषयशास्त्रव्याख्यातुः श्रोतुश्च दुर्लभत्वादित्याह– **आश्चर्य**

**इति ॥** कुशलो वक्ता आश्चर्यो दुर्लभः । कुशलानुशिष्टोऽस्य व्याख्यातुर्लब्धा ज्ञाता श्रोता चाऽश्चर्य इति योजना ॥ ७ ॥

## (प्रकाशिका)

'अन्यदुतेव प्रेयः' इत्यत्र प्रेय उत प्रेयश्च अतिशयेन प्रीतिविषयं धनवनितादिकं वस्तु अन्यदेवेति सम्बन्धः । इवेति वदता वस्तुगत्या वैराग्यवतां ज्ञानिनां ब्रह्मादीनां धनादिकमपि विष्णुप्रीतिकरयजनाद्युपयोगीति श्रेयस्येवान्तर्भावात् तस्य न पार्थक्यमिति सूचयति । अत एव ते उभे नानार्थे भिन्नप्रयोजने । उक्तरीत्या प्रेयसोऽपि श्रेयस्येवान्तर्भाव इत्यजानन्तं प्रेयसा उदरभरणाद्यैहिकफलमेव साधनीयमिति निश्चयवन्तं च पुरुषं सिनीतः बध्नीतः । यत एवं प्रेयसि पृथगादरवान् श्रेयस्साधनाध्ययनाध्यापनादिसत्कर्मापि भृतकाध्ययनादिना स्वोदरपूरणायैवोपयुङ्क्ते, किं बहुना, साक्षान्मोक्षोपयोगिदेवालयगृहिगेहादौ क्रियमाणं विष्णुपूजनमपि स्वोदरभरणार्थमेवोपकरोति, तस्माद् 'असतीसङ्गदोषेणसति च मतिविभ्रमः' इतिवदुभयोरपि बन्धकत्वमिति भावः । 'मनुष्यमेते' इत्यत्र 'आ इत्युपसर्गपूर्वकादिण् गताविति धातोः इत इति द्विवचने वक्तव्ये 'आद् गुणः' इति गुणे कृते एत इति रूपनिष्पत्तिरिति ज्ञेयम् ॥

## (वैदेशीयम्)

एवं नचिकेतसो विषयाभिलाषराहित्यादयं ब्रह्मविद्यायोग्य इति भावेन विषयकामनायुक्तस्य तद्रहितस्य च स्वरूपं निरूपयति–**अन्यदित्यादिना ॥** अत्र 'नैतां शृङ्कां वित्तमयीमवाप्तः' इत्यत्राप्रतीतेः शृङ्काशब्दार्थमाह–**शृङ्कामिति ॥** यद्यपि 'शृङ्कां चेमामनेकरूपां गृहाण' इत्यत्र शृङ्काशब्दः कण्ठमालापरतया व्याख्यातः । तथाऽप्यनुवादसन्तुष्टयमदत्तकण्ठमालाया नचिकेतसा प्राप्तत्वात् तृतीयवरत्वेन कण्ठमालाया यमेनादत्तत्वान्नचिकेतसा माऽस्त्वित्यनुक्तत्वाच्च 'नैतां शृङ्कां वित्तमयीमवाप्तः' इत्युक्त्ययोगाद् यस्यां मज्जन्तीत्युक्तसर्वमनुष्यबन्धकत्वायोगाच्चात्र शृङ्खलापरत्वेन व्याख्यात इत्यवधेयम् ॥

**(वे.खं)**दीयमानमपि पुत्रादिकं परित्यज्य ब्रह्मविद्यामर्थयमानं नचिकेतसं स्तोतुं तदुभयस्वरूपमाह–**अन्यदिति ॥** अत्र श्रेय इति ब्रह्मविद्योच्यते । निःश्रेयससाधनत्वात् । प्रेय इति प्रीतिविषयपुत्रादिकाम्यमुच्यते । उतशब्दश्चशब्दार्थः । इवशब्दोऽवधारणार्थः । श्रेयोऽन्यद् विलक्षणमेव प्रेयस इति शेषः । प्रेयश्च श्रेयसोऽन्यदेव । जानतां श्रेयःप्रेयसोरेकत्वं सूचयितुं वा इवशब्दः । कथं श्रेयःप्रेयसोः परस्परवैलक्षण्यमित्यत आह–**ते उभे इति ॥** ते उभे श्रेयःप्रेयसी नानार्थे मोक्षतदितराख्यविलक्षणप्रयोजनविषये पुरुषं जीवं सिनीतो बध्नीतः । 'षिञ् बन्धने' इति धातोः । किं तत इत्यतस्तदुभयमाददानस्य फलमाह– **तयोरिति ॥** तयोः श्रेयःप्रेयसोर्मध्ये यः पुरुषः श्रेय एवाऽदत्ते तस्य साधु भद्रं मोक्षाख्यं भवतीत्यर्थः । य उ यश्च प्रेय एव वृणीते स अर्थात् मोक्षाख्यप्रयोजनात् हीयते हीनो भवति ॥ १ ॥

तदेव विशदमाह– **श्रेयश्चेति ॥** श्रेयश्च प्रेयश्चेत्येतौ कर्मवशान्मनुष्यमेतः प्राप्नुतः । तदा धीरः पुरुषस्तौ प्राप्तौ श्रेयःप्रेयोरूपार्थौ सम्परीत्य सम्यग् ज्ञात्वा विविनक्ति इदं पुरुषार्थप्रदमिदं नेति विवेचयति । एवं विवेकानन्तरं धीरः प्रेयसः प्रेयः परित्यज्य श्रेय एव वृणीते । मन्दस्तु योगक्षेमान् अप्राप्तलाभो योगः प्राप्तपरिपालनं क्षेमः । योगक्षेमात्मकं प्रेय एव वृणीते ॥२॥

यत्प्रशंसार्थमेतदुक्तं तमिदानीं प्रशंसति– **स इति ॥** हे नचिकेतः स मया प्रलोभितोऽपि त्वं प्रियान् तत्र हेतुः प्रियरूपान् मनोहररूपान् कामान् काम्यान् मया दत्तानपि अभिध्यायन् तेषामनित्यत्वादिदोषानिति शेषः । अत्यस्राक्षीरतिसृष्टवानसि । एतां मया दत्तां वित्तमयीं सुवर्णमयीं शृङ्कां शृङ्खलां नैवावाप्तः । यद्यन्येऽपि नैवाऽप्ताः तर्हि को विशेषोऽस्येत्यत आह– **यस्मादिति ॥** यस्यां वित्तमय्यां शृङ्खलायां बहवो मनुष्या मज्जन्ति तया शृङ्खलयाऽऽत्मानं बध्नन्तीत्यर्थः ॥ ३ ॥

श्रेयःप्रेयसोः स्वरूपं निरूपयन् ते उभे नानार्थे इत्युक्तमेव विवृणोति– **दूरमेते इति ॥** या प्रेयोरूपा अविद्या विद्याविरुद्धेति विज्ञाता । या च

**इति** ॥ कुशलो वक्ता आश्चर्यो दुर्लभः । कुशलानुशिष्टोऽस्य व्याख्यातुर्लब्धा ज्ञाता श्रोता चाऽश्चर्य इति योजना ॥ ७ ॥

## (प्रकाशिका)

'अन्यदुतेव प्रेयः' इत्यत्र प्रेय उत प्रेयश्च अतिशयेन प्रीतिविषयं धनवनितादिकं वस्तु अन्यदेवेति सम्बन्धः । इवेति वदता वस्तुगत्या वैराग्यवतां ज्ञानिनां ब्रह्मादीनां धनादिकमपि विष्णुप्रीतिकरयजनाद्युपयोगीति श्रेयस्येवान्तर्भावात् तस्य न पार्थक्यमिति सूचयति । अत एव ते उभे नानार्थे भिन्नप्रयोजने । उक्तरीत्या प्रेयसोऽपि श्रेयस्येवान्तर्भाव इत्यजानन्तं प्रेयसा उदरभरणाद्यैहिकफलमेव साधनीयमिति निश्चयवन्तं च पुरुषं सिनीतः बध्नीतः । यत एवं प्रेयसि पृथगादरवान् श्रेयस्साधनाध्ययनाध्यापनादिसत्कर्मापि भृतकाध्ययनादिना स्वोदरपूरणायैवोपयुङ्क्ते, किं बहुना, साक्षान्मोक्षोपयोगिदेवालयगृहिगेहादौ क्रियमाणं विष्णुपूजनमपि स्वोदरभरणार्थमेवोपकरोति, तस्माद् 'असतीसङ्गदोषेणसति च मतिविभ्रमः' इतिवदुभयोरपि बन्धकत्वमिति भावः । 'मनुष्यमेते' इत्यत्र 'आ इत्युपसर्गपूर्वकादिण् गताविति धातोः इत इति द्विवचने वक्तव्ये 'आद् गुणः' इति गुणे कृते एत इति रूपनिष्पत्तिरिति ज्ञेयम् ॥

## (वैदेशीयम्)

एवं नचिकेतसो विषयाभिलाषराहित्यादयं ब्रह्मविद्यायोग्य इति भावेन विषयकामनायुक्तस्य तद्रहितस्य च स्वरूपं निरूपयति–**अन्यदित्यादिना** ॥ अत्र 'नैतां शृङ्कां वित्तमयीमवाप्तः' इत्यत्राप्रतीतेः शृङ्काशब्दार्थमाह–**शृङ्कामिति** ॥ यद्यपि 'शृङ्कां चेमामनेकरूपां गृहाण' इत्यत्र शृङ्काशब्दः कण्ठमालापरतया व्याख्यातः । तथाऽप्यनुवादसन्तुष्टयमदत्तकण्ठमालाया नचिकेतसा प्राप्तत्वात् तृतीयवरत्वेन कण्ठमालाया यमेनादत्तत्वान्नचिकेतसा माऽस्त्वित्यनुक्तत्वाच्च 'नैतां शृङ्कां वित्तमयीमवाप्तः' इत्युक्त्ययोगाद् यस्यां मज्जन्तीत्युक्तसर्वमनुष्यबन्धकत्वायोगाच्चात्र शृङ्खलापरत्वेन व्याख्यात इत्यवधेयम् ॥

**(वे.खं)**दीयमानमपि पुत्रादिकं परित्यज्य ब्रह्मविद्यामर्थयमानं नचिकेतसं स्तोतुं तदुभयस्वरूपमाह–**अन्यदिति ॥** अत्र श्रेय इति ब्रह्मविद्योच्यते । निःश्रेयससाधनत्वात् । प्रेय इति प्रीतिविषयपुत्रादिकाम्यमुच्यते । उतशब्दश्चशब्दार्थः । इवशब्दोऽवधारणार्थः । श्रेयोऽन्यद् विलक्षणमेव प्रेयस इति शेषः । प्रेयश्च श्रेयसोऽन्यदेव । जानतां श्रेयःप्रेयसोरेकत्वं सूचयितुं वा इवशब्दः । कथं श्रेयःप्रेयसोः परस्परवैलक्षण्यमित्यत आह–**ते उभे इति ॥** ते उभे श्रेयःप्रेयसी नानार्थे मोक्षतदितराख्यविलक्षणप्रयोजनविषये पुरुषं जीवं सिनीतो बध्नीतः । 'षिञ् बन्धने' इति धातोः । किं तत इत्यतस्तदुभयमाददानस्य फलमाह– **तयोरिति ॥** तयोः श्रेयःप्रेयसोर्मध्ये यः पुरुषः श्रेय एवाऽदत्ते तस्य साधु भद्रं मोक्षाख्यं भवतीत्यर्थः । य उ यश्च प्रेय एव वृणीते स अर्थात् मोक्षाख्यप्रयोजनात् हीयते हीनो भवति ॥ १ ॥

तदेव विशदमाह– **श्रेयश्चेति ॥** श्रेयश्च प्रेयश्चेत्येतौ कर्मवशान्मनुष्यमेतः प्राप्नुतः । तदा धीरः पुरुषस्तौ प्राप्तौ श्रेयःप्रेयोरूपार्थौ सम्परीत्य सम्यग् ज्ञात्वा विविनक्ति इदं पुरुषार्थप्रदमिदं नेति विवेचयति । एवं विवेकानन्तरं धीरः प्रेयसः प्रेयः परित्यज्य श्रेय एव वृणीते । मन्दस्तु योगक्षेमान् अप्राप्त-लाभो योगः प्राप्तपरिपालनं क्षेमः । योगक्षेमात्मकं प्रेय एव वृणीते ॥२॥

यत्प्रशंसार्थमेतदुक्तं तमिदानीं प्रशंसति– **स इति ॥** हे नचिकेतः स मया प्रलोभितोऽपि त्वं प्रियान् तत्र हेतुः प्रियरूपान् मनोहररूपान् कामान् काम्यान् मया दत्तानपि अभिध्यायन् तेषामनित्यत्वादिदोषानिति शेषः । अत्यस्राक्षीरतिसृष्टवानसि । एतां मया दत्तां वित्तमयीं सुवर्णमयीं शृङ्कां शृङ्खलां नैवावाप्तः । यद्यन्येऽपि नैवाऽप्ताः तर्हि को विशेषोऽस्येत्यत आह– **यस्मादिति ॥** यस्यां वित्तमय्यां शृङ्खलायां बहवो मनुष्या मज्जन्ति तया शृङ्खलयाऽऽत्मानं बध्नन्तीत्यर्थः ॥ ३ ॥

श्रेयःप्रेयसोः स्वरूपं निरूपयन् ते उभे नानार्थे इत्युक्तमेव विवृणोति– **दूरमेते इति ॥** या प्रेयोरूपा अविद्या विद्याविरुद्धेति विज्ञाता । या च

श्रेयोरूपा विद्येति ज्ञाता विद्वद्भिः ते एते श्रेयःप्रेयसी । दूरं विपरीते अति-विरुद्धे । विरुद्धत्वमेव विवृणोति–**विषूची इति ॥** विरुद्धगतिहेतू इत्यर्थः । तत्राहं नचिकेतसं विद्याभीप्सितमेव मन्ये । कुतः? त्वा त्वां बहवः कामा न लोलुपन्तः न लोलुपन्ति । न प्रलोभयन्तीति यावत् ॥ ४ ॥

श्रेयःकाम एव श्रेष्ठ इति भावेन प्रेयःकामान् निन्दति– **अविद्यायामिति ॥** अविद्यायां पुत्रपौत्रादिलक्षणायाम् अन्तरे मध्ये वर्तमानाः स्वयन्धीराः स्वात्मानं स्वयमेव धीरान् वदन्तः पण्डितम् आगमाभिज्ञं मन्यमानाः दन्द्रम्यमाणाः वक्रगतयो मूढाः परियन्ति प्रवर्तन्ते । ननु बहूनां एवं प्रवृत्तेः कथमियं मूढप्रवृत्तिः स्यादित्यतस्तत्र दृष्टान्तमाह–**अन्धेनैवेति** ॥५॥

नित्यपुमर्थमोक्षसाधनं श्रेयः परित्यज्यानित्यं काम्यं पुत्रपौत्रादिकं प्रेयोपरनामकं किमिति कामयन्त इत्यत आह– **नेति** ॥ साम्परायो मोक्षस्तत्साधनीभूतो भगवानिति यावत् । वित्तमोहेन मूढम् अत एव प्रमाद्यन्तं बालं प्रति न भाति । अयमेव लोकोऽस्तीत्यभिमानी पुनःपुनर्मे वशमापद्यते ॥ ६ ॥

यदा श्रवणादिप्रयत्नवतोऽपि न साम्परायः प्रतिभाति किमुत प्रमादादिमत इति भावेनाऽह– **श्रवणायापीति ॥** बहुभिः श्रवणायापि श्रोतुमपि न लभ्यः प्राणिनां मध्ये बहूनां प्राणिनां भगवद्विषयकश्रवणमपि नास्तीत्यर्थः । अस्ति केषाञ्चित् श्रवणं तथाऽपि न साम्परायस्तेषां यथार्थतः प्रतिभातीत्याह– **शृण्वन्तोऽपीति ॥** कुत इत्यतो वक्तृश्रोतृदौर्लभ्यादित्याह–**आश्चर्य** इति ॥ कुशलेन गुरुणाऽनुशिष्टोऽस्य भगवतो यथार्थतो ज्ञाता ज्ञानानुसारेणास्य वक्ता आश्चर्यो दुर्लभः । कुशलोऽस्य भगवतो लब्धा गुरूक्तप्रकारेण ज्ञाता श्रोताऽप्याश्चर्य इति योजना ॥ ७ ॥

*(सुज्ञानिनैव सम्यग्भगवदुपदेशप्राप्तिरुत्तमा)*

**न नरेणावरः प्रोक्त एष**

**सुज्ञेयो बहुधा चिन्त्यमानः ।**

अनन्यप्रोक्ते गतिरत्र ना-
स्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥

नैषा तर्केण मतिरापनेया
प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।
यां त्वमापः सत्यधृतिर्बतासि
त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥

## (भाष्यम्)

**अन्यो भगवानन्योऽहमित्यजानन्ननन्यः । तेन प्रोक्ते गतिर्ज्ञानं नास्ति । 'प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' इति वाक्यशेषात् ॥ ॥**

**जीवानां चैव विष्णोश्च यो न वेत्ति भिदां पुमान् ।**
**'तदनुव्रताश्च ये केचित् तेषां ज्ञानं न जायते' इति ब्रह्मवैवर्ते ॥ ॥**

## (व्यासतीर्थीयम्)

ननूपनिषदादिभिर्ब्रह्म केचन जानन्त्येवातः कथं वक्ता दुर्लभ इत्यतः ते सम्यग्ज्ञानरहिता इत्याह– **न नरेणेति** ॥ अज्ञानिनाऽवरः प्रोक्त एष सुज्ञेयो न भवतीत्यर्थः । कस्मान्नरेणावरत्वेनोच्यते इत्यत उक्तम्– **बहुधेति** ॥ अष्टगुणकत्वादिरूपेण बहुधा चिन्त्यमानत्वात् । अद्वैतिना प्रोक्ते ज्ञानमेव न जायत इत्याह–**अनन्येति** ॥ अत्र ब्रह्मणि अनन्यप्रोक्ते गतिर्ज्ञानं नास्ति । व्याख्यातुरभावात् माभूदागमेन तज्ज्ञानम् । प्रत्यक्षतर्काभ्यां भविष्यतीत्यत आह–**अणीयानिति** ॥ अणुप्रमाणादणुपरिमाणतोऽणीयानतिसूक्ष्मं महत्त्वेऽपि अतीन्द्रियम् अतः प्रत्यक्षं न भवति । अतर्क्यं च ब्रह्म पक्षीकर्तुमशक्यत्वात् । क्षित्यादिपक्षीकरणे कार्यत्वादिहेतोः सत्प्रतिपक्षत्वात् ॥ ८ ॥

न तर्हि ब्रह्मज्ञानोपाय इत्यतोऽतर्क्यमित्युक्तं विवृण्वन् उपायमाह– **नैषेति ॥** आपनेया सम्पादयितुं शक्या । अन्येन भेदज्ञानिना । सत्यधृतिरचाल्यधैर्यवान् ॥ ९ ॥

## (प्रकाशिका)

अन्यो न भवतीत्यनन्यः स्वयं, स्वेनैव प्रोक्त इत्यर्थस्य च वक्तृश्रोत्रोर्भेदावश्यम्भावेनाप्रस्तुतप्रसङ्गत्वापाताद् अन्यो भगवानन्योऽहमित्यजानन्ननन्य इति भावेनोक्तं भाष्ये– **अन्यो भगवानिति ॥** 'नैषा तर्केण मतिरापनेया' इत्यत्र आ अपेत्युपसर्गद्वयादिण् गताविति धातोश्च एषा मतिरानेया अपनेया च नेत्यर्थः । 'अन्येन भेदज्ञानिना' इत्यत्र श्रोतुरन्यः प्रवक्तेति सर्वजनसिद्धम्, एवमप्यन्येनैव प्रोक्तेति वदन् विषयेणविषयिणमुपलक्षयन् तावदप्रधान-निर्देशस्यापि 'द्व्येकयोर्द्विवचनैकवचने' इत्यादौ बहुलमुपलम्भादद्वैतोप-देष्टृकुसमयिव्यावर्तनाय जीवेशयोरन्यत्वज्ञानवतेत्यर्थमभिप्रैतीति ज्ञेयम् ॥

## (वेदेशीयम्)

'अनन्यप्रोक्ते गतिरत्र नास्ति' इत्यस्यानन्येनैवापृथग्दर्शिनाऽऽचार्येण प्रतिपाद्यब्रह्मभूतेन प्रोक्ते अत्राऽऽत्मनि गतिरनेकधाऽस्ति नास्तीत्यादिलक्षणा चिन्ता नास्तीति व्याख्यानमसत् । वक्ष्यमाणरीत्या ब्रह्मात्मैकत्वस्य बाधित-त्वेन वस्तुत आचार्यस्य प्रतिपाद्यब्रह्मभूतत्वायोगाद् ज्ञानमात्रव्युत्पन्नेन गतिशब्देन तद्विशेषसंशयापरपर्यायचिन्तारूपार्थग्रहणायोगाच्चेति भावेनाऽह– **अन्य इति ॥** वस्तुगत्याऽनन्यत्वं बाधितमित्येवं व्याख्यातम् । तद्विपरीतं च जानन्नित्यपि ग्राह्यम् । ज्ञानं सम्यग् ज्ञानम् । ननु ज्ञानवाचकगतिशब्दस्य तद्विशेषपरत्वं भवतामप्यावश्यकम् । अतः संशयपरत्वमेव किं न स्यादिति चेन्न । प्रमासंशययोः प्रमाया अतिशयितत्वेन तद्ग्रहणस्यैवोचितत्वाद् वक्ष्यमाणदोषाच्चेति । कुत एवं व्याख्येयं परोक्त एवार्थः किं न स्यादित्यत

आह– **प्रोक्तेति** ॥ वाक्यशेषे अन्येनैव जीवेश्वरभेदज्ञानिनाऽऽचार्येण प्रोक्ता वेदप्रवचनोत्पादितैव मतिः सुज्ञानाय साक्षात्काराय भवतीत्युक्तत्वेन अनन्यप्रोक्त इति वाक्यमपि जीवेश्वरभेदाज्ञानिना तदभेदज्ञानिना च प्रोक्ते ज्ञानं नास्तीत्येव व्याख्येयम् । न त्वपृथगदर्शिना प्रोक्ते आत्मनि उक्तप्रकारसंशयो नास्तीति । वाक्यशेषविरोधादिति भावः ॥

ननु वाक्यशेषस्थस्यान्येनेत्यस्याऽगमाभिज्ञेनेत्यर्थकत्वान्न विरोध इति चेन्न । तथा सत्यनन्यप्रोक्त इत्यस्याऽगमानभिज्ञप्रोक्त इति व्याख्येयत्वेनापृथगदर्शिप्रोक्त इति व्याख्यानायोगात् । एतेन 'अनन्यप्रोक्ते गतिरत्र नास्ति' इत्यत्रागतिरिति पदच्छेदमभ्युपेत्यानन्येन प्रोच्यमानब्रह्मभूतेनाऽचार्येण प्रोक्ते सति आत्मनि अगतिरनवगतिरनवबोधो नास्ति । भवत्येवावगतिस्तद्विषया श्रोतुस्तदनन्योऽहमित्याचार्यस्येवेत्यर्थ इति यत्परकीयं व्याख्यानान्तरं तदपि परास्तम् । आचार्यस्य वस्तुतः प्रोच्यमानब्रह्मभूतत्वस्य बाधितत्वात् । अपृथगदर्शिनेत्यर्थाङ्गीकारेऽप्यैक्यज्ञानिना प्रोक्ते श्रोतुरैक्यज्ञानसम्भवेऽपि तस्य ज्ञानस्य भ्रान्तित्वेन सम्यग्ज्ञानत्वाभावात् । ऐक्यज्ञानस्य भ्रान्तित्वं कुत इति चेत् । वाक्यशेषे जीवेश्वरभेदज्ञानिनाऽऽचार्येण वेदप्रवचनोत्पादिता मतिः सुज्ञानाय भवतीत्युक्त्या भेदज्ञानस्यैव सम्यग्ज्ञानत्वावगमादिति भावः । यच्चोक्तमनन्ये स्वात्मभूते आत्मनि प्रोक्ते सति गतिरवगतिरन्या सम्पाद्या नास्ति । ऐक्यादन्यस्य ज्ञेयस्याभावात् । ज्ञानस्यैषा निष्ठा यदात्मैकत्वविज्ञानमिति । तदप्यसत् । अनन्यप्रोक्त इत्यस्य समस्तत्वेन अनन्ये आत्मनीति व्याख्यानायोगात् । बुद्ध्या विवेकेन अनन्य इत्यस्यात्रेत्यनेनान्वयं कृत्वा व्याख्यायत इति चेत्, न । यथाश्रुतानुपपत्तौ तथा व्याख्येयत्वात् । प्रोक्त इत्यत्र कर्त्रनुक्तिप्रसङ्गात् । अन्यावगतिरित्यन्यशब्दाध्याहारप्रसङ्गात् । वाक्यशेषपर्यालोचनया भेदज्ञानस्यैवावश्यसम्पाद्यत्वावगमेन तद्विरोधाच्चेति । प्रमाणविरोधाच्च न परव्याख्यानं युक्तम् । किन्तु स्वकृतमेवेति भावेन श्रुत्य-

र्थनिश्चायकं प्रमाणमाह– **जीवानामिति** ।। अभिदां च वेत्तीति ग्राह्यम् । ज्ञानं सम्यग्ज्ञानम् । न जायत एवेति सम्बन्धः ।।

**(वे.खं)** ननु शैवादिशास्त्रव्याख्यातॄणां बहूनामुपलम्भेन त एवास्य वक्तारो भविष्यन्तीति कथं दुर्लभ इत्यत आह– **न नरेणेति** ।। नरेण मनुष्येण शैवब्राह्मसौरगाणपत्यादिना प्रोक्त एषः सुज्ञेयो न भवति । यतस्तेनावरः प्रोक्तः । शिवादिरेव सर्वोत्तमो भगवांस्तदपेक्षयाऽवर इत्युक्तः । तर्हि तदुक्तप्रकारेणायमवर एव किं न स्यादित्यत आह– **बहुधेति** ।। बहुगुणत्वेन पूर्णगुणत्वेन चिन्त्यमानो वेदादिभिर्यतोऽतो नायं तेन तथोक्तोऽप्यवरस्तस्य मिथ्याज्ञानित्वादिति भावः । तर्हि माऽस्तु शैवादिरस्य वक्ता अद्वैतवादी तु भविष्यतीत्यत आह– **अनन्येति** ।। अन्यो भगवानन्योऽहमित्यजानन् स एवाहमिति जानंश्चानन्यः तेन प्रोक्ते अत्र ब्रह्मणि गतिर्ज्ञानं सम्यग् ज्ञानं न जायते । कुतः ? जीवेश्वरयोर्विरुद्धधर्माधिकरणत्वेन भिन्नत्वात् तदभेदज्ञानिनो मिथ्याज्ञानित्वादिति भावेनाऽह । अणुप्रमाणादपि जीवादणीयान् हीति । तस्मादस्य यथार्थतो ज्ञाता कुशलानुशिष्टो वक्ता आश्चर्य इति ध्येयम् । एवं व्याख्यातृभावेनाऽगमात् तज्ज्ञानासम्भवेऽपि प्रत्यक्षेण तज्ज्ञानं सम्भवतीत्यतस्तदविषयत्वं चाऽह– **अणीयानिति** ।। अणुप्रमाणादप्यणीयान् हि यस्माद् अतः प्रत्यक्षं न भवति ।। तर्हि अनुमानेन तन्निश्चयो भविष्यतीत्यत आह– **अतर्क्यमिति** ।। ८ ।।

तदेव विवृणोति– **नैषेति** ।। आ अपेति विरुद्धार्थकोपसर्गयोः क्रमेण सम्बन्धः । एषा ब्रह्मविषया मतिस्तर्केण केवलानुमानेनाऽनेयोत्पाद्याऽपनेया निराकार्या च न भवति । तस्य प्रतिपक्षादिग्रस्तत्वेनाप्रमाणत्वात् । आगमा-नुकूलतर्कश्चाऽगमव्याख्यातृभावेन न निश्चायक इति भावः । तर्हि भगवज्ज्ञा-नोपायाभावेन मोक्षाभावाच्छास्त्रवैयर्थ्यमेव स्यादित्यत आह– **प्रोक्तेति** ।। हे प्रेष्ठ प्रीतिविषय नचिकेतः अन्येनैव अन्यो भगवानन्योऽहमिति ज्ञानवान् यो

भेदज्ञानी तेनैव प्रोक्ता वेदप्रवचनोत्पादिता मतिः सुज्ञानाय साक्षात्काराय भवति । एषा मतिरित्युक्ता मतिः केत्यत आह– **यामिति** ॥ त्वं यां मतिमापः प्राप्तवानसि एषेति पूर्वेणान्वयः । तस्मात् हे नचिकेतः त्वं सत्यधृतिरचाल्यधैर्यवानसि । बतेत्यास्वादने । अतस्त्वादृक् प्रष्टा नो भूयान्न भविष्यतीत्यर्थः ॥ ९ ॥

**(उपनिषत्)**

*(यमस्य सुज्ञानित्वनिरूपणम्)*

**जानाम्यहꣳ शेवधिरित्यनित्यं**
**नह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।**
**ततो मया नचिकेतश्चितोऽग्नि-**
**रनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥**

**कामस्याऽऽप्तिं जगतः प्रतिष्ठां**
**क्रतोरानन्त्यमभयस्य पारम् ।**
**स्तोममहदुरुगायं प्रतिष्ठां**
**दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥**

**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥**

*(गुरूपदेशेन तत्वज्ञानप्राप्तिः)*

**एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः**
**प्रवृह्य धर्म्यमणुमेनमाप्य ।**
**स मोदते मोदनीयꣳ हि लब्ध्वा**
**विवृतꣳ सद्म नचिकेतसं मन्ये ॥ १३ ॥**

## (भाष्यम्)

आख्यं विष्णवाख्यं नित्यं शेवधिरिति जानामि । नित्यम् [१]आख्य-विष्णुविषयैर्द्रव्यैर्मनआदिभिः । आख्यनित्यविषयैर्विष्णवाख्यनित्यविषयैर्द्रव्यैः नित्यं भगवन्तं प्राप्तवानस्मि । ध्रुवो भगवान् अध्रुवैस्तद्भक्तिवर्जितैर्न प्राप्यते ॥ ॐ ॥

क्रतोरानन्त्यहेतुम्, स्तोमैरपि सर्वात्मना प्राप्तुमशक्यम्, स्तोमेभ्योऽपि महान्तम्, उरुगायमित्युक्तत्वाच्च न जीवविषयोऽयं प्रश्नः ।

*(उपनिषदोऽभेदपरत्वनिराकरणम्)*

'शरो ह्यात्मा ब्रह्म [२]तल्लक्ष्यमुच्यते','शरवत् तन्मयो भवेत्', 'अभयं तितीर्षतां पारम्', 'तादृगेव भवति' इत्यादौ सर्वत्र भेदस्यैवोक्तेश्च न जीवाभेदः । 'नाचिकेतं शकेमसि' इत्युक्तत्वाच्च नाचिकेताग्निस्थो [३]भगवानत्रोच्यत इति सिद्धम् । उरुगायं दृष्ट्वा कामस्याऽप्तिम् अत्यस्राक्षीः । नच मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति [४]न वेति संशयोऽस्ति ॥ ॐ ॥

गह्वरे मुक्तजीवे स्थितम् ॥ ॐ ॥

प्रवृह्य जीवात् पृथक्कृत्य ।

'मुक्तजीवे स्थितं विष्णुं विदित्वा जीवतः पृथक् ।
'मोदते मोदनीयं तं प्राप्य मुक्तः सदैव च' इति [५]महावाराहे ॥ ॐ ॥

## (व्यासतीर्थीयम्)

अहं त्वया पृष्टं जानामि । कथमित्यत आह– शेवधिरिति ॥ अनित्यं शेवधिरिति । भक्तिपूर्वकमग्निश्चितः ॥ १० ॥

१.'आख्यविषयैः' ह. २. 'तल्लक्षमुच्यते' ह. ३. 'भगवानेवात्रोच्यते' ह.
४. 'नास्ति वेति' ह. ५. 'महावराहे' ह.

न केवलमहं ब्रह्म जानामीति । किन्तु मत्प्रसादात् त्वमपि जानासीत्याह– **कामस्येति** ॥ जगतः प्रतिष्ठां क्रतोरानन्त्यमिति 'अनन्तलोकाप्तिमथो प्रतिष्ठाम्' इत्युक्तस्यानुवादः । "अभयस्य पारम्' इति 'स्वर्गलोका अमृतत्वं भजन्ते' इत्युक्तस्य । स्तोम महदिति ब्रह्मजज्ञमित्युक्तस्य । प्रतिष्ठां मुक्ताश्रयम् ॥ ११ ॥

न केवलं त्वम्, अन्योऽपि तं दृष्ट्वा हर्षशोकौ जहातीत्याह–**तमिति** ॥ अध्यात्मयोगो ध्यानयोगः । मत्त्वा ज्ञात्वा ॥ १२ ॥

ज्ञानं च केन भवतीति जिज्ञासायामाह– **एतदिति** ॥ ब्रह्म लब्ध्वा वर्तमानं नचिकेतसं प्रति सद्म वैकुण्ठद्वारं विवृतं मन्ये ॥ १३ ॥

## (प्रकाशिका)

'आख्यं विष्ण्वाख्यम्' इत्यत्र 'अकारो विष्णुवाचकः' इति वचनाद् अ इत्याख्या यस्य तमाख्यमिति व्युत्पत्तिमभिप्रेत्योक्तम्– **विष्ण्वाख्यमिति** ॥ तथा च अं च तत् नित्यं चेति विग्रहः । 'नित्यमाख्यविषयैः' इति वदता अः नित्यं सर्वदा विषयो येषां तान्यनित्यानीति विग्रहः सूचितः । न विद्यते ध्रुवः परमात्मा विषयो येषां ते अध्रुवाः तैरित्यर्थः । एवमव्याख्याने आपाततः प्रतीयमानार्थस्यैव कथने च अनित्यैः नित्यं प्राप्तवानस्मि, अध्रुवैर्ध्रुवं न प्राप्यत इति पूर्वोत्तरविरोधः स्यात् । तर्ह्यनित्यैरन्तःकरणादिभि; नित्यं प्राप्तवानस्मीत्येवार्थः कुतो नेति चेन्न । एवमुक्तेऽपि 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' इत्यनेन पूर्वोत्तरविरोधस्य तादवस्थ्यमेव । अस्माकं तु अध्रुवैः विष्णुभक्तिवर्जितैः पुरुषैः, विष्णुभक्तिवर्जितान्तःकरणादिभिरिति यावत्, ध्रुवं नित्यं परमात्माख्यं वस्तु न प्राप्यत इति प्रागुक्तम् । इदानीं तु अनित्यैः द्रव्यैः नित्यं सर्वदा आख्यविष्णुविषयैरन्तःकरणादिभिः नित्यं परमात्मानं प्राप्तवानस्मीति सर्वस्यापि सामञ्जस्यात् ॥

## (वैदेशीयम्)

'जानाम्यहं शेवधिः' इत्यादिकं परेणैवं व्याख्यातम् । पुनरपि तुष्टो यम आह– **जानामीति** ॥ अहं शेवधिः कर्मफललक्षणो निधिरनित्य इति जानामि । हि यस्माद्ध्रुवैरनित्यैर्द्रव्यैः यत ध्रुवं नित्यं पारमाख्यं शेवधिस्तन्न हि प्राप्यते । यस्त्वनित्यसुखात्मकः शेवधिः स एव अनित्यैर्द्रव्यैः प्राप्यते हि यतस्ततो मया अनित्यसाधनैर्नित्यं न प्राप्यत इति जानताऽपि अनित्यद्रव्यैः पश्वादिभिर्नाचिकेतोऽग्निः स्वर्गसुखसाधनीभूतोऽग्निश्चितः तेनाहमधिकारापन्नो नित्यमापेक्षिकनित्यं याम्यस्थानं स्वर्गाख्यं प्राप्तवानस्मीति । तत्र तावदादिवाक्यव्याख्यानमसत् । 'नह्यध्रुवैः' इत्युत्तरवाक्यैर्नित्यब्रह्मप्राप्तेरनित्यद्रव्यसाध्यत्वकथनस्यासङ्गतत्वात् । तुष्टेन यमेन तत्पृष्टब्रह्मस्वरूपस्यैव वक्तव्यतया कर्मफलानित्यत्वकथनस्यासङ्गतत्वात् । तस्मादिदं ब्रह्मपरमेव । तर्हि तस्य नित्यत्वेन कथमनित्यत्वमुपपन्नं स्यात् । ज्ञापकाभावेनेदं ब्रह्मपरमेवेति वा कथं निर्धारणमित्यतस्तद्व्याचष्टे– **आख्यमिति** ॥ 'अ इति ब्रह्म' इत्यादिश्रुतेरिति भावः । नित्यं वस्त्विति शेषः । शेवधिः सुखनिधिः ॥

नन्वेवं तर्हि 'ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः' इत्युत्तरवाक्यमनुपपन्नम् । तर्ह्यनित्यद्रव्यैः पश्वादिभिरनुष्ठितस्याग्निचयनस्य नित्यभगवत्प्राप्तिहेतुत्वमस्तीत्यतोऽनित्यद्रव्यैरित्येतद् यथावद्व्याचष्टे– **नित्यमिति** ॥ अनित्यद्रव्यैरित्यत्र नित्यपदस्य व्यत्यासः । ततश्च नित्याद्रव्यैरिति लभ्यते । अस्य द्रव्याणि अद्रव्याणीति षष्ठीसमासः । षष्ठ्यर्थश्च विषयविषयिभाव इति भावेनोक्तम्– **आख्यविष्णुविषयैरिति** ।। नित्यं विष्णुविषयैरिति सम्बन्धः । ततश्च नित्यत्वं षष्ठ्यर्थविषयीकरणरूपक्रियाविशेषणमित्युक्तं भवति । अन्येषां द्रव्याणां सविषयकत्वाभावान्मन आदिभिरित्युक्तम् । एवमनित्यद्रव्यैरित्यत्र नित्यपदस्य व्यत्यासेन क्रियाविशेषणत्वमभ्युपेत्य व्याख्यातम् । इदानीं तदनाश्रयेण अश्चासौ नित्यश्चानित्यः तस्य द्रव्याणीति विग्रहमभिप्रेत्य व्याचष्टे–**आख्येति** ॥ तदेव विशदयति– **विष्ण्वाख्येति** ॥ ततश्च केवलाग्निचयनमात्रस्य भगवत्-

प्राप्तिहेतुत्वाभावेऽपि सर्वदा निर्दोषगुणपूर्णजीवभिन्ननित्यभगवद्विषयमनआदि-पूर्वमनुष्ठितस्य तत्प्राप्तिहेतुत्वोपपत्तिरिति भावः । नन्वनित्यद्रव्यैरिति प्रसिद्धार्थकमेव किं न स्यात् । नच 'प्राप्तवानस्मि नित्यम्' इत्येतदनुरोधेन तथा व्याख्यायत इति वाच्यम् । नित्यमापेक्षिकनित्यं याम्यं स्थानं स्वर्गाख्यं प्राप्तवानस्मीत्यर्थोपपत्तेरित्यतस्तद्व्याचष्टे– **नित्यमिति** ॥ नित्यशब्दस्य मुख्यार्थग्रहणोपपत्तावमुख्यार्थग्रहणायोगात् । याम्यस्थानस्यापि ज्ञानमात्रसाध्यत्वेन विनाशिद्रव्यानुष्ठिताग्निचयनमात्रसाध्यत्वाभावाच्च 'स्वर्ग्यमग्निम्' इत्यादावग्निचयनस्य स्वर्गसाधनत्वेनोक्तत्वात् । यमस्थानप्राप्तिहेतुत्वासम्भवाच्च । नच यमस्थानं स्वर्ग इत्युच्यते । प्रमाणाभावादिति भावः ॥

किञ्च 'नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' इति पूर्ववाक्ये ध्रुवशब्दान्नित्यत्वेन भगवानेव प्रस्तुतः । त्वयाऽपि ध्रुवशब्दस्य ब्रह्मपरत्वाङ्गीकारात् । एवं चात्रापि नित्यशब्दो ब्रह्मपर एवास्त्विति भावेनाध्रुवैरित्यस्य परोक्तार्थनिरासाय तद्व्याचष्टे– **ध्रुव इति** ॥ तद्भक्तिवर्जितैस्तद्भक्तिदार्ढ्यशून्यैरित्यर्थः । अन्यथाऽनित्यैरेव ज्ञानादिभिरस्मदादिभिर्वा ध्रुवस्य प्राप्यत्वादनुपपत्तिः । यद्वा, अनित्यद्रव्यैरित्यस्य नित्यमाख्यविष्णुविषयद्रव्यैर्मनआदिभिरित्यादि-व्याख्यानमयुक्तम् । तथात्वे 'ततो मया नचिकेतश्चितोऽग्निः' अनित्य-द्रव्यैरित्यत्र तत इत्यनेन नह्यध्रुवैरिति पूर्वोक्तार्थस्य हेतुत्वेन परामर्शायोगादित्यतो नह्यध्रुवैरिति वाक्यं व्याचष्टे– **ध्रुव इति** ॥ ततश्च ध्रुवो भगवान-ध्रुवैस्तद्भक्तिवर्जितैर्माहात्म्यज्ञानपूर्वकस्नेहवर्जितैर्न प्राप्यते हि यस्मात् तस्मा-त्ततो नित्यभगवद्विषयमनआदिभिरेव मयाऽग्निश्चित इति हेतुहेतुमद्भावोऽपि सङ्गच्छत इति भावः । प्रत्युत त्वत्पक्ष एव हेतुहेतुमद्भावानुपपत्तिः । नह्य-नित्यैर्नित्यं न प्राप्यते यस्मात् ततो मया अनित्यद्रव्यैः पश्वादिभिरग्निश्चित इति हेतुहेतुमद्भावः सम्भवति । विरोधात् । नच यतोऽनित्यसाधनैर्नित्यं न प्राप्यते यश्चानित्यसुखात्मकः शेवधिः स एवानित्यद्रव्यैः प्राप्यते ततो मया नाचिकेतश्चितोऽग्निरिति हेतुहेतुमद्भावोपपत्तिरिति वाच्यम् । अश्रुतकल्पना-प्रसङ्गादिति भावः ॥

क्रतोरानन्त्यमिति कथम् ? क्रतुस्वरूपस्याऽशुतरविनाशित्वात् । नचाऽनन्त्यम् अनन्तफलत्वमिति वाच्यम् । तथाऽपि तस्य भगवद्विशेषणत्वासम्भवादित्यतस्तद्व्याचष्टे– **क्रतोरिति ॥** क्रतोर्ज्ञानस्य । एवं चानन्तलोकाप्तिमित्युक्तानुवादरूपत्वमेतस्य सम्भवतीति भावः । स्तोममहदित्यस्य स्तोमम् अणिमाद्यैश्वर्याद्यनेकगुणसहितं च महत् निरतिशयं चेति स्तोममहदिति व्याख्यानमसत् । एतस्य प्रागनुक्तत्वेनानुवादासम्भवादिति भावेन तत्तात्पर्यं तावदाह– **स्तोमैरिति ॥** वेदसमूहैरित्यर्थः । प्राप्तुं ज्ञातुम् । किमु प्रत्यक्षादिभिरित्यपिशब्दः । तर्हि 'सर्वे वेदा यत्पदमामनन्ति' इति वक्ष्यमाणविरोध इत्यत उक्तम्– **सर्वात्मनेति ॥** एवं च ब्रह्मजज्ञेत्युक्तानुवादरूपमेतदिति भावः । ननु स्तोममहदित्यस्मात् पदात् कथमेषोऽर्थो लब्ध इत्यतः तत्पदार्थमाह– **स्तोमेभ्योऽपीति ॥** उरुगायमित्यस्य पुल्लिङ्गत्वेन श्रुतौ महदिति लिङ्गव्यत्यास इति भावेन महान्तमित्युक्तम् । वेदसमूहापेक्षया महत्त्वं नाम साकल्येन तद्प्रतिपाद्यत्वमेव । स्वरूपमहत्त्वस्याल्पत्वादिति भावः । तृतीयप्रश्नस्य जीवविषयकत्वं वदन्तं प्रति एतद्वाक्यगतमपि बाधकमाह–**उरुगायमिति ॥** उरुगायशब्दस्य भगवत्परत्वं साधितमेवेति भावः ॥

ननु न जीवविषयोऽयं प्रश्न इत्यनुपपन्नम् । जीवपरत्वे बाधकाभावात् । नच ब्रह्मपरश्रुतिलिङ्गाद्यनुपपत्तिः । तस्य ब्रह्माभिन्नत्वेन स्वरूपापेक्षया जीवेऽपि सम्भवादिति चेन्न । स्यादेवं यदि जीवेश्वराभेद एव स्यात् । नच सोऽस्ति । अप्रामाणिकत्वात् । प्रमाणविरुद्धत्वाच्चेत्याह– **शर इति ॥** आत्मा जीवः शरस्थानीयः, ब्रह्म लक्ष्यस्थानीयम् । तन्मयस्तत्र संलग्नचेताः । नहि शरलक्ष्ययोरभेदोऽस्तीति भावः । अभयमित्यादेरर्थो वक्ष्यते । आदिपदेन 'अनन्यप्रोक्ते गतिरत्र नास्ति', 'अन्यत्र धर्मात्' 'नित्यो नित्यानाम्' इत्यादिवाक्यग्रहणम् । जीवब्रह्माभेदनिरासाय 'अभयं तितीर्षतां पारम्' इति वाक्योदाहरणेन स्मारितं द्वितीयप्रश्नस्य भगवद्विषयत्वे युक्त्यन्तरमाह– **नाचिकेतमिति ॥** 'यस्सेतुरीजानानामक्षरं ब्रह्म तत्परम् । अभयं तितीर्षतां

पारं नाचिकेतं शकेमसि' इति नाचिकेताग्नेरक्षरत्वपरब्रह्मत्वाभयत्वादिकथनात् नाचिकेताग्निस्थो भगवानेवात्र 'स्वर्ग्यमग्निम्' इत्यादावुच्यत इति सिद्धम् । प्रसिद्धाग्नौ तेषामसम्भवाद् विष्णौ तु सम्भवादिति भावः । अपव्याख्यानं तूत्तरत्र निराकरिष्यामः ॥

'कामस्याऽऽप्तिम्' इत्यत्र 'जगतः प्रतिष्ठाम्' इत्यादिवत् कामस्याऽऽप्तिमित्येतदपि उरुगायविशेषणमिति व्याख्यानमसत् । पूर्वं तस्यानुक्तत्वेनानुवादायोगात् । अत्यस्राक्षीरित्यस्य कर्मानुक्तिप्रसङ्गाच्च । संसारभोगजातमिति अध्याहार-स्त्वगतिका गतिरिति भावेन तद्वाक्यं योजयति– **उरुगायमिति ॥** कामस्य काम्यस्य । तृतीयप्रश्नस्य मृतविषयत्वे 'येयं प्रेते विचिकित्सा' इति वाक्यार्थ एव न युज्यत इति बाधकान्तरमाह– **नचेति ॥** मरणानन्तरमपि जीवसद्भा-वस्य स्वस्मिन्नेव प्रत्यक्षेण निश्चितत्वान्निश्चिते संशयायोगादिति भावः । नच नचिकेतसो मरणमेव कुतः सिद्धम् । सशरीरस्यैव मृत्युं प्रति गमनोपपत्तेरिति वाच्यम् । तथा सति तस्य शापरूपत्वायोगात् । 'पितरमेव जीवन् यानि' इति शाखान्तरे जीवन्नित्युक्त्ययोगाच्च । नहि पूर्वममृतत्वे जीव-न्नित्येतत् स्वरसम् । नच नचिकेतसः संशयाभावेऽप्यन्येषां संशयः स्यादेव । वादिविप्रतिपत्तेः । नह्यत्र नचिकेतस इति विशिष्योच्यत इति वाच्यम् । अत्र चास्माकं न प्रत्यक्षेण नाप्यनुमानेन निर्णयो युज्यत इति त्वयैवोक्तत्वेन नचिकेतस एव संशयाभ्युपगमात् । स्वस्य संशयाभावे 'एतद्विद्यामनुशिष्ट-स्त्वयाऽहम्' इति प्रार्थनायोगाच्च । नच प्रेक्षावद्भिर्महतां वरोऽल्पप्रयोजनाय व्ययीक्रियत इति भावः ॥

गह्वरेष्ठं गह्वरे विषमे अनेकानर्थसङ्कटे तिष्ठतीति गह्वरेष्ठमिति व्याख्यानमसदिति भावेन तद्व्याचष्टे– **गह्वर इति ।।** मुक्तजीवस्य शास्त्रं विना संसार्यगम्यत्वाद् गह्वरत्वम् । तस्य जीवपरत्वे दुर्दर्शत्वमनुपपन्नम् । तस्य 'यत्तदद्रेश्यम्' , 'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र.सू.१.२.२१) इति ब्रह्मण्येव श्रवणात् । गुहानिहितत्वं च भगवत एवेत्युक्तम् । नच जीवज्ञानाद्धर्षशोकत्यागरूपो मोक्षः सम्भवतीति भावः ॥

प्रवृह्य शरीरादेः पृथक्कृत्येति व्याख्याननिरासाय तत्पदमनूद्य व्याचष्टे– **प्रवृह्येति ॥** पृथक्कृत्य पृथग्ज्ञात्वेत्यर्थः । शरीरादेः पृथक्करणं च किं जीवस्य भगवतो वा । नाऽद्यः । 'एनमाप्य स मोदते' इति मुक्तप्राप्यत्वव्यपदेशा-योगात् । न द्वितीयः । भगवतः संसारिशरीराद्यभेदस्य केनापि वादिनाऽ-नङ्गीकृतत्वेन तन्निषेधायोगादिति भावः । ननु नात्र मुक्तज्ञापकमस्ति । येनायं मुक्तप्राप्यत्वव्यपदेशः स्यादित्यतो गह्वरेष्ठं प्रवृह्येति पदद्वयस्योक्तार्थत्वे एन-माप्य स मोदते मोदनीयं लब्ध्वेत्यस्य मुक्तपरत्वे च प्रमाणमाह–**मुक्तेति ॥**

**(वि.खं)** नाहं त्वत्पृष्टं वक्तुमसमर्थस्त्वां विषयैः प्रलोभितवान् किन्तु त्वत्परीक्षणार्थमेव । यतस्त्वत्पृष्टं जानामीत्याह– **जानामीति ॥** अनित्यम् आख्यविष्ण्वाख्यनित्यं वस्तु शेवधिः सुखनिधिरिति जानामि । तद् ध्रुवं नित्यं विष्ण्वाख्यम् अध्रुवैस्तद्भक्तिदार्ढ्यशून्यैर्न प्राप्यते हि यस्मात् ततो मयैवं जानताऽनित्यद्रव्यैर्नित्यमाख्यविष्णुविषयद्रव्यैः मनआदिभिर्नाचिकेतोऽग्निः चितस्तेनाहं नित्यं भगवन्तं प्राप्तवानस्मीत्यर्थः ॥ १० ॥

'स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन् नचिकेतोऽत्यस्राक्षीः' इत्युक्तम् । तत्र नचिकेतसः कामविसर्जने किंनिमित्तमित्यतो 'अनन्त-लोकाप्तिम्' इत्याद्युक्तप्रकारेण मुक्तनियामकभगवत्स्वरूपज्ञानमेवेत्याश-यवानाह– **कामस्येति ॥** हे नचिकेतस्त्वं जगतः स्वर्गलोकस्य प्रतिष्ठां धारकं क्रतोरानन्त्यम् आनन्त्यहेतुमभयस्य पारं मोक्षहेतुमिति यावत् । प्रतिष्ठां मोक्षे [१]प्रवेशम् । मोक्षे यस्मिन् प्रवेशः स्यात् स प्रतिष्ठा हीत्युक्तेः । स्तोममहत् । स्तोमेभ्यो वेदसमूहेभ्यो महान्तम् । वेदसमूहैरपि सर्वात्मना प्रतिपादयितुम-शक्यमिति यावत् । अत एव उरुगायम् उरुभिर्वेदैरुरुभिर्ब्रह्मादिभिरुरुत्वेन सर्वोत्कृष्टत्वेन गीयत इत्युरुगायनामानं भगवन्तं दृष्ट्वा धृत्या धैर्येण कामस्याऽप्तिमत्यस्राक्षीः ॥ ११ ॥

---

१. 'प्रवेश्यम्' इति मुद्रितपुस्तके ।

वक्ष्यमाणरीत्या मुक्तनियामकभगवत्स्वरूपज्ञानेनैव मोक्षप्राप्तिः । सामान्या-दग्निस्थभगवज्ज्ञानेऽपि वक्ष्यमाणरीत्या मुक्तनियामकभगवज्ज्ञानाभावे मोक्षासम्भवात् । अत एव तत्स्वरूपकथने ममातिकृच्छ्रतेति भावेन मुक्त-स्थितभगवज्ज्ञानस्य मोक्षसाधनत्वमाह– **तमिति** ॥ धीरोऽधिकारी गह्वरे मुक्तजीवे तिष्ठतीति गह्वरेष्ठम् । तत्रापि गुहाहितं मुक्तजीवहृद्गुहानिहितम् । अत एव गूढं गूढत्वमनुप्रविष्टं प्राप्तम् अत एव दुर्दर्शं पुराणं सनातनम् अनाद्यनन्तकालेषु मुक्तस्थत्वोपपादकमेतत् । देवं क्रीडादिगुणसम्पन्नं भगवन्तं मत्त्वा ध्यात्वा अध्यात्मयोगाधिगमेन अधिकश्चासावात्माचाध्यात्मा स एव योगो मोक्षोपाय इत्यध्यात्मयोगस्तस्याधिगमस्तदपरोक्षज्ञानं तेन । अध्यात्मयोगो ध्यानयोगस्तज्जन्याधिगमेन वा । हर्षशोकौ जहाति ॥ १२ ॥

ननु हर्षशोकौ जहातीति सुखप्रहाणिरुच्यते । तदयुक्तम् । तुल्यायव्ययफल-त्वेनापुरुषार्थत्वप्रसङ्गादित्याशङ्कां परिहरन् मत्वेत्युक्तमननसाधनं च दर्शयन् भगवतो जीवाद् भेदेने ज्ञानमपि मोक्षसाधनमित्याह– **एतच्छ्रुत्वेति** ॥ यो मर्त्यो मरणशीलोऽधिकारी । न श्रवणादिविषये प्रमदितव्यमिति भावेनैत-दुक्तम् । स एतत् मुक्तनियामकभगवत्स्वरूपं श्रुत्वा कुशलानुशिष्टाचार्येभ्यः सम्परिगृह्य सम्यगवधार्य सम्यङ्मत्त्वेति यावत् । प्रवृह्य जीवात् पृथक्कृत्य पृथक्त्वेन निश्चित्य । निदिध्यासनापरोक्षज्ञानद्वारा मुक्तः सन् धर्म्यं धारकत्वाद् धर्मो धर्म एव धर्म्यस्तमणुं परमसूक्ष्ममेनं भगवन्तमाप्य मोदते इत्यर्थः । वैषयिकहर्षप्रहाणिरेव प्राग् विवक्षितेति भावः । एतादृशो भगवांस्त्वया पृष्टोऽतस्तवापि मोक्षो निश्चित एवेत्याह– **मोदनीयमिति** ॥ मोदनीयं सन्तोषणीयं भगवन्तं लब्ध्वा ज्ञात्वा स्थितं नचिकेतसं प्रति । सद्म वैकुण्ठादिस्थितब्रह्मसदनं विवृतमपावृतं हि निश्चितमिति मन्ये ॥ १३ ॥

**(उपनिषत्)**

**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद् वद ॥ १४ ॥**

सर्वे वेदा यत्पदमामनन्ति
तपाꣳसि सर्वाणिच यद् वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदꣳ सङ्ग्रहेणब्रवीम्योमित्येतत् ॥ १५ ॥

एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥

एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

*(ब्रह्मज्ञानिनो जननमरणाभावसमर्थनम्)*

न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमानेऽपि देहे ॥ १८ ॥

*(जीवानां स्वरूपतो नित्यत्वप्रतिपादनम्)*

हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ॥ १९ ॥

*(भगवतोऽणुतोऽणीयस्त्वस्य महतो महीयस्त्वस्य च कथनम्)*

अणोरणीयान् महतो महीया-
नात्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको
धातुः प्रसादान्महिमानमात्मनः ॥ २० ॥

## (भाष्यम्)

एतद्ध्येवाक्षरं ब्रह्म विष्ण्वाख्यं परमव्ययम् ।
सर्वस्याऽलम्बनं ज्ञात्वा मुच्यते नात्र संशयः' इति च ॥ * ॥

देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाभवौ ।
न कुतश्चिद् यतो विष्णुर्जायतेऽतस्तदीक्षणात् ॥

भावाभावौ न विदुषो यस्माज्जीवो न कश्चन ।
जायते म्रियते वाऽपि स्वरूपेणकथञ्चन ।
अजो नित्योऽविकारश्च जीवः पुरमणन्नपि' इति च ॥

अयं भगवान् कुतोऽपि न बभूव यस्मादतस्तद्वेत्ताऽपि विपश्चित्, [1]'न जायते न म्रियते' च । यतः कश्चिज्जीवः स्वतो न बभूव । देहसम्बन्धाद्धि जायते । विपश्चितस्तु देहसम्बन्धाभावात् न जायते न म्रियते च ॥ * ॥

जीवस्यापि स्वतो मरणाभावात् 'उभौ तौ न विजानीतः' ॥ * ॥

एवं नित्यस्य जन्तोर्गुहायां निहितः । ए[2] विष्णौ क्रतुर्यस्य सोऽक्रतुः । तन्निश्चयः । आत्मनः सकाशान्महिमानं महामानम् ॥

जीवाद् गुणपरीमाणं यस्माद् विष्णोर्महत्तरम् ।
तस्माज्जीवात् स महिमा विष्णुरित्युच्यते श्रुतौ' इति च ॥ * ॥

## (व्यासतीर्थीयम्)

अलं प्रशंसया तत्त्वं ब्रूहीत्याह– **अन्यत्रेति** ॥ धर्मादेरन्यत्र तद्बहिर्भूतं तद्रहितं यत् तत्पृष्टं पश्यसि तच्च । 'कृताकृतात्' इत्युक्तं विशदयितुमुक्तं भूताच्च भव्याच्चान्यत्र विलक्षणमिति ॥ १४ ॥

पृष्टं ब्रह्मस्वरूपं निरूपयितुं प्रतिजानीते– **सर्व इति** ॥ सर्वाणि तपांसि च यत्प्रति वदन्ति ॥ १५ ॥

१ 'न जायते म्रियते' ह २. 'एवं विष्णौ' ह

ब्रह्मस्वरूपं निरूपयन् तज्ज्ञातुः फलमाह– **एतदित्यादिना** ॥ एतत् त्वया पृष्टं ब्रह्मैव परमक्षरम् । एतच्छ्रेष्ठमालम्बनमाश्रयं परं विलक्षणम् ॥१६-१७ ॥

ननु ब्रह्मलोकं प्राप्तोऽपि कदाचिज्जन्मादिमांश्चेत् तर्हि न तदतिशयितं फलमित्यत आह– **न जायत इति** ॥ कुतो न जायत इत्यतो बिम्बस्य जननादिरहितत्वादित्युक्तम्– **नायं कुतश्चिदिति** ॥ बन्धदशायामपि न जायते जीवः । किमु तदपगम इत्युक्तम्– **न बभूव कश्चिदिति** ॥ हेतुमुक्त्वा निगमयति– **अजो नित्य इति** ॥ १८ ॥

ननु कथं जीवो देहे हन्यमानेऽपि न हन्यत इति यज्ञदत्तस्याहं हन्ता तेनाहं हतः इति तत्प्रतीतिसिद्धत्वाद् हननस्येत्यतस्तौ भ्रान्तावित्याह– **हन्तेति** ॥ हन्ता आत्मानं हन्तुं हन्तारं मन्यते चेत् हतश्चाऽत्मानमनेनाहं हत इति मन्यते चेत् तावुभौ न विजानीत इत्यादियोजना ॥ १९ ॥

उपदेशप्रकारमेवाऽह– **अणोरणीयानिति** ॥ एतदालम्बनं ज्ञात्वेत्युक्त-ब्रह्मज्ञानस्य प्रथमभाविसाधनमाह– **तमिति** ॥ २० ॥

## (प्रकाशिका)

'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्' इत्यत्र कृताकृतादन्यत्रेत्यत्र कृतादुत्पन्नान्महदहङ्कारादिप्रपञ्चादकृतादनुत्पन्नात् प्रकृतिजीवकालाव्याकृता-काशादिप्रपञ्चादन्यत्र विलक्षणं, भूतादतीतजगतः भविष्याद्भविष्यज्जगतश्चान्यत्र विलक्षणमित्यर्थः । धर्मादन्यत्र धर्मबहिर्भूतमधर्मादन्यत्राधर्मबहिर्भूतमिति जीववैलक्षण्ये युक्तिसूचनार्थं प्रयुक्तम् । 'सर्वे वेदा यत्पदमामनन्ति' इति वदता वेदे अग्निवैश्वानरहिरण्यगर्भरुद्रेन्द्रविश्वकर्मादीनां बहुधा निरूपणात् कथमेकस्य सर्वोत्तमत्वमिति शङ्का परिहृता । अग्न्यादिशब्दैरपि वेदा विष्णुमेव वदन्तीति भावः । अन्यथा सृष्ट्युत्तरकालीनानेतान् सृष्टेः प्रागपि विद्यमाना वेदाः कथं ब्रूयुः ? तर्ह्यग्न्यादिदेवानां यज्ञादिकर्मणां चाप्रामाणिकत्वप्रसङ्ग इति शङ्कानिवारणायोक्तमा सम्यक् मनन्ति वदन्तीति । सृष्ट्युत्तरकालमग्न्यादि-

स्वनामानि स्वनामधारकेषु तेषु दत्त्वा अमुख्यया वृत्त्या तानपि वेदैः वाचयतीति ज्ञेयम् । तदुक्तं श्रुतिगीतायाम्– 'क्वचिदजयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगम' इति ।। ब्रह्मचर्यं ब्रह्मणो वेदस्य चर्यं श्रवणमननादिरूपमाचरणं चरन्तीत्यर्थः । ब्रह्मस्वरूपस्यालं वक्तुमशक्यत्वात् सङ्ग्रहेणेत्युक्तम् । एतद् ब्रह्म सकलगुणपरिपूर्णत्वादोमिति कथ्यते । एतत्प्रमाणवाक्यार्थभूतं वस्तु नाशरहितत्वादक्षरं, गुणबृंहितत्वाद् ब्रह्म । एतदक्षरं नाशरहितं परं मुमुक्षुप्राप्यं च । एतद्ध्येवाक्षरमित्युक्तानुवादः । 'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्' इत्यत्र विपश्चिद्भगवन्तमपरोक्षीकृत्य मुक्त इत्यर्थः । अयं बिम्बभूतः परमात्मा कुतश्चिन्न जायते न म्रियत इति पूर्वेणान्वयः । अत एव तत्प्रतिबिम्बभूतो मुक्तोऽपि न जायते न म्रियते चेति भावः । वर्तमानप्रयोगान्मुक्त्यवस्थेति ज्ञायते । कैमुत्यमप्याह– **न बभूव कश्चिदिति** ।। कश्चिद् यःकश्चिज्जीवः संसारदशायामपि न बभूव 'जीवो नित्यो धातुरस्य त्वनित्यः' इति वचनाद् देह एवोत्पद्यते नश्यति च, न तु जीवः । अत एवातीतसंसारदशाज्ञापनायातीतप्रयोगः । हन्तुं हननशीलं हन्तारमित्यर्थः । अक्रतुः अकारवाच्यपरमात्मविषयक्रतुः निश्चयो यस्य सः अक्रतुरित्यर्थः । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः यथाश्रुतार्थस्य बाधितत्वादुक्त एवार्थ इति भावः । महिमानं माङ् मान इति धातोः महि महत् मा मानं यस्य सः महिमा, तं महिमानमित्यर्थः । सकलजीवेभ्योऽप्युत्तमत्वेनैवापरोक्षज्ञानं न त्वैक्येनेत्यर्थसूचनायेदं विशेषणम् ।।

## (वेदेशीयम्)

किञ्च नेदं प्रकरणं जीवपरम् । तथा सति 'सर्वे वेदा यत्पदमामनन्ति' इति सर्ववेदप्रतिपाद्यत्वोक्त्ययोगात् । तस्य 'तत्तु समन्वयात्'(ब्र.सू.१.१.४) इति सूत्रकृता ब्रह्मण्येवोक्तत्वात् । नच जीवे समन्वयोऽभिधीयते । नचात्र जीवेशाभेदो विवक्षित इति सर्वस्याप्युपपत्तिरिति वाच्यम् । 'अन्यत्र धर्मादन्यत्राधर्मात्' इति धर्माधर्मकार्यकारणभूतभविष्यद्वर्तमानप्रपञ्चभिन्नत्व-

स्यैवोक्तत्वात् । नचात्र जीवाद् भेदो नोक्त इति वाच्यम् । धर्माधर्मपदाभ्या-मेव पुण्यपापात्मनां जीवानां ग्रहणात् । किञ्च ओमित्येतदिति तस्योंनामक-त्वमुच्यते । तच्च ब्रह्मण एव न जीवस्य । 'ओमिति ब्रह्म' इति श्रुतेः । 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इत्यादिस्मृतेश्च । किञ्च 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्' इति परब्रह्मत्वादिव्यपदेशाद् विष्णुरेव न जीवः । ननु ओमित्येतदिति पूर्वमात्मतत्वस्योंशब्दवाच्यत्वं तत्प्रतीकत्वं चोक्तम् । अत्र तु एतदेवाक्षरं ओमित्यक्षरं ब्रह्म अपरम् एतदेवाक्षरं परं च ब्रह्मेति तस्यैवोङ्कारस्य परापरब्रह्मत्वमुच्यत इति कथमिदं साधकमिति चेन्न । ॐकारस्य शब्दात्मकस्य जडत्वेन परापरब्रह्मत्वाभा-वात् । एतदालम्बनमित्युक्तसर्वाश्रयत्वासम्भवाच्च । नचाविद्यमानमप्युपासना-र्थमुच्यत इति वाच्यम् । तत्त्वमसीत्यादावप्यविद्यमानमेवैक्यम् उपासनार्थ-मुच्यत इत्यापातात् । अविद्यमानोपासनस्यानर्थफलत्वाच्च ॥

प्रमाणविरोधाच्च नैवं व्याख्यानं युक्तमिति भावेन मन्त्रद्वयार्थनिश्चायकं प्रमाणमुदाहरति– **एतद्ध्येवेति** ॥ परमित्यत्रापि एतद्ध्येवाक्षरमिति सम्ब-ध्यते । एवं च 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्' इति अनुवादेन विष्ण्वाख्यमिति व्याख्यानम् । अक्षरशब्दार्थः–**अव्ययमिति** ॥ ननु यदुक्तमिदं प्रकरणं विष्णुपरमेवेति तन्न । 'न जायते' इति मन्त्रे जीवस्य जननमरणा-भावोक्तेस्तस्य जीवविषयकत्वावगमात् । तथा हि विपश्चिद् अविपरिलुप्त-ज्ञानस्वभावो न जायते न म्रियते च । नायमात्मा कुतश्चित् कारणाद् बभूव स्वस्माच्च न बभूव कश्चित् पदार्थः । अतोऽयमात्मा अजो नित्यश्च शाश्वतः अपक्षयवर्जितः अत एव पुराणः पुरातन एवेति । नचैतत्प्रकरणस्य विष्णु-परत्वे मन्त्रः सङ्गच्छते । असङ्गतत्वादिति चेत् । मैवम् । विपश्चिच्छब्दस्य ज्ञानिमात्रे निरूढस्याविपरिलुप्तज्ञानस्वभाव इति ज्ञान्यज्ञानिसाधारण्य-करणायोगात् । कुतश्चिन्न जायत इत्येतावता पूर्तेर्नायमित्यस्य वैयर्थ्यात् । कारणान्तराभावेऽपि स्वस्मादेवोत्पत्तिर्भवत्वित्याशङ्काया एवानुदयेन न बभूव

कश्चिदित्यस्यावक्तव्यत्वाच्च । कारणमात्रस्यापि कुतश्चिदित्यनेन निषेध-सम्भवात् । नचास्माकमसङ्गतिदोषः । 'एतदालम्बनं ज्ञात्वा' इति प्रकृत-ज्ञानिनो जननमरणाभावलक्षणफलप्रतिपादकत्वेन सङ्गतत्वादिति भावेन मन्त्रार्थनिश्चायकं प्रमाणमेवोदाहरति– **देहेति** ॥

न केवलं भगवतः किन्तु ज्ञानिनोऽपीत्यर्थोऽपिशब्दः । उद्भवाभवौ उत्पत्तिविनाशौ नेत्यस्य पूर्वोत्तराभ्यां सम्बन्धः । मुक्तिदशायामेतत् । अनेन मन्त्रतात्पर्यमुक्तं भवति । ननु देहोत्पत्तिविनाशाख्यौ उत्पत्तिविनाशौ यदि भगवत इव ज्ञानिनोऽपि न स्तस्तर्हि भगवद्विपश्चितोरविशेषः स्यादिति शेषः । विपश्चित उत्पत्तिविनाशाभावयोर्भगवज्ज्ञानसाध्यत्वादित्यभिप्रेत्य 'न जायते म्रियते वा विपश्चित्' इत्यत्र नायं कुतश्चिदिति हेतुप्रतिपादकमिति भावेन तद्व्याचष्टे– **कुतश्चिदिति** ॥ म्रियते चेति ग्राह्यम् । भावाभावौ देहोत्पत्तिविनाशौ । 'यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्' इत्यादे-रित्यर्थः । ननु भगवद्विपश्चितोरुभयोरपि देहोत्पत्तिविनाशाभावमङ्गीकृत्य विपश्चितस्तदभावो भगवज्ज्ञानसाध्य इति तयोर्विशेषः कुतः समर्थनीयः । ज्ञानिनः स्वरूपत एवोत्पत्तिविनाशाभावो भगवतस्तु देहतोऽप्युत्पत्तिविनाशाख्यौ उद्भवाभवौ न स्त इति कुतो न व्याख्यायत इत्यत आह–**यस्मादिति** ॥ तस्माद् देहतोऽप्युत्पत्तिविनाशाख्यावेवोद्भवाभवौ ज्ञानिनो न स्त इति व्याख्येयम् । नतु स्वरूपोत्पत्तिविनाशाख्यौ । तदभावस्य सर्वसाधारण्येन ज्ञानिनो विशेषाभावप्रसङ्गादित्यर्थः । ननु देहिनो जीवस्य कथं स्वरूपेण जननमरणाभाव इत्यतः प्राप्तम् 'अजो नित्यः शाश्वतोऽयं पुराणः' इति वाक्यं व्याचष्टे– **अज इति** ॥ स्वरूपेणेति वर्तते । 'पुरं देहमणन्नपि' इत्यनेन देहित्वस्याप्रयोजकत्वमुक्तम् । अनेन हन्यमानेऽपीत्यपिशब्दस्य पुराण-शब्देनापि सम्बन्ध इत्युक्तं भवति ॥

एवं प्रमाणमुदाहृत्य स्ववचनेनापि विवृण्वन् नायं कुतश्चिदित्यत्र प्रकृतविपश्चित एव परामर्श इति भ्रमं वारयन् पूर्वत्रायं हेतुरिति भावेन तद्व्याचष्टे– **अयं**

**भगवानिति ॥** कुतोऽपि कारणात् । उपलक्षणमेतत् । न म्रियत इत्यपि ग्राह्यम् । म्रियते चेत्यनेन वाशब्दश्चशब्दार्थ इत्युक्तं भवति । अत्र ज्ञानिनो जननमरणाभावौ देहोत्पत्तिविनाशाभावाख्यावेव विवक्षितौ नतु स्वरूपेण जननमरणाभावावित्यभिप्रेत्य 'न बभूव कश्चित्' इति वाक्यं व्याचष्टे– **यत इति ॥** स्वतः स्वरूपेण म्रियते नचेति ग्राह्यम् । तर्हि का गतिर्जीवोत्पत्त्यादिवाक्यानामित्यत आह– **देहसम्बन्धादिति ॥** देहवियोगात् म्रियते चेति ग्राह्यम् । हिशब्दः प्रमाणप्रसिद्धिमाह । हेतौ वा । यस्माद् देहसम्बन्धादेव जायते तस्मात् कश्चिदपि स्वतो न बभूवेति । अस्त्वेवं सर्वेषां जीवानां स्वरूपेणोत्पत्तिविनाशाभावौ । किं तत इत्यत आह– **विपश्चितस्त्विति ॥** तुशब्दोऽज्ञानिभ्यो विशेषद्योतकः । यतः कश्चिदपि जीवः स्वतो न बभूव अतो विपश्चितो मुक्त्यनन्तरं कर्मनिर्मितदेहसम्बन्धाभावान्न जायते । तद्वियोगाभावान्न म्रियत इत्येव वक्तव्यम् । नतु स्वरूपोत्पत्तिविनाशाभावेन । तस्य सर्वजीवसाधारणत्वेन ज्ञानफलत्वानुपपत्तेरिति भावः ॥

ननु 'उभौ तौ न विजानीतः' इति हन्तृत्वहतत्वज्ञानस्य भ्रान्तित्वमुक्त्वा तत्र 'नायं हन्ति न हन्यते' इत्यर्थाभावो हेतुरुच्यते । तदयुक्तम् । देहविनाशरूपहननकर्मत्वस्य तत्कर्तृत्वस्य च सत्त्वादित्यतो हेतुहेतुमद्भावं स्फोरयन् हेतुवाक्यं व्याचष्टे– **जीवस्यापीति ॥** देहविनाशाख्यमरणवत्त्वेन प्रसिद्धस्यापीत्यपिशब्दः । स्वतः स्वरूपेण । ननु 'अणोरणीयान्' इति मन्त्रो जीवपर एव । 'हन्ता चेन्मन्यते हन्तुम्' इति जीवस्यैव प्रकृतत्वात् । अन्यथा मध्ये जीवनित्यत्वकथनस्यासङ्गतत्वादित्यतस्तस्योपयोगं दर्शयन् 'अस्य जन्तोर्निहितो गुहायाम्' इति वाक्यं व्याचष्टे– **एवमिति ॥** अस्येत्यस्यैवार्थः– **एवं नित्यस्येति ॥** तथाच परमात्मनो नित्यभूतजीवहृद्गतत्वं वक्तुं जीवस्य नित्यत्वमुक्तमिति नासङ्गतिरिति भावः । नच जीवस्याणोरणीयस्त्वं महतो महीयस्त्वं वा युज्यते । तस्याणुत्वात् । नचाणु महद्वा यल्लोकेऽस्ति तत्तदात्मकत्वेन तथा व्यवहारः । तर्हि अणुर्महानित्येव वक्तव्यत्वापातात् ।

'अणोरणीयान् महतो महीयान्' इति अणुमहद्भिन्नत्वस्यैवावगमाच्च । नचाणोः श्यामाकादेरणीयानिति श्यामाकाद्यपेक्षया सूक्ष्मवस्त्वात्मकत्वं महतः पृथिव्यादेरपि महानिति पृथिव्याद्यपेक्षया स्थूलवस्त्वात्मकत्वमुच्यत इति वाच्यम् । पञ्चम्यन्ताणुमहच्छब्दयोः सामान्यशब्दत्वेन सर्वाणुमहद्विषयत्वात् । नच बाधकं विना सामान्यशब्दो विशेषपरोऽङ्गीकर्तुमुचितः । नचैकस्याऽत्मनो विरुद्धपरिणामद्वयासम्भवादेवमङ्गीकारः । अणुमहत्पदार्थात्मकत्वस्य सुतरां विरुद्धत्वात् । यथा च न विरोधस्तथोपपादितमन्यत्राऽचार्यैः । वक्ष्यते च विरुद्धधर्मघटकमैश्वर्यं भगवतः । अक्रतुरकामो दृष्टादृष्टविषयोपरत इति व्याख्यानमसत् । दृष्टादृष्टविषयवैराग्यस्य साक्षाद् दर्शनहेतुत्वाभावादिति भावेन तद्व्याचष्टे– **ए विष्णाविति** ॥ अ इत्यस्य सप्तमी ए इति । अशब्दो ब्रह्मवाची । 'अ इति ब्रह्म' इति श्रुतेरिति भावः । अनेन अक्रतुः क्रतूपलक्षितकर्मरहित इति यथाश्रुतप्रतीतिरप्यपास्ता । तर्हि विष्णुविषयक्रतुमान् पश्यतीति कथम् ? क्रतोः कर्मात्मकत्वेन तस्य साक्षादपरोक्षज्ञानसाधनत्वाभावादित्यत आह– **तन्निश्चय इति** ॥ श्रवणादिरूपनिश्चय एव क्रतुशब्दार्थ इति भावः । आत्मनः स्वस्य महिमानं माहात्म्यमित्यन्यथाप्रतीतिनिरासाय 'महिमानमात्मनः' इत्येतद् व्याचष्टे– **आत्मन इति** ॥ षष्ठीभ्रमवारणाय सकाशादित्युक्तम् । जीवादित्यर्थः । अन्यथा वीतशोको भवतीत्यस्यानुपपत्तिः ॥

प्रमाणविरोधाच्च नान्यथा व्याख्यानं युक्तमिति भावेन तदर्थनिश्चायकं प्रमाणमाह– **जीवादिति** ॥ श्रुतौ 'महिमानमात्मनः' इत्यस्याम् ॥

**(वे.खं)** एवं यमेनोक्तो नचिकेता अलं प्रशंसया, तत्वं ब्रूहीति प्रवृह्येत्यनेनोक्तं जीवाद् भेदं सविशेषमनुवदन् प्रार्थयते– **अन्यत्रेति** ॥ अव्ययानामनेकार्थत्वादन्यत्रेत्यस्यान्यदित्यर्थः । धर्मात् पुण्यात्मनो जीवादन्यद् अधर्मात्मनो जीवादन्यत् न केवलं चेतनादेव किन्तु कृताकृतात् कार्याकार्याद् अचेतनादप्यन्यत्

न केवलं वर्तमानादेव किन्तु भूताद् भव्याच्चान्यत् तत् मुक्तनियामकं ब्रह्म यत् येन प्रकारेण त्वं पश्यसि तत् तेन प्रकारेण वदेत्यर्थः ॥ १४ ॥

एवं प्रार्थितो यमो बुद्ध्यारोहार्थं सङ्ग्रहेण भगवत्स्वरूपवचनं प्रतिजानीते– **सर्व इति** ॥ सङ्ग्रहेण कथनस्यानुपादेयताशङ्कापरिहाराय सर्वे वेदा इत्याद्युक्तम् । सर्वे वेदा ऋगाद्या यत्पदं यस्य स्वरूपम् आमनन्ति तपांसि च यत् प्रति वदन्ति वेदाः यज्ज्ञानमिच्छन्तो ब्रह्मचर्यं गुरुकुलवासादिरूपं गुह्येन्द्रियनियमनं वा चरन्ति तत्पदं भगवत्स्वरूपं ते तव सङ्ग्रहेण ब्रवीमि । एवं प्रतिज्ञातं भगवत्स्वरूपं उपदिशति– **ओमित्येतदिति** ॥ एतत् त्वया पृष्टं भगवत्स्वरूपं ॐ गुणपूर्णत्वादोंनामकमित्युपासीतेति शेषः । उपदेशसमाप्तौ वा इतिशब्दः । अन्यथाभावनिवृत्त्यर्थं वा । 'इतिशब्दोऽन्यथाभावनिवृत्त्यर्थमुदाहृतः' इत्युक्तेः ॥ १५ ॥

ॐनामकस्यैव भगवतो माहात्म्यमाह– **एतदिति** ॥ एतदेवोन्नामकमेवाक्षरम् अव्ययं देहादिनाशशून्यं ब्रह्म गुणपूर्णं हि एतदेवाक्षरं परं सर्वोत्तमं हि । अत एवैतदेवाक्षरं ज्ञात्वा योऽधिकारी यदिच्छति तस्य तत् भवति हि प्रसिद्धमित्यर्थः ॥ १६ ॥

एतत् ॐनामकं ब्रह्म श्रेष्ठमालम्बनं मुख्यतः सर्वाश्रयः । न राजादिवदाश्रय इत्याह । एतत् परं विलक्षणमालम्बनमिति । ब्रह्मलोके सत्यलोके विष्णुलोके वा महीयते पूज्यते स्वावरैः ॥ १७ ॥

ननु ब्रह्मलोकं प्राप्तस्यापि ज्ञानिनो यदि जनिमृती तदा न तदतिशयितं फलमित्यत आह– **न जायत इति** ॥ विपश्चिद् ज्ञानी ब्रह्मलोकं प्राप्तो न जायते न म्रियते च। कुतः ? यतोऽयं भगवान् कुतोऽपि न बभूव । उपलक्षणमेतत् । न म्रियते च । अतस्तद्वेत्ताऽपि न जायते न म्रियते च । अत्र विपश्चितो जननमरणराहित्यं नाम देहोत्पत्तिविनाशशून्यत्वमेव । नतु स्वरूपोत्पत्तिविनाशशून्यत्वं तस्य सर्वजीवसाधारणत्वादिति भावेनाऽऽह– **न**

**बभूवेति** ॥ यतः कश्चिदपि जीवः स्वरूपेण न बभूव । न जातो न जायते न जनिष्यते च । अत एव न म्रियते च । किन्तु देहसम्बन्धादेव जायते म्रियते च । अतो विपश्चिद् देहोत्पत्तिविनाशशून्यत्वादेव न जायते न म्रियते चेत्यर्थः । ननु जीवस्य देहित्वात् कथं स्वरूपेण जननाद्यभावं इत्यत आह– **अज इति** ॥ जीवः पुराणोऽपि पुरं देहमणन्नपि स्वरूपेणाजो नित्यः शाश्वतो अविकारश्च । नित्यत्वमेव स्पष्टमाह– **न हन्यत इति** ॥ देहे हन्यमानेऽपि जीवः स्वरूपेण न हन्यते तस्य ततो भिन्नत्वादिति भावः ॥ १८ ॥

नन्वेतत् कथम्? जीवहननस्य अहं हन्ता तेनाहं हत इत्यादि-प्रत्यक्षसिद्धत्वादित्यतस्तस्य भ्रान्तित्वमाह– **हन्तेति** ॥ हन्ता मैत्रदेहहननकर्ता चैत्रः स्वात्मानं हन्तुं हन्तारं मैत्रजीवस्वरूपहननकर्तारं मन्यते चेत् हतश्च मैत्रः स्वस्वरूपं हतं मन्यते चेत् तर्हि तौ उभौ न विजानीतो न सम्यग् जानीतः । भ्रान्ताविति यावत् । कुत इत्यतस्तत्रार्थाभावं हेतुमाह– **नाय-मिति** ॥ अयं चैत्रो न हन्ति । मैत्रस्वरूपम् अयं मैत्रो वा स्वरूपेण न हन्यते यतोऽतो देहविनाशनिमित्तकोऽयं भ्रम इत्यर्थः ॥ १९ ॥

उपदेशप्रकारमेवाऽह– **अणोरिति** ॥ आत्मा भगवानणोरणीयान् सूक्ष्मादपि सूक्ष्मतरः । महतो महीयान् स्थूलादपि स्थूलतरः । स्थूलस्यैवाणुप्रतियोगित्वाद् अणोरणीयस्त्वमेव लेशेन दर्शयति । अस्यैवं नित्यस्य जन्तोर्जीवस्य परमसूक्ष्मस्यापि गुहायां हृदये निहित इति । 'एतद्ध्येवाक्षरं ज्ञात्वा' इत्यत्र न ज्ञानमात्रं विवक्षितं किन्त्वपरोक्षज्ञानमेवेति भावेन तत्साधनं दर्शयन् तस्य फलमाह– **तमिति** ॥ अक्रतुः अशब्दो विष्णुवाची । ए विष्णौ क्रतुः निश्चयो यस्यासौ अक्रतुस्तन्निश्चयवानधिकारी आत्मनो जीवात् महिमानं महि महत् मानं गुणपरिमाणं यस्य स महिमानस्तं परमात्मानम् । धातुः धारकस्य परमात्मनः प्रसादात् पश्यति । ततश्च धातुः प्रसादादेव वीतशोको भवतीत्यर्थः ॥ २० ॥

## (उपनिषत्)

*(सर्वसमर्थो भगवान्)*

आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥

*(विनाशिशरीरेषु स्थितस्य भगवतोऽविनाशित्वकथनम्)*

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥

*(भगवदनुग्रहस्य साक्षात्कारसाधनत्वप्रतिपादनम्)*

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूꣳ स्वाम् ॥ २३ ॥

*(वैराग्यादिसाधनं विना भगवदनुग्रहाप्राप्तिः)*

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥

*(भगवज्ज्ञानस्य दुर्लभत्वप्रतिपादनम्)*

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

**॥ इति प्रथमाध्याये द्वितीया वल्ली ॥**

—o—

## (भाष्यम्)

**ऐश्वर्यादेव 'आसीनो दूरं व्रजति' इत्यादि।**

**आसीनो दूरं व्रजति शयानो याति सर्वतः।**
**ऐश्वर्याद् भगवान् विष्णुर्विरुद्धं घटयत्यसौ' इति च ॥ * ॥**

**॥ इति प्रथमाध्याये द्वितीया वल्ली ॥**

—०—

## (व्यासतीर्थीयम्)

पुनश्च महिमानमेवाऽऽह– **आसीन इत्यादिना** ॥ मदश्चामदश्च यस्माद् भवतोऽसौ मदामदः । तं मदामदम् ॥ २१ ॥

अनवस्थेषु नश्वरेषु ॥ २२ ॥

श्रवणादिना तज्ज्ञानोत्पत्तेस्तत्प्रसादात् तमक्रतुः पश्यतीत्युक्तिः कथमित्यत आह– **नायमात्मेति** ॥ २३ ॥

तत्प्रसादात् तज्ज्ञानं चेत् श्रवणादि वैयर्थ्यमित्यत आह– **नाविरत इति** ॥ अशान्तो भगवन्निष्ठारहितः । असमाहितो स्थिरमनाः ॥ २४ ॥

पुनश्च महिमानमेवाऽऽह– **यस्येत्यादिना** ॥ उपसेचनं शाकम् उपरि सेचनं घृतं वा । इत्था एवङ्गुणविशिष्टत्वेन । यत्र स प्रतितिष्ठति तच्च को वेदेति ॥ २५ ॥

## (अथ भाष्यार्थः)

श्रृङ्काशब्दार्थमाह– **श्रृङ्कामिति** ॥ कण्ठभूषामिति यावत् । अनन्यप्रोक्ते गुरुणा विना आत्मनैव दृष्टे सति शास्त्रे गतिर्नास्तीति अन्यथाप्रतीतेस्तद् व्याचष्टे– **अन्य इति** ॥ तथा कस्मान्न स्यादित्यत आह– **प्रोक्तेति** ॥

समाख्यया च स्वव्याख्यां समर्थयते– **जीवानामिति** ॥ जानाम्यहं शेवधिरित्यनित्यमित्यन्यथाप्रतीतेर्व्याचष्टे– **आख्यमिति** ॥ अनित्यैर्द्रव्यैरित्येतदध्रुवैरिति प्रतीतेर्व्याचष्टे– **नित्यमिति** ॥ नित्यं सर्वदा आख्यो विषयो येषां तान्यनित्यानि तैर्नित्यमाख्यविष्णुविषयैरित्यर्थः । द्रव्याणि कानीत्यत आह– **द्रव्यैरिति** ॥ अनित्यैरिति पदं प्रकारान्तरेण व्याकुर्वन् वाक्यं योजयति– **आख्येति** ॥ आख्यो नित्यो विषयो येषां तान्यनित्यानि तैरनित्यैः । स्वपदमेव विवरीतुमुक्तम्– **विष्ण्वाख्यनित्यविषयैरिति** ॥ अध्रुवैरनित्यैः पुरुषैः तद् ध्रुवं न प्राप्यते हीति प्रतीयते । तदस्मदादिभिरध्रुवैः प्राप्यत्वाद् ब्रह्मणोऽयुक्तमतोऽन्तरितं यत्पदम् । न विद्यते ध्रुवो येषां तेऽध्रुवास्तैरध्रुवैरिति विग्रहमभिप्रेयन् तात्पर्येण व्याचष्टे– **ध्रुव इति** ॥ अप्रतीतेः क्रतोरानन्त्यपदं व्याचष्टे– **क्रतोरिति** ॥ अप्रतीतेः स्तोम महदिति पदं तात्पर्यपूर्वं व्याचष्टे– **स्तोमैरिति** ॥ नित्यम् उरुभिर्मुमुक्षुभिर्गीयत इति उरुगायः । क्रतोरित्यादेः प्रकृतोपयोगं दर्शयति– **इत्युक्तत्वादिति** ॥ नन्वेतानि विशेषणानि जीवेऽपि घटन्ते, तस्य ब्रह्मात्मकत्वादित्यतस्तयोर्भेदं समर्थयते– **शर इत्यादिना** ॥ जीवाभेदः जीवस्य परमात्मना अभेदः । तृतीयप्रश्नस्येश्वरविषयत्वं ज्ञापकान्तरेण समर्थयते– **नाचिकेतमिति** ॥ द्वितीयप्रश्ने नाचिकेताग्निस्थितो भगवान् पृष्ट इति समर्थितम् । अत्रापि 'नाचिकेतं शकेमसि' इत्युक्तत्वान्नाचिकेताग्निस्थितो भगवान् पृष्टः, स एवोच्यत इति सिद्धमित्यर्थः । 'कामस्याऽप्तिम्' इत्यस्य 'जगतः प्रतिष्ठाम्' इत्यनेन सामानाधिकरण्यप्रतीतिं निवारयन्नन्वयं दर्शयति– **उरुगायमिति** ॥ तृतीयप्रश्नस्येश्वरविषयत्वे सर्वथाऽपरिहार्यामुपपत्तिमाह– **नचेति** ॥ येन तद्विषयः स्यात् प्रश्न इति वाक्यशेषः । अतिविपिने स्थितमित्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **गह्वर इति** ॥ मुक्तस्य संसार्यगम्यत्वाद् गह्वरत्वम् । प्रवृह्य प्रपूर्येत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **प्रवृह्येति** ॥ गह्वरेष्ठमित्यादेरुक्तोऽर्थः कुतः ? इत्यतस्तं समर्थयन् जीवाद् भेदेनेश्वरज्ञानी मोदनीयं लब्ध्वा मोदते इत्युक्तमोदनीयस्वरूपं च निरूपयन्

प्रमाणान्तरं पठति– **मुक्तेति** ॥ 'एतद्ध्येवाक्षरम्' इत्यादि 'तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्' इत्युक्तभगवद्वाचकप्रणवमाहात्म्यमुच्यत इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **एतद्ध्येवेति** ॥ 'न जायते म्रियते वा विपश्चित्' इत्येतद् व्याचष्टे– **देहेति** ॥ नेत्युत्तरत्रापि सम्बध्यते । न कुतश्चिदित्येतत् प्रकृते हेतुत्वाप्रतीतेर्व्याचष्टे– **न कुतश्चिदिति** ॥ भावाभावौ जनिमृती । 'न बभूव कश्चित्' इत्येतत् प्रकृते हेत्वन्तरार्थत्वाप्रतीतेर्व्याचष्टे– **यस्मादिति** ॥ 'अजो नित्यः' इति निगमनवाक्यं व्याचष्टे– **अत इति** ॥ अतः स्वरूपेण जननाभावाद् अजो नित्यश्च । शाश्वतोऽयं पुराणः' इत्येतदप्रतीतेर्व्याचष्टे– **अविकारश्चेति** ॥ 'नायं कुतश्चिन्न बभूव कश्चित्' इति वाक्यद्वयं प्रमाणवचनेऽपि प्रकृतहेत्वर्थतया स्फुटमप्रतीतेः स्ववचनेन स्पष्टं व्याचष्टे–**अयमित्यादिना** ॥ 'उभौ तौ न विजानीतः' इत्येतद्युक्तेरनुक्तत्वाद् युक्तिपूर्वं व्याचष्टे– **जीवस्यापीति** ॥ अपिशब्देनेश्वरं समुच्चिनोति । स्वतः स्वरूपेण अणोरणीयानित्यस्य प्रकृतजीवपरत्वप्रतीतिं निवारयतेश्वरस्याप्रकृतत्वशङ्का निवारिता । 'आत्माऽस्य जन्तोर्निहितो गुहायाम्' इत्येतद् व्याचष्टे– **एवमिति** ॥ एवमुक्तप्रकारेण नित्यस्येति । अक्रतुः क्रतूपलक्षितकर्मरहितः तं पश्यतीति प्रतीतिं निवारयन् व्याचष्टे– **अ इति** ॥ एवं तर्हि कथं क्रतोः कर्मात्मकत्वात् तेन तं पश्यतीत्यत आह– **तन्निश्चय इति** ॥ तन्निश्चयः सम्यक् तत्परोक्षज्ञानम् । आत्मनः स्वस्य महिमानं पश्यतीत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे–**आत्मन इति** ॥ आत्मनः सकाशान्महिमानं महामानम् । उक्तमर्थं द्रढीकुर्वन्नात्मनो जीवाद् विष्णुः कस्मान्महिमेत्युक्त इति शङ्कां च परिहरति– **जीवादिति** ॥ विरोधादासीनत्वं तत्वम् । दूरव्रजनं तु भ्रान्तमित्यन्यथाप्रतीतिं निवारयन् तद्घटकमाह– **ऐश्वर्यादिति** ॥ युज्यत इति शेषः । आसीनस्य दूरव्रजनं व्याहतेरयुक्तमित्यतो घटकमुक्तम् । तत् कुत इत्यतस्तत्प्रमाणं पठति– **आसीन इति** ॥

**॥ प्रथमाध्यायस्य द्वितीया वल्ली ॥ १ ॥ २ ॥**

—०—

## (प्रकाशिका)

'यमेवैष वृणुते' इत्यत्र एष परमात्मा यं वृणुते मदीयोऽयमित्यङ्गीकरोति, प्रसन्नो भवतीति यावत्, तेनैव लभ्य इत्यर्थः । 'यस्य ब्रह्म च क्षत्रं च' इत्यत्र ब्रह्म ब्राह्मणजातिः । क्षत्रं क्षत्रियजातिः । उपलक्षणं चैतत् । देवर्षिपितृ-गन्धर्वमनुष्यपक्ष्यादिनानाजातिविशिष्टो जीवसमुदाय इत्यपि ग्राह्यम् । सर्वमारकमृत्योरास्वादने प्रीतिविशेषो भवतीत्यतः मृत्योः पृथग् ग्रहणम् ॥

**॥ इति प्रथमाध्यायस्य द्वितीया वल्ली ॥ २ ॥**

## (वेदेशीयम्)

नन्वासीनस्य दूरव्रजनादिकं विरुद्धम् । नहि भगवान् मायावी । येनैन्द्रजालिकक्रियावदुपपत्तिः स्यादित्यत आह– **ऐश्वर्यादिवेति** ॥ तत्र प्रमाणमाह– **आसीन इति** ॥ अनेन 'अणोरणीयान् महतो महीयान्' इत्येतद् विरुद्धमिति परास्तम् ॥

**(वि.खं)** पुनरपि तन्माहात्म्यमाह– **आसीन इति** ॥ आसीनः उपविष्ट एव दूरं व्रजति । शयान एव सर्वतो याति परमैश्वर्यात् । तं मदामदं मदः सुखम् अमदो दुःखं मदसहितोऽमदो येनासौ मदामदस्तं विबुधासुरसुखदुःख-कारणमिति यावत् । भगवन्तं मदन्यः को वा मद्वत् ज्ञातुमर्हति ? न कोऽपीत्यर्थः । यो मदन्यस्तं मदामदं को वा साकल्येन ज्ञातुमर्हति ? न कोऽपीति वा योज्यम् । यद्वा, मदन्यः को ब्रह्मैव तं मदामदं देवं सकलवेदोक्तप्रकारेण ज्ञातुमर्हति न त्वन्य इत्यर्थः ॥ २१ ॥

अशरीरं प्राकृतशरीरशून्यम् अनवस्थेषु नश्वरेष्वपि शरीरेषु अवस्थितं महान्तं विभुं व्याप्तमात्मानं धीरो मत्त्वा न शोचति ॥ २२ ॥

धातुः प्रसादो ज्ञानमोक्षहेतुरित्युक्तमयुक्तम् । प्रवचनादिनैव ज्ञानमोक्षयोरुपपत्तेरित्यत आह– **नायमिति** ॥ अयमात्मा भगवान् प्रवचनेन

वेदव्याख्यानेनैव लभ्यो ज्ञेयः प्राप्यश्च न । मेधयैव लभ्यो न । नापि बहुना श्रुतेनैव । किन्तु एष आत्मा प्रसन्नः सन् मदीयोऽयमिति यं वृणुते तेन लभ्यो ज्ञेयः प्राप्यश्च । ततश्चैष आत्मा तस्याधिकारिणः स्वां तनुं स्वस्वरूपं पूर्वमविद्यावृतं विवृणुते प्रकाशयतीत्यर्थः । यद्वा, ज्ञानमोक्षहेतुः प्रसादोऽपि न प्रवचनादिमात्रसाध्यः किन्तु भक्त्येकसाध्य इत्याह– **नायमिति** ॥ लभ्यः प्रसन्नो भवति । वृणुत इत्यनेन भक्तत्वं सूचितम् । ततश्च तस्याधिकारिण एष आत्मा स्वस्वरूपं तद्योग्यतानुसारेण विवृणुते प्रकाशयतीत्यर्थः ॥२३॥

शमदमादिसाधनैरेव भगवत्प्राप्त्युपपत्तौ किं तज्ज्ञानेनेत्यत आह–**नेति** ॥ यो दुश्चरिताद् इन्द्रियाणां दुष्टविषयेषु चरणादविरतोऽनिवृत्तो न किन्तु सर्वात्मना निवृत्त एव निगृहीतेन्द्रिय एवेति यावत् । अशान्तो भगवन्निष्ठबुद्धिरहितो न किन्तु तन्निष्ठबुद्धिरेव असमाहितो यथावस्तुज्ञानादिशून्यो न । किन्तु यथा-वस्तुज्ञानादिमानेव अशान्तमानसो विषयालम्बुद्धिशून्यो न किन्तु विषया-लम्बुद्धिमानेव सोऽपि प्रज्ञानेनैव भगवदपरोक्षज्ञानेनैव एनं प्राप्नुयादित्यर्थः ॥ २४ ॥

भगवतः सर्वसंहारकत्वरूपं माहात्म्यं वदंस्तस्य दुर्ज्ञेयत्वमाह–**यस्येति** ॥ यस्य भगवतो ब्रह्म च क्षत्रं चेत्युभे ओदनः अशने भवतः तत्र ब्रह्मशब्देन ब्राह्मणजात्यभिमानी स्वयं ब्राह्मणश्चतुर्मुखाख्यो ग्राह्यः । क्षत्रशब्देन क्षत्रजात्य-भिमानी स्वयं क्षत्रियो वायुः, यथोक्तं 'विष्णोर्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः' इत्यादि । मृत्युर्मारणात् मृत्युनामा रुद्रः । 'मृत्युनामा तु संहाराद् रुद्रः' इति वचनात् । यस्य भगवत उपसेचनं व्यञ्जनं घृतं वा तं भगवन्तम् इत्था उक्तप्रकारेण को वेद ? न कोऽपि । यत्र वैकुण्ठादौ स तिष्ठति तच्च को वेदेति योजना । यद्वा, कश्चतुर्मुख एवेत्था वेदोक्तप्रकारेण तं वेद सोऽपि किं स्वसामर्थ्येन ? नेत्याह– **यत्र स इति** ॥ यत्र के ब्रह्मणि स परमात्मा तिष्ठति नियामकतया स इत्यन्वयः । एवं च स्वान्तर्गतभगवत्-

प्रसादादेव वेदेति लभ्यते । यद्वा, क इति किंशब्दो यच्छब्दार्थः । य इत्था वेद स यत्र स भगवान् यत्र तिष्ठति तत्र तिष्ठतीत्यर्थः ॥ २५ ॥

**॥ प्रथमाध्यायस्य द्वितीया वल्ली ॥ १ ॥ २ ॥**

—०—

## (उपनिषत्)

### अथ प्रथमे तृतीया वल्ली

*(हृदयस्थमुख्यप्राणप्रतीके भगवद्ध्यानम्)*

ऋतं पिबन्तौ सुकृतस्य लोके
गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति
पञ्चाग्नयो ये च त्रिनाचिकेताः ॥ १ ॥

*(अग्निस्थमुक्तस्थभगवद्रूपयोरैक्यप्रतिपादनम्)*

यः सेतुरीजानानामक्षरं ब्रह्म तत् परम् ।
अभयं तितीर्षतां पारं नाचिकेत४ शकेमसि ॥ २ ॥

## (भाष्यम्)

'आत्माऽन्तरात्मेति विभुरेक एव द्विधा स्थितः ।
[1]स विष्णुः परमे वायौ परेभ्योऽप्युद्धरूपके ॥

शुभान् पिबति भोगान् स च्छायेव विदुषां प्रभुः ।
आतपः पापिनां नित्यं मर्यादा विष्णुयाजिनाम् ।
संसारस्य च पारस्थः स विष्णुर्द्विस्वरूपकः ॥ * ॥

---

१. 'विष्णुः स' ह

## (व्यासतीर्थीयम्)

अध्यात्मयोगेनेति भगवतो ध्यानमुक्तम् । स कुत्र ध्येय इत्यत आह– **ऋतमिति ॥** सुकृतस्य पुण्यस्य कार्ये शरीरे । पञ्चाग्नयो देवयजनादयो येषां ते तथोक्ताः ॥

भगवद्ध्यानस्याऽहृत्य साधनं किमित्यतो भगवन्तं स्तुवन् तद् वक्तुं शक्नुम इत्याह–**यः सेतुरिति ॥** सेतुत्वादिगुणकं ध्यातुं साधनं वक्तुं शक्नुम इत्यर्थः ॥

'ऋतं पिबन्तौ' इत्येतत् कैश्चिद् बुद्धिजीवपरत्वेन अन्यैर्जीवेश्वरविषयत्वेन व्याख्यातम् । तन्न । सुखभोक्तृत्वानुपपत्तेः । सुखस्यैव भोक्तृत्वानुपपत्तेश्चेत्याशयवान् यथावद् व्याचष्टे– **आत्मेति ॥** आत्मा देहहृदये स्थितः । अन्तरात्मा जीवहृदय स्थितः । आ ऋद्धः अर्द्धः परेभ्योऽप्यर्धः, परार्धः तस्मिन् परेभ्योऽप्यृद्धरूपके परमे गुहां प्रविष्टे वायौ विभुर्विष्णुः स एक एवाऽत्माऽन्तरात्मेति द्विधा स्थितः । असौ, भुज्यन्त इति भोगाः विषयाः शुभानेव भोगान् पिबत्यनुभवति । ऋतं पिबन्तावुभावपि परमात्मानौ चेत् कथं छायातपत्वमित्यतस्तद् व्याचष्टे– **छायेति ॥** 'यः सेतुरीजानानाम्' इत्येतद् व्याचष्टे– **मर्यादेति ॥**

## (प्रकाशिका)

पञ्चाग्नयः देवयजन-पितृयजन-भूतयजन-मनुष्ययजन-ब्रह्मयजनभेदेन पञ्चाग्नयो येषां ते तथोक्ताः । अग्र्यकर्मरूपत्वादेतत्पञ्चकमप्यग्निपदेनोच्यते । **त्रिनाचिकेताः** त्रिवारं कृतनाचिकेताख्याग्निपूजाः । सुकृतस्य कार्ये लोके शरीरे । **परार्द्धे** आ ऋद्धः आर्द्धः परेभ्यो रुद्रादिभ्योऽप्यतिशयितमहिम्नि परमे मुख्यप्राणे स्थित्वा गुहां प्रविष्टौ ऋतं पुण्यकर्मफलभूतं सुखं पिबन्तौ आत्माऽन्तरात्मेति पदवाच्यौ भगवतो मूर्तिविशेषौ । जीवान्तर्याम्यन्तरात्मा, देहान्तर्याम्यात्मेति विवेकः । **छायातपौ** भक्तानां सन्तापहारित्वेन छायारूपौ, दैत्यानां सन्तापकारित्वेनाऽतपरूपौ च ब्रह्मविदो वदन्तीति योजना । सुकृतपदमहिम्ना

ऋतमपि सुकृतरसभूतं पूज्यमेवेति लभ्यते । 'तस्येदाहुः पिप्पलं स्वाद्वग्रे ' इति श्रुतेः । अत एवास्वाद्वपि स्वादुत्वेन भुञ्जानो जीव इव भगवान्नाश्नुत इति भावेन प्रागनश्नन्नित्युक्तम् । न तु सर्वथाऽशनाभावात् । 'तस्येदाहुः पिप्पलम्' इत्युक्तत्वात् । एवं च 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यत्राप्यस्वाद्वेव स्वादुत्वेनात्तीत्यर्थो ग्राह्यः ॥

## (वेदेशीयम्)

'अध्यात्मयोगाधिगमेन' इति भगवतो ध्यानमुक्तम् । स कुत्र ध्येय इत्यतस्तन्निरूपयन् पुनरपि भगवन्माहात्म्यमाह– **ऋतमित्यादिना** ॥ केचित्तु 'ऋतं पिबन्तौ' इत्यत्र बुद्धिजीवावुच्येते द्विवचनश्रुतेः । नच बुद्धौ कर्मफलभोक्तृत्वानुपपत्तिः । जीवस्य भोक्तृत्वेन तत्सहितबुद्धौ छत्रिन्यायेनोपचारोपपत्तेरित्याहुः । तदपरे न क्षमन्ते । अन्यतरस्य पातृत्वेन जीवत्वे सिद्धे द्वितीयस्य चेतनतयैव भाव्यत्वात् । अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादौ सजातीयग्रहणस्यैव लोके दर्शनात् । नचैवं जीवान्तरं ग्राह्यम् । एकस्मिन् शरीरे भोक्तृजीवद्वयायोगात् । तस्माज्जीवेश्वरावेवात्रोच्येते । नचेशस्य कर्मफलभोगायोगः । छत्रिन्यायेन पातृजीवसम्बन्धात् पिबन्तावित्युपचारादिति । तदसत् । पिबतोर्बुद्धिजीवत्वजीवेश्वरत्वयोर्हानिलाभादर्शनात् । पातृत्वस्य जीवनिष्ठत्वस्य तेनाप्यङ्गीकारात् । बुद्धाविवौपचारिकत्वस्येश्वरे त्वयाऽप्यङ्गीकारात् । तस्मादयं मन्त्रः ईश्वरमात्रपर एव । तथा सति द्विवचनानुपपत्तिरिति चेन्न । तस्य द्विरूपत्वाभिप्रायेण सावकाशत्वादिति भावेन मन्त्रं प्रमाणेनैव व्याचष्टे– **आत्मेति** ॥ **आत्मा** देहहृदये स्थितः **अन्तरात्मा** जीवहृदये स्थित इत्याहुः । तत्वप्रकाशिकायां तु द्विरूपतया विष्णुर्देहनिविष्ट इत्युक्तम् । स्थितो हृदय इति शेषः । तेन गुहां प्रविष्टावित्येतद् व्याख्यातम् । परमे परार्ध इत्यस्य बाह्याकाशस्थानापेक्षया परमं परस्य ब्रह्मणः । स्थानं परार्द्धं हार्दाकाशः । तत्र परब्रह्मोपलभ्यते । तस्मिन् परमे परार्धे हार्दाकाशे

प्रविष्टाविति व्याख्यानमसत् । हार्दाकाशस्य परमत्वाभावात् । बाह्याकाशा-पेक्षयाऽन्तराकाशस्य परमत्वे नियामकाभावात् । नन्न तत्र परब्रह्मोपलब्धिर्नियामिका । बाह्याकाशेऽपि योग्यानां परब्रह्मोपलब्धेः । गुहां प्रविष्टावित्यनेनैव हार्दाकाशस्थितिलाभाच्च । प्रमाणविरोधाच्चेति भावेन व्याचष्टे–**परम इति ॥** सर्वजीवोत्तमे इत्यर्थः । परेभ्योऽपि रुद्रादिभ्य ऋद्धरूपकेऽतिपरिपूर्णस्वरूप इत्यर्थः । स विभुर्विष्णुरेक एवाऽत्मान्तरात्मेति द्विधा हृदये तत्रापि परमे परेभ्योऽपि ऋद्धरूपके वायौ स्थित इत्यन्वयः । विष्णुशब्दव्याख्यानं **विभुरिति ॥**

तथाऽपि कथमयं मन्त्रः ईश्वरपरः? तस्य कर्मफलपातृत्वायोगादिति चेन्न । 'रसं पिबति कर्मजम्' इत्यादिवचनेनेश्वरस्यापि कर्मफलपातृत्वश्रवणात् । तथा सति दुःखभोगो 'अनश्नन्नन्योऽभिचाकशीति' इत्यादिश्रुतिविरोधश्च स्यादित्यतः 'ऋतं पिबन्तौ' इत्येतद् व्याचष्टे– **शुभानिति ॥** सावधारणमेतत् । पिबति अनुभवति । भुज्यन्त इति भोगा विषयाः । 'ऋतं सत्यं तथा धर्मः' इति स्मृतेः ऋतशब्दस्य धर्मवाचकत्वाच्छुभानित्युक्तम् । प्रत्युत जीवपक्ष एवेदमनुपपन्नम् । तस्याधर्मफलं प्रत्यपि भोक्तृत्वात् । न चापूर्णानन्दत्वप्रसङ्गः । अचिन्त्यैश्वर्यबलेन सुखभोगोपपत्तेः । अशुभभोगाभावविषयं तद्वाक्यमिति भावः । नन्वेवमस्येश्वरपरत्वे छायातपत्वविरोधः । तयोर्विद्वदविद्वत्परत्वेन जीवेश्वरपरत्वावगमादित्यत आह– **छायेवेति ॥** छायेव सुखकारणमित्यर्थः । आतप इत्यत्रापि इवशब्दोऽनुवर्तते । दुःखकारणमित्यर्थः । नचैवमौपचारिकत्वं दोषः । त्वन्मतेऽपि छायातपावित्यस्य विद्वदविद्वद्वाचकत्वाभावेनामुख्यार्थस्य ग्राह्यत्वात् । नन्वेवं किंबलाद् विष्णुमात्रपरत्वेन व्याख्यायत इति चेत् । गुहाप्रविष्टत्वलिङ्गादेव । तच्च विष्णुमात्रनिष्ठमित्युक्तम् । किञ्च, यस्सेतुरिति पिबतोरेकवचनेन विशेषणादेक एव पाता । अत एव श्रुतौ द्विवचनप्रयोगेऽपि भाष्ये एकवचनप्रयोगः । स च याजकसेतुत्वादिविशेषणाच्च विष्णुरिति भावेन 'सेतुरीजानानाम्' इति

वाक्यं सर्वेषां याजिनामित्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **मर्यादेति** ॥ स द्विस्वरूपको विष्णुर्विष्णुमुद्दिश्य याजिनां मर्यादा आश्रय इत्यर्थः ॥

एतेन यत्परैरुक्तं यः सेतुरीजानानां तं नाचिकेतमग्निं यच्चाक्षरं परं ब्रह्माभयं पारं संसारपारं तितीर्षतामाश्रयश्च तच्च शकेमसि परापरब्रह्मणी कर्मब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थ इति । तदपि परास्तम् । यः सेतुरीजानानां यच्चाक्षरं परं ब्रह्म तं नाचिकेतमग्निं शकेमसीत्येकवाक्यत्वसम्भवे वाक्यभेदाश्रयणायोगात् । त्वत्पक्षे जीवेश्वरस्वरूपनिरूपणावसरेऽग्निस्वरूपनिरूपणस्यासङ्गतत्वाच्च । अपरब्रह्मभूताग्नेः कर्मविदाश्रयस्य ज्ञातव्यत्वस्य प्रागेवोक्तत्वाच्चेति । संसारपारं तितीर्षतामिति व्याख्यानमसत् । पारमित्यस्य पृथग्विशेषणत्वे गुणान्तरलाभात् । मुमुक्षूणां संसारपारमोक्षतितीर्षाया अभावाच्चेति भावेन पारमित्येतत् सोपस्करं व्याचष्टे– **संसारस्येति** ॥ संसारस्य पारो मोक्षस्तस्मिन् तिष्ठतीत्यर्थः ॥

**(वे.खं)** सुकृतस्य लोके सुकृतनिर्मितशरीरे । गुहां हृदयगुहां प्रविष्टौ । तत्रापि परमे सर्वजीवोत्तमे परार्धे आ ऋद्धः अर्धः परेभ्योऽर्द्धः परार्धः । परेभ्योऽप्यृद्धरूपके अतिपरिपूर्णे वायौ प्रविष्टौ ऋतं सुकृतफलं पिबन्तौ भुञ्जानावात्मान्तरात्माख्यभगवद्रूपविशेषौ । ये पञ्चाग्नयः पञ्चमहायज्ञवन्तो द्युपर्जन्यादिपञ्चाग्निविद्यानिष्ठा वा त्रिनाचिकेताः त्रिवारकृतनाचिकेताश्च ब्रह्मविदस्ते छायातपौ विद्वदविदुषोः सुखदुःखकारणीभूतौ वदन्ति ॥ १ ॥

यत्पूर्वम् 'अनन्तलोकाप्तिम्' इत्यादिनाऽग्निस्थभगवत्स्वरूपमुक्तं यच्च ओमित्येतदित्यादिना मुक्तनियामकभगवत्स्वरूपमुक्तं तदुभयमेकमेव तद्ध्याने चाहमेवाधिकारीत्याह– **यः सेतुरिति** ॥ यः पूर्वोक्तो द्विरूपको विष्णुरीजानानां विष्णुयाजिनां सेतुर्मर्यादा यच्च संसारभयं तितीर्षतामभयमभयप्रदं पारं संसारस्थं मुक्तनियामकमिति यावत् । अक्षरं परं ब्रह्म तं नाचिकेतमग्निम् अग्निस्थं भगवन्तं शकेमसि ध्यातुं शक्ताः स्मः ॥ २ ॥

## (उपनिषत्)

*(ध्याने इन्द्रियनिग्रहस्याऽवश्यकत्वप्रतिपादनम्)*

आत्मान॰ रथिनं विद्धि शरीर॰ रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥

इन्द्रियाणिहयानाहुर्विषया॰स्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥

*(इन्द्रियनिग्रहस्य विवेकसाध्यत्वनिरूपणम्)*

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥

यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणिवश्यानि सदश्वा इव सारथेः ॥ ६ ॥

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत् पदमाप्नोति स॰सारं चाधिगच्छति ॥ ७ ॥

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत् पदमाप्नोति यस्माद् भूयो न जायते ॥ ८ ॥

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम् ॥ ९ ॥

*(देवतातारतम्यप्रतिपादनम्)*

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥

**महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ ११ ॥**

*(ज्ञानिनामेव भगवत्साक्षात्कारः)*

**एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥**

**(भाष्यम्)**

**देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः ।**
**सोमवित्तपसूर्याप्पा अश्व्यग्नीन्द्रेन्द्रसूनवः ॥**

**यमो दक्षश्चेन्द्रियेशाः सुपर्णी वारुणी तथा ।**
**उमेति चार्थमानिन्यस्तिस्रो [1]द्विद्व्येकदेवताः ॥**

**मनोभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु ।**
**ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ॥**

**तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा ।**
**तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः ।**
**कश्चित् कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा ॥ * ॥**

**(व्यासतीर्थीयम्)**

अभ्यर्हितं प्रत्याहारं निरूपयति–**आत्मानमित्यादिना** ॥ प्रग्रहं दाम । अश्वादीनां ग्रामादीनिव तेषु तेषां गोचरान् विषयानाहुः । आत्मा आत्मानम् । सन्त्वात्मादयो रथ्यादिरूपाः । तथाच किमित्यत आह– **य इति** ॥ विज्ञानवान् बुद्धियुतः । ध्यानस्य प्रत्याहारोऽभ्यर्हितं साधनं कुत इत्यतस्तद्रहितस्य तद्वतश्च क्रमेणानर्थफले आह– **यस्त्वित्यादिना** ॥ स तु तत्पदमिति

१. 'द्विद्व्येकदेवताः' ह.

तच्छब्देनोक्तं किमित्यत आह– **विज्ञानेति** ॥ भगवद्ध्यानं च तारतम्यान्त-र्गतत्वेन कार्यमित्याह– **इन्द्रियेभ्य इत्यादिना** ॥ सर्वगः कश्चिदस्ति चेत् कस्मात् स न दृश्यत इत्यत आह– **एष इति** ॥ न दृश्यते चेदलं तद्दर्शनार्थं प्रयासेनेत्यत आह– **दृश्यत इति** ॥

'इन्द्रियेभ्यः पराः' इत्यादि वाक्यं प्रसिद्धेन्द्रियपरत्वप्रतीतिं निवारयन् व्याचष्टे–**देवेभ्य इति** ॥ के ते इन्द्रियदेवा इति जिज्ञासायामाह–**सोमेति** ॥ श्रोत्रत्वक्चक्षूरसनघ्राणवाग्घस्तपादपायूपस्थानामिन्द्रियाणां क्रमात् सोमादयो देवा ईशा इत्यर्थः । अर्थदेवता आह– **सुपर्णीति** ॥ ननु रूपादयः पञ्चार्थाः, सौपर्ण्याद्यास्तु तिस्रः । अतः कथं तासामर्थविभाग इत्यत उक्तम्– **द्विद्व्येक-देवता इति** ॥ द्वौ च द्वौ च एकश्च द्विद्व्येके तेषां देवताः द्विद्व्येक-देवताः । सुपर्णीवारुण्यौ द्वयोर्द्वयोरभिमानिन्यौ उमा त्वेकस्येत्यर्थः । काष्ठा अवसानं परा गतिः परमप्राप्यम् । 'पुरुषान्न परम्' इत्यादेस्तात्पर्यार्थमाह– **नैवेति** ॥

## (प्रकाशिका)

ईजानानां 'एजृ कम्पने' इति धातोः पापाद् भीतानां भक्तिनम्रतया विष्णु-याजिनां सेतुर्मर्यादा आधार इति यावत् । नाचिकेतं नाचिकेताग्निस्थं तं परमात्मानं शकेम वक्तुं शक्नुमः । त्वं सि असि, त्वं श्रोतुं शक्नोषीत्यर्थः । नेदमपूर्वम् । 'तव वयं स्मः, त्वमस्माकमसि' इत्यैतरेयोपनिषदि स्थं प्रागुक्त्वा 'तदप्येतदृषिणोक्तं, त्वमस्माकं तव स्मसि' इति तदुत्तरवाक्येऽस्यार्थस्य स्पष्टी-कृतत्वात् । अन्यथा शकेमेत्येतावतैव पूर्तेः सीति व्यर्थं स्यादिति ज्ञेयम् । 'आत्मेन्द्रियमनोयुक्तम्' इत्यत्र आत्मेन्द्रियमनोभिः, 'आत्मा देहे धृतौ यत्ने' इत्यनुशासनाद् आत्मशब्दवाच्यरथभूतदेहेन इन्द्रियाख्याश्वैः प्रग्रहरूपमनसा च युक्तं रथिनं जीवं भोक्तारं विद्धीत्यर्थः । भवतु भोक्ता जीवः, प्रकृते किम्? इत्यतो मनोजयरहितानामकुशलतां, मनोजयवतः कुशलतां मन्त्रद्वयेन

प्राक् प्रदर्श्य पुनर्मन्त्रद्वयेन मनोजयरहितो ज्ञानी इन्द्रियजयशक्त्यभावादिन्द्रियलालसो भूत्वा संसार एव क्लिश्यते । परमात्मज्ञानबलेन मनोजयवांस्त्विन्द्रियाणिविषयेभ्य उपसंहृत्य परमात्मानं ध्यात्वाऽपुनरावृत्तिस्थानमाप्नोतीति भावेन तयोरुभयोरपि योग्यं फलमाह– **यस्त्विंत्यादिना** ॥ 'स तु तत्पदमाप्नोति' इत्यत्र पदं विष्णुपदमेव, न तु रुद्रादिपदम् । मुक्तिश्च विष्णुपदप्राप्तिरेव न तु तदैक्यमिति भावेनाऽऽह– **विज्ञानेति** ॥ 'भेजे खगेन्द्रध्वजपादमूलम्' इति हि स्मृतिः । यस्माद् भूयो न जायते सोऽध्वनः पारमाप्नोतीति वदताऽयमेव परमो मोक्षो, न तु पुनरितोऽन्यः कोऽपि परमो मोक्षोऽस्तीति च सूचितः । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्रेन्द्रियपदेन श्रोत्रादिदशेन्द्रियाभिमानिनः सोमादिदशदेवता गृह्यन्ते । अर्थपदेन साक्षाज्ज्ञानेन्द्रियविषयभूतरूपरसगन्धस्पर्शशब्दाभिमानिन्यः सुपर्णीवारुणीपार्वत्याख्याः तिस्रो देवता गृह्यन्ते । तत्र रूपरसयोः सुपर्णी, गन्धस्पर्शयोर्वारुणी, शब्दस्योमेति विवेकः । तदिदमुक्तं भाष्यकृता– **द्विद्व्येकदेवता इति** ॥ द्वयोरेका पुनर्द्वयोरेकाऽवशिष्टस्यैकेत्यर्थः । सुपर्णीवारुण्योः प्राप्तनिजपदत्वाद् द्वयोर्द्वयोर्देवतात्वम् । उमायास्त्वप्राप्तनिजपदत्वादेकदेवतात्वमिति विवेकः ॥

## (वैदेशीयम्)

इन्द्रियेभ्य इति मन्त्रं जडानामेव तारतम्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **देवेभ्य इति** ॥ इन्द्रियात्मभ्यः इन्द्रियाभिमानिभ्य इत्यर्थः । अनेन श्रुताविन्द्रियार्थादिशब्दा अभिमान्यधिकरणन्यायेन तदभिमानिपरा इत्युक्तं भवति । के ते इन्द्रियाभिमानिनो देवा इत्यत आह– **सोमेति** ॥ दक्षश्चेत्येते दशेन्द्रियेशाः । तत्र श्रोत्रस्य सोमस्त्वचो वित्तपश्चक्षुषः सूर्यो रसनस्याऽप्पो वरुणो घ्राणस्याश्विनौ वाचोऽग्निः पाण्योरिन्द्रः पादयोरिन्द्रसूनुर्जयन्तः, पायोर्यमो, गुह्यस्य दक्ष इति विवेकः । श्रोत्राद्यभिमानिनो बहव इति अन्यत्रान्यथोक्तावप्यविरोधः । के ते अर्थाभिमानिनो येषामिन्द्रियदेवेभ्य उत्तमत्वमित्यत

तच्छब्देनोक्तं किमित्यत आह– **विज्ञानेति** ॥ भगवद्ध्यानं च तारतम्यान्तर्गतत्वेन कार्यमित्याह– **इन्द्रियेभ्य इत्यादिना** ॥ सर्वगः कश्चिदस्ति चेत् कस्मात् स न दृश्यत इत्यत आह– **एष इति** ॥ न दृश्यते चेदलं तद्दर्शनार्थं प्रयासेनेत्यत आह– **दृश्यत इति** ॥

'इन्द्रियेभ्यः पराः' इत्यादि वाक्यं प्रसिद्धेन्द्रियपरत्वप्रतीतिं निवारयन् व्याचष्टे–**देवेभ्य इति** ॥ के ते इन्द्रियदेवा इति जिज्ञासायामाह–**सोमेति** ॥ श्रोत्रत्वक्चक्षूरसनघ्राणवाग्घस्तपादपायूपस्थानामिन्द्रियाणां क्रमात् सोमादयो देवा ईशा इत्यर्थः । अर्थदेवता आह– **सुपर्णीति** ॥ ननु रूपादयः पञ्चार्थाः, सौपर्ण्याद्यास्तु तिस्रः । अतः कथं तासामर्थविभाग इत्यत उक्तम्– **द्विद्व्येकदेवता इति** ॥ द्वौ च द्वौ च एकश्च द्विद्व्येके तेषां देवताः द्विद्व्येकदेवताः । सुपर्णीवारुण्यौ द्वयोर्द्वयोरभिमानिन्यौ उमा त्वेकस्येत्यर्थः । काष्ठा अवसानं परा गतिः परमप्राप्यम् । 'पुरुषान्न परम्' इत्यादेस्तात्पर्यार्थमाह– **नैवेति** ॥

## (प्रकाशिका)

ईजानानां 'एजृ कम्पने' इति धातोः पापाद् भीतानां भक्तिनम्रतया विष्णुयाजिनां सेतुर्मर्यादा आधार इति यावत् । नाचिकेतं नाचिकेताग्निस्थं तं परमात्मानं शकेम वक्तुं शक्नुमः । त्वं सि असि, त्वं श्रोतुं शक्नोषीत्यर्थः । नेदमपूर्वम् । 'तव वयं स्मः, त्वमस्माकमसि' इत्यैतरेयोपनिषदि स्थं प्रागुक्त्वा 'तदप्येतदृषिणोक्तं, त्वमस्माकं तव स्मसि' इति तदुत्तरवाक्येऽस्यार्थस्य स्पष्टीकृतत्वात् । अन्यथा शकेमेत्येतावतैव पूर्तेः सीति व्यर्थं स्यादिति ज्ञेयम् । 'आत्मेन्द्रियमनोयुक्तम्' इत्यत्र आत्मेन्द्रियमनोभिः, 'आत्मा देहे धृतौ यत्ने' इत्यनुशासनाद् आत्मशब्दवाच्यरथभूतदेहेन इन्द्रियाख्याश्वैः प्रग्रहरूपमनसा च युक्तं रथिनं जीवं भोक्तारं विद्धीत्यर्थः । भवतु भोक्ता जीवः, प्रकृते किम्? इत्यतो मनोजयरहितानामकुशलतां, मनोजयवतः कुशलतां मन्त्रद्वयेन

प्राक् प्रदर्श्य पुनर्मन्त्रद्वयेन मनोजयरहितो ज्ञानी इन्द्रियजयशक्त्यभावादिन्द्रियलालसो भूत्वा संसार एव क्लिश्यते । परमात्मज्ञानबलेन मनोजयवांस्त्विन्द्रियाणिविषयेभ्य उपसंहृत्य परमात्मानं ध्यात्वाऽपुनरावृत्तिस्थानमाप्नोतीति भावेन तयोरुभयोरपि योग्यं फलमाह– **यस्त्वित्यादिना** ॥ 'स तु तत्पदमाप्नोति' इत्यत्र पदं विष्णुपदमेव, न तु रुद्रादिपदम् । मुक्तिश्च विष्णुपदप्राप्तिरेव न तु तदैक्यमिति भावेनाऽह– **विज्ञानेति** ॥ 'भेजे खगेन्द्रध्वजपादमूलम्' इति हि स्मृतिः । यस्माद् भूयो न जायते सोऽध्वनः पारमाप्नोतीति वदताऽयमेव परमो मोक्षो, न तु पुनरितोऽन्यः कोऽपि परमो मोक्षोऽस्तीति च सूचितः । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्रेन्द्रियपदेन श्रोत्रादिदशेन्द्रियाभिमानिनः सोमादिदशदेवता गृह्यन्ते । अर्थपदेन साक्षाज्ज्ञानेन्द्रियविषयभूतरूपरसगन्धस्पर्शशब्दाभिमानिन्यः सुपर्णीवारुणीपार्वत्याख्याः तिस्रो देवता गृह्यन्ते । तत्र रूपरसयोः सुपर्णी, गन्धस्पर्शयोर्वारुणी, शब्दस्योमेति विवेकः । तदिदमुक्तं भाष्यकृता– **द्विद्व्येकदेवता इति** ॥ द्वयोरेका पुनर्द्वयोरेकाऽवशिष्टस्यैकेत्यर्थः । सुपर्णीवारुण्योः प्राप्तनिजपदत्वाद् द्वयोर्द्वयोर्देवतात्वम् । उमायास्त्वप्राप्तनिजपदत्वादेकदेवतात्वमिति विवेकः ॥

## (वेदेशीयम्)

इन्द्रियेभ्य इति मन्त्रं जडानामेव तारतम्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **देवेभ्य इति** ॥ इन्द्रियात्मभ्यः इन्द्रियाभिमानिभ्य इत्यर्थः । अनेन श्रुताविन्द्रियार्थादिशब्दा अभिमान्यधिकरणन्यायेन तदभिमानिपरा इत्युक्तं भवति । के ते इन्द्रियाभिमानिनो देवा इत्यत आह– **सोमेति** ॥ दक्षश्चेत्येते दशेन्द्रियेशाः । तत्र श्रोत्रस्य सोमस्त्वचो वित्तपश्चक्षुषः सूर्यो रसनस्याऽप्पो वरुणो घ्राणस्याश्विनौ वाचोऽग्निः पाण्योरिन्द्रः पादयोरिन्द्रसूनुर्जयन्तः, पायोर्यमो, गुह्यस्य दक्ष इति विवेकः । श्रोत्राद्यभिमानिनो बहव इति अन्यत्रान्यथोक्तावप्यविरोधः । के ते अर्थाभिमानिनो येषामिन्द्रियदेवेभ्य उत्तमत्वमित्यत

आह– **सुपर्णीति** ॥ ननु शब्दादयः पञ्चार्थाः । सुपर्ण्याद्यास्तु तिस्रः । अतः कथं तासां तदभिमानित्वमित्यत आह– **द्विद्व्येकदेवता इति** ॥ द्वौ च द्वौ चैकश्च द्विद्व्येके द्विद्व्येकेषां देवता द्विद्व्येकदेवताः । सुपर्णीवारुण्यौ द्वयोर्द्वयोरभिमानिन्यौ । उमा त्वेकस्येत्यर्थः । तत्र सुपर्णी शब्दस्पर्शयोर्वारुणी रूपरसयोरुमा गन्धस्येति विवेकः । 'अर्थेभ्यश्च परं मनः' इति वाक्यं व्याख्यातुं मनोऽभिमानिदेवता आह– **मनोभिमानिन इति** ॥ अपिरभिव्याप्तौ । इन्द्रकामादिव्यावृत्त्यर्थं तुशब्दोऽवधारणार्थः । इदानीं तद्वाक्यं व्याचष्टे– **ते इति** ॥ 'मनसस्तु परा बुद्धिः' इति वाक्यं व्याचष्टे– **तेभ्य इति** ॥ मनोभिमानिभ्यः । लिङ्गवचनव्यत्ययेन श्रेष्ठेत्यनुवर्तते । 'बुद्धेरात्मा महान्' इति वैयधिकरण्यप्रतीतिनिरासाय तद्व्याचष्टे– **तस्या इति** ॥ वायुरपि ग्राह्यः । महान् महत्तत्वाभिमानी । आत्मा सर्वजीवस्वामी । 'महतः परमव्यक्तम्' इत्येतद् व्याचष्टे– **तत इति** ॥ 'अव्यक्तात् पुरुषः परः' इत्येतद्वाक्यं व्याचष्टे– **तस्यास्त्विति** ॥ पुरुषशब्दप्रवृत्तिनिमित्तमाह– **पूर्णत्वादिति** ॥ पूर्णषड्गुणत्वादित्यर्थः । 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति पुरुषाच्छ्रेष्ठो नास्तीत्युक्तम् । तत्कैमुत्येन साधयति– **नैवेति** ॥ कुतश्चित् कुत्रापि देशे काले वा । ननु रमासमाभावेऽपि तदधिकवद् भगवदधिकोऽपि किं न स्यादिति चेन्न । भगवत एव रमासमस्य सत्त्वात् । नहि तदधिकः तत्सदृशगुणवान्नेति युक्तम् । पुरुषादुत्तमस्य पाशुपतादिशास्त्रेषु कथनात् कथमेतदित्यत उक्तम्– **सा कथेति** ॥ किम्वित्यनुवर्तते । सा कथा श्रेष्ठोऽस्तीति कथा किमु कथमुपपन्ना । उक्तयुक्तिविरुद्धत्वादित्यर्थः ॥

**(वि.ख्वं)** इन्द्रियनियमनमवश्यं सम्पाद्यमिति वक्तुं तदुपयुक्तत्वेन किञ्चिदुपदिशति– **आत्मानमिति** ॥ आत्मानं शरीरिणमेव रथिनं रथस्वामिनं विद्धि शरीरं तु रथं विद्धि अश्वस्थानीयैरिन्द्रियैर्विकृष्यमाणत्वात् । बुद्धिं तु सारथिं विद्धि शरीरप्रवर्तकत्वात् । बुद्ध्या विचार्य हि किञ्चित् करोति । मनः प्रग्रहमेव

रशनामेव विद्धि । चशब्दस्तुशब्दार्थः । मनसा प्रगृहीतानां श्रोत्रादीनां प्रवर्तमनात् ॥ ३ ॥

इन्द्रियाणि हयानाहुः शरीराख्यरथाकर्षकत्वात् । तेषु तेषामिन्द्रियाणां गोचरान् शब्दादीन् विषयान् । अश्वसञ्चारदेशानाहुः । तेष्विन्द्रियाणां सञ्चारात् । सन्त्वात्मादयो रथ्यादिरूपाः किं तत इत्यतो यथा सारथिशून्यो रथी दुःखभोक्तैवं बुद्धिशून्य आत्माऽपीत्याह– **आत्मेति** ॥ आत्मेति द्वितीयार्थे । आत्मानं शरीरिणं इन्द्रियमनोयुक्तं तन्मात्रयुक्तं बुद्धिशून्यं दुःखभोक्तेत्याहुर्मनीषिणः । यद्वाऽत्र बुद्धिरपि ग्राह्या । तथाच प्रसिद्धरथिवत् सुखभोक्तेत्याहुरिति व्याख्येयम् ॥ ४ ॥

इदानीमश्वस्थानीयेन्द्रियनियमनं कार्यमिति मनोनियमनं विज्ञानं च तत्साधनमित्यन्वयव्यतिरेकाभ्यामाह– **यस्त्विति** ॥ यस्तु अविज्ञानवान् । शास्त्रादिजनितविशेषबुद्ध्याख्यविवेकिसारथिशून्योऽत एवायुक्तेनानिगृहीतेन मनसा सदा युक्तो भवति तस्य पुरुषस्येन्द्रियाण्यवश्यानि भवन्ति । तत्र दृष्टान्तमाह– **दुष्टाश्वा इति** ॥ अनिगृहीताश्वा इत्यर्थः ॥ ५ ॥

प्राधान्याद् व्यतिरेकमुक्त्वाऽन्वयमाह– **यस्त्विति** ॥ ६ ॥

अस्त्वेवमन्वयव्यतिरेकाभ्याम् इन्द्रियनियमने मनोनियमनादि साधनम् । तदेव किमर्थमिति चेन्न । तस्य परम्परया मोक्षोपयोगित्वादिति भावेनेन्द्रियनियमनाद्यभावे मोक्षाभावं तावदाह– **यस्त्विति** ॥ अमनस्कोऽगृहीतमनस्कः । अत एवेन्द्रियाणां दुष्टविषयेषु यथेष्टं प्रवृत्त्या निरन्तरमशुचिः ॥ ७ ॥

इदानीमन्वयमाह– **यस्त्विति** ॥ यस्मात् यत्पदं प्राप्य ॥ ८ ॥

तदेव विवृणोति– **विज्ञानेति** ॥ अध्वनः संसाराध्वनः ॥ ९ ॥

भगवज्ज्ञानं तारतम्यान्तगत्वेन सम्पाद्यमिति भावेन देवतातारतम्यमाह– **इन्द्रियेभ्य इति** ॥ इन्द्रियेभ्यः श्रोत्रादीन्द्रियाद्यभिमानिदेवेभ्यः इन्द्रादिभ्योऽर्थाः

अर्थाभिमानिदेवताः सौपर्णीवारुण्युमा च परा उत्तमाः । अर्थेभ्यश्च परं मनः मनोभिमानिदेवता रुद्रादय उत्तमाः । मनसस्तु परा बुद्धिस्तदभिमानिनी सरस्वती । बुद्धेर्महानात्मा । महत्तत्वामानी ब्रह्मा परः ॥ १० ॥

महतः परमव्यक्तं तदभिमानिश्रीतत्वम् । अव्यक्तात् पुरुषः पूर्णषड्गुणो भगवान् परः । पुरुषादप्युत्तममस्ति किमित्यत आह–**पुरुषान्न परमिति** ॥ पुरुषात् किमपि परं न । यतः सा काष्ठा स एवावधिः । कुतः ? सा परा गतिः गम्यत इति गतिः ॥ ११ ॥

सुकृतस्य लोक इति भगवतः शरीरस्थत्वमुक्तम् । तर्हि जीववत् कुतो न दृश्यत इति चेन्न । किं सर्वेषां दर्शनमापाद्यते उत योग्यानामेव । आद्य आह– **एष इति** ॥ द्वितीये त्वाह– **दृश्यत इति** ॥ अग्र्यत्वमेव विशदयति– **सूक्ष्मयेति** ॥ सूक्ष्मवस्तुविषयया ॥ १२ ॥

**(उपनिषत्)**

*(देवेष्वपि स्वस्वामिभावसम्बन्धकथनम्)*

**यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेद् ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति तद् यच्छेच्छान्त आत्मनि ॥ १३ ॥**

*(वेदाध्येतॄणां हितोक्तिः)*

**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति ॥ १४ ॥**

**अशब्दमस्पर्शमरूपमव्ययं**
**तथाऽरसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं**
**निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १५ ॥**

*(नाचिकेतोपाख्यानस्योपसंहारः तत्कथनश्रवणयोः फलं च)*

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम् ।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥**

**य इमं परमं गुह्यं श्रावयेद् ब्रह्मसꣳसदि ।**
**प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते**
**तदानन्त्याय कल्पत इति ॥ १७ ॥**

**॥ इति प्रथमाध्याये तृतीयावल्ली ।**
**॥ इति प्रथमोऽध्यायः ॥**

—०—

**(भाष्यम्)**

तस्माद् वागात्मिका देवीरुमाद्यास्तु शिवादिषु ।
शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः ॥

तौ रमायां परानन्दे तां[1] विष्णौ परमात्मनि ।
तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः ।
कुतस्तु मानुषो देवान् नियच्छेद् विनियामकान्' [2]इति च ॥ ✻ ॥
स्वभार्यायाः परत्वं सिद्धमिति महतः परमित्येवोक्तम् ॥ ✻ ॥

**(व्यासतीर्थीयम्)**

इन्द्रियेभ्योऽर्थादय उत्तमत्वेन ध्येया इत्युक्तम् । न केवलमुत्तमत्वेन । किन्तु पूर्वपूर्वेषाम् उत्तरोत्तरनियतत्वं च ध्येयमित्याह– **यच्छेदिति** ॥ इन्द्रियाणि वाचि नियच्छेद् वाचं मनसि मनश्च ज्ञाने बुद्धौ शान्ते अतिशयित-सुखरूपे । वेदपुरुषः स्वयं साधूनां हितमुपदिशति– **उत्तिष्ठतेति** ॥ किमर्थं

---

१. 'सा विष्णौ' ह. २. 'इति च' इति नास्ति ह.

बोधः सम्पादनीयः? संसृतिनिवृत्त्यर्थमिति चेन्न । तस्याः कारणान्तरेणानायासेन निवृत्तौ प्रयाससाध्यबोधवैयर्थ्यादित्यत आह– **क्षुरस्येति** ॥ संसृतिः क्षुरस्य धारेव निशिता । निशितत्वमेव विवरीतुमुक्तम्– **दुरत्ययेति** ॥ तन्निवर्तकं पथश्चार्चिरादिमार्गाद् गम्यं दुर्गमिति कवयो वदन्ति । दुर्गमत्वं ब्रह्मणः कथमित्यतः शब्दाद्यनात्मकत्वेन श्रोत्राद्यविषयत्वादित्याह– **अशब्दमिति** ॥ संसारनिवृत्तिसाधनं तज्ज्ञानं केन साधनीयमित्यत आह– **अनादीति** ॥ श्रोत्राद्यगोचरमपि महतः परत्वादिरूपेण शास्त्रतो निचाय्य ज्ञात्वा मृत्युमुखात् प्रमुच्यते । अत्राध्यायस्य समाप्तत्वादुक्तविद्यां श्रुत्वा वक्तुः फलमाह– **नाचिकेतमिति** ॥ स्थानविशेषे कालविशेषे वा स्तोत्रवदेतद्विद्यापठितुरानन्त्यं किल फलम् । किमु श्रुत्वा व्याख्यातुरुक्तं फलमित्याह– **य इति** ॥

यच्छेदित्यादि व्याचष्टे– **तस्मादिति** ॥ तस्मादुक्तप्रकारेण तारतम्यभावात् इति । वागात्मिकाः वागभिमानिनीः । इन्द्रियाणि वाचि नियच्छेदित्यादौ ग्राह्यम् । इन्द्रियादीनामर्थादिषु नियमनं नाम किमित्यत आह–**तद्वशत्वेनेति** ॥ नापरो नियमनरूपः। प्रसिद्धनियमनार्थत्वे बाधकमाह–**कुत इति** ॥ अनाद्यनन्तमव्यक्तात् परमिति वक्तव्ये महतः परमित्युक्तेः कारणमाह– **स्वेति** ॥

**॥ प्रथमाध्यायस्य तृतीयावल्ली ॥ ३ ॥**

**॥ प्रथमाध्यायः सम्पूर्णः ॥ १ ॥**

## (प्रकाशिका)

'यच्छेद् वाङ् मनसि' इत्यत्र तद्यच्छेदिति नपुंसकैकवचनेन परामर्शादुभयोरपि यमधातुयोगाच्चेन्द्रियाणिवाचि यच्छेद् वाचं मनसि यच्छेदित्यर्थः । यच्छेदित्युक्तं स्वाधिकदेवतानियमनं कथं ध्यातुर्घटत इति चेन्न । नियमनं नाम तद्वशत्वेन ध्यानं, न तु साक्षान्नियमनम् । तदुक्तं भाष्ये– 'तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः' इति । 'उत्तिष्ठत जाग्रत' इत्यत्र अज्ञानाख्यनिद्रापर्यङ्कात् संसारात्

शीघ्रमुत्तिष्ठत । **जाग्रत** अज्ञानाख्यस्वापं बहिष्कुरुत । सद्गुरुं प्राप्य वरान् पूर्वोक्तरीत्या क्रमेणोत्तरोत्तरश्रेष्ठान् देवान्निबोधत । ननु किमर्थमिदं ज्ञानं सम्पादनीयमित्यत उक्तम्– **क्षुरस्य धारेति** ॥ क्षुरस्य धारा यथा स्वोपरि गच्छतः पदे पदे दुःखदात्री एवं संसृतिरपि क्षुत्तृट्त्रिकालगुणमारुतजैह्म-शैश्र्याद्युपद्रवैः जननमरणनरकयातनाद्युपद्रवैश्च पदे पदे दुःखदात्री । अतः क्षुरधारासदृशी । अत एव निशिता दुरत्यया । संसारोत्तारकज्ञानाख्योपायं विना तर्तुमशक्येत्यर्थः । पथस्थं पथः अर्चिरादिमार्गस्य स्थम् अन्ते गम्यतया स्थितं कैवल्यपदं च दुर्गं कवयो वदन्ति । गुरु-देवताप्रसादं विना गन्तुमशक्यं कवयो वदन्तीति योजना ॥

**॥ इति प्रकाशिकायां प्रथमोऽध्यायः ॥**

## (वेदेशीयम्)

'यच्छेद् वाङ्मनसी प्राज्ञः' इत्यादिकमपि प्रसिद्धजडवागादिपरमिति प्रतीतिनिरासाय प्रमाणेन व्याचष्टे– **तस्मादिति** ॥ उक्तरीत्या उमादीनां परस्परनियम्यनियामकभावसत्त्वादित्यर्थः । वागात्मिकाः वागभिमानिनीः शिवादिषु नियच्छेदित्यन्वयः । यद्यपि प्राग् वागभिमान्यग्निरुक्तस्तथाऽपि तस्य साक्षान्मनोभिमानिरुद्रादिनियम्यत्वाभावादुमाद्या. गृहीताः । अनेन 'यच्छेद् वाङ्मनसी प्राज्ञः' इत्येतद् व्याख्यातम् । 'शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेत्' इत्यत्र सरस्वतीद्वारेति ग्राह्यम् । 'तद् यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति' इत्युक्तत्वात् । 'तद् यच्छेच्छान्त आत्मनि' इति महद-भिमानिब्रह्मवाय्वोः साक्षाद् भगवन्नियतत्वमुच्यते । तदयुक्तम् । 'महतः परमव्यक्तम्' इत्युक्तत्वाद् इत्यत आह–**तौ रमायामिति** ॥ परानन्द इति शान्तशब्दार्थः । आत्मशब्दार्थः– **परमात्मनीति** ॥ यच्छेदित्यनेन वागादीनां मनआदौ नियमनकर्तृत्वं जीवस्योच्यत इति प्रतीतिनिरासाय तस्य विवक्षितमर्थमाह– **तद्वशत्वेनेति** ॥ प्रतीत एवार्थः किं न स्यादित्यत

आह– **कुतस्त्विति** ।। तत्र हेतुः– **विनियामकानिति** ।। 'अनाद्यनन्तं महतः परम्' इति वाक्येऽव्यक्तमेव प्रतिपाद्यते । महत्परत्वलिङ्गात् । 'महान्तं च समावृत्य प्रधानं समवस्थितम्' इति वचनात् । 'महतः परमव्यक्तम्' इति अव्यक्तस्यैव महतः परत्वेन प्रकृतत्वाच्चेति कश्चित् । तदसत् । तस्य मोक्षार्थं ज्ञेयत्वानुपपत्तेः । 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति वचनाद् अस्य विष्णुप्रकरणत्वाच्च । अत्रोक्तरीत्या पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां त्रयाणामेव प्रश्नेन तत्स्व-रूपस्यैवोपन्यासादव्यक्तकथनस्यासङ्गतत्वाच्च । तस्मात् प्राज्ञः परमात्मा हि तत्रोच्यते । नच महतः परत्वलिङ्गानुपपत्तिः । महतोऽपि 'महीयान्' इति श्रुतेः । सर्वस्मात् परस्य महत्परत्वस्याप्युक्तत्वात् तर्ह्यव्यक्तपरत्वेन प्रकृते परमात्मनि विशिष्य महतः परत्वं कथमुच्यते । तथोक्तौ विशेषकारणाभावादित्यत आह– **स्वभार्याया इति** ।।

**(वे.खं)** इन्द्रियादिदेवेभ्य अर्थादिदेवा उत्तमत्वेन ध्येया इत्युक्तम् । न केवलमुत्तमत्वेन किन्तु पूर्वपूर्वेषाम् उत्तरोत्तरनियतत्वं च ध्येयमित्याह– **यच्छेदिति** ।। इन्द्रियाभिमानिदेवान् वाचि वागभिमानिदेवतासु उमादिषु यच्छेदिति ग्राह्यम् । वाक् वाचं वागभिमानिनीं मनसि मनोभिमानिनि रुद्रादौ यच्छेत् । तद् यच्छेत् तत् मनोभिमानिरुद्रादिकं ज्ञान आत्मनि ज्ञानाभिमानिन्यां सरस्वत्यां यच्छेत् । ज्ञानं ज्ञानाभिमानिनीं सरस्वतीं महत्यात्मनि । महदभिमानिनि । ब्रह्मवाय्वोर्नियच्छेत् । महान्तं चाव्यक्ते श्रीतत्वे नियच्छेद् इति ग्राह्यम् । तद् अव्यक्तं श्रीतत्वं शान्ते परमानन्दे आत्मनि परमात्मनि नियच्छेद् इत्यर्थः ।। १३ ।।

वेदपुरुषः स्वयं साधूनां हितमुपदिशति– **उत्तिष्ठतेति** ।। हे अधिकारिणः संसार एव निषण्णा यूयमुत्तिष्ठत अविद्यासुप्ताश्च जागृत कथं जागरणं वरान् उत्तमाचार्यान् प्राप्य निबोधत । भगवत्स्वरूपमिति शेषः । किमर्थं भगवद्बोधः सम्पादनीयः संसारनिवृत्तेः कारणान्तरेणापि सम्भवादित्यत

आह– **क्षुरस्येति** ॥ इयं संसृतिः क्षुरस्य धारेव निशिता अत एव दुरत्यया ज्ञानं विनाऽत्येतुमशक्या । तत् तस्मात् पथः पन्थानं मोक्षमार्गं दुर्गं ज्ञानं विना गन्तुमशक्यमिति कवयो वदन्ति । भगवज्ज्ञानस्यापि प्रत्यक्षादिनाऽपि सम्भवात् किमाचार्योपदेशेनेत्यत आह– **दुर्गमिति** ॥ तं पन्थानं सुख-हेतुप्राप्तिमन्तम् । 'तत्प्राप्तेः सुखहेतुत्वात् पन्था इति हरिः स्मृतः' इति वचनाद् दुर्गम् आचार्योपदेशमन्तरेण ज्ञातुमशक्यमिति कवयो वदन्ति ॥ १४ ॥

कुतः ? शब्दाद्यनात्मकत्वेन श्रोत्राद्यविषयत्वाद् इत्याह–**अशब्दमिति** ॥ यद्वा, दुर्गमत्वमुपपादयितुं तस्येतरवैलक्षण्यं वदन्नाचार्योपदेशेन भगवन्निश्चय एव मोक्षसाधनमित्याह– **अशब्दमिति** ॥ शब्दो न भवतीत्यशब्दमित्यादिना पञ्चतन्मात्रावैलक्षण्यमुच्यते । अगन्धमित्यपि ग्राह्यम् । अगन्धमित्यनेनोपलक्ष-णया पञ्चमहाभूतवैलक्षण्यम् । तत्र हेतुः– **अव्ययमिति** ॥ यद्वा, न विद्यते शब्दो यस्य तदशब्दमित्यादिना शब्दादिगुणशून्यत्वमुच्यते । अशब्दमिति शब्दाविषयत्वं च । यच्छब्दस्य तमित्युत्तरेणान्वयः । न विद्यते आदिरुत्पत्तिः पराधीन-प्राप्त्यादिलक्षणा यस्य सोऽनादिः । न विद्यतेऽन्तः परिच्छेदो देशतः कालतो गुणतो वा यस्य सोऽनन्तः । अनादिश्चासावनन्तश्च अनाद्यनन्तः तं महतश्चतुर्मुखात् परं तं विष्णुं निचाय्याऽचार्योपदेशेन निश्चित्य मृत्युमुखात् प्रमुच्यते ॥ १५ ॥

वेदपुरुषः पूर्वोक्तां विद्यां स्तौति– **नाचिकेतमिति** ॥ सनातनम् अनादिकालत इत्थमेवाऽगतम् । श्रुत्वा उक्त्वा चेति योज्यम् ॥ १६ ॥

देशकालविशेषे स्तोत्रवदेतद्विद्यापठितुरानन्त्यं फलम् । किमु श्रुत्वा व्याख्यातुरुक्तं फलमिति भावेनाऽह– **य इति** ॥ तत् श्रावणम् । श्राद्धं वा । सर्वाध्यायार्थविधारणार्थोऽध्यायान्ते द्विरुक्तिः ॥ १७ ॥

**॥ इति प्रथमोऽध्यायः ॥ १ ॥ ३ ॥**

—०—

## अथ द्वितीयोऽध्यायः

### (उपनिषत्)

*(मुमुक्षूणां वैराग्यसम्पादनस्याऽवश्यकत्वोक्तिः)*

**पराञ्चि खानि व्यतृणात् स्वयम्भू-**
**स्तस्मात् पराङ् पश्यति नान्तरात्मन् ।**
**कश्चिद् धीरः प्रत्यगात्मानमैक्ष-**
**दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥**

### (भाष्यम्)

**'तृणु कात्करणे' इति धातुः ॥ ॐ ॥**

### (व्यासतीर्थीयम्)

पुनरपि ब्रह्मविद्यां वक्तुमध्यायान्तरत्वेनाधिकारार्थं दुःसम्पाद्यमपि वैराग्यमवश्यं सम्पाद्यमित्याह– **पराञ्चीति** ॥ खानीन्द्रियाणि । आत्मनोऽन्तर्न पश्यति । प्रत्यक् अन्तः ॥

**अथ भाष्यार्थः ॥** केवलनिर्माणार्थप्रतीतिं निवारयन् व्यतृणादित्येतद्धातुव्याख्यानेन व्याचष्टे– **तृण्विति** ॥ तृणुधातुः कात्करणे कुत्सितकरणे वर्तते इति धातुः धातुव्याख्यानमित्यर्थः ।

### (प्रकाशिका)

पूर्वाध्यायान्ते गुरूपदिष्टज्ञानेन तुष्टस्य हरेः प्रसादात् संसारोत्तारः कर्तव्य इत्युक्तम् । स्वहृदि स्थितपरमात्मनो दर्शने स्वमनआदीन्द्रियैरेवालं किं

गुरुप्रसादेन ? इति शङ्कावारणाय द्वितीयाध्यायस्याऽदाविन्द्रियाणां बहिर्मुखतया कुत्सिततया च स्वयम्भुवा सृष्टत्वात् तद्वशीकरणाय गुरुप्रसाद आवश्यक इति भावेनाऽह– **पराञ्चि खानीति** ॥ खानीन्द्रियाणिपराञ्चि बहिर्मुखानि व्यतृणात् कुत्सितानि चकार । 'तृणु कात्करणे' इति धातुः । कश्चिद्धीरः हर्यनुग्रहात् प्रत्यगात्मानमैक्षदिति योजना ॥

## (वेदेशीयम्)

ब्रह्मविद्याधिकारवैराग्यनिरूपणपूर्वं ब्रह्मस्वरूपं प्रपञ्चेनाऽहानेनाध्यायेन । 'पराञ्चि खानि व्यतृणात्' इत्यत्र व्यतृणादित्यस्य हिंसितवान् हननं कृतवानिति व्याख्यानमसदिति भावेन धातुं पठति– **तृण्विति** ॥ धातुर्धातुव्याख्यानमित्यर्थः । कात्करणं नाम कुत्सितत्वेन करणम् । तृणुधातोर्हननार्थत्वस्याश्रुतत्वादिति भावः ॥

**(वे.खं)** ॥ हरिः ओं ॥ स्वयम्भूर्ब्रह्मा पराञ्चि पराङ्मुखानि विषयासक्तानि । लोकेन्द्रियस्वरूपकथनमेतत् । खानि इन्द्रियाणि व्यतृणात् कात्कृतवान् । विषयव्यावृत्तान्यकरोत् । तस्माद् विषयव्यावृत्तेन्द्रियत्वात् पराङ् न पश्यति । विषयासक्तो न भवति किन्त्वन्तरात्मनि पश्यति । अन्तरात्मन्येवाऽसक्तो भवतीत्यर्थः । यत एवमतः कश्चिद् धीरो अमृतत्वं मोक्षमिच्छन् आवृत्तचक्षुर्विषयव्यावृत्तेन्द्रियः सन् प्रत्यगात्मानमन्तरात्मानमैक्षद् अपश्यत् पश्येदित्यर्थः ॥ १ ॥

## (उपनिषत्)

**पराचः कामाननुयन्ति बाला-**
**स्ते मृत्योर्यन्ति विततस्य पाशम् ।**
**अथ धीरा अमृतत्वं विदित्वा**
**ध्रुवमध्रुवेष्विह न प्रार्थयन्ते** ॥ २ ॥

## अथ द्वितीयोऽध्यायः

### (उपनिषत्)

*(मुमुक्षूणां वैराग्यसम्पादनस्याऽवश्यकत्वोक्तिः)*

**पराञ्चि खानि व्यतृणात् स्वयम्भू-**
**स्तस्मात् पराङ् पश्यति नान्तरात्मन् ।**
**कश्चिद् धीरः प्रत्यगात्मानमैक्ष-**
**दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥**

### (भाष्यम्)

'तृणु कात्करणे' इति धातुः ॥ * ॥

### (व्यासतीर्थीयम्)

पुनरपि ब्रह्मविद्यां वक्तुमध्यायान्तरत्वेनाधिकारार्थं दुःसम्पाद्यमपि वैराग्यमवश्यं सम्पाद्यमित्याह– **पराञ्चीति** ॥ खानीन्द्रियाणि । आत्मनोऽन्तर्न पश्यति । प्रत्यक् अन्तः ॥

**अथ भाष्यार्थः ॥** केवलनिर्माणार्थप्रतीतिं निवारयन् व्यतृणादित्येतद्धातुव्याख्यानेन व्याचष्टे– **तृण्विति** ॥ तृणुधातुः कात्करणे कुत्सितकरणे वर्तते इति धातुः धातुव्याख्यानमित्यर्थः ।

### (प्रकाशिका)

पूर्वाध्यायान्ते गुरूपदिष्टज्ञानेन तुष्टस्य हरेः प्रसादात् संसारोत्तारः कर्तव्य इत्युक्तम् । स्वहृदि स्थितपरमात्मनो दर्शने स्वमनआदीन्द्रियैरेवालं किं

गुरुप्रसादेन ? इति शङ्कावारणाय द्वितीयाध्यायस्याऽदाविन्द्रियाणां बहिर्मुखतया कुत्सिततया च स्वयम्भुवा सृष्टत्वात् तद्वशीकरणाय गुरुप्रसाद आवश्यक इति भावेनाऽह– **पराञ्चि खानीति** ।। खानीन्द्रियाणिपराञ्चि बहिर्मुखानि व्यतृणात् कुत्सितानि चकार । 'तृणु कात्करणे' इति धातुः । कश्चिद्धीरः हर्यनुग्रहात् प्रत्यगात्मानमैक्षदिति योजना ।।

## (वेदेशीयम्)

ब्रह्मविद्याधिकारवैराग्यनिरूपणपूर्वं ब्रह्मस्वरूपं प्रपञ्चेनाऽहानेनाध्यायेन । 'पराञ्चि खानि व्यतृणात्' इत्यत्र व्यतृणादित्यस्य हिंसितवान् हननं कृतवानिति व्याख्यानमसदिति भावेन धातुं पठति– **तृण्विति** ।। धातुर्धातुव्याख्यानमित्यर्थः । कात्करणं नाम कुत्सितत्वेन करणम् । तृणुधातोर्हननार्थत्वस्याश्रुतत्वादिति भावः ।।

**(वे.खं)** ।। हरिः ओं ।। स्वयम्भूर्ब्रह्मा पराञ्चि पराङ्मुखानि विषयासक्तानि । लोकेन्द्रियस्वरूपकथनमेतत् । खानि इन्द्रियाणि व्यतृणात् कात्कृतवान् । विषयव्यावृत्तान्यकरोत् । तस्माद् विषयव्यावृत्तेन्द्रियत्वात् पराङ् न पश्यति । विषयासक्तो न भवति किन्त्वन्तरात्मनि पश्यति । अन्तरात्मन्येवाऽसक्तो भवतीत्यर्थः । यत एवमतः कश्चिद् धीरो अमृतत्वं मोक्षमिच्छन् आवृत्तचक्षुर्विषयव्यावृत्तेन्द्रियः सन् प्रत्यगात्मानमन्तरात्मानमैक्षद् अपश्यत् पश्येदित्यर्थः ।। १ ।।

## (उपनिषत्)

**पराचः कामाननुयन्ति बाला-**
**स्ते मृत्योर्यन्ति विततस्य पाशम् ।**
**अथ धीरा अमृतत्वं विदित्वा**
**ध्रुवमध्रुवेष्विह न प्रार्थयन्ते** ।। २ ।।

*(नचिकेतसः प्रश्नस्य यमप्रत्युक्तिः)*

येन रूपꣳ रसं गन्धं शब्दान् स्पर्शाꣳश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते । एतद् वै तत् ॥ ३ ॥

*(जागृदादिनियामकस्यैव मोक्षे नियामकत्ववचनम्)*

स्वप्रान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥

य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद् वै तत् ॥ ५ ॥

यः पूर्वं तपसोऽजातमद्भ्यः पूर्वमजायत ।
गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद् वै तत् ॥ ६ ॥

या प्राणेन संविशत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद् वै तत् ॥ ७ ॥

**(भाष्यम्)**

(भा.) [१]इदं गुह्यं ब्रह्म प्रवक्ष्यामि । यथा मरणं प्राप्य जीवो भवति [२]तच्च प्रवक्ष्यामि जीवेश्वरभेदज्ञापनाय । यः कर्मफलभोक्ता सुप्त्यादिमान् स जीवः । यः प्रळयादिषु जीवेषु सुप्तेषु जागर्ति स विष्णुः परं ब्रह्मेत्यर्थः । नहि जीवस्य योन्यादिगमनं ब्रह्म । जीवाद् भेदेन ज्ञातं हि ब्रह्म यथावज्ज्ञातं भवति॥ ⁂ ॥

जीवस्यान्तिके । नहि स्वस्य स्वयं जीवोऽन्तिके भवति । वस्त्वन्तरस्य हि दूरत्वमन्तिकत्वं वा ॥ ⁂ ॥

१. 'इदं गुह्यं वक्ष्यामि' ह.     २.'तच्च वक्ष्यामि' ह.

अन्नामभ्यश्च भूतेभ्यस्तपोनाम्नः शिवादपि ।
पूर्वं यो जनयामास पूर्वाजातं चतुर्मुखम् ॥

स्वात्मानं च गुहासंस्थं सर्वभूतैः सहाभिभूः ।
यः पश्यति सदा विष्णुः स एष हृदि संस्थितः' इति च ॥

यथा 'मुखादिन्द्रश्चाग्निश्च' इत्यादिना जाता एवेन्द्रादयः [१]कश्यपात् पुनर्जायन्ते न तथा भगवतो ब्रह्मा । किन्त्वजातमेवाद्भ्यः पूर्वमजायत जनयामास । अजायतेति 'जज्ञे बहुज्ञम्' इतिवदन्तर्णीतणिच्[२] ॥ * ॥

अदनाददितिर्विष्णुर्यः प्राणसहितः स्थितः ।
उत्तमो देवताभ्यश्च सोऽत्मानं विविधात्मना ॥

मत्स्यकूर्मादिरूपेणगुहासंस्थमजीजनत् ।
भूतैः सह महाविष्णुः परमात्मा युगेयुगे' इति च ॥

देवतामयी [३]देवतोत्तमाः । [४]प्राणेन सहितो भवति । गुहां प्रविश्य [५]तिष्ठन्तं स्वात्मानं भूतैः सह विविधं जनयामास ॥ * ॥

## (व्यासतीर्थीयम्)

विषयव्यावृत्तचक्षुरादिमान्न सर्वथा मुमुक्षुर्विषयादिप्रमादी स्यादिति भावेन पूर्वश्लोकोक्तमेव विशदमाह– **पराच इति** ॥ बाला इव बालाः अविवेकिनः । **पाशं** जनिमृती । **अमृतत्वं** मोक्षम् । अविलम्बेन तत्वं निरूपयेति पुनः पृच्छति– **येनेति** ॥ येनैवैतेन संसारे रूपादीन् विजानाति । तदेतदत्र मोक्षेऽपि नियामकं परिशिष्यते किमिति प्रश्नवाक्यार्थः । तदेतन्नियामकं मोक्षेऽपि परिशिष्यते किमिति पृष्टं यदेतन्मोक्षेऽपि परिशिष्यते वै इति परिहारमाह–**एतद्वै तदिति** ॥ नियामकं विस्तार्य ब्रूहीत्याकाङ्क्षायां 'स्वप्रान्तम्'

---

१. 'काश्यपात्' ह.　　२. '–दन्तर्णीतणिच्च' ह.

३. 'देवतामयी देवतोत्तमः' ह. ४. 'प्राणेन सह स्थितो भवति ।' ह.　　५. 'तिष्ठन्तीं' ह.

इत्यादिना नियामकं ब्रह्म विस्तरेणाऽह । 'स्वप्नान्तम्' इत्यतः पूर्वं 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्' इति प्रतिज्ञावाक्यं द्रष्टव्यम् । **स्वप्नान्तं** स्वप्नाख्यमन्तम् । स्वप्नसुषुप्ती इति यावत् । **मध्वदं** देहे स्थित्वा सारभोक्तारम् । जीवमन्तिकात् जीवस्य समीपे । तत आत्मनो ज्ञातत्वात् स्वात्मानं गोप्तुं नेच्छति । अरण्योर्गुरुशिष्ययोः । अदनादग्निः । जातं वेत्तीति जातवेदाः भगवान्निहितः । सृष्टिप्रलययोः सूर्यो यत उदेति । अस्तमदर्शनं च यत्र गच्छति तं देवा अर्पिताः प्राप्ताः । 'गुहां प्रविश्य तिष्ठन्तीम्' इत्यत्र ब्रह्मादिभूतनियामकत्वेनाऽत्मानं भूतेभिर्भूतैः सह व्यजायत जनयामासेत्युक्तम् । तत्र मूलरूपादवताररूपाणां भेदो नास्तीत्याह– **यदेवेहेति** ॥ उक्तं भेदाभावं भेददर्शिनो भेदाभेददर्शिनश्चानर्थोक्त्या समर्थयते– **मृत्योरिति** ॥ करचरणाद्यवयवादिभेदोऽपि नास्तीत्याह– **मनसेति** ॥ इदं तेषां भेदराहित्यं मनसैवाऽऽप्तत्वम् । गुणानां भगवता भेदाभावं भेददर्शिनो भेदाभेददर्शिनश्चानर्थोक्त्या समर्थयते– **मृत्योरिति** ॥ गुहास्थितिप्रकारमेव विवृण्वन् गुणान्तरमाह– **अङ्गुष्ठेति** ॥ उक्तमनुवदन् गुणान्तरमाह– **अङ्गुष्ठेति** ॥ श्वोऽपि स उ स एव नित्य इत्यर्थः । भगवद्गुणानां भगवता भेदाभेददर्शिनोऽनर्थमाह– **यथोदकमिति** ॥ मुक्तस्येश्वरो नियामक इत्ययुक्तं तस्य ब्रह्मणि प्रवेशेन ऐक्याद् इत्यतः कैमुत्यमाह– **यथोदकं शुद्ध इति** ॥

'हन्त त इदं प्रवक्ष्यामि' इत्येतत्पूर्वत्र सम्बध्यत इत्याशयवान् आत्मा जीवो मरणं प्राप्य यथा यद्भवति तद्ब्रह्मेत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **इदमिति** ॥ जीवस्य मरणानन्तरं यद्भवति तच्च वक्ष्यामीति किमर्थमपृष्टार्थप्रतिज्ञा क्रियत इत्यत आह– **जीव इति** ॥ मुमुक्षोर्जीवेश्वरवैलक्षण्यज्ञानमावश्यकम् । तज्ज्ञापनायापृष्टार्थप्रतिज्ञा कृतेत्यर्थः । जीवेश्वरभेदज्ञापनाय प्रतिज्ञा चेदुत्तरत्र तयोर्वैधर्म्योक्तिः स्यादिति वदतः तटस्थस्योक्तं वैधर्म्यमित्याह– **य इति** ॥ यः कर्मफलभोक्तेति 'योनिमन्ये प्रपद्यन्ते' इत्यस्यार्थः । 'य एषु

सुप्तेषु' इत्यस्यार्थः– **यः प्रलयादिष्विति** ॥ आत्मा मरणं प्राप्य यथा यद्भवति तद्ब्रह्मेति कस्मान्न स्यादित्यत आह– **नहीति** ॥ ननु जीवेश्वरभेदज्ञापनं च किमर्थम् । येन तत्प्रतिज्ञा सार्थकेत्यत आह– **जीवादिति** ॥ त्वया यथावद् ब्रह्म ज्ञातव्यमित्यादावुपस्कर्तव्यम् । अतः प्रतिज्ञा सार्थकेति वाक्यशेषः । आत्मानं जीवमिति सामानाधिकरण्यप्रतीत्या जीवस्याऽत्माभेदः प्रतीयते । स प्रकृतप्रतिज्ञाविरुद्धोऽतस्तां निवारयन् जीवमिति द्वितीयां षष्ठ्यर्थत्वेन व्याकुर्वन् तस्यान्वयं च दर्शयति– **जीवस्येति** ॥ जीवमिति द्वितीयायाः षष्ठ्यर्थत्वानङ्गीकारे बाधकमाह– **न हीति** ॥ हीति सूचितामुपपत्तिं स्फोरयन्नाह– **वस्त्वन्तरस्येति** ॥ 'यः पूर्वम्' इति वाक्यं दुर्गमार्थत्वाद् व्याचष्टे– **अम्नामभ्य इति** ॥ 'गुहां प्रविश्य' इति वाक्यं योजनाप्रतीतेर्व्याचष्टे– **स्वात्मानमिति** ॥ कस्मादपि पूर्वमजातं पूर्वाजातमिति सूचितमर्थं स्ववाक्येन विशदयति– **यथेत्यादिना** ॥ यथेन्द्रादिजनकस्य कश्यपस्य न तेभ्य उत्तमत्वं न तथा विष्णोर्ब्रह्मणः । तस्य पूर्वाजाततज्जनकत्वादुत्तमत्वमेवेति भावार्थः । अजायतेत्यस्य स्वयमुत्पन्न इत्यर्थत्वात् कथं जनयामासेति णिजर्थतया व्याख्येत्यतः प्रयोगदर्शनेनोपपादयति– **अजायतेति** ॥ 'या प्राणेन' इत्येतत्स्त्रीलिङ्गात् प्रसिद्धेश्च कश्यपभार्यादितिपरत्वप्रतीतेः प्रमाणमुदाहृत्य स्ववाक्येन व्याचष्टे– **अदनादिति** ॥ 'उत्तमो देवताभ्यश्च' इति व्याख्यातमपि देवतामयीति पदं देवतात्मिकेति प्रतीतिं निवारयन् व्याचष्टे– **देवतेति** ॥ 'या प्राणेन' इति व्याख्यातमपि प्राणेन प्राणरूपेण संविशन्तीत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **प्राणेनेति** ॥ 'गुहां प्रविश्य तिष्ठन्तीम्' इत्यादिविशेष्याप्रतीतेर्व्याचष्टे– **गुहामिति** ॥

**(प्रकाशिका)**

ध्रुवमध्रुवेष्विह न प्रार्थयन्त इत्यत्र**ाध्रुवेषु** न विद्यते ध्रुवो मोक्षो यैस्तान्यध्रुवाणिकाम्यकर्माणितेषु ध्रुवं न प्रार्थयन्ते । निमित्तसप्तमी चेयम् । काम्यकर्माख्यकरणैः मोक्षं न प्रार्थयन्त इति भावः ॥

अधुना यमेनोक्तं भगवतः सासारिकजगन्नियामकत्वमनुवदन् प्रकृतप्रमेयं पृच्छति– **येनेति** ॥ येन एतेन जगत्स्रष्टृत्वेन्द्रियप्रेरकत्वादिना कथितेनैतेन प्रत्यगात्मनैव रूपरसादिकं पश्यति तदिदमीश्वराख्यं स्वतन्त्रतत्त्वम् अत्र मुक्तजीवे नियामकतया परिशिष्यते किमिति प्रश्नः । अतिगोप्यत्वादस्य प्रमेयस्य सङ्क्षेपेणैवोत्तरमाह– **एतद्वै तत्** ॥ एतत् सांसारिकसकलजीवप्रवर्तकतयोक्तं ब्रह्म, हेतुगर्भमिदं विशेषणम्, संसारे स्वनियम्यं जीवं मुक्तौ स्वतन्त्रं कर्तुं कथं प्रेक्षावानीश्वरो यतत इति भावः । तद्वै मुक्तनियामकतया मुक्तावपि परिशिष्यमाणम् । वा इत्यनेन 'उतामृतत्वस्येशानो यदन्नेनातिरोहति' इति श्रुतिप्रसिद्धिं 'सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्' इति स्मृतिप्रसिद्धिं च सूचयति । स्मृतिसमाख्यया श्रुतावन्नेनेति तृतीया द्वितीयार्थे । यद्यस्मात् कारणादन्नमन्नोपजीविनं मर्त्यमतिरोहति संसारेऽतिक्रम्य वर्तते उत तस्मात् कारणादमृतत्वस्य मुक्तसमूहस्येशान इति श्रुतेरर्थः । संसारे जीवनियामको देवो मुक्तस्यापीशो भवेदेव । यथा प्रेक्षावान् राजा स्वभृत्यं कदाऽपि स्वसमं न कुरुते तथा संसारे सकलजीवेशो भगवानपि कथं मुक्तौ सत्यां तदीशानत्वं त्यजेदिति भावः ॥

पुनरपि जाग्रत्स्वप्नसुषुप्तिप्रेरकत्वादिना भगवतो माहात्म्यातिशयमुक्त्वा मुक्तेरपि नित्यजाग्रदवस्थारूपत्वात् प्रेरकत्वमपि हरेरावश्यकमिति भावेनाऽह– **स्वप्नान्तमिति** ॥ स्वप्नान्तं जागरितान्तं जागरितस्थानं तत्रत्यव्यापारमिति यावत् । महान्तं सर्वोत्तमम् । मननानन्तरमात्मानं स्वस्वरूपं विशेषेणगोप्तुं रक्षितुं नेच्छति स्वतन्त्रभगवदिच्छयैव ममापि रक्षा भवेत् । अतोऽस्वतन्त्रेणमया मम रक्षणार्थं क्रियमाणो यत्नो व्यर्थ इति तत्रोदास्त इति भावः । एतत् स्वाप्नजाग्रदादिप्रवर्तकं जीवस्य हृदि स्थित्वा सुखसारस्यैव भोक्तृभूतभव्यसकलजगदीशानं व्याप्तं सर्वोत्तमं वस्तु तद्वै मुक्तनियामकतया मुक्तावपि परिशिष्यमाणम् । वैशब्देनेह जीवनियामकतया जीवहृदि स्थितो भगवान् तस्यैव जीवस्य मुक्तौ सत्यां कथं हृदि स्थितो न भवेत् ? तदाऽप्यस्वतन्त्रो

जीवः स्वेष्टमुक्तेर्दातारं स्वतन्त्रं च स्वहृदिस्थं भगवन्तं कथं बहिष्कुर्यादिति युक्तिंप्रसिद्धिं सूचयति । विभुपदेनापि व्याप्तस्य भगवतः कथं मुक्तौ हृद्यभाव इति युक्तिः सूचिता । सकलमूर्तद्रव्यसंयोगित्वं हि विभुत्वम् ॥

'यः पूर्वं तपसो जातमद्भ्यः' इत्यत्र अद्भ्यः आ समन्ताद्रक्षकत्वेनाप्पदवाच्येभ्यः पञ्चमहाभूतेभ्यः तपसः दिगम्बरत्वजटिलत्वादिना तपःप्रवर्तकाद्रुद्राच्च पूर्वमजातं प्राग् भगवदितरस्मात् कस्माच्चिदप्यजातं अभिनवपुत्रमित्यर्थः । ब्रह्माणमजायत अन्तर्णीतो णिच् । जनयामासेत्यर्थः । सकलजीवहृदयगुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतेभिस्तैस्तैर्जीवैः सह व्यपश्यत ॥

अदितिरदनाद् अदितिशब्दवाच्या देवतामयी सर्वदेवोत्तमा या परदेवता प्राणेन सह संविशन्ती सा अस्मिन् युगे इव युगे युगेऽपि भूतेभिः सह गुहां प्रविश्य तिष्ठन्तीं स्वात्मानं व्यजायत मत्स्यकूर्मादिरूपेणजनयामास । युगे युगे प्रजाः सृष्ट्वा तद्धृदि अन्तर्यामितया स्वात्मानं सृष्ट्वा बहिर्ब्रह्मादीनामुपकाराय मत्स्यकूर्माद्यवतरांश्च सृजतीति भावः ॥

## (वेदेशीयम्)

मायावादिनो ह्यस्मिन्नध्याये जीवेशाभेद एव प्रतिपाद्यते । य इदं मध्वदं वेदाऽत्मानं जीवमिति सामानाधिकरण्यात् । यदेवेह तदमुत्रेत्यादेश्चेति वदन्ति । तदसत् । 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा मरणं प्राप्य आत्मा भवति गोतम' इत्युत्तरत्र जीवेशभेदस्यैवोक्तत्वेन तद्विरोधादिति भावेन तद्वाक्यमन्यथाप्रतीतिनिरासाय व्याचष्टे– **इदमिति** ॥ स्वप्नान्तं चेत्यतः पूर्वं 'हन्त त इदं प्रवक्ष्यामि' इति प्रतिज्ञावाक्यं द्रष्टव्यमिति भावेन तद्वाक्यव्याख्यानमत्र क्रियत इत्यप्याहुः । जीवो मरणं प्राप्य यथा भवति तच्चेति सम्बन्धः । यद्यपि पूर्वम् । 'गुह्यं तत्परमं ब्रह्म म्रियमाणं शरीरिणम् । सम्प्राप्तमपि' इति मरणशब्दं म्रियमाणपरमङ्गीकृत्यायं मन्त्रो

भगवत्परतयैव व्याख्यातः । तथाऽपि व्याख्यानान्तरमेतदित्यविरोधः । नन्विदं गुह्यं प्रवक्ष्यामीति प्रतिज्ञाऽसङ्गता । ब्रह्मस्वरूपस्य नचिकेतसाऽपृष्टत्वात् । जीवो मरणं प्राप्य यथा भवति तच्च प्रवक्ष्यामीति प्रतिज्ञा त्वसङ्गतैव । नचिकेतसा जीवस्वरूपस्यापृष्टत्वात् इत्यत आह– **जीवेश्वरेति** ॥ जीवेश्वरभेदज्ञापनं च जीवेश्वरस्वरूपकथनं विना न भवतीति भावः ।

ननु यद्यत्र जीवेश्वरभेदज्ञापनाय जीवेश्वरस्वरूपनिरूपणं प्रतिज्ञातं स्यात् तर्ह्युत्तरत्र विरुद्धधर्मवत्तया तदुभयोक्तिः स्यादित्यतोऽस्त्येव तथा तदुभयोक्तिः । 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथा कर्म यथाश्रुतम् । य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः । तदेव शुक्रं तद् ब्रह्म' इति जीवेश्वरयोस्तथोक्तत्वादिति भावेन तद्वाक्यं व्याचष्टे– **य इति** ॥ 'कर्मफलभोक्ता' इत्यनेन 'योनिमन्ये' इत्यादिकं व्याख्यातम् । 'सुप्त्यादिमान्' इत्यादिपदेन शोकमरणादिपरिग्रहः । जागर्तीत्यनन्तरं यः शोकराहित्याच्छुक्रः यश्च नित्यामृतो यश्च सर्वलोकाश्रयो यं च कोऽपि नात्येतीति ग्राह्यम् । तेन सुप्त्यादीत्यादिपदोपपत्तिः । जीवेषु सुप्तेषु यो जागर्ति स विष्णुरिति न युक्तम् । देवदत्ते सुप्तेऽपि यज्ञदत्तस्य जागरणदर्शनेन तस्य विष्णुलिङ्गत्वासम्भवादित्यत उक्तम्– **प्रळयादिष्विति** ॥ आदिपदेन सृष्टिस्थितिकालग्रहणम् । नन्वेतदयुक्तम् । तथा सति 'कामं कामं निर्ममाणः' इत्यस्यानुपपत्तिः । नच प्रळये निर्माणमस्ति । नच निर्माणमात्रमत्रोच्यते । नतु तत्कालीनमिति वाच्यम् । 'भुञ्जानो नोत्सृजेद् वाचम्' इत्यादाविव प्रकरणप्राप्तत्वादित्युक्तत्वात् । अत एव सूत्रकारोऽपि 'निर्मातारं चैके' (ब्र.सू.३-२-२) इति स्वाप्नपदार्थनिर्मातृत्वमीश्वरस्यैतच्छ्रुत्यवष्टम्भेनोक्तवानिति चेत्, न । प्रलयेऽपि ब्रह्मादिजीवमनोवृत्त्यादिनिर्माणस्य सत्त्वात् । कथमन्यथा तन्मनोवृत्तेः प्रवाहतोऽनादित्वम् । उक्तं च **'प्रलयेऽपि प्रतिभातपरावरः'** इति ॥ उक्तं च तत्वप्रकाशिकायाम्– 'स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेण' इति । सूत्रकृतेश्वरस्य स्वाप्नपदार्थनिर्मातृत्वे

एतच्छ्रुतेरुपपादनादत्र च भाष्ये प्रलयादिष्वित्युक्तत्वात् संस्कारादेः सत्त्वाच्च प्रलयेऽपि स्वाप्नपदार्थनिर्माणमस्तीत्यप्याहुः । ननु प्रलये यदि ब्रह्मादि-मनोवृत्तिनिर्माणं तर्हि कथं तेषां सुप्तिः । नच ब्रह्मादिव्यतिरिक्तानामेव सुप्तिरिति वाच्यम् । सुषुप्तिसंस्थान् ब्रह्मादिकान् । 'सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः' इत्यन्यत्रोक्तेरिति चेन्न । यतस्तेषां साऽवस्था अस्मत्स्व-प्नावस्थासदृशी । मनोवृत्तेः सद्भावात् । बहिर्व्यापाराभावाच्च । एवं च स्वप्न-सुषुप्त्युभयसाधारणसुप्तिशब्दस्य तत्र गौण्या वृत्त्या प्रयोग इति । उक्तं च बृहदारण्यकभाष्ये- 'स्वप्नसुषुप्त्युभयाभिप्रायेण कानि सुप्त इत्युक्तम्' इति । उक्तं च षट्प्रश्नभाष्यटीकायाम्-'स्वापोऽपि द्विविधः स्वप्नः सुषुप्तिश्च' इतीति । ननु जीवः सुप्तिशोकादिमान्, विष्णुस्तु तेषु सुप्तेषु जागर्ति शोकादिरहितश्चेत्यस्तु तयोर्भेदः । जीवस्य कर्मफलभोक्तृत्वेन कथं तयोर्भेदसिद्धिः ? विष्णोरपि कर्मफलभोक्तृत्वाङ्गीकारादिति चेत् । न । यतोऽत्र कर्मफलं श्रुत्युक्तं जीवस्य योन्यादिगमनमेव विवक्षितम् । नहि जीवस्य यद् योन्यादिगमनं तद् ब्रह्म प्राप्नोति । अतस्तयोर्भेदः सिद्ध इति भावेनाऽह- **नहीति** ॥ प्राप्नोतीति शेषः । यद्यपि जीवनियामकतया योन्यादिगमनमपि प्राप्नोत्येव ब्रह्म, तथाऽपि न स्वकर्मार्जितशरीरप्राप्त्यर्थम् । अत एव श्रुतौ शरीरत्वायेत्युक्तमिति भावः ॥

ननु 'हन्त त इदं प्रवक्ष्यामि' इत्यत्रेदं गुह्यं ब्रह्म प्रवक्ष्यामि । यथा मरणं प्राप्य जीवो भवति तच्च प्रवक्ष्यामीति प्रतिज्ञाद्वयं कृत्वा तदुभयं पश्चादभिधीयत इति कुतोऽङ्गीकर्तव्यम् । ब्रह्म प्रवक्ष्यामीति प्रतिज्ञाय पश्चात् तन्निरूपणमेव क्रियत इत्यर्थः किं न स्यात् । नचैवं यथा मरणं प्राप्येत्येतद् व्यर्थं स्यादिति वाच्यम् । आत्मा मरणं प्राप्य यथा भवति तदिदं ब्रह्म प्रवक्ष्यामीति वाक्ययोजनोपपत्तेः । सम्भवत्येकवाक्यत्वे वाक्यभेदायोगाच्चेति चेन्न । तथा सति 'योनिमन्ये प्रपद्यन्ते' इत्यादिना जीवस्य योन्यादिगमनमुच्यमानमसङ्गतं स्यात् । नच जीवस्य योन्यादिगमनमपि ब्रह्मतयोच्यत इति नासङ्गतिरिति युक्तमित्याह- **नहीति** ॥ योन्यादिगमनस्य

ब्रह्मत्वे तस्यानित्यत्वप्रसङ्ग इत्यर्थ इत्यप्याहुः । नन्वेवं प्रतिज्ञाद्वयमित्यङ्गीकारे जीवस्वरूपकथनं व्यर्थम् । तस्याजिज्ञासितत्वात् । नच जीवेश्वरभेदज्ञापनाय तत्कथनमित्युक्तमिति वाच्यम् । जीवेश्वरभेदस्याप्यजिज्ञासितत्वेन तज्ज्ञापनस्यापि व्यर्थत्वादित्यत आह– **जीवादिति ॥** ब्रह्मणो यथावज्ज्ञानं च नचिकेतसा प्रार्थितमिति भावः । नन्वेवं तर्हि 'य इदं मध्वदं वेदाऽत्मानं जीवमन्तिकात्' इति वाक्यविरोधः । तत्र सामानाधिकरण्यव्यपदेशेन जीवेशाभेदप्रतीतेरित्यतस्तद् व्याचष्टे– **जीवस्येति ॥** अनेन जीवमिति द्वितीया षष्ठ्यर्था । अन्तिकादिति पञ्चमी सप्तम्यर्थेत्युक्तं भवति ॥

ननु जीवमिति द्वितीया कुतः षष्ठ्यर्थत्वेन व्याख्येया ? आत्मानं जीवं स्वान्तिके वेदेति यथाश्रुतार्थे बाधकाभावादित्यत आह– **नहीति ॥** स्वयं जीवः स्वस्यान्तिके हि यस्मान्न भवेत् तस्माज्जीवस्यान्तिक इति व्याख्येयमित्यर्थः । स्वयं जीवः स्वान्तिके कुतो न भवतीत्यतस्तस्य भेदसापेक्षत्वादित्याह– **वस्त्वन्तरस्येति ॥** हि यस्माद् वस्त्वन्तरस्य वस्त्वन्तराद् दूरत्वमन्तिकत्वं वा । नतु तस्यैव तस्मादेव । अतो जीवः स्वयं स्वस्यान्तिके न भवतीत्यर्थः ॥

'यः पूर्वं तपसोऽजातम्' इति मन्त्रस्य यो मुमुक्षुः पूर्वं तपसो ज्ञानरूपाद् ब्रह्मणो जातं हिरण्यगर्भं किमपेक्षया पूर्वमित्यत आह– **अद्भ्यः पूर्वमजायतेति ।** यः अद्भ्यः भूतेभ्यः पूर्वमजायत । तं प्रथमजं सर्वप्राणिहृदयगुहां प्रविश्य तिष्ठन्तं भूतेभिर्भूतैः सह तिष्ठन्तं यः पश्यति एतद्वै तदिति व्याख्यानमसत् । एतद्वै तदिति वचनानुसारेण यः पूर्वमिति यच्छब्दस्य विष्णुपरत्वेन मुमुक्षुपरत्वाभावात् । नहि नचिकेतसा मुमुक्षुस्वरूपं पृष्टम् । तपश्शब्दस्य परब्रह्मपरत्वे एकस्य पूर्वमित्यस्य व्यर्थत्वाच्च । अद्भ्यः पूर्वम् इत्येतावता पूर्तेः । अद्भ्यः पूर्वं जातमित्यन्वयोपपत्त्याऽजायतेत्यस्य व्यर्थत्वाद् अयुक्तत्वाच्च । यच्छब्दाध्याहारेण योजनायां स एव दोषः । गुहाप्रविष्टत्वस्य विष्णुलिङ्गत्वस्योक्तत्वेन चतुर्मुखविशेषणत्वायोगाच्च । भूतानां हृदये अवस्थानाभावेन तैः सह तिष्ठन्तमित्युक्त्ययोगाच्च । पूर्वमेकस्य यच्छब्दस्य

विद्यमानत्वेन यो भूतेभिरिति यच्छब्दस्य व्यर्थत्वात् प्रमाणविरोधाच्चेति भावेन वाक्यभेदमङ्गीकृत्य प्रमाणेन मन्त्रं व्याचष्टे– **अम्नामभ्य इति** ॥ ननु भूतानामम्नामकत्वं कथम् ? अम्नाम्नो भूतविशेषवाचकत्वादिति चेत्, न । पञ्चीकरणपक्षे भूतविशेषस्यापि सर्वभूतात्मकत्वेनाम्नाम्नः सर्वभूतवाचकत्वात् । तर्हि अप्शब्दप्रयोगः कथमिति चेत्, न । पार्थिवादिशरीरेषु भूयस्त्वात् । यद्वा, एतत्प्रमाणबलादेवाम्नाम्नः सर्वभूतवाचकत्वं ज्ञायते । भूतेभ्यः तदभिमानिभ्यः । शिवादपि अहङ्कारतत्वाभिमानिनः । अजायतेत्यस्यार्थः–**जनयामासेति** ॥ पूर्वाजातमित्युक्त्या नास्मत्पक्षे पूर्वशब्दस्य वैयर्थ्यमित्युक्तं भवति । चतुर्मुखमिति विशेष्योक्तिः । गुहां प्रविश्येत्येतत् चतुर्मुखपरमिति प्रतीतिनिरासाय व्याचष्टे– **स्वात्मानं चेति** ॥ अभिभवति सर्वानित्यभिभूः । सर्वभूतैः सह पश्यतीत्यन्वयः । एतद्वै तदित्यस्यार्थमाह– **स एष इति** ॥ तथाच जीवमन्तिकादित्युक्तजीवसमीपस्थभगवंत्स्वरूपप्रतिपादनायायं मन्त्रः प्रवृत्तः इति भावः । नन्वेवं व्याख्यानेऽपि पूर्वमजातमिति विशेषणं व्यर्थम् । व्यावर्त्याभावात् । नहि कश्चित् पूर्वं जातः पुनर्जायते । येन तत् सार्थकं स्यात् । यः पूर्वमजातं चतुर्मुखं तपसोऽद्भ्यः पूर्वमजायतेत्यनन्वयश्चेत्यत आह– **यथेति** ॥ इत्यादिना वाक्येन जाताः भगवन्मुखादिना जातत्वेनावगता इत्यर्थः । न तथा भगवतो ब्रह्मा पूर्वं जात एव जायते । ननु हिरण्यगर्भस्याद्भ्यः पूर्वं जननाङ्गीकारे 'अद्भ्यः सम्भूतो हिरण्यगर्भः' इति श्रुतिविरोध इति चेत् । न । तद्वाक्यस्य ब्रह्माण्डान्तःसृष्टिपरत्वात् । अस्य बाह्यसृष्ट्यपेक्षत्वादिति । अजायतेत्यस्य स्वयमुत्पन्न इत्यर्थत्वात् कथं जनयामासेति व्याख्यानमित्यतोऽन्तर्णीतणिच्त्वान्नानुपपत्तिरिति प्रयोगपूर्वमाह– **अजायतेति** ॥ या प्राणेन संविशातीति मन्त्रः प्रसिद्धादितिपर इत्यनुपपन्नम् । पितृसौमनस्यस्वर्ग्याग्निपरात्मनां त्रयाणामेव नचिकेतसा पृष्टत्वेनादितिकथनस्यासङ्गतत्वात् । अतो विष्णुपर एवायं मन्त्रः । नन्वेतदप्ययुक्तम् । अदितिशब्दस्य देवमातरि रूढत्वेन विष्णौ स्त्रीलिङ्गान्तादितिशब्दप्रयोगायोगात् ।

ब्रह्मत्वे तस्यानित्यत्वप्रसङ्ग इत्यर्थ इत्यप्याहुः। नन्वेवं प्रतिज्ञाद्वयमित्यङ्गीकारे जीवस्वरूपकथनं व्यर्थम्। तस्याजिज्ञासितत्वात्। नच जीवेश्वरभेदज्ञापनाय तत्कथनमित्युक्तमिति वाच्यम्। जीवेश्वरभेदस्याप्यजिज्ञासितत्वेन तज्ज्ञापनस्यापि व्यर्थत्वादित्यत आह– **जीवादिति** ॥ ब्रह्मणो यथावज्ज्ञानं च नचिकेतसा प्रार्थितमिति भावः। नन्वेवं तर्हि 'य इदं मध्वदं वेदाऽत्मानं जीवमन्तिकात्' इति वाक्यविरोधः। तत्र सामानाधिकरण्यव्यपदेशेन जीवेशाभेदप्रतीतेरित्यतस्तद् व्याचष्टे– **जीवस्येति** ॥ अनेन जीवमिति द्वितीया षष्ठ्यर्था। अन्तिकादिति पञ्चमी सप्तम्यर्थेत्युक्तं भवति ॥

ननु जीवमिति द्वितीया कुतः षष्ठ्यर्थत्वेन व्याख्येया ? आत्मानं जीवं स्वान्तिके वेदेति यथाश्रुतार्थे बाधकाभावादित्यत आह– **नहीति** ॥ स्वयं जीवः स्वस्यान्तिके हि यस्मान्न भवेत् तस्माज्जीवस्यान्तिक इति व्याख्येयमित्यर्थः। स्वयं जीवः स्वान्तिके कुतो न भवतीत्यतस्तस्य भेदसापेक्षत्वादित्याह– **वस्त्वन्तरस्येति** ॥ हि यस्माद् वस्त्वन्तरस्य वस्त्वन्तराद् दूरत्वमन्तिकत्वं वा। नतु तस्यैव तस्मादेव। अतो जीवः स्वयं स्वस्यान्तिके न भवतीत्यर्थः ॥

'यः पूर्वं तपसोऽजातम्' इति मन्त्रस्य यो मुमुक्षुः पूर्वं तपसो ज्ञानरूपाद् ब्रह्मणो जातं हिरण्यगर्भं किमपेक्षया पूर्वमित्यत आह– **अद्भ्यः पूर्वमजायतेति**। यः अद्भ्यः भूतेभ्यः पूर्वमजायत। तं प्रथमजं सर्वप्राणिहृदयगुहां प्रविश्य तिष्ठन्तं भूतेभिर्भूतैः सह तिष्ठन्तं यः पश्यति एतद्वै तदिति व्याख्यानमसत्। एतद्वै तदिति वचनानुसारेण यः पूर्वमिति यच्छब्दस्य विष्णुपरत्वेन मुमुक्षुपरत्वाभावात्। नहि नचिकेतसा मुमुक्षुस्वरूपं पृष्टम्। तपश्शब्दस्य परब्रह्मपरत्वे एकस्य पूर्वमित्यस्य व्यर्थत्वाच्च। अद्भ्यः पूर्वम् इत्येतावता पूर्तेः। अद्भ्यः पूर्वं जातमित्यन्वयोपपत्त्याऽजायतेत्यस्य व्यर्थत्वाद् अयुक्तत्वाच्च। यच्छब्दाध्याहारेण योजनायां स एव दोषः। गुहाप्रविष्टत्वस्य विष्णुलिङ्गत्वस्योक्तत्वेन चतुर्मुखविशेषणत्वायोगाच्च। भूतानां हृदये अवस्थानाभावेन तैः सह तिष्ठन्तमित्युक्त्ययोगाच्च। पूर्वमेकस्य यच्छब्दस्य

विद्यमानत्वेन यो भूतेभिरिति यच्छब्दस्य व्यर्थत्वात् प्रमाणविरोधाच्चेति भावेन वाक्यभेदमङ्गीकृत्य प्रमाणेन मन्त्रं व्याचष्टे– **अम्नामभ्य इति** ॥ ननु भूतानामम्नामकत्वं कथम् ? अम्नाम्नो भूतविशेषवाचकत्वादिति चेत्, न । पञ्चीकरणपक्षे भूतविशेषस्यापि सर्वभूतात्मकत्वेनाम्नाम्नः सर्वभूतवाचकत्वात् । तर्हि अप्शब्दप्रयोगः कथमिति चेत्, न । पार्थिवादिशरीरेषु भूयस्त्वात् । यद्वा, एतत्प्रमाणबलादेवाम्नाम्नः सर्वभूतवाचकत्वं ज्ञायते । भूतेभ्यः तदभिमानिभ्यः । शिवादपि अहङ्कारतत्वाभिमानिनः । अजायतेत्यस्यार्थः–**जनयामासेति** ॥ पूर्वाजातमित्युक्त्या नास्मत्पक्षे पूर्वशब्दस्य वैयर्थ्यमित्युक्तं भवति । चतुर्मुखमिति विशेष्योक्तिः । गुहां प्रविश्येत्येतत् चतुर्मुखपरमिति प्रतीतिनिरासाय व्याचष्टे– **स्वात्मानं चेति** ॥ अभिभवति सर्वानित्यभिभूः । सर्वभूतैः सह पश्यतीत्यन्वयः । एतद्वै तदित्यस्यार्थमाह– **स एष इति** ॥ तथाच जीवमन्तिकादित्युक्तजीवसमीपस्थभगवंत्स्वरूपप्रतिपादनायायं मन्त्रः प्रवृत्तः इति भावः । नन्वेवं व्याख्यानेऽपि पूर्वमजातमिति विशेषणं व्यर्थम् । व्यावर्त्याभावात् । नहि कश्चित् पूर्वं जातः पुनर्जायते । येन तत् सार्थकं स्यात् । यः पूर्वमजातं चतुर्मुखं तपसोऽद्भ्यः पूर्वमजायतेत्यनन्वयश्चेत्यत आह– **यथेति** ॥ इत्यादिना वाक्येन जाताः भगवन्मुखादिना जातत्वेनावगता इत्यर्थः । न तथा भगवतो ब्रह्मा पूर्वं जात एव जायते । ननु हिरण्यगर्भस्याद्भ्यः पूर्वं जननाङ्गीकारे 'अद्भ्यः सम्भूतो हिरण्यगर्भः' इति श्रुतिविरोध इति चेत् । न । तद्वाक्यस्य ब्रह्माण्डान्तःसृष्टिपरत्वात् । अस्य बाह्यसृष्ट्यपेक्षत्वादिति । अजायतेत्यस्य स्वयमुत्पन्न इत्यर्थत्वात् कथं जनयामासेति व्याख्यानमित्यतोऽन्तर्णीतणिच्त्वान्नानुपपत्तिरिति प्रयोगपूर्वमाह– **अजायतेति** ॥ या प्राणेन संविशतीति मन्त्रः प्रसिद्धादितिपर इत्यनुपपन्नम् । पितृसौमनस्यस्वर्ग्याग्निपरात्मनां त्रयाणामेव नचिकेतसा पृष्टत्वेनादितिकथनस्यासङ्गतत्वात् । अतो विष्णुपर एवायं मन्त्रः । नन्वेतदप्ययुक्तम् । अदितिशब्दस्य देवमातरि रूढत्वेन विष्णौ स्त्रीलिङ्गान्तादितिशब्दप्रयोगायोगात् ।

'देवतामयी' इत्युक्तदेवतास्वरूपत्वायोगात् । प्राणेन प्राणस्वरूपेणेत्युक्तमुख्यप्राण-स्वरूपत्वस्यासम्भवाच्च ।

किञ्च 'गुहां प्रविश्य तिष्ठन्तीम्' इत्युक्तो गुहासंस्थः किं विष्णुरन्यो वा । नाऽद्यः । तस्य 'या भूतेभिर्व्यजायत' इत्युक्तभूतजन्यत्वा-सम्भवात् । न द्वितीयः । प्रागुक्तविरोधादित्यतस्तं मन्त्रं प्रमाणेन व्याचष्टे– **अदनादित्या-दिना** ॥ 'अदनाददितिः' इत्यनेनादितिशब्दो योगेन विष्णुपर इत्युक्तं भवति । नच स्त्रीलिङ्गानुपपत्तिः । भगवतः स्त्रीरूपत्वस्यापि भावात् । ननु स्मृतौ 'उत्तमो देवताभ्यश्च' इत्येतत् कस्य व्याख्यानमिति न प्रतीयत इत्यतो देवतामयीति पदव्याख्यानमिति भावेन तदनूद्य व्याचष्टे–**देवतेति** ॥ मयटः प्राधान्यार्थकत्वा-दिति भावः । इदं च प्रसिद्धादितिपरत्वेऽनुपपन्नम् । नचानेन देवता-स्वरूपत्वमुच्यत इति वाच्यम् । विशिष्टे विशिष्टाभेदस्य बाधात् । चैतन्यैक्य-विवक्षायामदितिदेवताशब्दयोर्लाक्षणिकत्वापातात् । ननु 'प्राणेन संविशति' इत्यस्य प्राणसहितः स्थित इति कथमर्थस्ततस्तस्या-प्रतीतेरित्यतः 'प्राणेन संविशति' इत्येतद् व्याचष्टे– **प्राणेनेति** ॥ 'सह योगे तृतीया' इति भावेन सहित इत्युक्तम् । अनेन प्राणरूपेणेति व्याख्यान-मपास्तम् । अदितेः प्राण-स्वरूपत्वस्य तेनाप्यनङ्गीकारात् । चैतन्यैक्यस्याप्रामाणिकत्वात् । संविशतीत्य-स्यार्थः– **स्थितो भवतीति** । ननु 'मत्स्यकूर्मादिरूपेण गुहासंस्थमजीजनत्' इत्यनुपपन्नम् । मत्स्यकूर्मादिरूपस्य बहिष्ठत्वेन गुहासंस्थत्वाभावादित्यतो 'गुहां प्रविश्य' इति वाक्यं व्याचष्टे–**गुहामिति** ॥ स्वात्मानमिति विशेष्या-ध्याहारः । भूतैः सहेत्युक्त्या भूतेभिरिति तृतीया न हेत्वर्थेत्युक्तं भवति । विविधं मत्स्यकूर्मादिरूपेण । तथा च स्मृतौ गुहासंस्थमित्येतत् आत्मानमित्यस्य विशेषणमिति नानुपपत्तिरिति भावः ॥

**(वे.खं)** न सर्वथा मुमुक्षुर्विषयप्रमादी स्यादिति भावेनोक्तमेव विवृणोति– **पराच इति** ॥ यद्वा, विषयव्यावृत्तेन्द्रियाणां फलकथनेन तदेव समर्थयते– **पराच इति** ॥ बाला अविवेकिनः पराचो बहिष्ठान् कामाननुयन्ति । अतस्ते

विततस्य सर्वदेशकालेषु विस्तृतव्यापारस्य मृत्योर्यमस्य पाशं मरणमिति यावद् यन्ति यान्ति। अथ तस्माद् धीरा अमृतत्वं मोक्षं ध्रुवं नित्यं विदित्वा इहाध्रुवेषु विषयेषु न प्रार्थयन्ते ॥ २ ॥

एवमुक्तो नचिकेताः स्वयं विषयव्यावृत्तेन्द्रियत्वात् पुनरपि जीवनियामकभगवत्स्वरूपं पृच्छति– **येनेति** ॥ येन सर्वे वेदा इत्याद्युक्तमाहात्म्यवता । एतेनैव 'ऋतं पिबन्तौ' इत्याद्युक्तमाहात्म्यवता विष्णुनैव। जीवो रूपादिकं विजानाति यच्चात्र मुक्तौ परिशिष्यते तदेतत् किं कैर्विशेषणैर्विशिष्टमित्यर्थः। परिहारमाह– **एतद्वै तदिति** ॥ तत् त्वत्पृष्टं जीवनियामकभगवत्स्वरूपम् एतद् वक्ष्यमाणविशेषणविशिष्टं वै प्रसिद्धमित्यर्थः ॥ ३ ॥

तदेवाऽऽह– **स्वप्नान्तमिति** ॥ अत्र स्वप्नान्तशब्दः स्वप्नसुषुप्त्युभयाभिप्रायेण । येन प्रेरितो जीवः । उभौ, तस्यैव विवरणं स्वप्नस्यान्तः स्थानं स्वप्नान्तः तम् । 'अन्तः स्थानं स्थलं वासः प्रदेश इति चोच्यते' इत्यभिधानात्। जागरितान्तं च जागरितस्थानं न पश्यति तं महान्तं परममहत्त्वोपेतम् अत एव विभुमात्मानं मत्त्वा धीरो न शोचति ॥ ४ ॥

किञ्च य इदं इमं मध्वदं सुखभोक्तारं 'मध्वित्यानन्द उद्दिष्टः' इति वचनात्। भूतस्य भव्यस्य वर्तमानस्य चेशानमात्मानं भगवन्तं जीवमन्तिकात् जीवस्यान्तिके वेद स ततो भगवज्ज्ञानसामर्थ्येनान्यविषयकभयाभावात् न विजुगुप्सते आत्मानं गोप्तुं नेच्छति ॥ ५ ॥

जीवस्यान्तिके विद्यमानं हृद्गतं भगवत्स्वरूपं कीदृशमित्याकाङ्क्षायां तत्स्वरूपं वक्तुं पुनः प्रतिजानीते– **एतद्वै तदिति** ॥ तत् जीवस्यान्तिके विद्यमानं भगवत्स्वरूपम्, एतद्वै यः पूर्वमजातं चतुर्मुखं तपसस्तपसोनाम्नः शिवाद् अद्भ्योऽम्नामकभूतेभ्यश्च पूर्वमजायत जनयामास । यश्च हृद्गुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतेभिर्भूतैः सह व्यपश्यत पश्यति। एतच्छब्दस्य पूर्वेणान्वयः ॥ ६ ॥

किञ्च या देवतामयी देवतोत्तमा अदनाददितिः स्त्रीरूपा भगवती प्राणेन मुख्यप्राणेन सहिता संविशति देहादौ स्थिता भवति या च गुहां प्रविश्य तिष्ठन्तीं स्वात्मानं भूतैः सह विविधं मत्स्यकूर्मादिरूपेणाजायत जनयामास । एतद्वै तदित्यन्वयः ॥ ७ ॥

(उपनिषत्)

**अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।**
**दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निरेतद् वै तत् ॥ ८ ॥**

**यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।**
**तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद् वै तत् ॥ ९ ॥**

*(भगवद्रूपाणां भेदाभावोक्तिः)*

**यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥**
**मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।**
**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥**

(भाष्यम्)

सर्वज्ञो भगवान् विष्णुररण्योर्गुरुशिष्ययोः ।
'सुभृतः स्तूयते नित्यं जानद्भिः पुरुषोत्तमः' इति च ।

[१]अर्यते णआभ्यामित्यरणी ॥ ※ ॥

[२]यः प्रादुर्भावगो विष्णुर्देहादिषु च संस्थितः ।
स एव मूलरूपश्च साक्षान्नारायणाभिधः ।
मूलरूपश्च यो विष्णुः प्रादुर्भावादिकश्च सः ॥

१. 'आर्यत रण आभ्यामित्यरणी' ह.    २.'यः प्रादुर्भावगतो विष्णुः' ह

गुणतः स्वरूपतो वाऽपि विशेषं योऽत्र पश्यति ।
अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम् ।
[1]भेदाभेदविदश्चात्र तमो यान्ति न संशयः ॥

तथैवावयवानां च गुणानां च परस्परम् ।
क्रियाणां तेन चैतेषां भेदविच्चोभयं विदुः ।
यान्त्येवान्धन्तमो नात्र कार्या काचिद् विचारणा' इति च ॥

'भवेदेकत्र संयोग इवशब्दो विरुद्धयोः ।
'धर्मयोरुपमायां वा [2]स्वल्पत्वे वा विवक्षिते' इति शब्दनिर्णये ॥

अतो 'नानेव' इतीवशब्दोऽत्यल्पविषयो भेदाभेदविषयश्च । प्रथमं 'य इह नानेव पश्यति' इति स्वरूपभेदनिषेधार्थम् । नेह नानाऽस्ति किञ्चन' इति किञ्चनशब्दाद् अवयवानां गुणानां क्रियाणां च परस्परं तद्वतां च [3]भेदनिषेधार्थम् ॥ * ॥

## (व्यासतीर्थीयम्)

'अरण्योर्निहितः' इति वाक्यं प्रसिद्धाग्निपरत्वप्रतीतिं निवारयन् व्याचष्टे– **सर्वज्ञ इति** ॥ सर्वज्ञ इति जातवेदा इत्यस्यार्थः । जागृवद्भिरित्येतस्य प्रतिपदं **जानद्भिरिति** । गुरुशिष्ययोररणीत्वं कथमित्यतस्तद्व्युत्पाद्य दर्शयति– **अर्यत इति** ॥ अर्यते ज्ञायते णः सुखरूपो भगवानाभ्यां गुरुशिष्याभ्यामित्यरणी गुरुशिष्यावित्यर्थः । यदेवेहेत्येतद् यदस्मिंश्छरीरे चैतन्यं तदेवामुत्र परदेहेऽपीति अन्यथाप्रतीतिं निवारयन् व्याचष्टे– **य इत्यादिना** ॥ 'मृत्योः स मृत्युम्' इत्यादि पुनः पुनर्जायते म्रियते चेति प्रतीतिं निवारयन् व्याचष्टे– **गुणत इति** ॥ अनेन 'नेह नाना' इति व्याख्यातं भवति । इवशब्दार्थमाहात्यल्प**मपीति** । इवशब्दस्यार्थान्तरमाह– **भेदाभेदेति** ॥ अत्र भगवति तद्रूपेषु च । करचरणाद्यवयवादीनां भेदभेदाभेददर्शिनोऽनर्थकथनम्– **मृत्योः स मृत्युं**

---

१. भेदाभेदं चात्र तथा तमो याति' ह. २.'स्वल्पत्वे चाविवक्षिते' ह.
३. भेदनिषेधार्थः' ह.

**गच्छतीति** ॥ तद्व्याचष्टे– **तथैवेति** ॥ इवशब्दोऽल्पार्थो भेदाभेदार्थश्च व्याख्यातः । तत्कुत इत्यतः प्रमाणमुदाहृत्य समर्थयते– **भवेदिति** ॥ 'य इह नानेव पश्यति', 'नेह नानाऽस्ति किञ्चन', 'एवं धर्मान् पृथक् पश्यन्' इति त्रयाणां वाक्यानामेकार्थत्वप्रतीतिनिरासायाऽह– **प्रथममिति** ॥ भेदाभेद एव निषिध्यते नतु भेदः भगवद्धर्माणां भगवता भेददर्शिनानर्थानुक्तेरित्याशङ्कां निवर्तयितुमिति शेषः ॥

**(प्रकाशिका)**

तर्हि सर्वैरपि किमिति न दृश्यत इत्यत आह– **अरण्योरिति** ॥ गर्भिणीभिः सुभृतो गर्भ इव । ऋ गताविति धातोः अर्यत इति कर्मव्युत्पत्त्या अरण्योरिति शब्दनिष्पत्तिर्भवति । तथा च णं सुखरूपं परं ब्रह्म अर्यते ज्ञायते आभ्यामित्यरणी हरितत्त्वज्ञानिनौ गुरुशिष्यौ । तयोर्निहित इ-त्यर्थः । औपनिषदः पुरुषः उपनिषदभ्यासवतामेव ज्ञेयो न सर्वस्य । यथा गर्भिणीनिहितो गर्भः तद्वदिति भावः । दिवेदिवे दिनेदिने जागृवद्भिः ज्ञानिभिः ईड्यः स्तुत्य इत्यर्थः ॥

एतत् सूर्यपदोपलक्षितसकलदेवसृष्टिसंहारकारकं भूतभव्येशानं सकल-जीवहृदि अङ्गुष्ठमात्रतया स्थितं प्रागुक्तरीत्या सर्वेभ्यः पूर्वं चतुर्मुखस्यैव स्रष्टृ ब्रह्मस्वरूपं तद् वै मुक्तजीवहृदि स्थित्वा मुक्तनियामकं वै । अत्रापि वैशब्दः पूर्ववद् युक्तिसूचनार्थः ॥

'नेक्षेतोद्यन्तमादित्यम्' इतिवद् 'इह नानेव पश्यति' इत्यपि मूलावताररूपादीनां भेददर्शिनो निन्दैव क्रियते, न तु भेदाभावेऽपि तात्पर्यमिति शङ्कावारणाय श्रुतिः स्वयमेव 'नेह नानाऽस्ति किञ्चन' इत्याह । इह ब्रह्मणिकिञ्चन अव-तारावयवधर्मादिकं नाना नानाभूतं नास्ति हीत्यर्थः । तस्मात् सूर्योदय-दर्शनादीनामिव निषिद्धत्वादेव न दर्शनमात्रनिन्दा । किन्त्वविद्यमान-शुक्तिरजतादिदर्शनस्य भ्रान्तित्वेन निन्दावदियमपि मिथ्याज्ञानत्वादेव निन्दे-त्युक्तं भवति ॥

## (वेदेशीयम्)

'अरण्योर्निहितो जातवेदाः' इति मन्त्रः प्रसिद्धाग्निपर इत्यसत् । तत्कथनस्यासङ्गतत्वादिति भावेन तं मन्त्रं विष्णुपरतया प्रमाणेन व्याचष्टे– **सर्वज्ञ इति** ॥ जातवेदा इत्यस्यार्थः– **सर्वज्ञ इति** ॥ जातं वेत्तीति जातवेदाः । अरण्योरित्यनुवादेन गुरुशिष्ययोरिति व्याख्यानम् । निहित इत्यस्यार्थः– **सुभृत इति** ॥ जागृवद्भिरीड्य इत्यस्यार्थः– **जानद्भिः स्तूयत इति** ॥ नचैवं सत्यग्निशब्दानुपपत्तिः । तस्य प्रागेव भगवत्परतया व्याख्यातत्वात् । गुरुशिष्ययोः कथमरणीशब्दवाच्यत्वमित्यतस्तद् व्युत्पादयति–**अर्यत इति** ॥ अर्यते ज्ञायते ण आनन्दरूपो 'णश्च निर्वृतिवाचकः' इत्युक्तेः । बलरूपो वा । 'णकारो बलम्' इति श्रुतेः । मायावादिनस्तु यदेवेत्यादिकमेवं व्याचक्षते । ब्रह्मादिस्थावरान्तेषु वर्तमानं तत्तदुपाधिवशादब्रह्मवदवभासमानं[1] संसारि । परस्माद् ब्रह्मणोऽन्यदिति शङ्कापरिहारार्थमाह– **यदेवेति** ॥ यदेवेह कार्यकारणोपाधिसमन्वितं संसारधर्मवदवभासमानं स्वात्मस्थं तदमुत्र नित्यं विज्ञानघनस्वभावं संसारधर्मवर्जितं ब्रह्म यच्चामुत्रामुष्मिन्नात्मनि स्थितं तदेवेह नामरूपकार्यकारणोपाधिमनुभाव्यमानं नान्यत् । तत्रैवं सत्यविद्यया मोहितः सन् य इह ब्रह्मण्यनानाभूते परस्मादन्योऽहं मत्तोऽन्यत् परं ब्रह्मेति नानेव भिन्नमिव पश्यति स मृत्योर्मृत्युं पुनर्जन्ममरणभावमाप्नोति । तस्मात् तथा न पश्येत् । विज्ञानैकरसं ब्रह्मैवाहमिति पश्येदिति वाक्यार्थः । प्रागेकत्वविज्ञानादाचार्यागमसंस्कृतेन मनसेदं ब्रह्माऽऽप्तव्यम् । आत्मैवास्ति नान्यदस्तीति आप्ते तु नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नानाऽस्ति । किञ्च नाणुमात्रमपि वस्तु । य इह नानेव पश्यति स मृत्योः मृत्युं गच्छत्येव स्वयमपि भेदमध्यारोपयन्नित्यर्थ इति । तदसत् । चैतन्यैक्यस्याप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेति भावेन श्रुतिव्याख्यानरूपं

---

१. **'आभासमानम्'** इति मुद्रितपाठे ।

प्रमाणमेवोदाहरति– **य इति** ॥ अनेन 'यदेवेह तदमुत्र' इत्येतद् व्याख्यातम् । प्रादुर्भावग इत्यनेनेहेत्यस्य भूम्यादावित्यर्थो वक्तव्य इति सूचितम् । तस्यैवार्थान्तरम्– **देहादिषु चेति** ॥ स एवेत्युक्त्या श्रुतावेवकारो भिन्नक्रम इत्युक्तं भवति । चशब्दोऽवधारणार्थः साक्षादित्यनेन सम्बद्ध्यते । यदमुत्र तदनु इहेत्येतद् व्याचष्टे– **मूलरूपश्चेति** ॥ आद्यश्चशब्दः प्रकृतत्वानुसन्धानार्थः, द्वितीयोऽवधारणार्थः स इत्यनेन सम्बद्ध्यते ॥

नन्ववतारादिरूपस्य मूलरूपाभेदे मूलरूपस्यावताराभेदः सिद्ध एव । नहि यद्येनाभिन्नं तत्तेन भिन्नमिति शङ्कार्हम् । अतो यदमुत्र तदन्विहेत्येतद् व्यर्थमिति चेन्न । तथा सति त्वत्पक्षेऽपि वैयर्थ्यापातात् । सङ्घातस्य चैतन्यस्य निर्विशेषचैतन्याभेदे निर्विशेषचैतन्यस्यापि तदभेदस्य सिद्धत्वात् । अस्मत्पक्षे तु इन्द्रार्जुनादिवत् सर्वविशेषाभावज्ञापनार्थत्वेन सार्थक्यात् । अत एवात्यल्पविशेषदर्शिनामप्यनर्थः कथ्यते 'मृत्योः स मृत्युम्' इत्युत्तरवाक्येनेति भावेन तद्वाक्यं व्याचष्टे– **गुणत इति** ॥ नानेत्यस्यार्थः– **विशेषमिति** ॥ कचिदन्तरशब्दश्च विशेषस्यैव वाचक इति नानाशब्दपर्यायान्तरशब्दस्य विशेषवाचकत्वस्मरणात् । गुणतः स्वरूपत इत्यस्य योग्यतया सम्बन्धः । इवशब्दार्थोऽत्यल्पमिति । अनेन परमते इवशब्दो व्यर्थः स्यादित्युक्तं भवति । अपिशब्देनाधिकविशेषदर्शिनस्तमो यान्तीति किं वक्तव्यमिति सूचयति । 'मृत्योर्मृत्युम्' इत्यस्य तात्पर्यम्– **तमोऽन्धमिति** । पुनर्जन्ममरणभावमात्रस्य मिथ्याज्ञानफलत्वायोगात् । एवं यदेवेहेत्यनेनावतारादिरूपस्य मूलरूपस्य च विशेषशून्यतयाऽत्यन्ताभेदेऽभिहिते किमत्यन्ताभेदेन ? भेदाभेदः किं न स्यादित्यतस्तज्ज्ञानिनामनर्थोक्तेरिति भावेन भेदाभेदज्ञानिनामनर्थोक्तिपरतयाऽपि 'मृत्योः स मृत्युम्' इति वाक्यं व्याचष्टे– **भेदेति** ॥ नानेवेत्यस्यार्थः–**भेदाभेदेति** ॥ अत्रावतारमूलरूपयोः ॥ १० ॥

इदानीं 'मृत्योः स मृत्युं गच्छति' इति वाक्यं व्याचष्टे– **तथैवेति** ॥ यथा स्वरूपेषु भेदाभेददर्शिनस्तमःप्राप्तिस्तथैवेत्यर्थः । अनेन नानेवेति इव-

शब्द उपमार्थतयाऽपि व्याख्यातः । तेन विष्णुना एतेषामवयवादीनां भेद-विच्चेत्यनेन 'एवं धर्मान् पृथक् पश्यन्' इत्येतदुक्तार्थम् । **उभयविदः** भेदा-भेदविदः। एवं नानेवेतीवशब्दोऽल्पार्थ उपमार्थो भेदाभेदार्थश्च व्याख्यातः । तत् कुत इत्यतः सप्रमाणकं तत् समर्थयते– **भवेदिति** ॥ विरुद्धयोर्धर्मयोः संयोगे विवक्षिते एकविरोधिवाचकशब्दस्योपरि इवशब्दो भवेदित्यर्थः । उप-मायां विवक्षितायां नानेवेतीवशब्दः नानाशब्दशिरःस्थ इवशब्द इत्यर्थः । चशब्दादुपमाद्यर्थश्चेति समुच्चिनोति । किञ्च यदेवेहेत्यनेनैव जीवब्रह्मभेदस्य निषिद्धत्वात् त्वत्पक्षे 'नेह नाना' इति वाक्यं व्यर्थं स्यात् । ननु भवत्पक्षेऽपि व्यर्थं यदेवेहेत्यनेनात्यन्ताभेदमुक्त्वा तत्र भेदाभेददर्शिनामनर्थोक्त्या भेदनिषेधस्य प्रागेव जातत्वादित्यतः पूर्वोत्तरवाक्यतात्पर्यमाह– **प्रथममिति** ॥ भगवत्स्व-रूपाणां मूलरूपावतारादिरूपाणां भेदनिषेधार्थमित्यर्थः । तदवयवादीनां भेदनिषेधोऽत्र क्रियत इति कुतः ? ज्ञापकाभावादित्यत उक्तम्– **किञ्चनशब्दा-दिति** ॥ किञ्चनशब्दस्य सर्वनामत्वेन प्रकृतवाचित्वात् । 'आसीनो दूरं व्रजति शयानः' इत्यादिनाऽवयवानां 'महान्तं विभुमात्मानम्' इत्यादिना गुणानां 'यः पूर्वं तपसोऽजातमद्भ्यः पूर्वमजायत' इत्यादिना कर्मणां च प्रकृतत्वादिति भावः ॥ **भेदनिषेधार्थमिति** ॥ इह ब्रह्मणि **किञ्चन** प्रकृतमवयवादिकं **नाना** भिन्नं नास्तीत्युक्तेऽवयवादीनां भेद एव निषिद्ध्यते । 'सविशेषणे हि' इति न्यायात् । 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति', 'न जीर्णमलवद्वासाः स्नातकः स्यात्' इत्यादौ दर्शनाच्च । अन्यथा धर्माणां स्वरूपत एव निषेधे नानेति व्यर्थं स्यादिति भावः ॥

**(वे.खं)** किञ्च जातं वेत्तीति जातवेदाः सर्वज्ञो गर्भिणीभिर्गर्भो यथा सुभृतः सुधृतस्तथाऽरण्योरर्यते णः सुखरूपो बलरूपो वा भगवान् आभ्या-मित्यारणी गुरुशिष्यौ तयोर्निहितः सुभृतो जागृवद्भिर्हविष्मद्भिः पूजासाधन-द्रव्यवद्भिश्च मनुष्यैर्दिवेदिवे प्रतिदिनम् ईड्यः स्तुत्यो योऽग्निरदनादग्निनामा

भगवान् एतद्वै तत् ॥ ८ ॥

किञ्च सूर्यः सृष्टिकाले यत उदेति यत्र च प्रलयकालेऽस्तमदर्शनं च गच्छति तं सर्वे देवा अर्पिताः प्राप्ताः तद्भगवत्स्वरूपं कश्चन नात्येत्येव ॥ ९ ॥

'गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत' इत्यनेन भगवद्रूपाणां भगवता सह भेदप्राप्तावाह– **यदे-वेति** ॥ इह भूम्यादौ देहादौ च यद्रूपं वर्तते तदेवामुत्र वैकुण्ठादावप्य-स्ति । अभेदेऽपि इन्द्रार्जुनादाविव ज्ञानादौ विशेषो न मन्तव्य इति भावेनाऽऽह– **यदमुत्रेति** ॥ यद्रूपं वैकुण्ठादावस्ति । तदेव भूम्यादावस्ति । न तत्र ज्ञानादावत्यल्पोऽपि विशेषो ज्ञेय इति भावः । कुतो न ज्ञेय इत्यत-स्तज्ज्ञानिनामनर्थमाह– **मृत्योरिति** ॥ य इह मूलरूपावताररूपादौ नानेव अत्यल्पमपि विशेषं पश्यति स मृत्योरनन्तरं नरकमन्धन्तमः प्राप्नोति । 'यदेवेह तदमुत्र' इति भगवद्रूपाणामत्यन्ताभेदोक्तिरयुक्ता । भेदाभेदस्यापि सम्भवादित्यतो भगवत्स्वरूपेषु भेदाभेदनिषेधाय तद्दर्शिनां वाऽनर्थमाह– **मृत्योरिति** ॥ य इह भगवत्स्वरूपेषु । नानेव नानाशब्दो भेदवाची । 'मुक्तोपसृप्यव्यपदेशात्'(ब्र.सू.१-३-२) इत्यादाविव भावप्रधानत्वात् । इवशब्दस्तु तद्विरुद्धाभेदाभिधायकः । तस्य यद्वाचकशब्दशिर(स्त्वं)स्कत्वं तद्विरुद्धाभिधायकत्वस्वाभाव्यात् । तथाच भेदाभेदं पश्यति । स मृत्योर्मृत्युं तमः आप्नोति । अतो न तत्र भेदाभेद इत्यर्थः ॥ १० ॥

इदं च स्वमनस्येव स्थापनीयं नान्यस्मै ब्रूयादित्याह– **मनसैवेति** ॥ यद्वा, तं देवाः सर्वे अर्पिता इत्युक्तभगवत्प्राप्तिसाधनं किमित्यत आह– **मनसेति** ॥ श्रवणादिसंस्कृतेन मनसेत्यर्थः । न केवलं भगवदवतारादीनामेव भगवता भेदाभावः, किं नाम प्रागुक्तभगवदवयवगुणकर्मादीनामपि परस्परं

भगवता च भेदो नास्तीत्याह– **नेति** ॥ इह ब्रह्मणि किञ्चनावयवगुणकर्मादिकं परस्परं भगवता च नाना भिन्नं नास्तीत्यर्थः । इह ब्रह्मणि किञ्चनावयवादिप्रयुक्तं नानात्वं भेदो नास्तीत्यर्थः । ननु कुत एवं भगवदवयवादीनां परस्परं भगवता च भेदाभावः ? घटादाविवाभेदेऽपि भेदः किं न स्यादित्यतो भेदाभेदज्ञानिनामनर्थमाह– **मृत्योरिति** ॥ इवशब्द उपमायामपि वर्तते । यथा भगवत्स्वरूपेषु भेदाभेदज्ञानी तमः प्राप्नोति तथैव य इह भगवदवयवगुणकर्मादिषु परस्परं भगवता च नानेव भेदाभेदं पश्यति स मृत्योर्मृत्युं तमो गच्छति । अतो न तत्र भेदाभेद इत्यर्थः ॥ ११ ॥

**(उपनिषत्)**

*(हृत्स्थभगवत्परिमाणोक्तिः)*

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद् वै तत् ॥ १२ ॥**

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद् वै तत् ॥ १३ ॥**

*(भगवद्गुणेषु भेदचिन्ताया अनर्थत्वकीर्तनम्)*

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान् पृथक् पश्यꣳस्तानेवानु विधावति ॥ १४ ॥**

*(मुक्तपरमात्मनोर्भेदोक्तिः)*

**यथोदकꣳ शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥**

**॥ इति द्वितीये प्रथमा वल्ली ॥**

—०—

## (भाष्यम्)

भेदाभेद एव निषिद्ध्यते नतु भेद इत्याशङ्कां निवर्तयितुं 'एवं धर्मान् पृथक् पश्यन्' इति भगवद्धर्माणामवयवगुणकर्मणां भेददर्शने पृथग् दोषमाह ॥ ❊ ॥

पर्वतेषु दुर्गे शिखरे वृष्टमधो विधावति। एवं विष्णोर्धर्मान् पृथक् [1]पश्यन्नन्धन्तमो विधावति ॥ ❊ ॥

विजानतो मुनेरात्मा वायुरपि तादृगेव भवति। नतु स एव भवति। किम्वन्ये जीवाः।

सर्वेषां ज्ञानिनामात्मा देवानां च विशेषतः।
मुक्तो वायुश्च [2]सादृश्यमेवं विष्णोस्तु गच्छति ॥

नतु तद्रूपतां याति किम्वन्ये देवमानुषाः।
आभासाभासरूपास्तु वायोर्देवस्य सर्वशः'

इति भविष्यत्पर्वणि॥ ❊ ॥

॥ इति द्वितीयाध्यायस्य प्रथमा वल्ली ॥

—०—

## (व्यासतीर्थीयम्)

'यथोदकम्' इति वाक्यमन्वयाप्रतीतेर्व्याचष्टे– **पर्वतेष्विति** ॥ शिखरे वृष्टमुदकं यथेति पूरणीयम्। एवं विष्णोर्धर्मान् ततः पृथक् पश्यन् तानेव पृथग् दृष्टांस्तानन्वेवानन्तरमेव अध इति च पूरणीयम्। विजानतो मुनेरात्मा स्वामी क इति न ज्ञायतेऽतो व्याकरोति– **विजानत इति** ॥ अवधारणार्थं व्यनक्ति– **न त्विति** ॥ वायुः सर्वेषां ज्ञानिनां स्वामी विमुक्तोऽपि स भगवत्सादृश्यमेव यातीति च कुत इत्यत आह– **सर्वेषामिति** ॥ वायोर्भग-

१. 'पश्यन्नधोऽन्धं तमो–' ह. २. 'सादृश्यमेव' ह.

वदैक्याभावेऽन्येषां भगवदैक्याभावः कस्मादित्यतः परम्परया तदधीनप्रतिबिम्बत्वादित्याह– **आभासाभासरूपा इति ॥**

**॥ इति द्वितीये द्वितीया वल्ली ॥**

**(प्रकाशिका)**

'एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति' इत्यत्र एवं पूर्वोक्तमिथ्याज्ञानिवद् धर्मान् पृथक् पश्यन् पुरुषस्तान् मिथ्याबोधानन्वनुसृत्य विधावति विविधतया अन्धन्तमसि धावति । कलिमारभ्य मनुष्याधमपर्यन्तं मिथ्याज्ञानेऽपि तारतम्यसद्भावादन्धन्तमसि तारतम्येन दुःखमनुभवतीति भावः । मिथ्याज्ञानमतिदृढं चेदन्धन्तमस्येव धावति । मिश्रजीववददृढं चेत् कदाचिदस्ति कदाचिन्नास्ति चेद् अधमजीवाद्विलक्षणं मध्यमगतौ धावति ॥

अधुना मुक्तजीवानां ब्रह्मण्यैक्यमिति मतं स्पष्टं निषेद्धुमाह– **यथोदकमिति ॥** यथा शुद्धमुदकं शुद्धे आसिक्तं तादृगेव भवति । न तु तदेव भवति । पङ्किलोदकस्य तादृशत्वाभावाच्छुद्धमित्युक्तम् । प्रत्यक्षत एव वृद्धेर्दृश्यमानत्वात् । ब्रह्मकमण्डलुस्थगङ्गागोदाकावेर्युदकानां मेलनेऽपि भेददर्शनाच्च । एवं विजानतो मुनेरात्मा स्वामी चतुर्मुखात्मा मुख्यप्राणः लिङ्गशरीरभङ्गेन स्वयमपि शुद्धः सन् शुद्धे ब्रह्मणिसायुज्यमोक्षभोक्तृतया शुद्धे ब्रह्मणिसंसक्तोऽपि तादृगेव भवति । न तु तदेव भवति । तत्रापि 'ऋचां त्वः पोषमास्ते' इत्यादिना भेददर्शनात् । अथवा विजानतो मुनेः, जात्येकवचनम्, आत्मा स्वरूपमपि लिङ्गदेहभङ्गानन्तरं शुद्धे ब्रह्मणिविमिश्रमपि तादृगेव भवति, न तु तदेव भवतीत्यर्थः ॥

**॥ इति द्वितीयाध्यायस्य प्रथमा वल्ली ॥**

**(वेदेशीयम्)**

ननु यदि 'नेह नाना' इति वाक्यं भगवदवयवादिधर्माणां भेदनिषेधार्थं तर्हि 'एवं धर्मान्' इति वाक्यं व्यर्थं स्यात् । तत्राप्यवयवादिधर्माणां भेद-

दर्शिनामनर्थोक्त्या तन्निषेधादित्यत आह– **भेदेति** ॥ अवयवानामित्यारभ्य तद्वता चेत्यन्तमत्रानुवर्तते । 'मृत्योः स मृत्युं गच्छति' इत्यत्रावयवादीनां भेदाभेद एव निषिद्ध्यते । तद्दर्शिनामेवानर्थोक्तेः । नतु भेदः । तद्दर्शिनामनर्थानुक्तेः । तथाच 'नेह नाना' इति भेदनिषेधप्रतिज्ञाऽनुपपन्नेत्याशङ्कां निवर्तयितुमित्यर्थः । 'एवं धर्मान्' इति वाक्यस्योक्ततात्पर्यकत्वाप्रतीतेः कथमेतदित्यतो 'यथोदकम्' इति दृष्टान्तवाक्यव्याख्यानपूर्वकं तद् व्याचष्टे– **पर्वतेष्विति** ॥ अनेन धर्मदर्शिनामनर्थोक्त्या धर्मनिषेध एवात्राभिप्रेत इत्यसदित्युक्तं भवति । पृथगित्यस्य वैयर्थ्यापातात् । विजानतो मुनेरात्मा स्वरूपमेवं ब्रह्माभिन्नं भवतीति निरासाय 'एवं मुनेर्विजानत आत्मा भवति' इत्येतद् व्याचष्टे– **विजानत इति** ॥ आत्मा स्वामीत्यर्थः । तादृगेवेत्यनेन दृष्टान्तवाक्यस्थं तादृगिति पदमत्र अनुवर्तत इत्युक्तं भवति । एवकारव्यावर्त्यमाह– **नत्विति** ॥ वायुरपीत्यध्याहृतापिशब्दसूचितकैमुत्यमाह– **किम्वन्य इति** ॥ अन्ये जीवास्तादृशा एव भवन्ति । नतु स एव भवन्तीति किमु वक्तव्यमित्यर्थः । वायोः संसारितया सादृश्यमात्रप्राप्तावपि मुक्तस्य तदैक्यप्राप्तिः किं न स्यादित्याशङ्कां परिहरन् श्रुतेः स्वकृतं व्याख्यानं प्रमाणेन द्रढयति– **सर्वेषामिति** ॥ अत्र बहुवचनश्रवणाद् विजानत इत्येकवचनं समुदायाभिप्रायम् । 'वायुर्ब्रह्मा' चशब्दोऽपिशब्दार्थः । वायोस्तद्रूपत्वाभावेऽपि अन्येषां तत् किं न स्यादित्यत आह– **आभासेति** ॥ केचन साक्षादाभासाः केचनाऽभासाभासा इत्यर्थः ॥

**(वे.खं)** किश्चाङ्गुष्ठमात्रोऽङ्गुष्ठपरिमाणः । हृद्यवकाशपेक्षयाऽङ्गुष्ठमात्रत्वोक्तिः । पुरुषः पूर्णषड्गुण आत्मनि मध्यदेहे हृद्गुहायां तिष्ठति । ईशान इत्याद्युक्तार्थम् ॥ १२ ॥

धूमानावृताग्निरिव प्रकाशस्वरूप इत्यर्थः । स एवाद्य वर्तते स एव श्वोऽपि वर्तिष्यते । अनाद्यनन्तकालेऽपि सदा वर्तत इत्यर्थः ॥ १३ ॥

ननु 'मृत्योः स मृत्युं गच्छति' इत्यनेन भगवदंवयवादीनां भगवता परस्परं च भेदाभेद एव निषिद्ध्यते । नतु भेदः । तद्दर्शिनामनर्थानुक्तेः । अतो 'नेह नाना' इति कथं भेदाभाव उक्त इत्यतो भेददर्शिनामप्यनर्थं वक्तुं प्रतिजानीते– **यथेति** ॥ यथा पर्वतेषु दुर्गे शिखरे वृष्टमुदकम् अधो विधावति । एवं विष्णोर्धर्मान् पृथक् विष्णुना परस्परं च भेदेन पश्यन् तानेव पृथग् दृष्टधर्मानेव धर्मपार्थक्यदर्शनानन्तरमेवेति यावत् । विधावति अन्धन्तमः इत्यर्थः ॥ १४ ॥

ननु यथा भगवत्स्वरूपाणां भगवता भेदाभावस्तथा मुक्तानामपि भगवता भेदाभावः किं नेत्याह– **यथेति** ॥ हे गौतम यथा शुद्धे उदके आसिक्तं शुद्धमुदकं तादृगेव भवति नतु तदेव । अन्यथा वृद्धिदर्शनासम्भवात् । एवं विजानतो मुनेरात्मा स्वामी वायुरपि मुक्तः सन् तादृगेव भगवत्सदृश एव भवति । नतु स एव । [१]किम्वन्ये जीवा इत्यर्थः ॥ १५ ॥

**इति द्वितीयाध्यायस्य प्रथमा वल्ली ॥ २ ॥ १ ॥**

—०—

१. **'किमन्ये'** इति मुद्रितपुस्तके ।

## द्वितीयाध्यायस्य द्वितीया वल्ली

### (उपनिषत्)

*(अभिमानत्यागस्य मोक्षसाधनत्वकथनम्)*

**पुरमेकादशद्वारमजस्यावक्रचेतसः ।**
**अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद् वै तत्   ॥ १ ॥**

### (भाष्यम्)

इदं पुरं भगवदधीनमित्यधिष्ठाय[1] । [2]अजस्येदं पुरमिति स्थितिं कृत्वा ।

'विमुक्तो निरभीमानात् पूर्वमेवापरोक्षवित् ।
'मुख्यतो मुच्यते पश्चाद् दुःखाद्याभासहानतः' इति च   ॥ * ॥

### (व्यासतीर्थीयम्)

मुमुक्षुर्देहादिषु ममत्वं जह्यात् तेषां भगवदधीनत्वादित्याह– **पुरमिति** ॥ एकादशद्वारं पुरमधिष्ठाय न शोचति चेदस्माकमपि तदधिष्ठितत्वाच्छोकाभावः स्यादिति शङ्कानिरासायापेक्षितं योजयति– **इदमिति** ॥ ननु तत्र भगवद्वाचकपदाभावात् कथमेवं व्याख्येति शङ्कां ज्ञापकोक्त्या परिहरन् अधिष्ठायेत्यस्यार्थमाह– **अजस्येति** ॥ स्थितिं निश्चयम् । एवं निश्चयेऽपि कथं शोकाभाव इत्यत आह– **विमुक्तश्च विमुच्यत इति** ॥ बन्धस्यापरमार्थत्वात् पूर्वमपि

---

१. '–त्यनुष्ठाय' ह.   २. 'पुरं स्थितमिति स्थितिं कृत्वा ।' ह.

विमुक्त एव विद्यया तत्प्रतिभासनिवृत्तौ विमुच्यत इति प्रतीतिनिरासाय तद्व्याचष्टे– **विमुक्त इति ।** अपरोक्षविद् देहादौ निरभिमानात् पूर्वमपि विमुक्तः पश्चान्मुच्यते इत्यादि योज्यम् ॥

## (प्रकाशिका)

अवक्रचेतसः अजस्य पुरमधिष्ठाय जीवो न शोचति चेत् सर्वस्यापि शोको न स्यात् । तादृशदेहाधिष्ठितत्वस्य सकलजीवसाधारणत्वादिति शङ्कावारणाय शेषं पूरयित्वा व्याख्याति– **इदं पुरमिति** ॥ इदं परिदृश्यमानम् । अहरहः स्वानपेक्षितनानाविधक्लेशदायकत्वेनानुभूयमानमिति यावत् । पुरं शरीरं भगवदधीनमित्यधिष्ठाय दिने दिने नियमेनानुचिन्त्य एकादशद्वारम् एकादशेन्द्रियस्थानाख्यद्वारयुक्तं पुरं शरीरमवक्रचेतसोऽजस्य वशेऽधिष्ठाय स्थितमिति निश्चित्य न शोचति । अत एव ममायं देह इत्यभिमानाद्विमुक्तो जीवः विमुच्यते मुक्तो भवति । एवं पराधीनजीवनियामकतया निश्चितं यत् परं ब्रह्म एतत् तद् वै मुक्तनियामकतया तस्मिन्नपि स्थितं वै । तर्ह्यजस्य वशे स्थितमित्यधिष्ठाय निश्चित्येत्यर्थ एव वक्तव्यः । अध्याहारः किमर्थ इति चेत् सत्यम् । स्वाधीनतयाऽभिमन्यमानदेहस्येश्वरवशत्वनिश्चय एव कथं स्यादित्यध्याहार इति परिहारसम्भवात् ॥

## (वैदेशीयम्)

'पुरमेकादशद्वारम्' इत्यस्यैकादशद्वारमिदं शरीराख्यं पुरमवक्रचेतसोऽजस्य ब्रह्मण एव । यस्येदं शरीरं तं पुरस्वामिनं परमेश्वरम् अनुष्ठाय ध्यात्वा न शोचतीति व्याख्यानमसत् । शरीरस्य जीवाभिमततया जीवपुरत्वेन ब्रह्मपुरत्वाभावात् । जीवब्रह्मैक्यस्य बाधितत्वात् । यस्येदं शरीरं तं पुरस्वामिनमित्यध्याहारप्रसङ्गाच्च । सम्भवत्येकवाक्यत्वे वाक्यभेदकल्पनायोगाच्चेति भावेन तद्वाक्यमितिशब्दाध्याहारेण यथावद् व्याचष्टे– **इदमिति** ॥ ननु

## द्वितीयाध्यायस्य द्वितीया वल्ली

### (उपनिषत्)

*(अभिमानत्यागस्य मोक्षसाधनत्वकथनम्)*

**पुरमेकादशद्वारमजस्यावक्रचेतसः ।**
**अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद् वै तत् ॥ १ ॥**

### (भाष्यम्)

इदं पुरं भगवदधीनमित्यधिष्ठाय[१] । [२]अजस्येदं पुरमिति स्थितिं कृत्वा ।

'विमुक्तो निरभीमानात् पूर्वमेवापरोक्षवित् ।
'मुख्यतो मुच्यते पश्चाद् दुःखाद्याभासहानतः' इति च ॥ * ॥

### (व्यासतीर्थीयम्)

मुमुक्षुर्देहादिषु ममत्वं जह्यात् तेषां भगवदधीनत्वादित्याह– **पुरमिति** ॥ एकादशद्वारं पुरमधिष्ठाय न शोचति चेदस्माकमपि तदधिष्ठितत्वाच्छोकाभावः स्यादिति शङ्कानिरासायापेक्षितं योजयति– **इदमिति** ॥ ननु तत्र भगवद्वाचकपदाभावात् कथमेवं व्याख्येति शङ्कां ज्ञापकोक्त्या परिहरन् अधिष्ठायेत्यस्यार्थमाह– **अजस्येति** ॥ स्थितिं निश्चयम् । एवं निश्चयेऽपि कथं शोकाभाव इत्यत आह– **विमुक्तश्च विमुच्यत इति** ॥ बन्धस्यापरमार्थत्वात् पूर्वमपि

---

१. '–त्यनुष्ठाय' ह.  २. 'पुरं स्थितमिति स्थितिं कृत्वा ।' ह.

विमुक्त एव विद्यया तत्प्रतिभासनिवृत्तौ विमुच्यत इति प्रतीतिनिरासाय तद्व्याचष्टे– **विमुक्त इति** । अपरोक्षविद् देहादौ निरभिमानात् पूर्वमपि विमुक्तः पश्चान्मुच्यते इत्यादि योज्यम् ॥

**(प्रकाशिका)**

अवक्रचेतसः अजस्य पुरमधिष्ठाय जीवो न शोचति चेत् सर्वस्यापि शोको न स्यात् । तादृशदेहाधिष्ठितत्वस्य सकलजीवसाधारणत्वादिति शङ्कावारणाय शेषं पूरयित्वा व्याख्याति– **इदं पुरमिति** ॥ इदं परिदृश्यमानम् । अहरहः स्वानपेक्षितनानाविधक्लेशदायकत्वेनानुभूयमानमिति यावत् । पुरं शरीरं भगवदधीनमित्यधिष्ठाय दिने दिने नियमेनानुचिन्त्य एकादशद्वारम् एकादशेन्द्रियस्थानाख्यद्वारयुक्तं पुरं शरीरमवक्रचेतसोऽजस्य वशेऽधिष्ठाय स्थितमिति निश्चित्य न शोचति । अत एव ममायं देह इत्यभिमानाद्विमुक्तो जीवः विमुच्यते मुक्तो भवति । एवं पराधीनजीवनियामकतया निश्चितं यत् परं ब्रह्म एतत् तद् वै मुक्तनियामकतया तस्मिन्नपि स्थितं वै । तर्ह्यजस्य वशे स्थितमित्यधिष्ठाय निश्चित्येत्यर्थ एव वक्तव्यः । अध्याहारः किमर्थ इति चेत् सत्यम् । स्वाधीनतयाऽभिमन्यमानदेहस्येश्वरवशत्वनिश्चय एव कथं स्यादित्यध्याहार इति परिहारसम्भवात् ॥

**(वेदेशीयम्)**

'पुरमेकादशद्वारम्' इत्यस्यैकादशद्वारमिदं शरीराख्यं पुरमवक्रचेतसोऽजस्य ब्रह्मण एव । यस्येदं शरीरं तं पुरस्वामिनं परमेश्वरम् अनुष्ठाय ध्यात्वा न शोचतीति व्याख्यानमसत् । शरीरस्य जीवाभिमततया जीवपुरत्वेन ब्रह्मपुरत्वाभावात् । जीवब्रह्मैक्यस्य बाधितत्वात् । यस्येदं शरीरं तं पुरस्वामिनमित्यध्याहारप्रसङ्गाच्च । सम्भवत्येकवाक्यत्वे वाक्यभेदकल्पनायोगाच्चेति भावेन तद्वाक्यमितिशब्दाध्याहारेण यथावद् व्याचष्टे– **इदमिति** ॥ ननु

भगवदधीनमित्यस्यार्थस्य श्रुतावदर्शनात् कथमेवं व्याख्यानमित्यतस्तत्प्रदर्शन-पूर्वकमनुष्ठायेत्युक्तं विवृणोति– **अजस्येति** ॥ तथा चाजस्येति षष्ठ्यर्थ एव भगवदधीनमित्यनेन वर्णित इति भावः । 'स्थितिं कृत्वा' इत्यनेनानुष्ठायेत्यस्य ध्यात्वेति व्याख्यानमपदार्थत्वादसदित्युक्तं भवति । अविद्याकामकर्मादि-बन्धनैर्विमुक्तो भवति । विमुक्तश्च सन् विमुच्यते पुनश्च शरीरं न गृह्णातीति व्याख्यानमसत् । शरीराग्रहणस्य विमोचनपदार्थत्वाभावात् । अतः पूर्वं विमुक्त एव पश्चान्मुच्यत इति व्याख्येयम् । नन्वेतदप्ययुक्तम् । संसारदशायां मुक्तत्वाभावात् । मुक्तस्य मोचनासम्भवाच्चेत्यतः प्रमाणेन तद् यथावद् व्याचष्टे– **विमुक्त इति** ॥ पूर्वं मुक्तेः । मुख्यत इत्युक्तं विवृणोति– **दुःखेति** ॥ १ ॥

**(वे.खं)** पुरमेकादशद्वारम् । चक्षुषी श्रोत्रे नासिके मुखं चेति सप्त शीर्षण्यानि नाभिरासनं गुह्यं चेति त्रीणि शिरस्येकमिति एकादशद्वारमिदं पुरं शरीरमजस्य जननादिरहितसस्यावक्रचेतसो ऋजुज्ञानिनो भगवत अधीनमित्य(धि)नुष्ठाय स्थितिं कृत्वा न शोचति । शरीराभिमानकृतो हि शोकः । शरीरस्य भगवदधीनत्वस्थितिकरणे तदभिमानाभावान्न शोक इति भावः । एवं निर-भिमानात् पूर्वमेव विमुक्तोऽपरोक्षज्ञानी पश्चाद् विशेषेण मुच्यते । पुन-र्भगवत्स्वरूपमाह– **एतदिति** ॥ १ ॥

## (उपनिषत्)

*(भगवन्माहात्म्यवर्णनम्)*

**हꣳसः शुचिषद् वसुरन्तरिक्षस-**
**द्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद् वरसदृतसद् व्योमस-**
**दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥**

*(भगवतो मुख्यप्राणनियामकत्वोक्तिः)*

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥

अस्य विस्र॑समानस्य शरीरस्थस्य देहिनः ।
देहाद् विमुच्यमानस्य किमत्र परिशिष्यते । एतद् वै तत् ॥ ४ ॥

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेणतु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥

*(जीवपरमात्मनोर्वैलक्षण्यप्रतिपादनम्)*

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा मरणं प्राप्याऽत्मा भवति गौतम ॥ ६ ॥

*(जीवपरमात्मनोर्वैलक्षण्यप्रतिपादनम्)*

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसँय्यन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥

*(सुप्तनियामक एव मुक्तनियामकः)*

य एष सुप्तेषु जागर्ति कामङ्कामं पुरुषो निर्ममाणः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद् वै तत् ॥८॥

*(जीवानां परमात्मप्रतिबिम्बत्वोक्तिः)*

अग्निर्यथैको भुवनं प्रविष्टो रूप॑रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूप॑रूपं प्रतिरूपो बहिश्च ॥ ९ ॥

वायुर्यथैको भुवनं प्रविष्टो रूपꣳरूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा रूपꣳरूपं प्रतिरूपो बहिश्च॥ १० ॥

सूर्यो यथा सर्वलोकस्य चक्षु-
र्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा
न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥

एको वशी सर्वभूतान्तरात्मा
एकꣳ रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखꣳ शाश्वतं नेतरेषाम् ॥ १२ ॥

नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषाꣳ शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

तदेतदिति मन्यन्तेऽनिर्देश्यं परमꣳ सुखम्।
कथं नु तद् विजानीयां किमु भाति न भाति वा ॥ १४ ॥

*(बाह्यप्रकाशागोचरो भगवान्)*

न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥ १५ ॥

॥ इति द्वितीये द्वितीया वल्ली ॥

(भाष्यम्)

'नित्यं हीनोऽखिलैर्दोषैः साररूपो यतो हरिः ।
हंस इत्युच्यते तस्माद् वायुस्थः [1]शुचिषत्स्मृतः ॥

वरसुर्वसुरित्युक्तः स एवाप्यन्तरिक्षगः ।
होता [2]सर्वेन्द्रियादिस्थो वेद्यां पूज्यश्च वेदिषत् ॥

अत्यन्नश्चातिथिः प्रोक्तो यस्मादन्नं थमुच्यते ।
स द्रोणकलशे सोमे स्थित उक्तो दुरोणसत् ॥

नृषु स्थितश्च देवेषु वरेष्वपि स एव तु ।
ऋतरूपे तथा वेदे व्योमाख्यप्रकृतावपि ॥

व्योतं जगदिदं यस्यां सा व्योम श्रीरुदाहृता ।
अब्जगोजाद्रिजेष्वेवमास्ते [3]अब्जादिकस्ततः ॥

तथैवर्तेषु मुक्तेषु गतास्ते विष्णुमित्यृताः ।
वेदैर्मुख्यतया प्रोक्त ऋतमित्येव चोच्यते ।
बृहत् पूर्णगुणत्वाच्च स एव पुरुषोत्तमः ॥ * ॥

न केवलं प्राणएव चेतनानां विधारकः ।
'किन्तु विष्णुं समाश्रित्य प्राणो जीवान् बिभर्त्ययम् ।
'अतो मुख्याश्रयो विष्णुश्चेतनानां स्वतन्त्रतः ॥ * ॥

अग्निर्यथैको लोकेषु प्रविष्टोऽन्यो न विद्यते ।
पाकादिकर्ताऽथाप्यस्य देवस्य प्रतिरूपकाः ।
रूपंरूपं प्रति ह्येते सन्त्यचेतनवह्नयः ॥

---

१. 'शुचिषन्मतः'

२. 'स चेन्द्रियादिस्थः'

३. 'एव आस्ते अब्जादिकस्ततः'

'एवं देवो वायुरपि धारकोऽन्यो न विद्यते ।
रूपंरूपं तथाऽप्यस्य प्रत्यभूत् प्रतिरूपकः[१] ।
अचेतनः स्पर्शगम्यो [२]योऽयमेवं जनार्दनः ॥

एकः स्वतन्त्रो नान्योऽस्ति सर्वजीवान्तरस्थितः ।
रूपंरूपं प्रति ह्यस्य [३]प्रतिबिम्बाश्च चेतनाः ॥

बाह्याश्च ते ततो नास्य स्वरूपं ते कथञ्चन ।
अनादिप्रतिबिम्बाश्च बभूवुस्ते ह्यनन्तकाः ॥

[४]सूर्यो यथाऽऽन्तरं चक्षुः प्रतिबिम्बोऽस्य बाह्यकः ।
बाह्यचक्षुर्गतैर्दोषैरन्तश्चक्षुर्न लिप्यते ।
अन्तश्चक्षुर्देवता तु बाह्यचक्षुरचेतनम् ॥

एवं बाह्यः स्वतन्त्रत्वाज्जीवेभ्यः पुरुषोत्तमः ।
अस्वतन्त्रस्य जीवस्य दुःखैर्नैव हि लिप्यते ॥

चेतनाभासको जीवः परमश्चेतनो हरिः ।
स्वतन्त्रत्वात् स्वतन्त्रो हि नैव दोषेणलिप्यते' इति [५]कौर्मे ॥

स एक एव सर्वभूतान्तरात्मा । तस्य [६]रूपंरूपं प्रतिरूपाख्यो जीवो बभूव । बहिश्चासौ परमात्मनः, नितरां भिन्नः । परतन्त्रत्वात् । 'आत्मैवेदमग्र आसीत्' इत्यादिवदनादित्वापेक्षया ॥ ✻ ॥

आत्मनिस्थं हरिं जानन् मुच्यते नात्र संशयः ।
[७]जीवैक्येन तु तं ध्यायंस्तमस्यन्धे पतेद् ध्रुवम्' इति च ॥ ✻ ॥

एतदेव भगवद्रूपं परमं सुखम् । ज्ञानिसुखं तु तद्विप्रुण्मात्रम् ।

---

१. 'पररूपकः' २. 'योऽयमेव जनार्दनः' ३. 'प्रतिबिम्बाख्यचेतनाः'
४. 'सूर्यो यथाऽऽन्तरश्चक्षुः' ५. 'महाकौर्मे'
६. 'रूपंरूपं प्रति प्रतिरूपाख्यः' ७. 'जीवैक्येन तु तं जानन्'

'ब्रह्मादीनां च मुक्तानां सुखं विष्णुसुखस्य तु ।
'प्रतिबिम्बस्तु विप्रुट्को विष्णोरेव परं सुखम् ॥

'सम्यग् भाति न भातीति जानीयां तत् कथं न्वहम् ।
'तत्प्रसादमृते दिव्यमनिर्देश्यं परं सुखम्' इति च [१]'महावाराहे॥ ※ ॥

## (व्यासतीर्थीयम्)

हंस इत्यादि भगवन्महिमप्रतिपादकं दुर्गमार्थत्वाद् व्याचष्टे– **नित्य-मित्यादिना ॥** अनेन जहातीति हं, स एव सारत्वात् स इति हंस इति विग्रहः सूचितो भवति । शुचौ सीदतीति शुचिषत् । तस्य प्रतिपदं– **वायुस्थ** इति । वरसुः श्रेष्ठसुखः । जुहोतीति होता । वेद्यां मुख्यपूज्यः सन् तिष्ठतीति वेदिषत् । अत्यन्नः अतिशयेनान्नवान् । प्रकृतिर्व्योमेति कस्मादुक्तेत्यत उक्तम्– **व्योतमिति ॥** यस्मादस्यामिदं जगद् व्योतं तस्मात्सा व्योमेति योज्यम् । तथैव ऋतेषु मुक्तेषु जातेषु तज्ज्ञानादिष्वास्ते तत ऋतजा इति योज्यम् । मुक्ताः केन निमित्तेन ऋता इत्यत उक्तम्– **गता इति ॥** अङ्गुष्ठ-मात्रः पुरुषः आत्मनि मध्ये तिष्ठतीत्युक्तस्य व्यापारमाह-- **ऊर्ध्वमिति ॥** अङ्गुष्ठमात्रः पुरुषो जीव इति प्रतीतिनिरासायोक्तमीशान इत्यादिपूर्वत्र । निरा-सकान्तरमाह– **मध्य इति ॥** कांश्चिद् भगवद्गुणानुक्त्वा तूष्णीं स्थितं पुन-स्तद्गुणान् वक्तुं पृच्छति–**अस्येति ॥** विस्रंसमानस्य स्थूलदेहं परित्यजतः । एतदेवं गुणकं तत्परिशिष्यते वै । गुणान् ब्रवीति – **न प्राणेनेति ॥** तत्र प्राणापानयोः सर्वथा जीवजीवनदत्वं नास्तीति प्रतीयते । तत्प्रमाणविरुद्धम् । अतस्तस्य तात्पर्यमाह– **न केवलमिति ॥** 'आत्मा मरणं प्राप्य यथा भवति' इति प्रतिज्ञातमाह– **योनिमिति ॥** शरीरत्वाय शरीरवत्त्वाय । अन्तस्थस्य प्राणादिनियन्तृत्वमुक्तम् । व्यापारान्तरमाह– **य एष्विति ॥** कामंकामं स्वेच्छानुसारेण स्वाप्नपदार्थान् निर्ममाणः । 'न प्राणेन' इत्यत्रोक्तं सर्वजीव-

१. 'इति महावराहे'

नियन्तृत्वं बुद्ध्यारोहार्थं दृष्टान्ताभ्यामाह– **अग्निरिति** ॥ भुवनं प्रविष्टश्चेतनाग्नि-र्यथैकः । यथा च तस्य रूपंरूपं प्रति जडाग्निः प्रतिरूपो बभूव । भुवनं प्रविष्टश्चेतनवायुर्यथैको यथा चाचेतनवायुस्तस्य रूपंरूपं प्रति प्रतिरूपो बभूव । तथा सर्वभूतान्तरात्मा एकः । तथा जीवोऽपि अस्यान्तरात्मनो रूपंरूपं प्रति प्रतिरूपो बभूव । वाक्यद्वयमैक्यार्थत्वप्रतीतिं निवारयन् व्याचष्टे– **अग्निरित्यादिना** ॥ एते बुद्धिस्थाः प्रसिद्धा वा । स्पर्शगम्यः स्पर्शगुणानुमेयः । अरूपिद्रव्यत्वेन बाह्यप्रत्यक्षागोचरत्वस्य स्थितत्वात् । प्रतिबिम्बो बिम्बान्न भिद्यत इति केचित् । तन्निरासायोक्तम्–**बहिश्चेति** ॥ तद्व्याचष्टे– **बाह्याश्च ते तत इति** ॥ ननु विष्णोर्विभुत्वात् कथं जीवानां तद्बाह्यत्वमित्यतस्तद्वाक्यं विशदयति– **नास्येति** ॥ नन्वनादित्वाज्जीवस्य कथं प्रतिबिम्बो बभूवेत्युक्तिरिति शङ्कां निवारयन् एकवचनादेकत्वप्रतीतिं च निवारयन्नाह– **अनादीति** ॥ ननु क्लिश्यमानजगदन्तर्गतत्वे भगवतः क्लेशः स्यादिति शङ्कां सूर्यदृष्टान्तेन परिहरति– **सूर्यो यथेति** ॥ तद्वाक्यं व्याचष्टे– **सूर्यो यथेति** ॥ लेपालेपयोर्हेतुत्वेनोभयचक्षुःस्वरूपं निरूपितम्– **अन्तश्च-क्षुरिति** ॥ जीवदोषलेपाभावे हेतुरुक्तः– **एको वशीति** ॥ तस्यार्थः– **स्वतन्त्रत्वादिति** । नन्वेकस्य कथं बहुजीवेषु स्थित्वा नियामकत्वमित्यतः स्वयमपि बहुरूपो भवतीत्याह– **एकं रूपमिति** ॥ भगवतो जीवदोषलेपाभावे हेत्वन्तरमाह– **तमिति** ॥ ये आत्मस्थं तं पश्यन्ति तेषां सर्वदोषविधूननेन शाश्वतं सुखं किल । तस्य कथं दोषलेप इत्यर्थः । दोषलेपाभावे 'एको वशी' इत्युक्तं स्वातन्त्र्यहेतुं समर्थयते– **नित्यो नित्यानामिति** ॥ तद्व्याचष्टे– **चेतनेति** ॥ परमचेतनत्वात् स्वतन्त्रः, स्वतन्त्रत्वाद्धि दोषेण नैव लिप्यत इत्यर्थः । एक एव सर्वभूतान्तरात्मा रूपं रूपं प्रति शरीरं प्रतिरूपाख्यो जीवो बभूवेति अन्यथाप्रतीतिं प्रमाणेन निवारितामपि कर्हिचिदत्र न प्रमा-द्येदित्याशयवान् निवारयन् स्ववाक्येनापि तद्व्याकरोति–**स एक एवेति** ॥ बहिरित्यस्य प्रतिपदम्–**भिन्न** इति ॥ भेदाभेदौ च निवारयितुमुक्तम्– **नितरा-**

**मिति** ॥ जीवः परमात्मनो भिन्न इति कुत इत्यत उक्तम्– **परतन्त्रत्वादिति** ॥ प्रतिरूपो बभूवेत्येतदनादितः प्रतिबिम्बा बभूवुरिति व्याख्यातम् । तत्प्रयोगेणापि समर्थयते–**आत्मेति** ॥ इदमग्रे अस्य जगतोऽग्रे प्रळयकाले । आत्मैवाऽसीदभूदित्यादिवदनादित्वापेक्षया प्रतिरूपो बभूवेति प्रयोग इत्यर्थः । सर्वभूतान्तरात्मैव प्रतिशरीरं प्रतिरूपो बभूवेत्यर्थः किं न स्यादित्यतो व्याख्यातं प्रमाणं बाधकम् । बाधकान्तरमप्याह– **आत्मनीति** ॥ तदेतदित्यादिनाऽपि भगवन्महिमानमाह । एतदेवमिति निर्देष्टुमशक्यमनिर्देश्यम् । तत्र तदेतदिति तेषां सुखं शाश्वतमिति प्रकृतज्ञानिसुखं परामृश्यत इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **एतदिति** ॥ एतदेव 'तमात्मस्थम्' इति प्रकृतं भगवद्रूपमेव । ज्ञानिसुखमेव परामृश्यत इति कुतो न स्यात् ? न स्यात् । परमत्वविशेषणात् । 'तस्य चैतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इत्यादिना जीवसुखेऽयोगादित्याह– **ज्ञानीति** ॥ विष्णोरेव सुखं परमं ज्ञानिसुखं तु विप्लुट्कमिति कुत इत्यत आह– **ब्रह्मादीनामिति** ॥ कथं नु तद्विजानीयां, केनोपायेन विजानीयामित्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **सम्यगिति** ॥ तदनिर्देश्यं परमं सुखं तत्प्रसादमृते सम्यग् भाति न भाति वेत्यस्य निश्चयं कथं न्वहं विजानीयां न केनापीत्यर्थः ॥

**॥ इति द्वितीयाध्यायस्य द्वितीया वल्ली ॥ २ ॥ २ ॥**

## (प्रकाशिका)

'हंसः शुचिषत्' इत्यत्र दोषान् जहातीति हं, सारत्वात् स इत्यर्थस्याभिप्रेतत्वे हं चासौ सश्चेति हस इत्येव स्यात् । हंस इति कथमिति चेन्न । निरुक्तमहिम्नाऽनुस्वारागमसम्भवात् । शुचौ सीदतीति शुचिषत् । षद्लृधातोः 'धात्वादेः षः सः' इति सकारादेशमनपेक्ष्य यथास्थितधातुप्रयोगे सदितिवत् षदित्यपि शब्दो निष्पन्न इति ज्ञेयम् । होता इन्द्रियेषु विषयहोता । दुरोणसदित्यत्र दुरोणपदस्य संसृष्टोच्चारणे सति द्रोणकलश इति सिद्ध्यति अर्शवानर्श इतिवद् द्रोणवान् सोमरसः द्रोणपदेनोच्यत इति भावेनोक्तम्–

**द्रोणकलशे सोम इति** ॥ अब्जादिपदाद् 'आस उपवेशने' इति धातोः सकारस्य रुत्वे विसर्गे च अब्जाः अब्ज आसीन इति सोमपाशब्दवदयं शब्दो निष्पन्नः । एवमन्यत्रापि द्रष्टव्यम् । गोजं क्षीरम् । अद्रिजं रत्नादि ॥

'रूपंरूपं प्रतिरूपो बभूव' इत्यत्र रूपं रूपं नियामकचेतनाग्नेः रूपं रूपं प्रति स्थितं रूपं यस्य सः प्रतिरूपो जडाग्निः यथा बभूव तथा योऽयमेकः सर्वभूतान्तरात्मा सर्वजीवहृदि स्थितः तस्य रूपं रूपं प्रति रूपं यस्य सः प्रतिरूपः तत्तद्देहस्थितो जीवो बभूवेति योजना ॥

'एवं बाह्यः स्वतन्त्रत्वात्' इत्यत्र बाह्यः जीवाद् विलक्षणः ॥

**॥ इति द्वितीयाध्यायस्य द्वितीया वल्ली ॥**

## (वेदेशीयम्)

हंस इति मन्त्रं विप्रतिपत्तिनिरासाय प्रमाणेन व्याचष्टे– **नित्यमिति** ॥ आधिक्यार्थकानुस्वारार्थः–**नित्यमिति** ॥ हेत्यस्यार्थः–**हीन इति** ॥ ओ हाक् त्याग इति धातोः । अखिलैर्दोषैरित्यस्य योग्यतया सम्बन्धः । स इत्यस्यार्थः– **साररूप इति** ॥ एतेन हन्ति गच्छतीति हंस इति व्याख्यानं प्रमाणविरुद्धत्वादपास्तम् । दिव्यादित्यात्मना सीदतीति शुचिषदिति व्याख्याननिरासायाऽऽह– **वायुस्थ इति** ॥ शुचिर्वायुस्तत्र सीदतीति शुचिषत् । वसुर्वाय्वात्मनाऽन्तरिक्षे सीदतीत्यन्तरिक्षसदिति व्याख्याननिरासायाऽऽह– **वसुरिति** ॥ उत्तमसुखरूप इत्यर्थः । 'स्वित्यानन्दः समुद्दिष्टः' इत्युक्तेः । वशब्दो वरत्ववाची । होताऽग्निरिति व्याख्यानमसदिति भावेनाऽऽह–**होतेति** ॥ सर्वेन्द्रियविषयहोतृत्वादित्यर्थः । वेद्यां सीदतीति वेदिषदिति पदार्थमभिप्रेत्य तात्पर्यमाह– **वेद्यामिति** ॥ अतिथिः सोमः सन् द्रोणकलशे सीदतीति दुरोणसदिति व्याख्याननिरासाय अतिथिशब्दार्थं तावदाह– **अत्यन्न इति** ॥ अतिशयितान्न इत्यर्थः । चशब्द एवार्थः । कथमस्माच्छब्दादयमर्थो लभ्यत इत्यतस्थशब्दार्थमाह– **यस्मादिति** ॥ उच्यते अन्नं थम् इति च्छन्दोगश्रुताविति

शेषः । अतिशब्दश्चातिशयार्थकः प्रसिद्ध एवेति भावः । इदानीं दुरोणसदित्यस्यार्थमाह– **स इति ॥** द्रोणकलशे स्थित इति शेषः । स्थित इत्यस्य सप्तम्यन्ततयाऽत्रापि सम्बन्धो वा । द्रोणे स्थितं दुरोणम् । तच्च योग्यतया सोम एव तत्र सीदतीति दुरोणसदित्यर्थः । नृषद्वरसदित्यस्यार्थमाह–**नृष्विति ॥** वरेष्वित्यनुवादेन देवेष्विति व्याख्यानम् । अपिशब्दात् स्थित इत्यनुकर्षः । तुशब्दो नरापेक्षया विशेषद्योतकः । ऋतसदित्यस्यार्थः– **ऋतरूप इति ॥** याथार्थ्यनियमादित्यर्थः । स्थित इत्यनुवर्तते । व्योमसदित्यस्यार्थमाह– **व्योमाख्येति ॥** प्रकृतौ व्योमशब्दं निर्वक्ति– **व्योतमिति ॥** अब्जा गोजा ऋतजा अद्रिजा इत्यनेन ब्रह्मणः शङ्खशुक्तिमकरादिसर्वात्मकमुच्यत इति व्याख्याननिरासाय अब्जा गोजा ऋतजा अद्रिजा इत्यभेदोक्तौ निमित्तमाह– **अब्जेति ॥** अब्जाः शङ्खादयः । गोजाः व्रीहियवादयः अद्रिजा नद्यादयः आस्ते, यत इति शेषः । अब्जादिकः अब्जा इत्यादिनामकः । शुचिषदित्यादिना सर्वत्रावस्थितभगवत्स्वरूपतकथनादत्रापि तत्तत्स्थितत्वेनैव तदभेदोक्तिरिति व्याख्येयमिति भावेनैवमित्युक्तम् । ऋतजा इत्यस्यार्थमाह– **तथैवेति ॥** ऋतेषु मुक्तेषु नियामकतया जात इति ऋतजा इति शेषः । अर्थविशेषकथनायैव क्रमोल्लङ्घनम् । कथं मुक्तानाम् ऋतत्वमित्यत आह– **गता इति ॥** ऋ गताविति धातोरित्यर्थः । विष्णुमित्यस्य योग्यतया सम्बन्धः । अब्जादिरूपेण सर्वात्माऽपि सन्नृतमवितथस्वभाव इति व्याख्याननिरासाय ऋतमित्यस्यार्थमाह– **वेदैरिति ॥** ऋतशब्दो वेदवाचीत्युक्तम् । वेदाभेदस्य बाधितत्वाद् वेदैः प्रोक्त इत्युक्तम् । वाच्यवाचकयोरभेदव्यपदेशस्य 'अयं वै लोकः प्रथमा महानाम्नी' इत्यादौ दृष्टत्वात् । अब्जा इत्यादिवद् वेदस्थत्वाद् वेदाभेदोक्तिरित्यङ्गीकारे ऋतसदित्यनेन पुनरुक्त्यापातः । देवताधर्मादिनिरासाय मुख्यतयेत्युक्तम् । एवशब्देन परोक्तार्थव्यावृत्तिः । चशब्दः पूर्वोक्तविशेषणसमुच्चायकः । बृहत् महत् सर्वोपादानत्वादिति व्याख्याननिरासायाऽह– **बृहदिति ॥** बृहच्चेति चशब्दान्वयः । पूर्णगुणत्वादेवेत्येवशब्दान्वयः । तेन परोक्तहेतुनिरासः ।

नन्वादित्यपर एवायं मन्त्रः । 'असौ वै दूरोहो योऽसौ तपति' इत्युक्त्वा 'हंसः शुचिषदित्येष वै हंसः शुचिषत्' इत्यादिश्रुतावुक्तत्वात् । हंस इति 'हंसाः सूर्यस्य रश्मयः' इत्युक्तत्वाच्चेति चेन्न । आदित्यान्तर्गतभगवत्पर-त्वेनाविरोधात् । न प्राणेनेत्यस्य प्राणेनापानेन चक्षुरादिना वा मर्त्यो न जीवति । अतस्तदितरेण जीवो जीवति । यस्मिन् जीवे एतावुपाश्रिताविति व्याख्यानमसत् । प्राणापानादिवत् जीवस्यापि जीवनहेतुत्वाभावात् । यथा-श्रुतोपपत्तौ चक्षुराद्युपलक्षणायोगाच्च । अतोऽत्र प्राणापानात्मकमुख्यवायोरेव जीवनहेतुत्वं निषिद्ध्य विष्णोरेव तद्धेतुत्वमुच्यते । नन्वेतदप्ययुक्तम् । मुख्य-प्राणस्य जीवनहेतुत्वस्य 'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा' इत्यादि-प्रमाणसिद्धत्वादित्यतस्तद् व्याचष्टे– **न केवलमिति** ॥ केवलैवशब्दाभ्यामन्य-निरपेक्षतामाह । तथाच श्रुतौ स्वातन्त्र्येण जीवनहेतुत्वं निषिद्ध्यत इति भावः । तर्हि कीदृशश्चेतनविधारक इति भावेन पृच्छति– **किन्त्विति** ॥ तदुत्तरत्वेन 'यस्मिन्नेतावुपाश्रितौ' इति वाक्यतात्पर्यमाह– **विष्णुमिति** ॥ यस्मिन्नेतावित्येतद् इतरेण जीवन्तीत्यत्र हेतुरिति भावेन 'इतरेण तु' इति वाक्यं तात्पर्यतो व्याचष्टे– **अत इति** ॥ अग्निर्यथैक एव प्रकाशात्मा सन् भुवनमिमं लोकं प्रविष्टो रूपंरूपं प्रति दार्वादिदाह्यभेदं प्रति प्रतिरूपस्तत्र स्वयं प्रतिरूपवान् दाह्यभेदैर्बभूव । तथा सर्वभूतान्तरात्मा एक एव दार्वादिष्विव सर्वदेहं प्रति प्रविष्टत्वात् प्रतिरूपो बभूव । बहिश्च स्वेनाविकृतेन रूपेणाऽकाशवत् । तथाऽन्यो दृष्टान्तो **वायुर्यथैक** इत्यादि । प्राणात्मना देहेष्वनुप्रविष्टः । रूपंरूपं प्रतिरूपेत्यादिसमानमिति । अस्मिन् मन्त्रद्वये आत्मैकत्वमुच्यत इत्यसत् । 'यदेवेह तदमुत्र' इत्यादिना बहुशस्तस्योक्तत्वेन पुनरुक्त्यापातात् । नचानेकतार्किकबुद्धिविचालितान्तःकरणानां प्रमाणोप-पन्नमप्यात्मैकत्वविज्ञानम् असकृदुच्यमानमपि ऋजुबुद्धीनां चेतसि नाऽधीयत इति तत्प्रतिपादने आदरवती श्रुतिः पुनः पुनराहेति युक्तम् । आत्मैकत्व-स्याप्रामाणिकत्वात् । न तावत् तत्र प्रत्यक्षम् । चेष्टालिङ्गेन परात्मसिद्धौ

ततो भेदस्यैव स्वस्मिन् ग्रहणेन तदेकत्वग्राहिप्रत्यक्षाभावात् । विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वादित्यनुमानम् । विमतानि कलत्राणि देवदत्तस्यैव भोगायतनानि कलत्रत्वादित्युपहासास्पदाभाससमानयोगक्षेमत्वादुपेक्ष्यम् । आगमश्चान्यथा व्याख्याता इति भावेन 'अग्निर्यथैकः' इति मन्त्रद्वयं प्रमाणेनैवान्यथा व्याचष्टे– **अग्निरिति** ॥ अग्निर्देवतारूपः । लोकेष्वित्यनेन भुवनमिति जात्येकवचनमित्युक्तं भवति । तेन भुवनमिमं लोकमिति व्याख्यानमपास्तम् । एक इत्यस्य सावधारणत्वमभिप्रेत्यान्यो न विद्यत इत्याह । पाकादिकर्तेति शेषोऽस्ति । अनेन 'अग्निर्यथैको भुवनं प्रविष्टः' इत्येतद् व्याख्यातम् । पूर्वोक्ताग्निरेव बभूवेत्यत्र कर्तेति प्रतीतिं निवारयन् 'रूपं रूपम्' इत्येतद् व्याचष्टे–**अथापीति** ॥ **प्रतिरूपकाः** प्रतिबिम्बभूताः । श्रुतावेकवचनप्रयोगो जात्यभिप्रायेणेति बहुवचनप्रयोगः । 'वायुर्यथैकः' इति दृष्टान्तवाक्यं व्याचष्टे–**एवमिति** ॥ एवंशब्दो दृष्टान्तान्तरत्वज्ञापकः । यथेत्यनुवर्तते । अपिशब्दो लोकेषु प्रविष्ट इत्यस्यानुकर्षणार्थः । वायुरेक एवेति शेषः । नन्वचेतनवायुरेव नास्ति । प्रमाणाभावादित्यत उक्तम्– **स्पर्शगम्य इति** ॥ एतच्छङ्कापरिहारार्थमेव प्राग् एते प्रत्यक्षसिद्धा इत्युक्तम् । स्पर्शगुणानुमेय इत्यर्थः । त्वगिन्द्रियव्यापारानन्तरमुपलभ्यमानः स्पर्शः क्वचिदाश्रितो गुणत्वाद् रूपवदित्यनुमानात् सामान्यतः स्पर्शाश्रयद्रव्यसिद्धौ न तत् पृथिव्यादित्रयं रूपरहितत्वात्, नाप्याकाशादिकं तस्यास्पर्शवत्त्वादिति, यद् रूपरहितं स्पर्शवद् द्रव्यं सिद्ध्यति स एव वायुरिति भावः । ननु कुत एवं वायोः स्पर्शगुणानुमेयत्वम् । बाह्यप्रत्यक्षत्वं किं न स्यादिति चेत्, न । अरूपिद्रव्यत्वेन बाह्यप्रत्यक्षागोचरत्वस्याऽस्थितत्वात् । नचानुमितस्य वायोः प्रतिवादिनाऽनङ्गीकृतत्वेनाऽश्रयासिद्धिः । अध्यक्षस्य पक्षीकारे धर्मिग्राहकमानविरोध इति वाच्यम् । वायोरेवात्र पक्षत्वेनानुमितत्वादेः पक्षतावच्छेदकत्वेनानुपादानात् । स चास्माकमनुमानेन परस्य प्रत्यक्षेण सिद्ध इत्यदोषः । नच पञ्चीकरणपक्षेऽसिद्धिः । प्रत्यक्षरूपरहितद्रव्यत्वस्य हेत्वर्थत्वात् । तथाच

श्रुतिः 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत् सत्' इति वायुरन्तरिक्षं चासदिति सत्त्वासत्त्वव्यपदेशस्य प्रत्यक्षाप्रत्यक्षनिमित्तकत्वात् । तथाचोक्तं सुधायाम्– 'प्रत्यक्षाप्रत्यक्षपञ्चमहाभूतपरत्वात्' इति । मूर्तत्वामूर्तत्वं चेदमेव । अन्यथा पञ्चानामपि परिच्छिन्नपरिमाणत्वेन विभागानुपपत्तेः । तथाच स्मृतिः– 'आकाशवायू त्वव्यक्ते इतरेऽण्डे प्रकाशिताः । तथात्वाद् बाह्यभूतानामण्डस्थानां च सा गतिः' इति । किञ्च 'भूतमप्यसितं दिव्यदृष्टिगोचरमेव तु' इत्यनुव्याख्याने भूताकाशस्याप्रत्यक्षत्वोक्तिरपि वायोरप्रत्यक्षत्वसूचिका । द्वयोरेककोटित्वेन व्यवहारात् । उक्तं च मात्स्ये – 'आकाशवायू त्वव्यक्ते इतरेऽण्डे प्रकाशिताः । तथात्वाद् बाह्यभूतानामण्डस्थानां च सा गतिः' इति । अत एव पद्धतौ 'वायुस्पर्शोऽपि त्वचो विषयः' इति वायुस्पर्शस्यैव त्वगिन्द्रियविषयत्वमुक्तम् । न वायोः । एतेन वायोः प्रत्यक्षत्वं वदन्तो निरस्ताः । तथाहि । न वायोः प्रत्यक्षत्वं वक्तुं युक्तम् । तत्प्रमाणाभावात् । न तावत् प्रत्यक्षम् । वायुर्वातीति ज्ञानस्य वायुगोचरत्वेऽपि तत्प्रत्यक्षत्वागोचरत्वात् । नच तस्यैव साक्षात्काररूपत्वेन तद्विषयत्वेनैव वायोः प्रत्यक्षत्वसिद्धिः । तस्य साक्षात्कारत्वे विवादात् । नचेयं प्रतीतिस्त्वगिन्द्रियजन्या । तद्व्यापारान्वयव्यतिरेकानुविधायित्वादिति तत्सिद्धिरिति वाच्यम् । त्वगिन्द्रियव्यापारस्य स्पर्शग्रहोपक्षीणत्वेनान्यथासिद्धान्वयव्यतिरेकयोरभावात् । साधारणयोस्तु व्यभिचारित्वात् । वायुं स्पृशामीत्यनुभवोऽस्तीति चेत् । न । पुष्पाणि जिघ्रामीत्यनुभववदुपपत्तेः । नचैवं घटोऽपि स्पार्शनो न स्यादिति वाच्यम् । तस्य वक्ष्यमाणनियामकविशिष्टतया स्पार्शनत्वकल्पनात् । अत्र तु तदभावात् । नाप्यनुमानम् । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वस्योपाधित्वात् । अत एव महत्त्वे सत्युद्भूतस्पर्शवत्त्वादित्यपास्तम् । परैरुद्भूतत्वानङ्गीकारेण वाद्यसिद्धेश्च । नचोद्भूतपदं प्रत्यक्षपरम् । महत्त्वविशेषणवैयर्थ्यात् । तत्त्यागे पूर्वभेदात् । ऊष्मणि व्यभिचाराच्च । नच तस्य पक्षसमत्वान्न व्यभिचारः । 'ऊष्मवत् परं ब्रह्म यन्न जिघ्रन्ति

न पश्यन्ति न शृण्वन्ति न विजान्ति' इति श्रुत्या ब्रह्मणोऽप्रत्यक्षत्वे ऊष्मणो दृष्टान्तत्वकथनेन च तदप्रत्यक्षत्वस्य सुदृढनिश्चितत्वात्। प्रत्यक्षशब्दाश्रयस्याप्याकाशस्याप्रत्यक्षत्ववत् प्रत्यक्षस्पर्शाश्रयस्यापि वायोरप्रत्यक्षत्वोपपत्त्याऽप्रयोजकत्वात्। वायुः स्पार्शनः उद्भूतरूपानधिकरणत्वे सत्युद्भूतस्पर्शाधिकरणत्वाद् घटवदित्यपि न। परमाण्वादौ व्यभिचारात्। नचोद्भूतपदं प्रत्यक्षपरम्। उक्तन्यायेनाप्रयोजकत्वात्। द्रव्यत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकचाक्षुषत्वस्योपाधित्वाच्च ॥

ननु द्रव्यस्पार्शनत्वे न चाक्षुषत्वं प्रयोजकम्। किन्तु महत्त्वे सत्युद्भूतस्पर्शवत्त्वमेव। अतः कथं न वायुः प्रत्यक्ष इति चेत्। न। परमाणुष्वपि महत्त्वसद्भावस्यान्यत्रोपपादितत्वेन तेषामपि स्पार्शनत्वप्रसङ्गात्। त्वन्मतेऽपि (त्रुटेः) त्र्यणुकस्य महत्त्वे सत्युद्भूतस्पर्शवत्त्वाङ्गीकारेण स्पार्शनत्वप्रसङ्गाच्च। नहि जालसूर्यमरीचिस्थमतिसूक्ष्मतममुपलभ्यमानं वस्तु त्वचा केनचिद् गृह्यते। गृह्यत एव। विविच्य तु न गृह्यते सूक्ष्मत्वाद् इति वदन् देवानांप्रियोऽसावुपेक्षणीयः। अनुभवविरोधात्। महत्त्वविशेषसमानाधिकरणोद्भूतस्पर्शवत्त्वं प्रयोजकमिति चेन्न। ऊष्मणो वायूपनीतशीतोष्णद्रव्यस्यापि स्पार्शनत्वापातात्। नच तत्रानुमतिः। उदाहृतश्रुतिविरोधात्। तत्सङ्ख्यापरिमाणसंयोगविभागकर्माणां स्पार्शनत्वापाताच्च। योग्यव्यक्तिवृत्तित्वेन तेषां योग्यत्वात्। नह्यूष्मादिजातीये क्वचिद् घटादाविव करपरामर्शे कदाऽपि केनापि सङ्ख्या गृह्यते। ननु द्रव्यस्पार्शनत्वे चाक्षुषत्वमपि न प्रयोजकम्। आलोकादीनामपि स्पार्शनत्वापातादिति चेन्न। विषमव्याप्तस्याप्युपाधित्वात् ॥

केचित्तु महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वं बाह्यद्रव्यप्रत्यक्षत्वे तन्त्रमिति न वायुः प्रत्यक्ष इत्याहुः। तन्न। वर्णद्रव्यत्वस्यान्यत्र व्यवस्थापितत्वेन तत्रोक्तप्रयोजकाभावात्। अन्ये तु, द्रव्यस्पार्शन एवेदं प्रयोजकमिति वायुर्न स्पार्शन इत्याहुः। तदपि न। तमस आलोकस्य नयनगतपित्तद्रव्यस्य च स्पार्शनत्वप्रसङ्गात्। वस्तुतस्तु, श्रोत्रभिन्नबाह्येन्द्रियजन्यास्मदादिद्रव्यप्रत्यक्षत्वे

महत्वविशेषसमानाधिकरणोद्भूतरूपवत्त्वं प्रयोजकमिति वायुर्न प्रत्यक्षः । एके तु महत्त्वविशेषसमानाधिकरणोद्भूतरूपस्पर्शवत्त्वं द्रव्यस्पार्शनत्वे प्रयोजकम् । एकैकस्य व्यभिचारात् । विनिगमनाविरहेणोभयोरपि प्रयोजकत्वात् । अत एव घटादिः स्पार्शनः । अत एवोक्तं सुधायाम्– 'द्रव्यस्य हि अस्मदादिप्रत्यक्षत्वम् उद्भूतस्पर्शवत्त्वेन व्याप्तम्' इति । एवं च वायुर्न प्रत्यक्ष इत्याहुः । एवं मन्त्रद्वयगतं दृष्टान्तवाक्यं व्याख्यायेदानीं 'एकस्तथा सर्वभूतान्तरात्मा' इति दार्ष्टान्तिकवाक्यं व्याचष्टे–**एवमिति** ।। जनार्दन इति विशेष्याध्याहारः । एक इत्यस्य सावधारणत्वमभिप्रेत्याऽह– **नान्य इति** ।। सर्वभूतान्तरात्मेत्यस्यार्थः– **सर्वेति** ।। एक एव सर्वजीवान्तरस्थित इत्यस्यार्थलब्धमर्थमाह– **स्वतन्त्र इति** ।। बाह्याश्च ते तत इत्यत्र हेतुकथनार्थमेतत् । 'रूपंरूपम्' इत्येतदपेक्षिताध्याहारेण व्याचष्टे– **रूपं रूपमिति** ।। प्रतिरूप इत्यस्यार्थः– **प्रतिबिम्बा इति** । बभूवुरिति वक्ष्यमाणमत्रापि सम्बद्ध्यते । एकवचनप्रयोगादेकस्यैव प्रतिबिम्बत्वमुच्यत इति शङ्कापरिहाराय बहुवचनप्रयोगः । चेतना अस्य जनार्दनस्य रूपंरूपं प्रति प्रतिबिंम्बा बभूवुरित्यन्वयः ।।

ननु चेतनानां भगवत्प्रतिबिम्बत्वे बिम्बप्रतिबिम्बयोरैक्यात् तयोरभेदः स्यादित्याशङ्कापरिहाराय श्रुतौ बहिश्चेत्युक्तमिति भावेन तद् व्याचष्टे– **बाह्याश्चेति** ।। ततो जनार्दनात् । ननु चेतना भगवतो बाह्या इत्ययुक्तम् । भगवतो विभुत्वेन चेतनानां तदनधिष्ठितप्रदेशवृत्तित्वासम्भवादित्यतो बाह्या इत्युक्तं विवृणोति– **नास्येति** ।। ननु प्रतिरूपो बभूवेति लिट्प्रयोगात् प्रतिबिम्बत्वस्य कादाचित्कत्वमुच्यत इति प्रतीयते । विचित्रानन्तजीवानां च कथमविचित्रैकभगवत्प्रतिबिम्बत्वमित्यत आह– **अनादीति** ।। चशब्दोऽपिशब्दार्थः । अनन्तम् अनन्तप्रकारं कं सुखं येषां ते अनन्तकाः । विचित्रस्वभावा अनन्ता अपि ते चेतना अविचित्रस्यैकस्यैव भगवतोऽनाद्यनन्तप्रतिबिम्बा बभूवुरित्येतच्छ्रुत्यादिप्रसिद्धमिति हिशब्दार्थः । सूर्यकान्तर्गतसूर्यप्रतिबिम्बस्याग्निजनकत्वेऽपि जलगतस्य तदभावदर्शनात् बिम्बैक्येऽपि प्रतिबिम्बभेदस्तदवैचित्र्येऽपि तद्वैचित्र्यमुपपन्नमिति भावः ।।

'सूर्यो यथा' इति मन्त्रस्य सूर्यः सकललोकस्य चक्षुषि पुरीषाद्यशुचिप्रकाशनेन चक्षुष उपकारं कुर्वन्नपि तद्दर्शिनः सर्वलोकस्य चाक्षुषैरशुच्यादिदर्शननिमित्तैराध्यात्मिकैर्दोषैर्बाह्यैश्चाशुच्यादिसंसर्गदोषैश्च न लिप्यते इति व्याख्यानमसत् । सूर्यस्य पुरीषाद्यशुचिप्रकाशनेन चाक्षुषदोषलेपप्रसक्तेरेवाभावेन तन्निषेधायोगात् । अन्यथा दीपप्रभादेरपि जडस्य तत्प्रसक्तिः स्यात् । सर्वस्यापि दोषस्यान्तरत्वेन बाह्यत्वायोगाच्च । नच दोषनिमित्तस्य बाह्यत्वेन दोषे बाह्यत्वोपचारः । क्लिष्टत्वात् । आध्यात्मिकैर्दोषैरित्यश्रुतकल्पनापाताच्चेति भावेन तद्दृष्टान्तवाक्यं व्याख्यातुं तदुपयुक्तं तावदाह– **सूर्य इति** ॥ अस्य सूर्यस्य प्रतिबिम्बो बाह्यकं चक्षुरित्यन्वयः । किं तत इत्यतो परिवर्तमानस्य सूर्यस्य कथमान्तरचक्षुष्ट्वम् । सूर्यप्रतिबिम्बभूतबाह्यचक्षुश्च किमित्यत आह– **अन्तश्चक्षुरिति** ॥ चक्षुरभिमानिसूर्याख्यदेवतेत्यर्थः । एकस्तथेति दार्ष्टान्तिकवाक्यं व्याचष्टे–**एवमिति** ॥ बाह्योऽत्यन्तभिन्नः । तत्र हेतुः–**स्वतन्त्रत्वादिति** ॥ भूतान्तरात्मत्वोक्त्या लब्धमेतत् । जीवेषु व्यभिचारशङ्कापरिहारायास्वतन्त्रस्येति जीवविशेषणम् । दुःखेनेति एकवचनप्रयोगो जात्यभिप्रायेणैव न त्वेकत्वाभिप्रायेणेति बहुवचनप्रयोगः । ननु चेतनत्वाद् विष्णोरपि जीववद् दुःखलेपः किं न स्यात् । नहि चेतनत्वाविशेषेऽपि विष्णोः दुःखालेपे विशेषहेतुरस्तीत्यत आह– **चेतनाभासक इति** ॥ अनेन 'चेतनश्चेतनानाम्' इत्यस्य तात्पर्यमुक्तं भवति । चेतनत्वं न दुःखलेपप्रयोजकम् । किन्तु चेतनाभासकत्वमेव । हरिस्तु परमचेतन इति न दुःखलेप इति भावः । हरेः परमचेतनत्वे हेतुमाह– **स्वतन्त्रत्वादिति** ॥ परमचेतनत्वेऽपि दोषलेपः किं न स्यादित्यत आह– **स्वतन्त्रो हीति** ॥ परमचेतनः स्वतन्त्र एव । स्वतन्त्रस्य नैव दोषलेपः । अन्यथा स्वातन्त्र्यभङ्गादिति भावः । दुःखे प्रकृतेऽपि दोषेणेति वदता श्रुतौ दुःखपदमज्ञानाद्युपलक्षणमित्युक्तं भवति । 'एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' इत्यस्य परोक्तार्थे न प्रमादेनापि मतिः कर्तव्येति भावेन प्रमाणेन व्याकृतमपि तद्वाक्यं स्ववचनेन स्पष्टयति– **स इति** ॥

स इत्यध्याहारः । 'सर्वं वाक्यं सावधारणम्' इति न्यायेनैक एवेत्युक्तम् । प्रकृतपरमात्मन एवोत्तरत्र कर्तृत्वेनान्वय इति भ्रान्तिनिवारणाय रूपं रूपमित्येतद् योजयति– **तस्येति** ॥ जीव इति कर्त्रध्याहारः । जीवः प्रतिरूपाख्यो बभूवेति सम्बन्धः । अनेन दृष्टान्तवाक्याद् बभूवेति पदमनुवर्तनीयमित्युक्तं भवति । बहिश्चेत्येतदवधिप्रदर्शनेन व्याचष्टे– **बहिश्चेति** ॥ कथं सर्वगतस्याऽऽत्मनो बहिर्जीव इत्यतस्तद् विवृणोति– **नितरामिति** ॥ भेदाभेदव्यावृत्त्यर्थं नितरामिति । अनेन बहिःशब्दो भिन्नार्थश्चशब्द एवार्थ इत्युक्तं भवति । तत्र हेतुः– **परतन्त्रत्वादिति** ॥ अनादिप्रतिबिम्बाश्चेत्युक्तमयुक्तम् । तथासति बभूवेति भूतार्थकलिट्प्रत्ययानुपपत्तेरित्यतस्तत्र प्रयोगं दर्शयति– **आत्मैवेति** ॥ यथाऽऽत्मसत्तायाः सार्वकालिकत्वेनाऽसीदिति प्रयोगः सार्वकालिको व्याख्येयस्तथाऽत्रापीति भावः । यथोक्तं– 'प्रयोग एककालीनः सर्वकालेऽनुषज्यते । ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः' इति ॥

'तमात्मस्थं येऽनुपश्यन्ति' इत्यस्य तमात्मस्थं स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमिति व्याख्यानमसदिति भावेन प्रमाणेनैव व्याचष्टे– **आत्मनिस्थमिति** ॥ परोक्त एवार्थः किं न स्यादित्यत आह– **जीवैक्येनेति** ॥ 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्' इत्यन्यत्र ज्ञानिसुखमेवोच्यते । परमं सुखमिति सुखश्रुतेः । न चासौ विष्णावपि सावकाशा । 'तेषां सुखं शाश्वतम्' इति ज्ञानिसुखस्यैव प्रकृतत्वेन तस्यैव तदेतदिति परामर्शात् । नच भगवतोऽपि प्रकृतत्वात् तत्परामर्शोऽयमस्त्विति वाच्यम् । तस्य नपुंसकसुखशब्देनाप्रकृतस्य तदित्यादिपरामर्शायोगादित्यत तद् व्याचष्टे– **एतदेवेति** ॥ एवकारेण ज्ञानिसुखव्यवच्छेदः । तथाच तदेतदिति नपुंसकशब्देनैकं रूपमिति प्राक् प्रकृतभगवद्रूपं परामृश्यत इति नानुपपत्तिरिति भावः ॥

ननु किं दूरस्थभगवद्रूपपरामर्शग्रहणेन । समीपस्थज्ञानिसुखपरामर्श एवायमिति किं न स्यादिति चेन्न । सुखस्य परमत्वविशेषणाद् ज्ञानिसुखस्य

च परमत्वायोगादिति भावेनाऽऽह– **ज्ञानिसुखमिति** ॥ भगवत्सुखविप्रुण्मात्र-मित्यर्थः । अनेन तदेतदित्यस्य यदात्मस्वरूपं सुखमनिर्देश्यं परममप्राकृतं वाङ्मनसयोरगोचरमपि तद् ब्रह्मण एतत् प्रत्यक्षमेवेति मन्यन्त इति व्याख्यानं चापास्तम् । परमात्मस्वरूपसुखस्य प्रत्यक्षत्वायोगात् । जीवब्रह्माभेदस्तु बाधित इत्युक्तम् । नन्वेतदित्यस्यानुवादतया व्याख्याने तच्छब्दो व्यर्थः स्यादिति चेन्न । 'रूपं रूपं प्रतिरूपो बभूव' इति दूरे । 'एकं रूपम्' इति सन्निधाने च भगवद्रूपस्य प्रकृतत्वेन तथैव परामर्शार्थत्वात् । तदित्य-स्यापि ततत्वार्थकत्वेन परमसुखत्वादिवद् विधेयत्वाद्वा । नचैवं वाक्यभेद-प्रसङ्गः । अवान्तरवाक्यभेदस्यादोषत्वात् । महावाक्यभेदस्याभावात् । अन्यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र का गतिः ?

अस्तु वा त्वदुक्तरीत्या एतदित्यस्य विधेयत्वम् । तथाऽपि यद्ब्रह्मा-निर्देश्यं सुखमिति वदन्ति । तदेतत् प्रकृतपरमात्मनो रूपमिति वाक्ययोजनोप-पत्तिः । उक्तं च न्यायविवरणे । 'यद् ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत् स्वरूपमिति मन्यते' इति । विष्णोरेव परमं सुखं ज्ञानिसुखं तु तद्विप्रुट्कमित्यत्र प्रमाणमाह– **ब्रह्मादीनामिति** ॥ चशब्दोऽपिशब्दार्थतया कैमुत्यसूचकः । विष्णुसुखस्य विप्रुट्कमिति शेषः । ब्रह्मादीनां विष्णुसुखैकदेशसुखवत्त्वे तदभेदः स्यादित्यत आह– **प्रतिबिम्ब इति** ॥

किमु भाति न भाति वेत्येतत्प्रश्नवाक्यं कृत्वा तत्रोत्तरमिदं भाति न भाति चेति व्याचक्षते । तदसत् । उत्तरवाक्यस्याश्रुतस्यैव कल्प्यत्वात् । न च किमुशब्दपरित्यागेन तदेवोत्तरमिति वाच्यम् । आवृत्तिप्रसङ्गात् । मन्यन्त इति भानस्यैवोक्तत्वेन किमु भाति न भाति वेति प्रश्नस्यैवायोगाच्च । भाति न भातीति परिहारस्य व्याहतत्वाच्च । तस्मात् किमु भातीति प्रश्ने न भाति वेति परिहार इत्याश्रयणीयम् । नन्वेतदप्ययुक्तम् । मन्यन्त इति भानस्यैवोक्तत्वेन प्रश्नोत्तरयोरनुपपत्तेरित्यत आह– **सम्यग् भातीति** ॥ श्रुत्य-

नुसारादत्रापि किमुशब्दो योज्यः । सम्यक् साकल्येन । किमु सम्यग् भातीति प्रश्ने न भातीत्युत्तरमिति योज्यम् । अत एवोक्तं तत्वप्रकाशिकायाम्– 'न भातीत्युक्ताज्ञेयत्वं च' इति । इतिशब्दः श्रुत्यनुसाराद् वाशब्दार्थो वा । अव्ययानामनेकार्थत्वात् । तत् ज्ञानिसुखं कथं केन प्रकारेण विजानीयामिति व्याख्यानमसत् । यमस्य ज्ञानितया तत्सुखस्य प्रत्यक्षत्वेन तज्ज्ञानप्रार्थना-योगात् । तच्छब्देनाव्यवहितपरमसुखभगवद्रूपपरामर्शोपपत्तौ व्यवहितज्ञानिसुख-ग्रहणायोगाच्च । ननु तच्छब्देन भगवद्रूपपरामर्शेऽपि कथं विजानीयामिति नोपपद्यते । यमस्य भगवज्ज्ञानित्वात् । अन्यथा तदुपदेशासम्भवात् । नच कथं साकल्येन जानीयामित्यर्थः । अयोग्यप्रार्थनाप्रसङ्गादित्यत आह– **जानीयामिति ॥** कथमित्याक्षेपे । न कथमपीत्यर्थः । मन्यन्त इति ज्ञानोक्तौ तत्र भगवत्प्रसाद एव मुख्यहेतुर्नान्य इति यमः स्वानुभवेन समर्थयत्यनेनेति नासङ्गतिरिति भावः । तच्छब्दार्थोऽ**निर्देश्यं परमं सुखमिति ।** दिव्यमिति तल्लब्धार्थोक्तिः ॥

**(वि.खं)** नित्यं दोषैर्हीनत्वात् हम् । साररूपत्वात् सः । हं चासौ सश्चेति हंसः । शुचौ वायौ सीदतीति शुचिषत् । वरसुखरूपत्वाद् वसुः । अन्तरिक्षे सीदतीति अन्तरिक्षसत् । सर्वेन्द्रियादिस्थः सन्निन्द्रिविषयादिहोतृत्वाद् होता । वेद्यां पूज्यतया सीदतीति वेदिषत् । अतिशयितं थमन्नमस्यास्तीत्य-तिथिः । द्रोणकलशे स्थितः सोमो दुरोणशब्देनोच्यते । तत्र सीदतीति दुरोणसत् । नृषु स्थित इति नृषत् । वरेषु देवेषु सीदतीति वरसत् । ऋते वेदे सीदतीति ऋतसत् । व्योमाख्यप्रकृतौ सीदतीति व्योमसत् । अब्जाः अब्जेषु स्थितः । बहुवचनं बहुरूपत्वाभिप्रायेण । गोजाः पृथिवीजन्येषु स्थितः । विष्णुं प्रति गतत्वाद् ऋताः मुक्ताः तेषु नियामकतया जातत्वाद् ऋतजाः । अद्रिजेषु स्थितः अद्रिजाः । वेदैर्मुख्यतः प्रोक्तत्वाद् ऋतम् । पूर्णगुणत्वाद् बृहत् ॥ २ ॥

किञ्च यः प्राणरूपं वायुं मुख्यप्राणस्वरूपमूर्ध्वमुन्नयति । अपानं मुख्यवायुरूपमेव प्रत्यगस्यति अधः क्षिपति । मध्ये हृदयस्येति शेषः । आसीनं वामनं वामं सौन्दर्यं तत्प्रधानत्वात् स्त्रियो वामशब्दशब्दिताः । तन्नेता वामनस्तं विश्वे सर्वे देवा उपासते ॥ ३ ॥

कांश्चिद् गुणानुक्त्वा तूष्णीं स्थितं यमं पुनर्विशेषविवित्सया 'येयं प्रेते' इत्यनेन पृष्टमेव पृच्छति नचिकेताः– **अस्येति** ॥ शरीरस्थस्थूलशरीरस्थस्यातो विस्रंसमानस्य स्थूलशरीरं त्यजतो देहिनः सूक्ष्मशरीरवतो देहात् सूक्ष्मदेहाद् विशेषेण मुच्यमानस्य मुक्तस्यात्र मुक्तौ नियामकतया यत् परिशिष्यते तत् किं पुनर्विशेषतो ब्रूहीत्यर्थः । उत्तरमाह– **एतद्वै तदिति** ॥ ४ ॥

सकलजीवनहेतुप्राणापानप्रेरकत्वं भगवतः कथमित्यतस्तयोरपि न जीवनहेतुत्वमित्याह– **न प्राणेनेति** ॥ तर्हि केन जीवतीत्यत आह– **इतरेणेति** ॥ प्राणापानाभ्यां सकलजीवजडेभ्यो वेतरेण भगवतैव जीवन्ति सर्वे जीवाः । प्राणापानयोर्जीवनहेतुत्वाभावे प्रमाणान्तरविरोधः स्यादित्यत आह– **यस्मिन्निति** ॥ जीवनहेतू इति शेषः । ततश्च स्वातन्त्र्येण जीवनहेतुत्वं प्राङ् निषिद्धमिति भावः । यद्वा, न प्राणेनेत्यत्र स्वातन्त्र्येणेति शेषः । इतरेण त्वित्यत्र हेतुमाह– **यस्मिन्निति** ॥ ५ ॥

पुनरपि भगवत्स्वरूपं वक्ष्यामीति प्रतिजानीते यमः– **हन्तेति** ॥ हन्तेत्यास्वादने । अहं ते तुभ्यम् इदं गुह्यं गोप्यं सनातनं ब्रह्म प्रवक्ष्यामि । कथमात्मा परमात्मा म्रियत इति मरणं म्रियमाणं जीवं प्राप्य यथाऽऽत्मा नियामको भवति तथा प्रवक्ष्यामीत्यर्थः ॥ ६ ॥

एतदेवाऽह– **योनिमिति** ॥ अन्ये केचिद् देहिनो मृताः सन्तः शरीरत्वाय शरीरवत्त्वाय मनुष्यादियोनिं प्रपद्यन्ते । तन्नियामकतया भगवानपि योनिं प्रपद्यत इति भावः । अन्ये केचित् स्थाणुं अनुसंयन्ति । तन्नियामकतया भगवानपि । केषाञ्चिद् योनिप्राप्तिः केषाञ्चित् स्थाणुप्राप्तिरिति कुत इत्यत आह– **यथेति** ॥ तत्तज्ज्ञानकर्मानुसारेण तत्तत्प्राप्तिरिति भावः ॥ ७ ॥

म्रियमाणजीवनियामकस्य शोकमरणादिकं न शङ्कनीयमिति भावेन तस्य माहात्म्यमाह– **य इति ॥** यः पुरुषः पूर्णषड्गुणः पुरिशयो वा एषु जीवेषु लयादौ सुप्तेषु सत्सु तदा कामंकामं स्वेच्छानुसारेण रथपथादीन् निर्ममाणो जागर्ति तदेव शुक्रं शोकरहितं नत्वन्यत् तदेव ब्रह्म पूर्णगुणं तदेवामृतं नित्यमुक्तमुच्यते श्रुत्यादौ । तस्मिन् सर्वलोका आश्रिताः । तद् ब्रह्म कोऽपि नात्येति । यद्वा, 'इतरेण तु जीवन्ति' इत्यत्र ब्रह्मणः सर्वजीवेभ्यो भेद उक्तः । तमेव जीवेश्वरभेदं ज्ञापयितुं तदुभयस्वरूपं वक्ष्यामीति प्रतिजानीते– **हन्तेति ॥** अहं ते तुभ्यम् इदं गुह्यं सनातनं ब्रह्म प्रवक्ष्यामि । आत्मा जीवो मरणं प्राप्य यथा भवति तच्च वक्ष्यामि । जीवब्रह्मणोर्भेद-ज्ञापनायेत्यर्थः । तत्र यः कर्मफलभोक्ता स जीव इत्याह– **योनिमिति ॥** नहि जीवस्य योन्यादिगमनं ब्रह्म प्राप्नोति । अतस्तयोर्भेद इति भावः । पुनरपि जीवेश्वरस्वरूपमाह– **य इति ॥** अनेन सुप्तिमान् जीवः । यस्तेषु सुप्तेषु जागर्ति स विष्णुरिति तयोर्भेदः स्पष्टमुक्तः । शुक्रं शोकरहितम् । 'शुक्रं तच्छोकराहित्यात्' इति वचनात् । जीवस्तु शोकयुक्तः । तदेव ब्रह्म पूर्णं न जीवः । तदेव नित्यमुक्तं जीवस्त्वनेवंविधः । तस्मिन् सर्वे लोका आश्रिताः, नहि जीवे आश्रिताः । तदेव कोऽपि नात्येति । जीवं तु ब्रह्मैवात्येति । अतस्तयोर्भेदः सिद्ध इति भावः । पुनरपि प्रतिजानीते– **एतद्वै तदिति** ॥ ८ ॥

तमेव जीवेश्वरभेदं सदृष्टान्तमाह उत्तरमन्त्रद्वयेन– **अग्निरिति ॥** यथा यद्यपि अग्निर्देवतारूप एक एव भुवनं लोकं प्रविष्टः सन् पाकादिकर्ता नान्योऽस्ति । तथाऽप्यस्याग्नेर्देवस्य रूपं रूपं प्रत्यचेतनोऽग्निः प्रतिरूपः प्रतिबिम्बो बभूव । तथा स एक एव सर्वभूतानां जीवानामन्तरात्मा तन्नियामकः । तथाऽपि तस्य रूपं रूपं प्रति जीवः प्रतिबिम्बो बभूव । नच बिम्बप्रतिबिम्बत्वोक्त्याऽभेदः । बहिश्चासौ परमात्मनः नितरां भिन्न इति यावत् । परतन्त्रत्वादिति भावः ॥ ९ ॥

यथा यद्यपि वायुर्देवतारूप एक एव भुवनं प्रविष्टः सन् धारको नान्योऽस्ति । तथाऽप्यस्य वायोर्देवस्य रूपं रूपं प्रति अचेतनो वायुः प्रतिरूपो बभूव । इतरत् समानम् ।। १० ।।

ननु 'भूतान्तरात्मा' इति सर्वजीवान्तरत्वमुक्तम् । तथा सति जीववद् दुःखं स्यादित्यत आह– **सूर्य इति ।।** यथा सूर्यः सर्वलोकस्यान्तश्चक्षुरपि चक्षुरभिमानिदेवताऽपीति यावत् । चाक्षुषैर्बाह्यदोषैरचेतनरूपबाह्यचक्षुर्गतैर्दोषैर्न लिप्यते । तथा स एक एव सर्वभूतान्तरात्माऽपि लोकस्य दुःखेन न लिप्यते । ननु सर्वजीवात्मकत्वे च कथं दुःखेनालेप इत्यत उक्तं– **बाह्य इति ।।** जीवेभ्यो भिन्न इत्यर्थः । स्वतन्त्रत्वादिति भावः ।। ११ ।।

ननु भूतान्तरात्मा भूतदुःखेन न लिप्यत इति कथम् ? अन्यथा जीवस्यापि तदभावप्रसङ्गात् । नहि दह्यमानगेहान्तर्गतयोरन्यतरस्यैव दाह इति युक्तमिति । अतो जीवापेक्षयेश्वरस्य सामर्थ्यवैशेष्येणाग्निस्तम्भनवतो दाहाभाववद् दुःखालेपोपपत्तिरिति भावेनेश्वरसामर्थ्यमाह– **एक इत्यादिना ।।** यः सर्वभूतान्तरात्मा एकः समाभ्यधिकरहितः सर्वमस्य वशे वर्तत इति वशी । एकं स्वात्मरूपं बहुधा करोति । नियम्यानन्त्यात् । तमात्मनि तिष्ठतीति आत्मस्थं भगवन्तं ये धीरा अनुपश्यन्ति तेषामेव शाश्वतं नित्यमभिव्यक्तं सुखं नेतरेषाम् ।। १२ ।।

किञ्च यो नित्यानां नित्यः परमनित्यः । अनित्यत्वादिचतुर्विधनाशरहित इति यावत् । नित्यानां नित्यत्वप्रदो वा । चेतनानां चेतनः परमचेतनः । चेतनानां चेतनत्वप्रदो वा । यश्च स्वयमेक एव बहूनां पुरुषाणां कामान् काम्यान् विदधाति तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषामेव शाश्वती पुनरावृत्तिशून्या शान्तिर्मोक्षो नेतरेषाम् । 'मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयते' इति ब्राह्मे ।। १३ ।।

एवं यज्ज्ञानाच्छाश्वतसुखादिरूपो मोक्षस्तस्य कथं दुःखलेपः स्यादित्युक्तम् । इदानीं परमसुखरूपत्वाच्च न तत्प्राप्तिरिति भावेन प्रकृत-

भगवत्स्वरूपमेवाऽह– **तदिति** ॥ तद् 'रूपं रूपम्' इत्यत्र प्रकृतं एतत् 'एकं रूपम्' इति प्रकृतं भगवद्रूपमनिर्देश्यं साकल्येन निर्देष्टुमशक्यं परमं सुखमिति मन्यन्ते ज्ञानिनः । तज्ज्ञाने च भगवत्प्रसाद एव मुख्यहेतुरिति स्वानुभवेन समर्थयते यमः– **कथमिति** ॥ अहं तदनिर्देश्यं परमं सुखं भगवद्रूपं तत्प्रसादमृते इदानीं कथं विजानीयाम् ? न कथमपि । अतो भगवत्प्रसाद एव तत्र हेतुरिति भावः । भगवत्प्रसादादपि किं साकल्येन तज्ज्ञानं भवतीति नचिकेताः पृच्छति– **किमु भातीति** ॥ किं सम्यगिति शेषः । उत्तरमाह–**न भाति वेति** ॥ सम्यङ् न भात्येवेत्यर्थः ॥ १४ ॥

तत् कुत इत्यतस्तस्य सूर्याद्यप्रकाश्यत्वादित्याह– **न तत्रेति** ॥ तत्र तत् । भाति भासयते । चन्द्रतारकमिति द्वन्द्वैकवद्भावः । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' इति स्मृतिः । न केवलं सूर्यादीनां भगवत्स्वरूपप्रकाशकत्वाभावः । किन्तु घटादिप्रकाशनेऽपि न स्वातन्त्र्यमित्याह– **तमेवेति** ॥ सर्वं सूर्यादितेजो भान्तं प्रकाशयन्तं तमेव भगवन्तमनुभाति प्रकाशते । सूर्यादिप्रकाशोऽपि भगवदधीन इति भावः । तथाहि स्मृतिः – 'यदादित्यगतं तेजो जगद् भासयते' इत्यादिका । तर्हि कस्य प्रकाशेनेदं सर्वं जगत् प्रकाशत इत्यत आह– **तस्येति** ॥ १५ ॥

**॥ इति द्वितीयाध्यायस्य द्वितीयावल्ली ॥**

—०—

## अथ द्वितीये तृतीया वल्ली

### (उपनिषत्)

*(जगद्वृक्षस्य भगवानेवाऽधारः)*

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद् वै तत् ॥१॥

यदिदं किञ्च जगत् सर्वं प्राणएजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति ॥ २ ॥

भयादस्याग्निस्तपति भयात् तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः ।
ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥

यथाऽऽदर्शे तथाऽऽत्मनि
यथा स्वप्ने तथा पितृलोके ।
यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके
छायातपयोरिव ब्रह्मलोके ॥ ५ ॥

## (भाष्यम्)

सर्वोच्चो भगवान् विष्णुर्मूलं भूमिवदस्य तु ।
जगदाख्यस्य वृक्षस्य शाखा देवास्ततोऽवमाः[१] ॥

वृक्षमूलं रमादेवी सोऽश्व [२]आशुगतेर्हरिः ।
तद्व्याप्तत्वात् तदन्नत्वादश्वत्थोऽयं प्रकीर्तितः ॥

[३]प्रवाहतस्त्वनादिश्च मुख्यतस्त्वमृतो हरिः ।
मुख्यामृतः स एवैको जगन्नित्यं प्रवाहतः ॥

[४]प्राणाख्ये तु हरौ सर्वमेजत्यस्माच्च निःसृतम् ।
'वज्रवद् भयदं चैव स्वधर्मस्यातिलङ्घने ॥

जीवे स्थितस्तु भगवान् दृश्यते ज्ञानदृष्टिभिः ।
आदर्शे मुखवत् सम्यङ् न तथा पितृलोकगः ॥

ततः किञ्चित् स्पष्टतया गान्धर्वे दृश्यते हरिः ।
नात्यातपे न च्छायायां यथैवाहनि दृश्यते ।
स्पष्टं तथा ब्रह्मलोके दृश्यते पुरुषोत्तमः' इति च ॥ * ॥

## (व्यासतीर्थीयम्)

अतृप्तत्वाद् भूयोऽपि भगवतोऽन्यानपि जगदाश्रयत्वादीन् गुणानाह– **ऊर्ध्वमूल इति** ॥ तदर्थाप्रतीतेर्व्याचष्टे– **सर्वोच्च इत्यादिना** ॥ भूमिवद्भूमिर्यथा वृक्षस्याऽश्रयः तथा जगतो भगवानपि मूलाश्रयः । जगद्वृक्षोऽश्वत्थ इति कस्मादुक्त इत्यत आह– **सोऽश्व इति** ॥ अश्वः अस्मिंस्तिष्ठतीति अश्वत्थः अश्वस्य थमन्नमश्वत्थ इत्यर्थद्वयमभिप्रेत्योक्तम्– **तद्व्याप्तत्वात्तदन्नत्वादिति** ॥ व्यक्तित एवानादिनित्यत्वप्रतीतिं निवारयन् सनातनपदं

---

१. 'ततोऽधमाः'
२. 'आशुगतो हरिः'
३. 'प्रवाहतश्चाऽदितश्च'
४. 'प्राणाख्ये तु गतौ'

व्याचष्टे– **प्रवाहत इति** ॥ चशब्दान्नित्य इत्यपि ग्राह्यम् । व्यक्तित एव सनातनत्वं कुतो न स्यादित्यत आह– **मुख्यत इति** ॥ 'मुख्यतस्त्वमृतो हरिः' इत्यनेन 'तदेवामृतम्' इति व्याख्यातं भवति । उक्तमेवावधारयितुमाह– **मुख्यामृत इत्यादिना** ॥ जगतो मुख्यामृतत्वे श्रुत्यादौ स एवैको मुख्यामृत इत्युक्तेर्जगत्प्रवाहत एव नित्यमित्यर्थः । 'यदिदं किञ्च' इत्यत्र तत्प्रसिद्धप्राण-वज्रार्थत्वप्रतीतेर्व्याचष्टे– **प्राणाख्य इति** ॥ निमित्तसप्तमीयम् । प्राणान्निमि-त्ताद् एजति चेष्टत इत्यर्थः । उद्यतवज्रवद् भयप्रदत्वं कुत इत्यत आह– **भयादिति** ॥ इन्द्रादयो वर्षादिस्वकार्ये धावन्ति बाल्येऽविलम्बेन ज्ञानमापादि-तवन्तं नचिकेतसं दृष्ट्वा विस्मितोऽन्योऽप्येवमेव कुर्यादित्याशयवांस्तथा-कर्तुः फलमाह– **इह चेदिति** ॥ विस्रसः विस्रंसनात् शरीरस्य पतनात् प्रागित्यर्थः । स्वर्गे वैकुण्ठादिषु चिन्मयशरीरित्वाय प्रकृतो बोधोपदेशः पुरुषा-पेक्षयाऽनेकप्रकार इत्याह– **यथाऽऽदर्श इत्यादिना** ॥ परीव सम्यगिव । सम्यगर्थप्रतीतेस्तद्वाक्यजातं व्याचष्टे– **जीवे स्थित इत्यादिना** ॥ पितृलोकगोऽपि यथा स्वप्ने तथा दृश्यते ॥

## (प्रकाशिका)

'ऊर्ध्वमूलः' इत्यत्र ऊर्ध्वः सर्वोत्तमो हरिः मूलं भूमिवदाधारो यस्य, ऊर्ध्वा प्रकृत्यभिमानिनी लक्ष्मीः वृक्षाधारालवालवदाधारो यस्य, ऊर्ध्वा उपादानतया कार्यप्रपञ्चादुत्कृष्टा गुणत्रयात्मिका प्रकृतिः वृक्षपादभूतमूलवदाधारो यस्यासौ ऊर्ध्वमूल इति त्रेधाऽपि विग्रहो ज्ञेयः । अवाक्शाखः अवागुक्तत्रितयाधस्तादेव विद्यमानानि ब्रह्मादिदेवैरभिमन्यमानानि महदहङ्कारादिचतुर्विंशतितत्त्वानि शाखा स्थूलशाखा यस्य सोऽवाक्शाखः । अवाक् ततोऽपि अवाक् ब्रह्माण्डान्तः मनुष्यपशुपक्ष्यादिशरीराख्याः अग्रशाखाश्च यस्य सोऽवाक्शाखः । तदेव मूलतया मूलीभूतं परब्रह्मैव शुक्रं शोकरहितम् । वृक्षोत्पत्तौ भूमिवदुत्पत्ति-शून्यत्वात्, वृक्षापाये अपायशून्यत्वात्, वृक्षवृद्धिह्रासे वृद्धिह्रासशून्यत्वाच्च वृक्ष-शाखाद्यभिमानिब्रह्मादिवच्छोकरहितमित्यर्थसङ्ग्रहाय शुक्रमित्युक्तम् ॥

'आदर्शे मुखवत् सम्यङ् न तथा पितृलोकगः' इति वदतोऽयमभिसन्धिः –पितृलोकगो भगवान् यथा बहुधा सम्यग् दृश्यते तथाऽऽत्मनि मनुष्यरूपस्थे जीवे न दृश्यते । किन्तु आदर्शे मुखवत् स्वात्मन्येव दृश्यते । यद्वा, मनुष्यलोकस्थैरादर्शे मुखमिव आत्मनि स्वस्मिन्नेव बिम्बभूतः परमात्मा यथा दृश्यते तथा पितृलोके न । किन्तु स्वप्न इव बहुधा दृश्यत इति । 'यथाऽप्सु परीव' इत्यत्र यथाऽप्सु प्रतिबिम्बिताः सूर्यचन्द्रादयः परीव परितः प्रकाशवन्त इव ददृशे सम्यक् परितश्च दृश्यन्ते तथा गन्धर्वलोकेऽपीत्यर्थः । छाया-तपयोः ईषच्छायासहितातपे वस्तु यथाऽतिस्पष्टं दृश्यते तथा ब्रह्मलोकेऽपीति भावः । केवलं छायायां चेन्न स्पष्टं दृश्यते । केवलमातपे चेदपि नयनघातान्न स्पष्टं दृश्यते । सूर्यातपशबलितवृक्षादिच्छायायां तु रेखोपरेखासहितया सम्यग् दृश्यत इति भावेनोक्तम्– **नात्यातप इति** ॥

## (वेदशीयम्)

पुनरपि भगवन्माहात्म्यमाह– **ऊर्ध्वमूल इत्यादिना** ॥ तदन्यथाप्रतीति-निरासाय प्रमाणेनैव व्याचक्षाणस्तावदूर्ध्वमूल इत्येतद् व्याचष्टे– **सर्वोच्च इति** ॥ ऊर्ध्वशब्दार्थः– **सर्वोच्च इति** ॥ उच्च ऊर्ध्व उच्यते । सर्वेत्यस्य योग्यतया सम्बन्धः । वृक्षमूलवत् मूलत्वेऽन्याश्रयत्वशङ्का स्यादित्यतो भूमिव-दित्युक्तम् । एषोऽश्वत्थ इति प्रसिद्धाश्वत्थ उच्यत इति प्रतीतिनिरासाय जगदाख्यस्येत्युक्तम् । 'अवाक्शाखः' इत्येतद् व्याचष्टे– **शाखा इति** ॥ यदि भूमिरिव विष्णुर्मूलं तर्हि वृक्षमूलं किमित्यत आह–**वृक्षमूलमिति** ॥ अनेनोर्ध्वमूल इत्येतत् प्रकारान्तरेण व्याख्यातम् । ननु वृक्षमात्रसाम्यमभिदधता अश्वत्थत्वं कथमस्योच्यत इत्यत आह– **स इति** ॥ आशुशब्दोपपदात् 'वा गतिगन्धनयोः' इत्यस्मात् कः । उपपदोकारलोप आकारस्य ह्रस्वत्वं छान्द-समिति भावः । अस्तु हरिरश्वनामकः, किं तत इत्यत आह– **तद्व्याप्तत्वा-दिति** ॥ अश्वोऽस्मिन् तिष्ठतीत्यश्वत्थ इत्यर्थः । **तदन्नत्वादिति** ॥ अश्वस्य थमन्नमश्वत्थम् । 'अन्नं थम्' इति श्रुतेः । लिङ्गव्यत्यासः छान्दसः । जगत्स्व-

रूपस्यैवानादिनित्यत्वमुच्यत इति प्रतीतिनिरासाय सनातनपदं व्याचष्टे– **प्रवाहत इति ॥** तुशब्द एवार्थः । अश्वत्थत्वसमुच्चयार्थश्चशब्दः । नित्यत्व-समुच्चयार्थो वा । ननु मुख्यत एवानादिनित्यत्वं किं न स्यादित्याशङ्कां परिहर्तुं 'तदेवामृतमुच्यते' इति वाक्यं व्याचष्टे– **मुख्यत इति ॥** उच्यत इति शेषः । श्रुतावुच्यत इत्युक्तत्वात् । तुशब्दोऽवधारणार्थः । हरिरेवेति सम्बन्धः । अन्यस्याप्यमृतत्वात् 'तदेवामृतमुच्यते' इति कथमुक्तमित्यतो मुख्यत इति शेषोक्तिः । ननु हरिरेव मुख्यतोऽमृत इत्युक्तत्वेऽपि तस्य मुख्यामृतत्वं कुतः ? नह्युक्तमस्तीति नियमोऽस्तीत्यत आह– **मुख्येति ॥** यतो मुख्यतो हरिरेवामृत उच्यते श्रुत्यादावतः स एक एव मुख्यामृत इति व्याख्येयम् । उक्तमस्तीति नियमाभावेऽपि श्रुत्याद्युक्तमस्तीति नियमोऽस्तीति भावः । किं तत इत्यत आह– **जगदिति ॥** यतः स एक एव मुख्यामृतस्ततो जगत् प्रवाहत एव नित्यम् । न मुख्यतः । अवधारणविरोधादित्यर्थः ॥

'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्' इति वाक्ये मुख्य-प्राणस्य सर्वजगच्चेष्टकत्वादिकमुच्यत इत्यसत् । अस्य पितृसौमनस्यादित्रया-णामेव प्रश्ने तदनुपन्यासेन मुख्यप्राणकथनस्यासङ्गतत्वात् । अत एव 'महद्भयम्' इत्युत्तरवाक्ये वज्रशब्दादुद्यतत्वलिङ्गाच्चेन्द्रायुधमेवोच्यते इत्यप्य-युक्तमिति भावेन तद्वाक्यद्वयं व्याचष्टे–**प्राणाख्य इति ॥** निमित्तसप्तमीयम् । तुशब्दोऽवधारणार्थः । नतु मुख्यप्राण इत्यर्थः । चशब्दोऽप्यवधारणार्थः । निःसृतं चेति वा चशब्दसम्बन्धः । अस्मादिति श्रुतौ शेषोक्तिः । 'वज्र-वद्भयदम्' इत्यनेन वज्रशब्दो गौण्या वृत्त्या विष्णावपि सावकाश इत्युक्तं भवति । अत एव श्रुतौ 'महद्भयम्' इत्यनेन वज्रशब्दप्रवृत्तिनिमित्तगुण-योगो दर्शितः । सूत्रभाष्ये तु 'वर्जनाद् वज्रमुच्यते' इति वज्रशब्दो यौगिक इत्युक्तम् । स्वधर्मस्येत्यादिशेषोक्तिः । चशब्देनोद्यमित्वेनोद्यतं चेति ग्राह्यम् । भयदमित्यस्य 'ये विदुरमृतास्ते भवन्ति' इति श्रुत्या सम्बन्धः । अनेन प्रसिद्ध-वज्रज्ञानान्मोक्षायोगेन न तत्परत्वमुपपन्नमित्युक्तं भवति । यद्वा, 'वज्रवद्भयदम्'

इत्यनेन श्रुतौ महद्भयमित्युक्तभयप्रदत्वे वज्रमुद्यतमिति लुप्तोपमोच्यत इति व्याख्यातमिति प्रतिभाति । अस्मिन् पक्षे वज्रमुद्यतमित्येतत् प्रसिद्धवज्रपरमेव । तथाऽपि वाक्यस्य भगवत्परत्वाविरोधात् । यद्यपि तत्वप्रकाशिकायां 'कम्पनात्' (ब्र.सू.१-३-३९) इति सूत्रभाष्याद्यनुरोधेन 'यदिदं किञ्च' इत्यादि 'अमृतास्ते भवन्ति' इत्यन्तमेकं वाक्यं कृत्वा व्याख्यातम् । तथाऽपि व्याख्यानान्तरमेतदित्यविरोधः । 'यथाऽऽदर्शे तथाऽऽत्मनि' इत्येतदन्यथाप्रतीतेः किञ्चिदध्याहारेण व्याचष्टे–**जीव इति ॥** आत्मनीत्यस्यार्थः–**जीव इति ॥** स्थितो भगवानिति शेषोक्तिः । सम्यग् दृश्यत इति सम्बन्धः । अनेन श्रुतौ परिदृश्यत इत्यस्यैव पूर्वत्रापि सम्बन्ध इत्युक्तं भवति । अनुपलम्भबाधपरिहाराय ज्ञानदृष्टिभिरित्युक्तम् । ऋषिभिरित्यर्थः । 'ऋषयोऽन्तःप्रकाशाः' इति श्रुतेः । मुखवदित्युक्त्या श्रुतौ मुखमिति शेष इति सूचितम् । 'यथा स्वप्ने तथा पितृलोके' इत्यस्य तात्पर्यमाह– **न तथेति ॥** अत एव यथा स्वप्ने इति दृष्टान्तः । स्वाप्नपदार्थस्याऽदर्शस्थमुखवत् स्पष्टमप्रतिभानादिति भावः । न तथा सम्यग् दृश्यत इत्यनेन श्रुतौ दृश्यत इत्यस्यैवात्र सम्बन्ध इति सूचितम् । 'यथाऽप्सु परीव दृश्यते' इत्येतद् व्याचष्टे– **तत इति ॥** अनेन इवशब्दोऽल्पार्थ इत्युक्तं भवति । अत एवाप्स्विति दृष्टान्तः । वारिस्थप्रतिबिम्बस्य स्वाप्नपदार्थापेक्षया स्पष्टत्वात् । आदर्शमुखापेक्षया चास्पष्टत्वात् । गन्धर्वलोके स्थित इति शेषोक्तिः । उत्तमगन्धर्वापेक्षयैतत् । तेन पित्रपेक्षया गन्धर्वाणां नीचत्वोक्त्या न विरोधः । छायातपयोरिति तयोरेवोपादानाभिप्रायं वदंस्तद्वाक्यं व्याचष्टे–**नात्यातप इति ॥** अत्यातपे वस्तु स्पष्टं न दृश्यते । तेन दृष्टिप्रतिहतेः । नाप्यतिच्छायायाम् । विषयसंस्कारकालोकाभावात् । किन्तु यथैवाहनि च्छायातपयोः स्पष्टं दृश्यत इत्यर्थः ॥

**(वि.खं)** एष जगद्वृक्ष ऊर्ध्वमूलः ऊर्ध्वः सर्वोच्चो विष्णुर्मूलं भूमिवद् यस्य स ऊर्ध्वमूलः । ऊर्ध्वा ब्रह्मादिसर्वोच्चा रमा मूलं वृक्षमूलवद् यस्य स ऊर्ध्वमूलः । अवाक्शाखः अवाक् ततोऽवमा देवाः शाखा यस्य

सोऽवाक्शाखः । अश्वत्थः आशुगमनादश्वनामको हरिस्तद्व्याप्तत्वात् तदन्नत्वाद् वाऽश्वत्थः । सनातनः प्रवाहतोऽनादिनित्यः । जगन्मूलभूतभगवन्माहात्म्यमेवाऽह- **तदेवेति** ॥ व्याख्यातम् । एतद्वै तत् ॥ १ ॥

यदिदं किञ्च तत् सर्वं जगत् प्राणाख्ये हरौ एजति कम्पते । तस्मादेव निःसृतम् । एतत् ब्रह्मोद्यतं वज्रं तदुपपादनायोक्तं महद् भयमिति उद्यतवज्रवन्महाभयप्रदम् । स्वधर्मातिलङ्घन इति शेषः । ये विदुस्ते मुक्ता भवन्ति ॥ २ ॥

भयप्रदत्वमेव दर्शयति- **भयादिति** ॥ इन्द्रश्च वर्षति । वायुश्च पवते ॥ ३ ॥

एतद् भगवद्वेदनं मनुष्यजन्मप्राप्तावेव सम्पादनीयमन्यत्रालाभादिति भावेन तस्य फलमाह- **इह चेदिति** ॥ यदीह मनुष्यजन्मनि शरीरस्य विस्रसो विस्रंसनात् प्राग् बोद्धुं भगवत्तत्वादिकं ज्ञातुमशकत् समर्थो जातस्तर्हि स्वर्गेषु स्वरूपभूतरमणज्ञानात्मकेषु वैकुण्ठानन्तासनश्वेतद्वीपेषु शरीरत्वाय चिन्मयशरीरत्वाय कल्पते समर्थो भवति । अतः शरीरपातात् पूर्वमेव भगवज्ज्ञानाय यत्नः कार्य इति भावः ॥ ४ ॥

बोद्धुमित्युक्तो बोधो न सर्वेषामेकप्रकार इति भावेनाऽह- **यथेति** ॥ परिदृश्यत इति वक्ष्यमाणमत्रापि सम्बद्ध्यते । यथाऽऽदर्शे मुखं परिदृश्यते सम्यग् दृश्यते तथाऽत्मनि स्थितो भगवान् ज्ञानदृष्टिभिर्ऋषिभिः परिदृश्यते सम्यग् दृश्यत इत्यर्थः । यथा स्वप्ने स्वप्नावस्थायां स्थितः पदार्थो दृश्यते तथा पितृलोके स्थितो भगवान् दृश्यते । पूर्वं परिदृश्यत इत्यस्याऽकर्षणमत्र तु दृश्यत इत्यस्यैव । तेन ऋषिज्ञानात् पितृज्ञानस्यासम्यक्त्वं लभ्यते । अत एव यथा स्वप्न इति दृष्टान्तोक्तिः । स्वाप्नपदार्थस्याऽदर्शस्थमुखवत् स्पष्टत्वाभावात् । यथाऽप्सु स्थितः पदार्थः परीव दृश्यते स्वाप्नपदार्थात् किञ्चित् स्पष्टतया दृश्यते, तथा गन्धर्वलोके स्थितो भगवान् परीव दृश्यते ।

इत्यनेन श्रुतौ महद्भयमित्युक्तभयप्रदत्वे वज्रमुद्यतमिति लुप्तोपमोच्यत इति व्याख्यातमिति प्रतिभाति । अस्मिन् पक्षे वज्रमुद्यतमित्येतत् प्रसिद्धवज्रपरमेव । तथाऽपि वाक्यस्य भगवत्परत्वाविरोधात् । यद्यपि तत्वप्रकाशिकायां 'कम्पनात्' (ब्र.सू.१-३-३९) इति सूत्रभाष्याद्यनुरोधेन 'यदिदं किञ्च' इत्यादि 'अमृतास्ते भवन्ति' इत्यन्तमेकं वाक्यं कृत्वा व्याख्यातम् । तथाऽपि व्याख्यानान्तरमेतदित्यविरोधः । 'यथाऽऽदर्शे तथाऽऽत्मनि' इत्येतदन्यथाप्रतीतेः किञ्चिदध्याहारेण व्याचष्टे–**जीव इति ॥** आत्मनीत्यस्यार्थः–**जीव इति ॥** स्थितो भगवानिति शेषोक्तिः । सम्यग् दृश्यत इति सम्बन्धः । अनेन श्रुतौ परिदृश्यत इत्यस्यैव पूर्वत्रापि सम्बन्ध इत्युक्तं भवति । अनुपलम्भबाधपरिहाराय ज्ञानदृष्टिभिरित्युक्तम् । ऋषिभिरित्यर्थः । 'ऋषयोऽन्तःप्रकाशाः' इति श्रुतेः । मुखवदित्युक्त्या श्रुतौ मुखमिति शेष इति सूचितम् । 'यथा स्वप्ने तथा पितृलोके' इत्यस्य तात्पर्यमाह– **न तथेति ॥** अत एव यथा स्वप्ने इति दृष्टान्तः । स्वाप्नपदार्थस्याऽदर्शस्थमुखवत् स्पष्टमप्रतिभानादिति भावः । न तथा सम्यग् दृश्यत इत्यनेन श्रुतौ दृश्यत इत्यस्यैवात्र सम्बन्ध इति सूचितम् । 'यथाऽप्सु परीव दृश्यते' इत्येतद् व्याचष्टे– **तत इति ॥** अनेन इवशब्दोऽल्पार्थ इत्युक्तं भवति । अत एवाप्स्विति दृष्टान्तः । वारिस्थप्रतिबिम्बस्य स्वाप्नपदार्थापेक्षया स्पष्टत्वात् । आदर्शमुखापेक्षया चास्पष्टत्वात् । गन्धर्वलोके स्थित इति शेषोक्तिः । उत्तमगन्धर्वापेक्षयैतत् । तेन पित्रपेक्षया गन्धर्वाणां नीचत्वोक्त्या न विरोधः । छायातपयोरिति तयोरेवोपादानाभिप्रायं वदंस्तद्वाक्यं व्याचष्टे–**नात्यातप इति ॥** अत्यातपे वस्तु स्पष्टं न दृश्यते । तेन दृष्टिप्रतिहतेः । नाप्यतिच्छायायाम् । विषयसंस्कारकालोकाभावात् । किन्तु यथैवाहनि च्छायातपयोः स्पष्टं दृश्यत इत्यर्थः ॥

**(वे.खं)** एष जगद्वृक्ष ऊर्ध्वमूलः ऊर्ध्वः सर्वोच्चो विष्णुर्मूलं भूमिवद् यस्य स ऊर्ध्वमूलः । ऊर्ध्वा ब्रह्मादिसर्वोच्चा रमा मूलं वृक्षमूलवद् यस्य स ऊर्ध्वमूलः । अवाक्शाखः अवाक् ततोऽवमा देवाः शाखा यस्य

सोऽवाक्शाखः। अश्वत्थः आशुगमनादश्वनामको हरिस्तद्व्याप्तत्वात् तदन्नत्वाद् वाऽश्वत्थः । सनातनः प्रवाहतोऽनादिनित्यः । जगन्मूलभूतभगवन्माहात्म्य-मेवाऽह– **तदेवेति** ॥ व्याख्यातम् । एतद्वै तत् ॥ १ ॥

यदिदं किञ्च तत् सर्वं जगत् प्राणाख्ये हरौ एजति कम्पते । तस्मादेव निःसृतम् । एतत् ब्रह्मोद्यतं वज्रं तदुपपादनायोक्तं महद् भयमिति उद्यतवज्रवन्महाभयप्रदम् । स्वधर्मातिलङ्घन इति शेषः । ये विदुस्ते मुक्ता भवन्ति ॥ २ ॥

भयप्रदत्वमेव दर्शयति– **भयादिति** ॥ इन्द्रश्च वर्षति । वायुश्च पवते ॥ ३ ॥

एतद् भगवद्वेदनं मनुष्यजन्मप्राप्तावेव सम्पादनीयमन्यत्रालाभादिति भावेन तस्य फलमाह– **इह चेदिति** ॥ यदीह मनुष्यजन्मनि शरीरस्य विस्रसो विस्रंसनात् प्राग् बोद्धुं भगवत्तत्वादिकं ज्ञातुमशकत् समर्थो जातस्तर्हि स्वर्गेषु स्वरूपभूतरमणज्ञानात्मकेषु वैकुण्ठानन्तासनश्वेतद्वीपेषु शरीरत्वाय चिन्मयशरीरत्वाय कल्पते समर्थो भवति । अतः शरीरपातात् पूर्वमेव भगवज्ज्ञानाय यत्नः कार्य इति भावः ॥ ४ ॥

बोद्धुमित्युक्तो बोधो न सर्वेषामेकप्रकार इति भावेनाऽह– **यथेति** ॥ परिदृश्यत इति वक्ष्यमाणमत्रापि सम्बद्ध्यते । यथाऽऽदर्शे मुखं परिदृश्यते सम्यग् दृश्यते तथाऽत्मनि स्थितो भगवान् ज्ञानदृष्टिभिर्ऋषिभिः परिदृश्यते सम्यग् दृश्यत इत्यर्थः । यथा स्वप्ने स्वप्नावस्थायां स्थितः पदार्थो दृश्यते तथा पितृलोके स्थितो भगवान् दृश्यते । पूर्वं परिदृश्यत इत्यस्याऽकर्षणमत्र तु दृश्यत इत्यस्यैव । तेन ऋषिज्ञानात् पितृज्ञानस्यासम्यक्त्वं लभ्यते । अत एव यथा स्वप्न इति दृष्टान्तोक्तिः । स्वाप्नपदार्थस्याऽदर्शस्थमुखवत् स्पष्टत्वाभावात् । यथाऽप्सु स्थितः पदार्थः परीव दृश्यते स्वाप्नपदार्थात् किञ्चित् स्पष्टतया दृश्यते, तथा गन्धर्वलोके स्थितो भगवान् परीव दृश्यते ।

ततः किञ्चित् स्पष्टतया दृश्यते । छायातपयोरिव नात्यातपेन च्छायायां किन्त्वहनि च्छायातपयोर्विद्यमानं वस्तु यथा स्पष्टं दृश्यते तथा ब्रह्मलोके स्थितः पुरुषोत्तमो दृश्यते ॥ ५ ॥

**(उपनिषत्)**

*(मोक्षसाधनदेवतातारतम्यनिरूपणम्)*

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।**
**पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥**

**इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।**
**सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥**

**अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।**
**तं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥**

*(श्रवणादिसहकृतमनसा भगवज्ज्ञानोत्पत्तिप्रतिपादनम्)*

**न सन्दृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चिदेनम् ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो**
**य एनं विदुरमृतास्ते भवन्ति ॥ ९ ॥**

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥**

*(योगनिरूपणम्)*

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥**

*(गुरूपदेशेनैव भगवज्ज्ञानम्)*

नैव वाचा न मनसा प्राप्तुꣳ शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

*(भगवदनुग्रहेणैव तज्ज्ञानम्)*

अस्तीत्येवोपलब्धव्यस्तत्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति ॥ १३ ॥

*(भगवद्विषयकविशिष्टज्ञानफलनिरूपणम्)*

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥

*(अविद्याहङ्कार-कर्मनाशात् कामनानाशः)*

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥

शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

**(भाष्यम्)**

पुनरिन्द्रियेभ्यः परं मन इत्यादि [1]देवतातारतम्यज्ञानपूर्वकं भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम् ॥

---

१. 'देवतानां तारतम्यज्ञानपूर्वकं'

ततः किञ्चित् स्पष्टतया दृश्यते । छायातपयोरिव नात्यातपेन च्छायायां किन्त्वहनि च्छायातपयोर्विद्यमानं वस्तु यथा स्पष्टं दृश्यते तथा ब्रह्मलोके स्थितः पुरुषोत्तमो दृश्यते ॥ ५ ॥

## (उपनिषत्)

*(मोक्षसाधनदेवतातारतम्यनिरूपणम्)*

इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
तं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥

*(श्रवणादिसहकृतमनसा भगवज्ज्ञानोत्पत्तिप्रतिपादनम्)*

न सन्दृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो
य एनं विदुरमृतास्ते भवन्ति ॥ ९ ॥

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥

*(योगनिरूपणम्)*

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥

*(गुरूपदेशेनैव भगवज्ज्ञानम्)*

नैव वाचा न मनसा प्राप्तुꣳ शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

*(भगवदनुग्रहेणैव तज्ज्ञानम्)*

अस्तीत्येवोपलब्धव्यस्तत्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति ॥ १३ ॥

*(भगवद्विषयकविशिष्टज्ञानफलनिरूपणम्)*

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥

*(अविद्याहङ्कार-कर्मनाशात् कामनानाशः)*

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥

शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥

**(भाष्यम्)**

पुनरिन्द्रियेभ्यः परं मन इत्यादि [1]देवतातारतम्यज्ञानपूर्वकं भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम् ॥

---

१. 'देवतानां तारतम्यज्ञानपूर्वकं'

तारतम्यपरिज्ञानपूर्वकं सर्वतो हरेः ।
आधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यते' इति च ॥ * ॥

[१]'प्रादुर्भावानृते विष्णुमिन्द्रियैर्नैव पश्यति ।
प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति ।
[२]तदैव मुच्यते योगी न दुष्टैरिन्द्रियैः क्वचित्' इति च ॥ * ॥

प्रभवाप्ययौ [३]प्रति हि योगः । भगवतः सकाशात् प्रभवाप्ययौ ॥ * ॥

अधिकः सतोऽयं भगवान् सर्वस्मादपि[४] केशवः ।
अस्तीतिनामकस्तस्माज्ज्ञातव्यः स तथैव च ।
अनाधिक्यं जानतां तु कथं स उपलभ्यते ॥ * ॥

प्रकृतेः पुरुषाणां च [५]तत्वं भावयति स्फुटम् ।
तत्वभावस्ततो विष्णुस्तत्प्रसादात्तु तस्य हि ।
आधिक्यं ज्ञायते [६]सत्तः प्रसादश्च तथाविदः ॥

अनादिकालादाधिक्यं सर्वस्माज्ज्ञानतो हरेः ।
पुनःपुनर्वृद्धिमेति तज्ज्ञानं हि भवेभवे ॥

येषामाधिक्यविज्ञानं नैव पूर्वं हरेर्भवेत् ।
तेषां पश्चाच्च नैव स्यादभिभूतं तु तत् पुनः ।
व्यञ्जकाद् व्यक्तिमभ्येति तस्मात् तज्ज्ञानमुत्तमम्' इति च ॥ * ॥

अन्तःकरणकामानां त्यागो व्यक्तिश्चिदात्मनाम् ।
कामानां तु तदा मुक्तो मृतिं [७]नैवाभियास्यति ॥

मिथ्याज्ञानग्रन्थिभिस्तु नितरां मुच्यते यदा ।
तदाऽमृतत्वमेवैति तदर्थं चानुशासनम् ॥ * ॥

---

१. 'प्रादुर्भावेष्वृते' ह. २. 'तदैव मुच्यते जीवः' ह. ३. 'प्रति योगः' ह. ४. 'सर्वस्मादेव केशवः' ५. 'तत्वं भ्रामयति' ह. ६. 'सत् तत्प्रसादश्च' ह. ७. 'नैवाथ यास्यति' ह.

शरीरभूतो विष्णोस्तु जीवस्तद्वशगो यतः।
अधिष्ठितश्च तेनैव विजानीयात् पृथक् ततः।
स्वाख्याच्छरीराज्जीवात्तु प्रवृहेद् विष्णुमव्ययम्' इति च ॥

'यस्याऽत्मा शरीरम्। य आत्मानमन्तरो यमयति' इति च। 'जनानां हृदये' इत्युक्तत्वाच्च जीवात् पृथग्घरिरिति सिद्धम् ॥

देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि।
जीवस्य स तु विज्ञेयो जीवाद् भेदेन मुक्तये' इति च ॥

## (व्यासतीर्थीयम्)

किं बोद्धुमशकच्चेत् तत्र स्वर्गलोके महीयत इत्यतो बोद्धव्यमाह– **इन्द्रियाणामित्यादिना** ॥ इन्द्रियाणां पृथग्भावं वैचित्र्यं तारतम्यमित्यर्थः। उदयास्तमयौ उत्पत्तिविनाशौ। पृथगुत्पद्यमानानां सत्तादि ज्ञात्वा। ननु कथमिन्द्रियादीनां पृथग्भावादिज्ञानाच्छोकत्यागः? तस्या भगवज्ज्ञानत्वादित्यतस्तद्वाक्याभिप्रायं विशदमाह– **इन्द्रियेभ्य इत्यादिना** ॥ सत्वं बुद्धिः। अलिङ्गः प्राकृतभौतिकशरीररहितः। इन्द्रियादितारतम्यज्ञानपूर्वकं जगदुत्पत्तिनाशादिकर्तृत्वेन तं ज्ञात्वा मुच्यतेऽतो नोक्तदोषः। ननु 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना तारतम्यपूर्वं भगवदाधिक्यस्य ज्ञापितत्वाद् 'गुहां प्रविश्य तिष्ठन्तीं', 'यो भूतेभिर्व्यजायत' इत्यादिना जगत्सृष्ट्यादेर्भगवदधीनत्वस्य च ज्ञापितत्वात् पुनः 'इन्द्रियेभ्यः परं मनः' इत्यादिना भगवदाधिक्यज्ञापनं व्यर्थमिति शङ्कामभ्यासस्य प्रयोजनोक्त्या वारयति–**पुनरिति** ॥ ज्ञानपूर्वं ज्ञापनपूर्वम्। ज्ञाने ज्ञापने। तारतम्यज्ञापनपूर्वकं भगवतः सर्वाधिक्यज्ञापने। सर्वागमानां तात्पर्यमित्यस्य प्रमितत्वे भवेदिदं तात्पर्यकल्पनं तदेव कुत इत्यतस्तत्र प्रमाणमाह– **तारतम्येति** ॥ तं ज्ञात्वा मुच्यत इत्युक्तं मोक्षसाधनं भगवज्ज्ञानं न चक्षुरादिनाऽनायाससाध्यम्। किन्तु श्रवणाद्युपोद्बलितमनसैवेत्याह– **न सन्दृश इति** ॥ सन्दृशे सम्यग् ज्ञानायास्य रूपं न तिष्ठति।

तदेव विशदयति–**न चक्षुषेति**॥ अन्यैरपीन्द्रियैरेनं न गोचरयतीति शेषः । चक्षुराद्यगोचरश्चेत् कस्य गोचर इत्यत आह– **हृदेति**॥ **हृदा** भक्तियुक्तेन मनसा । **मनीषा** मनीषया । ज्ञानरूपो वा भगवानभिक्लृप्तो विषयीकृतो भवतीत्यर्थः । चक्षुराद्यगोचरं भगवद्रूपमित्ययुक्तम् । मत्स्यादेश्चक्षुरादिगोचरत्वादित्यतस्तद्व्याचष्टे– **प्रादुर्भावानिति** ॥ ननु मा भून्मूलरूपज्ञानम् । चक्षुरादिजन्यावतारज्ञानेन मुक्तिर्भविष्यति । तथाच श्रवणादिवैयर्थ्यमित्यत आह– **प्रादुर्भावानपीति** ॥ इन्द्रियैर्दृष्ट्वेति शेषः । हृदा मनीषा मनसा हरिं पश्यतीत्युक्तम् । तत्राभ्यर्हितं साधनं किमित्यतः प्रत्याहारसिद्धं धारणादिरूपं ध्यानमेवेत्याह– **यदेति** ॥ ज्ञानानि ज्ञानकारणानि । **परमां गतिं** परमज्ञानसाधनम् ॥

ननु कथं धारणायाः परमगतिसाधनत्वम् ? ध्यानसमाधिलक्षणयोगस्यैव तत्त्वादित्यतः स्थिरधारणायाः ततोऽतिविशेषाभावादित्याह– **तामिति** ॥ अनतिविशेषत्वमेव विशदमाह– **अप्रमत्त इति** ॥ योगस्य विषयमाह–**योग इति** ॥ योगः प्रभवाप्ययौ हि इति सामानाधिकरण्यप्रतीतिमपेक्षितप्रक्षेपेण वारयति– **प्रभवेति** ॥ ननु जगतः प्रभवाप्ययध्यानं कथं योगः ? तस्येश्वरासम्बन्धित्वादिति शङ्कामपेक्षितपूरणेन वारयति– **भगवत इति** ॥ सकाशाद् भवन्ताविति पूरणीयम् । प्रति हि योग इति सम्बन्धः । 'न चक्षुषा पश्यति' इत्युपलक्षणत्वेनोक्तं विशदयति– **नैव वाचेति** ॥ तर्हि केनोपलभ्यते तदित्यतो व्यतिरेकेणाऽह– **अस्तीति** ॥ अस्तीति ब्रुवतो गुरोरन्यत्र तेन विनेत्यर्थः । गुरूपलभ्योऽपि भगवान् प्रसन्नेन स्वेनैवेत्याह– **अस्तीत्येवेति** ॥ उभयोस्तत्त्वभावेम तत्वभावनकर्त्रा प्रसन्नेन भगवतेति यावत् । अस्तीत्येवोपलब्धव्यो ज्ञातव्यः । परमात्मा अस्तीत्यनेन सन्मात्रमित्येव बोद्धव्य इत्यन्यथाप्रतीतिं निवारयन्नस्तीत्यादि व्याचष्टे–**अधिक इत्यादिना** ॥ अनाधिक्यं जानतां सकाशात् ॥

ननु तत्प्रसादादेवाऽधिक्यज्ञानं प्रसादश्चाऽधिक्यज्ञानादित्यन्योन्याश्रयतेत्यतो व्यक्तिभेदान्न दोष इत्याह– **अनादीति** ॥ नन्वनादिकालादाधिक्यं जानतस्तज्ज्ञानं भवेभवे पुनर्वृद्धिमेतीत्ययुक्तम् । अनादितस्तद्रहितानामपि पश्चाज्जायमानत्वादित्यत आह– **येषामिति** ॥ ननु कथमेतत् ? अस्मासु पश्चाद्भाविनस्तज्ज्ञानस्यानुभवसिद्धत्वादित्यत आह– **अभिभूतमिति** ॥ नन्वाधिक्यज्ञानाद् भवन् भगवत्प्रसादो न फलम् , किन्तु फलहेतुरतस्तत्फलं किमित्यतो मोक्ष इत्याह– **यदेति** ॥ तत्सर्वकामप्रहाणप्रतीतिं निवारयन् व्याचष्टे– **अन्तःकरणेति** ॥ हार्दकामत्यागश्च कदा भवतीत्याकाङ्क्षायां तत्कारणाविद्याहङ्कारकर्मणां हृदयग्रन्थीनां यदा प्रहाणिर्भवति तदेत्याह– **यदेति** ॥ तद्व्याचष्टे– **मिथ्येति** ॥ अनुशासनं निष्कामकर्मश्रवणमननध्यानकर्तव्यप्रतिपादकं शास्त्रम् । एवं मोक्षबोधिकां ब्रह्मविद्यां निरूप्य ज्ञानिनश्चरमदेहान्निष्क्रमणेऽवश्यं पूर्वं ध्येयं मार्गमाह– **शतमित्यादिना** ॥

## (प्रकाशिका)

'इन्द्रियाणां पृथग्भावम्' इत्यत्र इन्द्रियाणां दशेन्द्रियाभिमानिदेवानां पञ्चविधमनोरूपेन्द्रियाभिमानिदेवानां च पृथग्भावं पृथक्स्वभावं यद् यस्मादुदयास्तमयौ च मत्वा न शोचतीत्यर्थः । 'न सन्दृशे तिष्ठति' इत्यत्र सन्दृशे घटादिवदनायासेनैव सम्यग्ज्ञानाय । मनीषा मनसा मनीषाख्यमननसहितमनसा । मननायेच्छा मनीषेत्यर्थः । मत्स्यादिरूपाणां सर्वैर्दृश्यमानत्वान्न चक्षुषा पश्यतीति कथमिति चोद्यं बिम्बरूपदर्शनमेव दर्शनं मोक्षसाधनम्, तच्च चक्षुषा न भवतीति श्रुतेरभिसन्धिमुद्घाटयन् मत्स्यादिषु यद्दर्शनं तदपि भक्तिपूर्वकं दर्शनं चेत् न चक्षुर्मात्रेणभवति, इतरत्र दर्शनं मोक्षासाधनत्वात् न श्रुत्यभिप्रेतमिति भावेनाऽह– **प्रादुर्भावेष्विति** ॥ 'अवतिष्ठन्ते', अव बहिर्विषयान् त्यक्त्वा अन्तरेव भगवद्ध्यानानुकूलतया तिष्ठन्तीत्यर्थः। ष्ठा गतिनिवृत्ताविति धातुः । 'इन्द्रियधारणाम्' इन्द्रियाणां भगवति धारणामित्यर्थः । 'प्रभवाप्ययौ हि' इत्यत्र भगवतः सकाशात् प्रभावाप्ययौ भवत

इति योगः मनोयोग एव हि ध्यानं, न तु यस्य कस्यचिद् ध्यानमित्यर्थः । 'अधिकः सतोऽयम्' इति वदता सतः प्रपञ्चात् अः अधिको यः परमात्मा सोऽयम् 'अस्ति'इत्यर्थः सूचितः। अग्न्याहितादिवद् विशेषणस्योपरि निपातः । निरुक्तत्वात् सदिति प्रातिपदिकस्येकारागमे सत्यस्तीतीकारान्तं सुबन्तं पदमिति ज्ञेयम् ॥

'उभयोस्तत्त्वभावेन' इत्यत्र कावुभौ कश्च तयोस्तत्त्वभाव इत्यत आह– **प्रकृतेः पुरुषाणां चेति** ॥ 'हृदयस्येह ग्रन्थयः' इत्यत्र ऐक्यनिर्गुणत्वनिराकारत्वादिमिथ्याज्ञानग्रन्थयः ॥

## (वेदशीयम्)

ननु 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिना देवतातारतम्यपुरःसरं भगवत्सर्वोत्तमस्योक्तत्वात् पुनः 'इन्द्रियेभ्यः परं मनः' इत्यादि किमर्थमुच्यत इत्यत आह– **पुनरिति** ॥ ज्ञानपूर्वकं ज्ञापनपूर्वकम् । ज्ञाने ज्ञापने । 'सर्वव्यक्तिष्वभिव्यक्त्यै तात्पर्याधिक्यवित्तये । पुनर्वचनमुद्दिष्टं शतशोऽथ पृथक् पृथक्' इति वचनात् पुनर्वचनं महातात्पर्यज्ञापकमिति भावः । स्यादेतत् । यदि सर्ववेदवाक्यानां देवतातारतम्यज्ञापनपूर्वं भगवतः सर्वोत्तमत्वज्ञापने महातात्पर्यमित्येतदेव स्यात् । तदेव कुत इत्यतस्तत्र प्रमाणमाह– **तारतम्येति** ॥ 'न सन्दृशे तिष्ठति रूपमस्य' इति भगवद्रूपस्येन्द्रियागोचरत्वमुच्यते । तदयुक्तम् । मत्स्यादेश्चक्षुरादिगोचरत्वादित्यतस्तदभिप्रायं प्रमाणेनाऽह– **प्रादुर्भावानिति** ॥ तर्हि चक्षुरादिजन्यमत्स्याद्यवतारज्ञानेनैव मोक्षोपपत्तौ हृदेत्युक्तभक्त्यादिवैयर्थ्यं स्यात् । न च नावतारज्ञानं मोक्षसाधनं, किन्तु स्वहृदिस्थस्य वा व्याप्तस्य वा भगवतो ज्ञानमेवेति युक्तम् । 'दृष्ट्वैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा' इत्युक्तेरवतारज्ञानेनापि केषाञ्चिन्मोक्षसद्भावादित्यत आह– **प्रादुर्भावानिति** ॥ योगीत्यधिकारिविशेषपरम् । ज्ञानदृष्ट्या हृद्युपासनेनेत्यर्थः । हृद्युपासाजन्यापरोक्षज्ञानेनेति वाऽर्थः । यदा पश्यति विषयीकरोतीति

व्याख्येयम् । उक्तं च 'येषां बहिरुपासनेन मोक्षः तेषामपि हृद्युपासनं किञ्चित्कार्यमेव' इति । अनेन हृदा मनीषेत्यादेस्तात्पर्यमुक्तम् । यथा चैतत् तथा वक्ष्यते । एवकारव्यावर्त्यमाह– **नेति** ॥ इन्द्रियैर्दृष्टैः प्रादुर्भावैः क्वापि न मुच्यत इत्यर्थः । दृष्टेरिति पाठे इन्द्रियैर्या दृष्टिर्जायते तस्याः सकाशान्न मुच्यत इत्यर्थः ॥

'योगो हि प्रभवाप्ययौ' इति सामानाधिकरण्येनोत्पत्तिविनाशावेव योग इति प्रतीयते । तदसत् । प्रपञ्चनिष्ठोत्पत्तिविनाशयोः मुमुक्षुनिष्ठयोगरूपत्वासम्भवात् । नचानेन योग उत्पत्तिविनाशधर्मक इत्युच्यत इति वाच्यम् । प्रभवाप्ययशब्दस्य तद्वति लक्षणाप्रसङ्गात् । अनुपयुक्तत्वेनावक्तव्यत्वाच्चेत्यतस्तद्व्याचष्टे– **प्रभवाप्ययाविति** ॥ प्रतियोगे द्वितीयेति भावः । ननु प्रपञ्चनिष्ठप्रभवाप्ययौ प्रति कथमिन्द्रियधारणारूपो योगः । भगवन्तं प्रत्येव तस्य कर्तव्यत्वादित्यत आह– **भगवत इति** ॥ अस्तित्वस्य सर्वसाधारणत्वादस्तीत्येवोपलब्धव्य इति कथमुच्यते । नच देहाद् व्यतिरिक्त आत्माऽस्ति नवेति पृष्टत्वेन तन्निरासायाऽत्मा देहाद्यतिरिक्तोऽस्तीत्येवोपलब्धव्य इत्युच्यत इति वाच्यम् । तृतीयप्रश्नस्योक्तरीत्या भगवन्मात्रपरत्वेन मरणानन्तरं जीवोऽस्ति नवेत्येवं परत्वाभावात् । देहाद्यतिरिक्त इत्यश्रुतकल्पनापाताच्चेति भावेन प्रमाणेनैव व्याचष्टे– **अधिक इति** ॥ अकार आधिक्यवाची । अस्तीत्येतत् सत्तायुक्तवस्तुवाचीति भावः । चशब्दो यस्मादित्यर्थे । यस्मादेवमस्तीतिनामकस्तस्मात् । ननु किमर्थमस्तीत्येवोपलब्धव्य इत्यतः एवं भगवतः सर्वाधिक्यज्ञानवत एव भगवद्याथात्म्यज्ञानसम्भवात् । अन्यस्य तदभावादित्याह– **अनाधिक्यमिति** ॥ जानतां सकाशात् । तेन 'अस्तीति ब्रुवतोऽन्यत्र' इत्येतद् व्याख्यातम् । 'तत्प्रभावेन चोभयोः' इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे– **प्रकृतेरिति** ॥ प्रकृतेः पुरुषाणां च' इत्यनेनोभयोरित्येतत् प्रकृतिपुरुषयोरिति व्याख्यातम् । तत्वं याथात्म्यं भावयति उत्पादयति । ननु यदि तत्वभावो विष्णुस्तदा तत्वभावेनास्तीत्येवोपलब्धव्य इति कथम् ? विष्णोः सर्वसाधारण्येन

सर्वेषामपि सदाऽऽधिक्यज्ञानप्रसङ्गादित्यतस्तदभिप्रायमाह–**तत्प्रसादादिति ॥** तुशब्दोऽवधारणार्थः । तेन चशब्दो व्याख्यातः । प्रसादश्च न सर्वसाधारण इति भावः । 'अस्तीत्येवोपलब्धस्य' इत्येतद् व्याचष्टे–**प्रसादश्चेति ॥** तथाविदो भगवदाधिक्यविदः । ननु पूर्वं प्रसादो भगवदाधिक्यज्ञानसाधनमित्युक्तम् । इदानीं ज्ञानं प्रसादसाधनमित्युच्यते । अतोऽन्योन्याश्रय इत्यतो व्यक्ति-भेदान्नान्योन्याश्रय इति भावेनाऽह– **अनादीति ॥** पुनःपुनर्वृद्धिमेति प्रसादद्वारा । नन्वनादिकालादारभ्येति किमर्थं वक्तव्यम् । पूर्वमाधिक्यज्ञान-रहितस्यापि भगवत्प्रसादात् पश्चात् तज्ज्ञानं भवतीत्येव किं न स्यादित्यत आह– **येषामिति ॥** पश्चाज्जायमानं प्रति भगवत्प्रसादो हेतुः । स च भगवदाधिक्यज्ञानसाध्य इति पूर्वमपि तत्सद्भावोऽपेक्षितः । एवं तदपि ज्ञानं भगवत्प्रसादसाध्यमित्यनादित्वमाश्रयणीयमिति भावः । ननु केषाञ्चिद् योग्यानां पूर्वं भगवदाधिक्यज्ञानानुपलम्भेऽपि पश्चात् तद्दर्शनात् कथमेतदित्यत आह– **अभिभूतमिति ॥**

अभिभवकृतोऽनुपलम्भ इति भावः । 'यदा सर्वे प्रमुच्यन्ते कामाः' इत्यत्र सर्वकामत्याग उच्यत इति प्रतीतिनिरासाय मन्त्रं प्रमाणेनैव व्याचष्टे– **अन्तःकरणेति ॥** अत एव श्रुतौ हृदि स्थिता इति विशेषणम् । अन्यथा तद् व्यर्थं स्यादिति भावः । ननु सर्वात्मना कामत्याग एव श्रुत्यर्थः किं न स्यात् । विशेषणस्य स्वरूपकथनपरत्वोपपत्तेरित्यत आह–**व्यक्तिरिति ॥** चिदात्मनां त्वित्यन्वयः । मुक्तौ चिदात्मककामव्यक्तिसद्भावात् सर्वकाम-त्यागस्य श्रुत्यर्थत्वे बाधः स्यादित्युक्त एव श्रुत्यर्थ इति भावः । 'अथ मर्त्योऽमृतो भवति' इत्येतद् व्याचष्टे– **तदेति ॥** अथशब्दार्थस्तदेति । अमृतो भवतीत्यस्यार्थः– **मृतिं नैवाभियास्यतीति ।** 'यदा सर्वे प्रभिद्यन्ते' इति मन्त्रं व्याचष्टे– **मिथ्याज्ञानेति ॥** अनुशासनं वेदान्तोपदेशः । एतावत् एतावन्मात्रम् । न त्वधिकमस्तीत्याशङ्कनीयमिति व्याख्यानमसत् । वेदान्तोपदेशस्यैतावन्मात्रत्वे इतरवेदान्तप्रवृत्तिवैयर्थ्यादिति भावेनैतावदनुशासनमित्येतद्

व्याचष्टे– **तदर्थमिति ॥** मिथ्याज्ञानग्रन्थिनिरासार्थम् अनुशासनम् । निष्काम-कर्मश्रवणमनननिदिध्यासनकर्तव्यताप्रतिपादकं शास्त्रमित्यर्थः ॥

**(वे.खं)** न केवलं भगवज्ज्ञानमेव मोक्षहेतुरपि तु देवतातारतम्यादिज्ञान-मपीत्याह– **इन्द्रियाणामिति ॥** पृथग् उत्पद्यमानानां विलक्षणतयोत्पद्यमा-नानां पृथक् व्यापारोत्पादकानां वा । इन्द्रियाणामिन्द्रियदेवानाम् । प्रागुक्तोप-लक्षणमेतत् । पृथग्भावमन्योन्यविलक्षणत्वं तारतम्यमिति यावत् । यत् यावुदयास्तमयौ उत्पत्तिविनाशौ तौ च मत्त्वा धीरो न शोचति ॥ ६ ॥

ननु कथमिन्द्रियादिदेवतातारतम्यादिज्ञानाच्छोकत्यागस्तस्याभगवज्ज्ञान-त्वादित्यतस्तदेव विशदयति– **इन्द्रियेभ्य इति ॥** इन्द्रियेभ्य इत्यनन्तरं परा ह्यर्था अर्थेभ्य इति ग्राह्यम् । सत्त्वं बुद्धिः । अधि अधिकः ॥ ७ ॥

पुरुषः एवेत्यन्वयः । अलिङ्गोऽनुमापकरहितः जडशरीररहितो वा । किं तत इत्यत आह– **तं ज्ञात्वेति ॥** मुच्यते संसारात् । अमृतत्वं स्वरूपा-विर्भावरूपं मोक्षम् । तारतम्यान्तर्गतत्वेन भगवज्ज्ञानमेव शोकत्यागहेतुरिति प्राग् विवक्षितम् । अतो न दोष इति भावः । एवमुदयास्तमयकर्तृत्वेन भगवज्ज्ञानमेव विवक्षितमित्यपि द्रष्टव्यम् ॥ ८ ॥

तं ज्ञात्वेत्युक्तभगवज्ज्ञानं न चक्षुरादिनाऽनायासेन भवति । किन्तु श्रवणा-द्युपोद्बलितमनसैवेत्याह– **नेति ॥** अस्य भगवतो रूपं मत्स्याद्यवतारा-तिरिक्तमन्तर्याम्यादिरूपं सन्दृशे सम्यग्दर्शनाय न तिष्ठति । अनायासेन दर्शनगोचरो न भवतीत्यर्थः । कुतः ? कोऽपि एनं भगवन्तं चक्षुषा न पश्यति । उपलक्षणमेतत् । कथं तर्हि तज्ज्ञानमित्यत आह– **हृदेति ॥** हृदा स्नेहेन स्नेहयुक्तेन मनीषा मनीषया श्रवणादिजनितज्ञानेन तत्सहकृतेन मनसा अभिक्लृप्तो विषयीकृतो ध्यातः सन्दृशे तिष्ठतीत्यर्थः । एवं ज्ञान फलमाह– **य एनमिति ॥** नचावतारोपासकानां भक्त्यादिवैयर्थ्यम् । यतोऽस्य रूपं रामकृष्णाद्यवताररूपं सन्दृशे न तिष्ठति । अनायासेन मोक्ष-

हेतुसाक्षात्कारविषयो न भवति । कुतः ? कोऽपि एनं मोक्षार्थं चक्षुषा न पश्यति । किन्तु हृदा मनीषा मनसाऽभिक्लृप्तः सन्दृशे तिष्ठतीत्यपि व्याख्येयम् ॥ ९ ॥

'हृदा मनीषा मनसाऽभिक्लृप्तः' इत्युक्तभक्त्यादावप्रमत्तेन भवितव्यमिति भावेनाप्रमत्तः कदा भवेदित्याकाङ्क्षायामिन्द्रियनियमनावस्थायामेवेत्याह– **यदेति** ॥ यदा ज्ञानानि ज्ञानसाधनानि पञ्चेन्द्रियाणि चक्षुरादीनि मनसा सहावतिष्ठन्ते । न विषयाभिद्रवणं कुर्वन्ति । बुद्धिश्च न स्वविषये विचेष्टते । अप्रमत्तस्तदा भवतीति योज्यम् । इन्द्रियधारणां स्तौति– **तामिति** ॥ तामिन्द्रियधारणां परमगतिसाधनत्वात् परमां गतिमाहुः ॥ १० ॥

ननु योगस्यैव परमगतित्वोक्तेः कथमेतदित्यत आह– **तां योगमिति** ॥ इन्द्रियधारणारूपोऽपि योगः कमुद्दिश्य कर्तव्य इत्यत आह–**योग इति** ॥ भगवतः सकाशाज्जगतः प्रभवाप्ययौ प्रति योगः जगत्प्रभवाप्ययकर्तारं भगवन्तं प्रति योगः कर्तव्य इत्येतत् प्रसिद्धमिति भावः ॥ ११ ॥

'न चक्षुषा पश्यति' इत्युक्तमुपलक्षणमिति भावेनाऽऽह– **नैवेति** ॥ प्राप्तुं ज्ञातुम् । तर्हि कथं तज्ज्ञानं भवतीत्यतः सद्गुरूपदेशेनैवेति भावेन व्यतिरेकमाह– **अस्तीति** ॥ भगवानस्ति सतोऽधिकत्वादस्तिनामक इति ब्रुवतो गुरोरन्यत्रान्येषां भगवदनाधिक्यं जानतां सकाशात् कथं तद्ब्रह्मोपलभ्यते । न कथमपि । भगवदाधिक्यं जानत एव गुरोरुपदेशेन ब्रह्मज्ञानम् । न तदनाधिक्यं जानत इति भावः । यद्वा, वागादिना कुतो न प्राप्तुं शक्यो भगवानित्यतो भगवदनाधिक्यज्ञानित्वाःदिति भावेनाऽऽह– **अस्तीति** ॥ अन्यत्रेत्येतत् नञर्थकं व्यत्यासेन योज्यम् । तेन नास्तीति ब्रुवत इति लभ्यते । भगवान् सतः सर्वस्माद् अधिको न भवतीति ज्ञानपुरस्सरं ब्रुवतः । कर्तरि षष्ठी । कथं तदुपलभ्यते ? न कथमपीत्यर्थः ॥ १२ ॥

यत एवमनाधिक्यं जानतां भगवज्ज्ञानाभावः अतो भगवानस्तीत्येव सतः सर्वस्मादधिक इत्येवोपलब्धव्यः । सा चोपलब्धिर्भगवत्प्रसादादेवेत्याह– **तत्वभावेनेति** ॥ उभयोः प्रकृतिपुरुषयोस्तत्त्वं भावयतीति तत्वभावो विष्णुस्तेन तत्वभावेन प्रसन्नेन विष्णुनैवास्तीत्युपलभ्यत इति शेषः । विष्णु-प्रसादसाध्यभगवदाधिक्यज्ञानवतः फलमाह– **अस्तीति** ॥ भगवान-स्तीत्येवोपलब्धस्योपलब्धिमतस्तत्वभावो विष्णुर्विशेषतः प्रसीदति ॥ १३ ॥

भगवद्विशेषप्रसादे सति किं भवतीत्यत आह– **यदेति** ॥ यद्वाऽस्य ज्ञानिनो भगवत्प्रसादाद् हृदि स्थिता अन्तःकरणाश्रिताः कामास्ते सर्वे प्रमुच्यन्ते सवासना उच्छिद्यन्ते । अथ तदा मर्त्यो मरणादिधर्मकोऽपि अमृतो भवति मृतिं नैवाभियास्यतीति । अत्र मुक्तौ ब्रह्म समश्नुते ब्रह्मविषयदर्शनादिभोगान् करोतीत्यर्थः ॥ १४ ॥

हार्दसर्वकामत्यागोऽपि तद्धेतुमिथ्याज्ञानग्रन्थिप्रभेद एव भवतीति भावेनाऽह– **यदेति** ॥ यद्वा भगवत्प्रसादेनापि किं भवति । मोक्ष इति चेन्न । अनेक-विषयकामानां प्रतिबन्धकानां सत्त्वेनामृतत्वायोगादित्यत आह– **यदेति** ॥ अथापि मिथ्याज्ञानाश्रयाविद्याहङ्कारकर्मणां प्रतिबन्धकानां सत्त्वात् कथं मोक्ष इत्यत आह– **यदेति** ॥ इह शरीरे वर्तमानाः हृदयस्य हृदयनस्य हृत्स्थस्य मिथ्याज्ञानस्य ग्रन्थयः आश्रयाः कारणीभूता इति यावत् । अविद्याहङ्कारकर्माणि यदा प्रभिद्यन्ते नितरां भिद्यन्ते । अथ तदैव मर्त्योऽऽमृतो भवति । मोक्षमेव स्तौति– **एतावदिति** ॥ एतदर्थमेव सर्ववेदानुशासनं प्रवृत्तम् । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इत्युक्तेरिति भावः ॥ १५ ॥

अमृतत्वप्राप्तिस्तु ब्रह्मनाड्योत्क्रमण एव भवति नान्यथेत्याह– **शत-मिति** ॥ शतं चैका हृदयस्य नाड्यः सन्ति । तासां मध्ये एका प्रधाना

नाडी हृदयमारभ्य मूर्धानमभिनिःसृता । तया नाड्या ऊर्ध्वमायन्नमृतत्वं मोक्षमेति । अन्या नाड्यो विष्वगुत्क्रमणे तादर्थ्यसप्तमी, लोकान्तरगमनार्थं भवन्तीत्यर्थः ॥ १६ ॥

## (उपनिषत्)

*(जीवेश्वरभेदज्ञानस्य मोक्षसाधनत्वविचारः)*

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानाँ हृदये सन्निविष्टः ।**
**तँ स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण।**
**तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥**

*(यमोपदिष्टविद्यया नचिकेतसः फलप्राप्तिकथनम्)*

**मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा**
**विद्यामेतां योगविधिं च कृत्स्नम् ।**
**ब्रह्म प्राप्तो विरजोऽभूद् विमृत्यु-**
**रन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥**

**इति द्वितीये तृतीया वल्ली**

**॥ इति श्रीकाठकोपनिषत् समाप्ता॥**

—०—

*(शान्तिमन्त्रः)*

**ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं**
**करवावहै । तेजस्वि नावधीतमस्तु । मा विद्विषावहै ।**
**ॐ शान्तिः शान्तिः शान्तिः ॥ १९ ॥**

—०—

## (भाष्यम्)

**संसारिशरीरेणाभेदो [1]वादिना केनापि नाङ्गीकृतः । नच लोकसिद्धः । जनानामिति भेदात् न जीवोऽङ्गुष्ठमात्रः । अतो [2]विष्णोर्जीवाद् भेद उक्तः । अतः सर्वोत्तमो विष्णुरिति सिद्धम् ॥ * ॥**

**नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।**
**यस्याहमाप्त आप्तेभ्यो यो म आप्ततमः सदा ॥ * ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**श्रीकाठकोपनिषद्भाष्यं समाप्तम् ॥**

—०—

## (व्यासतीर्थीयम्)

'अनन्यप्रोक्ते गतिरत्र नास्ति' इत्यादौ निरूपितं भेदज्ञानमेवापवर्गसाधन-मित्याह– **अङ्गुष्ठेति** ॥ तं जीवं देहाद् भेदेन विजानीयादित्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **शरीरभूत इति** ॥ जीवस्य शरीरतया भगवदधिष्ठितत्वं तद्वशत्वं च कुतः ? येन तयोर्भेदं प्रतीम इत्यत आह– **यस्येति** ॥ नन्वथापि शरीराज्जीवस्यैव भेद उच्यते न जीवाद् भगवतस्तज्ज्ञापकाभावादित्यत आह– **जनानामिति** ॥ चशब्देन 'यस्याऽत्मा शरीरम्' इत्युक्तं बाह्यं च ज्ञापकं समुच्चिनोति । नन्वत्र जीवस्यैव शरीराद् भेद उच्यते । भगवतोऽङ्गुष्ठ-मात्रत्वाभावादित्यत आह– **देहेति** ॥ अस्त्वत्रोच्यमानो भगवान् । तस्य शरीरादेव भेदोऽत्रोच्यते इत्यत आह– **संसारीति** ॥ अभेदो भगवत इति शेषः । येन संसारिशरीराद् भगवतो भेद उच्येतेति वाक्यशेषः । सत्यं भगवतः संसारिशरीरादभेदः केनापि वादिना नाङ्गीकृत इति लोकसिद्धोऽभेदः स्वाच्छरीरादिति निषिद्ध्यत इत्यत आह– **नचेति** ॥ भगवतः संसारिशरीराद-

---

१ 'वादिनाऽपि केनचिन्नाङ्गीकृतः ।' ह.

२. 'अतो जीवाद् भेद उक्तः।' ह.

भेद इति शेषः । भगवतो जीवाद् भेदे जनानां हृदये निविष्ट इत्युक्तामुपपत्तिं स्फुटयति– **जनानामिति** ।। जनानां हृदये निविष्ट इति षष्ठ्या निविष्टस्य भगवतो जीवाद् भेदप्रतीतेरित्यर्थः । इतोऽप्यत्र जीवो देहात् पृथगुच्यत इति नेत्याह– **न जीव इति** ।। 'बालाग्रशतभागस्य शतधा भेदितस्य च । भागो जीव इति ज्ञेयः सचाऽनन्त्याय कल्पते' इति श्रुतेर्न जीवोऽङ्गुष्ठमात्रः ।।

अवान्तरप्रमेयमुपसंहरति– **अत इति** ।। अतो जनानां हृदय इत्याद्युक्तोपपत्तेः । उक्तः 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्यत्र । मुमुक्षुश्चेद् भगवत उक्तान् शोकरहितत्वाद्यभावगुणान् मुक्तामुक्तप्रेरकत्वादिभावगुणांश्च जानीयादित्युक्तमर्थमुपलक्षणत्वेनावधारयन्नुपसंहरति– **तं विद्यादिति** ।। आदरार्थोऽभ्यासः । एवं वेदपुरुषो नचिकेतसे मृत्युप्रोक्तां ब्रह्मविद्यामनूद्य तन्निष्ठावतस्तस्य फलमाह– **मृत्युप्रोक्तामिति** ।। एवमन्यस्यापि तन्निष्ठस्य तत्फलमतिदिशति– **अन्योऽपीति** ।। अन्योऽप्यध्यात्मवित् सोऽप्येवमेवेति योज्यम् । उपनिषत्प्रतिपादितमर्थमुपसंहरति– **अतः सर्वोत्तम इति** ।। अतः प्राधान्येनाग्निष्टोमपूज्यत्वात् मुक्तामुक्तनियामकत्वाद् जगत्सृष्ट्यादिकर्तृत्वात् शोकादिसकलदोषराहित्याद् विष्णुरेव सर्वोत्तम इति सिद्धमित्यर्थः । मङ्गलावसानस्य प्रचयादिहेतुत्वादवसानेऽपि तदाचरणीयमिति द्योतयन् यत्प्रसादाद् यत्प्रीत्यै भाष्यमुपक्रम्य समापितवान् तमेवान्तेऽप्युपश्लोकयन् प्रणमति– **नम इति** ।। **प्रभविष्णवे** प्रभवनशीलायेत्यशेषमतिमङ्गलम् ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य काठकोपनिषद्भाष्यस्य टीका जयतीर्थपूज्यचरणशिष्यव्यासतीर्थविरचिता सम्पूर्णा ।।**

## (प्रकाशिका)

'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्यत्र योऽन्तरात्मा परमात्माऽङ्गुष्ठमात्रः सूक्ष्मजीवाङ्गुष्ठप्रमाणः सन् जनानां जीवानां हृदये सन्निविष्टः तं परमात्मानं स्वाच्छरीरात् शरीरस्थानिम्रात् स्वस्मान्मुञ्जादिषीकान् ततोऽप्यतिसूक्ष्मतया

क्रूरतया च स्वभावत एव विलक्षणानि तृणाग्राणीव प्रवृहेत् विभक्तं भावयेत् । स्वाच्छरीरात् स्वकीयदेहात् प्रवृहेद्विभक्तं भावयेदित्यर्थस्तु परमात्मनः जीवशरीराभेदस्य वैदिकैः कैरपि वादिभिरनङ्गीकारेणपरमात्मनः जीवशरीरस्य च भेदस्य स्वतः सिद्धत्वान्न पृथग्विधेय इति विदुषां परीक्षाक्षमत्वादुपेक्षणीय एव ॥

**॥ इति श्रीमद्वादिराजपूज्यचरणकृतकाठकोपनिषद्भाष्यटीका प्रकाशिका समाप्ता ॥**

## (वेदेशीयम्)

यदुक्तं तृतीयप्रश्नपरिहारौ भगवद्विषयाविति तदयुक्तम् । 'तं स्वात्' इति उपसंहारवाक्ये तं स्वाद् आत्मीयाच्छरीरात् प्रवृहेत् पृथक् कुर्यादित्युक्तत्वेन पूर्वमपि देहभिन्नात्मस्वरूपमेव प्रश्नपरिहारविषय इत्यङ्गीकारौचित्यादित्यतस्तत्प्रमाणेनैव व्याख्यातुं तावत् शरीरशब्दार्थमाह– **शरीरभूत इति** ॥ विष्णोर्भिन्नदेहाभावात् विष्णुभिन्नो जीवः कथं शरीरभूत इत्यत उक्तम्– **तद्वशग इति** ॥ यद्वा, विष्णोरभिमानाभावात् कथं तच्छरीरभूतो जीव इत्यत उक्तम्– **तद्वशग इति** ॥ प्रसिद्धशरीरवत् तद्वशगत्वादधिष्ठानत्वगुणयोगेनैव जीवः शरीरशब्दोक्त इति भावः । एवं शरीरशब्दार्थमुक्त्वा तद्वाक्यतात्पर्यमाह– **विजानीयादिति** ॥ **ततो** जीवात् । कथमिदं तात्पर्यमनेन लब्धमित्यतस्तद् व्याचष्टे– **स्वाख्यादिति** ॥ प्रवृहेदित्यस्य पृथक्करणार्थत्वादनादितः पृथग्भूतस्येदानीं पृथक्करणायोगात् पृथग् विजानीयादिति तात्पर्यमुक्तमिति भावः । जीवस्य भगवदधिष्ठितत्व-तद्वशत्वाभ्यां भगवच्छरीरत्वे श्रुतिं चाऽऽह– **यस्येति** ॥ 'य आत्मनि तिष्ठन्' इति पूर्ववाक्यमप्युदाहर्तव्यम् । आत्मा जीवः । 'एष त आत्माऽन्तर्याम्यमृतः' इत्युत्तरेणान्वयः । 'तं स्वाच्छरीरात् प्रवृहेत्' इत्यत्र जीवाद् भगवत एव भेदोऽभिधीयत इत्यत्र युक्तिं चाऽऽह– **जनानामिति** ॥ पूर्ववाक्ये जनानां हृदये सन्निविष्ट इति जनशब्दवाच्यजीवेभ्य-

स्तद्धृदयसंनिविष्टस्य भगवत एव भेदस्योक्तत्वादत्रापि जीवात् पृथग्घरिरित्ये-
वोच्यते । न तु प्रसिद्धशरीराज्जीवः पृथगिति सिद्धमिति भावः ॥

ननु जनानां हृदये सन्निविष्ट इत्युक्तत्वेऽपि कथं जीवाद् भगवतो भेदसिद्धिः । जीवस्यापि हृदयसन्निविष्टत्वोपपत्तेरिति चेन्न । जनानां हृदये सन्निविष्ट इति हि जीवस्वरूपभूतहृदयस्थत्वमुच्यते । 'जनशब्दः स्वतो जीवे क्वचिद् देहे च वर्तते' इति वचनेन जनशब्दस्य जीवदेहोभयपरत्वात् । नच तद् जीवस्योपपद्यते । जीवस्य देहहृदयस्थत्वेऽपि स्वहृदिस्थत्वाभावात् । नन्वेवं तर्हि अङ्गुष्ठमात्रत्वोक्तिविरोधः स्यात् । न हि जीवहृद्गतस्याङ्गुष्ठमात्रत्वं युज्यते । जीवस्यैवाणुत्वेनाङ्गुष्ठपरिमाणकत्वाभावादिति चेन्न । स्यादेवम् । यद्यत्र जीवहृद्गतस्य देहाङ्गुष्ठपरिणामकत्वमुच्यते । नचैवम् । किन्तु जीवाङ्गुष्ठपरिमाणकत्वमेव । अतो न विरोध इति भावेन तत्र प्रमाणमाह– **देहेति ॥** देहे हृदीति सम्बन्धः । जीवस्य हृदीत्यन्वयः । नन्वस्त्वस्मिन् वाक्ये भगवत एव भेदोऽभिधीयत इति । किन्तु स्वाच्छरीरादित्युक्तसंसारि-शरीरादेव । नतु जीवादिति किं न स्यात् । शरीरशब्दस्य शरीरे मुख्यत्वात् जीवे गौणत्वाच्च । नहि मुख्ये सम्भवत्यमुख्यार्थाङ्गीकारे कारणमस्तीत्यत आह– **संसारीति ॥** सत्यं शरीरशब्दः शरीरे मुख्य इति । तथाऽप्यत्र तदनङ्गीकारो युक्तः । संसारिशरीरेण भगवतोऽभेदस्य केनापि वादिनाऽनङ्गीकृतत्वेन तद्भेदप्रतिपादनस्याप्रसक्तप्रतिषेधत्वापातात् । अतो मुख्यार्थग्रहणे बाधकसद्भावादमुख्यार्थाङ्गीकारो युक्त इति भावः ॥

ननु वादिनाऽनङ्गीकृतोऽपि भगवतः संसारिशरीराभेदो लोकसिद्धो भव-त्येव । तथाहि । जीवे तावद् भगवदसाधारणधर्मस्य स्वातन्त्र्यादेरध्यासोऽ-स्ति । एवं च भगवतः संसारिशरीराभेदो लोकभ्रान्तिसिद्धस्तं स्वाच्छरीरादिति श्रुत्या निषिद्ध्यत इति किं न स्यादित्यत आह– **नचेति ॥** भगवतः संसारिशरीराभेद इति शेषः । कुत इत्यत आह– **जनानामिति ॥** सत्यमस्ति

भगवतः संसारिशरीराभेदो लोकसिद्धः । तथाऽपि नासावत्र निषिद्ध्यते । जनानां हृदय इति पूर्ववाक्य एव भगवतो जीवदेह-हृद्गतत्वोक्त्या संसारि-शरीरभेदस्योक्तत्वेन तन्निषेधस्य जातत्वात् । अत्रापि तन्निषेधे पुनरुक्त्यापातादिति भावः । अभ्युपेत्य चेदमुदितम् । जीवे भग-वद्धर्मस्वातन्त्र्याद्यध्याससद्भावेऽपि शरीराभेदाध्यासाभावस्यान्यत्रोक्तत्वेन भगवति संसारिशरीराभेदस्य लोकसिद्धत्वा-भावादिति मन्तव्यम् । भगवतः संसारिशरीराभेदो वादिनाऽङ्गीकृतोऽपि लोकसिद्धो निषिद्ध्यत इति किं न स्यादित्यत आह– **नचेति** ॥ भगवतो जीवाद् भेदे 'जनानां हृदये सन्निविष्टः' इत्युक्तामुपपत्तिं स्फुटयति– **जनानामिति** ॥ जनानां हृदये निविष्ट इति षष्ठ्या निविष्टस्य भगवतो जीवाद् भेदप्रतीतेरित्यर्थ इत्यप्याहुः । ननु माऽस्तु 'तं स्वात्' इत्यत्र भगवतः संसारिशरीराद् भेद उच्यत इति । तथाऽपि जीवस्यैव शरीराद् भेद उच्यत इति किं न स्यात् । जीवेश्वरशरीराभेदस्य चार्वाकादिभिरङ्गीकारात् । एवं च शरीरशब्दमुख्यार्थात्यागोऽपीति चेन्न । तं स्वादिति शब्देन पूर्वार्धप्रकृतस्यैव परामर्शात् । नच पूर्वार्धप्रकृतो जीवः । तत्राङ्गुष्ठमात्र इत्यङ्गुष्ठमात्रत्वोक्तेः । नच जीवे तद्युक्तम् । तस्य अणुपरिमाणत्वेन देहाङ्गुष्ठमितत्वस्य स्वाङ्गुष्ठमितत्वस्य चासम्भवादिति भावेनाऽह– **न जीव इति** ॥ सर्वगतस्यापि विष्णोरङ्गुष्ठमात्रत्वं 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' (ब्र.सू.१-३-२५)इति सूत्रकृतोपपा-दितमनुसन्धेयम् । 'तं स्वाच्छरीरात्' इति वाक्यव्याख्यानमुपसंहरति– **अत इति** ॥ उक्तरीत्याऽर्थान्तर-स्यासम्भवादित्यर्थः । 'तं स्वाच्छरीरात्' इत्यत्रेति शेषः । इदानीमशेषोप-निषदर्थमुपसंहरति– **अतः सर्वोत्तम इति** ॥ प्रागुक्तगुणजातस्य सर्वोत्तमत्वं विनाऽसम्भवादिति भावः ॥

**(वे.खं)** सर्वथा जीवेश्वरभेदज्ञानमेव मोक्षसाधनमिति भावेनाऽह– **अङ्गुष्ठमात्र इति** ॥ अङ्गुष्ठमात्रो जीवाङ्गुष्ठमितो देहाङ्गुष्ठमितो वा जनानां हृदये जीवस्वरूपहृदये बाह्यहृदये वा सदा सन्निविष्टो योऽन्तरात्मा । तं विष्णुं स्वात् स्वाख्यात् शरीरात् भगवद्वशत्वादिना शरीररूपाज्जीवाद् धैर्येण

प्रमाणाभासाचलितबुद्ध्या प्रवृहेत् पृथग् जानीयात् । किमिवेत्युच्यते । बाह्यान्मुञ्जादन्तस्थामैषीकामिवेति । कुतोऽयं जीवाद् भेदेन ज्ञेय इत्यतो विरुद्धधर्माधिकरणत्वादिति भावेनोपसंहरति– **तमिति** ॥ 'अध्यायान्ते द्विरुक्तिः स्याद् वेदे वा वैदिकेऽपि वा । विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे' इति वचनात् सर्वाध्यायार्थावधारणार्थाऽध्यायान्ते द्विरुक्तिः ॥ १७॥

एवं मृत्युप्रोक्तां विद्यां प्राप्तवता नचिकेतसा विद्याफलं लब्धमित्याह वेदपुरुषः ॥ **मृत्युप्रोक्तामिति** ॥ नाचिकेतो नचिकेता एव नाचिकेतो मृत्युप्रोक्तामेतां विद्याम् । कृत्स्नमिन्द्रियधारणादिरूपयोगविधिं च लब्ध्वा ब्रह्मप्राप्तौ विरजो निर्दुष्टो विमृत्युरभवत् । एवमन्यस्यापि तन्निष्ठस्य तत्फलमतिदिशति– **अन्योऽपीति** ॥ अन्योऽप्यधिकारी । अध्यात्मम् अधिकात्मभगवत्स्वरूपमेवमेव पूर्वोक्तप्रकारेणैव वित्सोऽपि ब्रह्म प्राप्तो विरजो विमृत्युर्भविष्यतीत्यर्थः ॥ १८ ॥

एवं यत्प्रसादाद् यत्प्रीत्यै चेदं भाष्यमुपक्रम्य समापितवांस्तमेव भगवन्तमन्तेऽपि स्तुतिनतिभ्यां प्रीणयति भगवानाचार्यः– **नम इति** ॥ प्रभविष्णवे प्रभवनशीलायेत्यशेषमतिमङ्गलम् ॥

गुरुस्थानन्दतीर्थार्यहृत्पङ्कजगतो हरिः ।
निर्दोषगुणसम्पूर्णः प्रीयतामिन्दिरापतिः ॥

प्रीतः स भगवान् विष्णुर्यद् दद्यात् फलमुत्तमम् ।
तत्सर्वं गुरवे दद्यान्न मह्यं किञ्चिदप्यृतम् ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य काठकोपनिषद्भाष्यस्य टीकायां श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायां पदार्थकौमुद्यां द्वितीयोऽध्यायः ॥ २ ॥**

—०—

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितभाष्यभूषिता

# षट्-प्रश्नोपनिषत्

श्रीमज्जयतीर्थभिक्षुविरचितटीकया,

श्रीवादिराजतीर्थविरचितप्रकाशिकया,

श्रीमङ्गालधर्माचार्यप्रणीतभाष्यटीकाविवरणेन च संवलिता

*(शान्तिमन्त्रः)*

हरिः ओ३म्

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितँय्यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## (उपनिषत्)

*(अथ प्रथमः प्रश्नः)*

**ओ३म् ।। सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाऽश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः एष ह वै तत् सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ।। १ ।।**

## (श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं भाष्यम्)

*(मङ्गलाचरणम्)*

**ओ३म् ।।नमो भगवते तस्मै प्राणादिप्रभविष्णवे ।**
**अमन्दानन्दसान्द्राय वासुदेवाय वेधसे ।। * ।।**

## (श्रीमज्जयतीर्थभिक्षुविरचिता टीका)

पान्तु नः पद्मनाभस्य श्रीपदाम्बुजरेणवः ।
कमलाकबरीभारसुरभीकरणोद्यताः ।।

इह खलु संसारपारावारे निपतितमधिकारिजनं जननी तनयमिव परमात्मतत्त्वज्ञानप्लवेनोदिधीर्षुरियमाथर्वणी ब्राह्मणोपनिषद् इतिकर्तव्यतामन्तरेण न तत्त्वज्ञानकरणतामापद्यते । अतः तदितिकर्तव्यतारूपन्यायगर्भं भाष्यं

करिष्यन्नाचार्यः प्रारिप्सितपरिसमाप्त्यादिप्रयोजनामेतदुपनिषत्प्रतिपाद्य-देवताप्रणतिमादौ निबध्नाति— **नम इति** ॥ नानिर्धारितस्वरूपस्य प्रणामो युक्तः । न चान्तरेण लक्षणं वस्तुनिर्धारणमित्यतो वासुदेवस्य लक्षणमाह – **प्राणादीति** ॥ वक्ष्यते हि 'स मिथुनमुत्पादयते रयिञ्च प्राणञ्च' इत्या-दिना । न च प्राणादिजननेनास्य किमपि प्रयोजनं शङ्कनीयं पूर्णानन्दत्वादित्याह— **अमन्देति** ॥ एतच्च 'यत्तच्छान्तमजरम्' इत्यादिना । न चैवं प्रवृत्त्यनुप-पत्तिः । तत्स्वाभाव्यादितीष्णुच्प्रत्ययेनोक्तम् । एतदपि 'उत्पादयते' इति वर्तमानापदेशेन । प्राणादिप्रभविष्णुना सर्वज्ञेन भवितव्यम् । एतदप्यस्यास्तीत्याह— **वेधस इति** ॥ इदमपि 'एष हि द्रष्टा' इत्यादिना । अत्र च भगवान् वासुदेव एवोपनिषत्प्रतिपाद्यः, प्राणादयस्तु तच्छेषतयेति सूचितम् । अमन्दा-नन्दसान्द्रताकथनेन परमानन्दाविर्भावलक्षणमुपनिषदुत्पादितज्ञानफलं च । 'तं यथा यथोपासते तदेव भवति' इत्यादिश्रुतेः । वक्ष्यति च 'तेषामसौ विरजो ब्रह्मलोकः' इति । अतो युक्तमेव विषयप्रयोजनवदेतदुपनिषदो व्याख्यानमिति ॥

अथ 'प्रजा' इत्यादिवाक्यव्याख्यानमपव्याख्यानप्रत्याख्यानं च लाघवेन चिकीर्षुः सङ्क्षेपतस्तावत् प्रथमप्रश्नप्रतिवचनसमाख्यारूपां स्मृतिमेव पठति— **प्रजानामित्यादिना** ॥ अत्राऽदौ 'सुकेशा' इत्याद्याख्यायिका विद्याप्रशंसया श्रोतॄणां श्रद्धाद्यतिशयजननार्था । एवं किल महद्भिः भारद्वाजप्रभृतिभिरपीयं विद्या सांवत्सरब्रह्मचर्यादिना लब्धाऽतोऽतिप्रशस्ततरा । अस्माभिर-प्येवंविधैर्भाव्यमिति । स्मर्यते हि श्रद्धादीनां तत्त्वज्ञानहेतुत्वं **'श्रद्धावान् लभते ज्ञानम्'** (गीता.४–३१) इति ॥

तत्रेयमक्षरयोजना । सुकेशा नामतः । भरद्वाजस्यापत्यं भारद्वाजः । शिबेरपत्यं शैब्यः । सत्यकामो नामतः । सूर्यस्यापत्यं सौर्यः, तदपत्यं सौर्या-यणिः । दीर्घः सुलोपश्च छान्दस इति स एव सौर्यायणी । गर्गस्य गोत्रो

प्रमाणाभासाचलितबुद्ध्या प्रवृहेत् पृथग् जानीयात् । किमिवेत्युच्यते । बाह्यान्मुञ्जादन्तस्थामैषीकामिवेति । कुतोऽयं जीवाद् भेदेन ज्ञेय इत्यतो विरुद्धधर्माधिकरणत्वादिति भावेनोपसंहरति– **तमिति** ॥ 'अध्यायान्ते द्विरुक्तिः स्याद् वेदे वा वैदिकेऽपि वा । विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे' इति वचनात् सर्वाध्यायार्थावधारणार्थाऽध्यायान्ते द्विरुक्तिः ॥ १७॥

एवं मृत्युप्रोक्तां विद्यां प्राप्तवता नचिकेतसा विद्याफलं लब्धमित्याह वेदपुरुषः ॥ **मृत्युप्रोक्तामिति** ॥ नाचिकेतो नचिकेता एव नाचिकेतो मृत्युप्रोक्तामेतां विद्याम् । कृत्स्नमिन्द्रियधारणादिरूपयोगविधिं च लब्ध्वा ब्रह्मप्राप्तौ विरजो निर्दुष्टो विमृत्युरभवत् । एवमन्यस्यापि तन्निष्ठस्य तत्फलमतिदिशति– **अन्योऽपीति** ॥ अन्योऽप्यधिकारी । अध्यात्मम् अधिकात्मभगवत्स्वरूपमेवमेव पूर्वोक्तप्रकारेणैव वित्सोऽपि ब्रह्म प्राप्तो विरजो विमृत्युर्भविष्यतीत्यर्थः ॥ १८ ॥

एवं यत्प्रसादाद् यत्प्रीत्यै चेदं भाष्यमुपक्रम्य समापितवांस्तमेव भगवन्तमन्तेऽपि स्तुतिनतिभ्यां प्रीणयति भगवानाचार्यः– **नम इति** ॥ प्रभविष्णवे प्रभवनशीलायेत्यशेषमतिमङ्गलम् ॥

गुरुस्थानन्दतीर्थार्यहृत्पङ्कजगतो हरिः ।
निर्दोषगुणसम्पूर्णः प्रीयतामिन्दिरापतिः ॥

प्रीतः स भगवान् विष्णुर्यद् दद्यात् फलमुत्तमम् ।
तत्सर्वं गुरवे दद्यान्न मह्यं किञ्चिदप्यृतम् ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य काठकोपनिषद्भाष्यस्य टीकायां श्रीमद्वेदव्यासतीर्थपूज्यपादशिष्यवेदेशभिक्षुविरचितायां पदार्थकौमुद्यां द्वितीयोऽध्यायः ॥ २ ॥**

—०—

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितभाष्यभूषिता

# षट्-प्रश्नोपनिषत्

श्रीमज्जयतीर्थभिक्षुविरचितटीकया,

श्रीवादिराजतीर्थविरचितप्रकाशिकया,

श्रीमङ्गालधर्माचार्यप्रणीतभाष्यटीकाविवरणेन च संवलिता

*(शान्तिमन्त्रः)*

हरिः ओ३म्

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितँय्यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।

स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## (उपनिषत्)

*(अथ प्रथमः प्रश्नः)*

**ओ३म् ।। सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाऽश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः एष ह वै तत् सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ।। १ ।।**

## (श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं भाष्यम्)

*(मङ्गलाचरणम्)*

**ओ३म् ।।नमो भगवते तस्मै प्राणादिप्रभविष्णवे ।**
**अमन्दानन्दसान्द्राय वासुदेवाय वेधसे ।। * ।।**

## (श्रीमज्जयतीर्थभिक्षुविरचिता टीका)

पान्तु नः पद्मनाभस्य श्रीपदाम्बुजरेणवः ।
कमलाकबरीभारसुरभीकरणोद्यताः ।।

इह खलु संसारपारावारे निपतितमधिकारिजनं जननी तनयमिव परमात्म-तत्त्वज्ञानप्लवेनोद्दिधीर्षुरियमाथर्वणी ब्राह्मणोपनिषद् इतिकर्तव्यतामन्तरेण न तत्त्वज्ञानकरणतामापद्यते । अतः तदितिकर्तव्यतारूपन्यायगर्भं भाष्यं

करिष्यन्नाचार्यः प्रारिप्सितपरिसमाप्त्यादिप्रयोजनामेतदुपनिषत्प्रतिपाद्य-देवताप्रणतिमादौ निबध्नाति– **नम इति ॥** नानिर्धारितस्वरूपस्य प्रणामो युक्तः । न चान्तरेण लक्षणं वस्तुनिर्धारणमित्यतो वासुदेवस्य लक्षणमाह – **प्राणादीति ॥** वक्ष्यते हि 'स मिथुनमुत्पादयते रयिञ्च प्राणञ्च' इत्या-दिना । न च प्राणादिजननेनास्य किमपि प्रयोजनं शङ्कनीयं पूर्णानन्दत्वादित्याह– **अमन्देति ॥** एतच्च 'यत्तच्छान्तमजरम्' इत्यादिना । न चैवं प्रवृत्त्यनुप-पत्तिः । तत्स्वाभाव्यादितीष्णुचूप्रत्ययेनोक्तम् । एतदपि 'उत्पादयते' इति वर्तमानापदेशेन । प्राणादिप्रभविष्णुना सर्वज्ञेन भवितव्यम् । एतदप्यस्यास्तीत्याह– **वेधस इति ॥** इदमपि 'एष हि द्रष्टा' इत्यादिना । अत्र च भगवान् वासुदेव एवोपनिषत्प्रतिपाद्यः, प्राणादयस्तु तच्छेषतयेति सूचितम् । अमन्दा-नन्दसान्द्रताकथनेन परमानन्दाविर्भावलक्षणमुपनिषदुत्पादितज्ञानफलं च । 'तं यथा यथोपासते तदेव भवति' इत्यादिश्रुतेः । वक्ष्यति च 'तेषामसौ विरजो ब्रह्मलोकः' इति । अतो युक्तमेव विषयप्रयोजनवदेतदुपनिषदो व्याख्यानमिति ॥

अथ 'प्रजा' इत्यादिवाक्यव्याख्यानमपव्याख्यानप्रत्याख्यानं च लाघवेन चिकीर्षुः सङ्क्षेपतस्तावत् प्रथमप्रश्नप्रतिवचनसमाख्यारूपां स्मृतिमेव पठति– **प्रजानामित्यादिना ॥** अत्राऽऽदौ 'सुकेशा' इत्याद्याख्यायिका विद्याप्रशंसया श्रोतॄणां श्रद्धाद्यतिशयजननार्था । एवं किल महद्भिः भारद्वाजप्रभृतिभिरपीयं विद्या सांवत्सरब्रह्मचर्यादिना लब्धाऽतोऽतिप्रशस्ततरा । अस्माभिर-प्येवंविधैर्भाव्यमिति । स्मर्यते हि श्रद्धादीनां तत्त्वज्ञानहेतुत्वं **'श्रद्धावान् लभते ज्ञानम्'** (गीता.४–३१) इति ॥

तत्रेयमक्षरयोजना । सुकेशा नामतः । भरद्वाजस्यापत्यं भारद्वाजः । शिबेरपत्यं शैब्यः । सत्यकामो नामतः । सूर्यस्यापत्यं सौर्यः, तदपत्यं सौर्या-यणिः । दीर्घः सुलोपश्च छान्दस इति स एव सौर्यायणी । गर्गस्य गोत्रो

गार्ग्यः । कौसल्यो नामतः, कोसलायां भवो वा । अश्वलायनस्यापत्यम् आश्वलायनः । भृगोरपत्यं भार्गवः । विदर्भेषु भवो वैदर्भिः । कबन्धी नामतः । कत्यस्यापत्यं कात्यायनः । इतरेतरयोगे चशब्दाः । त एते ह किल ब्रह्मपराः वेदाभ्यासे तात्पर्यवन्तः ब्रह्मनिष्ठाः तदुक्तानुष्ठाननिष्ठाश्च मुनयः कदाचित् समवेताः परं ब्रह्म वासुदेवमन्वेषमाणा जिज्ञासवो बभूवुरिति शेषः । 'ब्रह्मपराः' इत्यादिब्रह्मजिज्ञासाधिकारसम्पत्तिकथनम् । ततस्ते किलैष पिप्पलादो यद् वयं प्रक्ष्यामस्तत्सर्वं वक्ष्यति तस्मादेनं प्रति गच्छाम इति निश्चित्य समित्पाणयो भूत्वा भगवन्तं पूज्यं पिप्पलादमुपसन्नाः तत्समीपं प्राप्ताः । हवैशब्दः पिप्पलादस्य प्रश्नप्रतिवचनसामर्थ्यप्रसिद्धिद्योतकः ॥ १ ॥

## (श्रीवादिराजयतिविरचिता प्रकाशिका)

सर्पतल्पमनल्पेन्द्रकल्पं नत्वा हयाननम् ।
षट्प्रश्नोपनिषट्टीकाटिप्पणी क्रियते मया ॥

'प्राणादिप्रभविष्णवे' इत्यत्रान्तर्णीतो णिच् । प्राणादीन् प्रकर्षेण भावयितुमुत्पादयितुं शीलमस्यास्तीति स तथोक्त इत्यर्थः । 'एतदपि' इत्यत्र एतत् स्वभावादेव प्राणाद्युत्पादकत्वमुपनिषदि मिथुनमुत्पादयत इति वर्तमानापदेशेन सूचितमित्यर्थः । अतीतसृष्टेर्वर्तमानत्वोक्तौ स्रष्टृत्वशक्तेः सर्वदा वर्तमानत्वस्य सूचितत्वात् स्वाभाविकी शक्तिरिति लभ्यत इति भावः । जातवेदा इत्यादौ छन्दसि वेदःशब्दस्यापि श्रुतत्वात् 'तृतीयोऽतिशये' इति वचनाच्चातिशयेन वेदा वेधा इति व्युत्पत्त्या वेधसे सर्वज्ञायेत्यर्थः । एतदेवाभिप्रेत्याऽह टीकाकारः– **एतदप्यस्यास्तीति** ॥

## (श्रीमङ्गलधर्माचार्यप्रणीतं भाष्यटीकाविवरणम्)

श्रीवासुदेवमानम्य पूर्णबोधान् गुरूनपि ।
करिष्ये प्रश्नषट्कीयभाष्यव्याख्यानपञ्चिकाम् ॥ * ॥

श्रीजयतीर्थश्रीमच्चरणः षट्प्रश्नभाष्यं व्याचिख्यासुः श्रीनारायणचरण-नलिनपरागकर्तृकस्वावनप्रार्थनरूपं मङ्गलमादौ निबध्नाति– **पान्त्विति** ॥ पद्मं नाभौ यस्य स पद्मनाभः । श्रीपदशब्दस्य पद्मनाभशब्दसापेक्षत्वेऽपि नित्यसापेक्षत्वेन रेणुशब्देन समासोपपत्तिः । नोऽस्मान् पान्तु रक्षन्तु । इतर-देवतापादपांसून् विहाय पद्मनाभपादपांसूनामेव प्रार्थने को हेतुरित्यतः प्राप्ता-शेषकामयाऽपि रमया अनुरागेणानिशं धृतत्वेनावगतामितगुणत्वादिति भावेनाऽह– **कमलेति** ॥ कमलायाः कबरीलक्षणो यो भारः केशपाशस्तस्य यत्सुरभी-करणं तस्मिन्नुद्यता उद्युक्ता इत्यर्थः । तेन भारशब्दस्यैव केशपाशवाचित्वेन कबरीशब्दो व्यर्थ इति नाऽशङ्कनीयम् । सामान्यविशेषभावेनावैयर्थ्यात् । सुरभीकरणोद्यत इत्यनेन पादपांसूनां पङ्कजपरागसादृश्यमुपपादितम् । दृष्टान्ता-दतिशयोऽपि दार्ष्टान्तिकेऽवगम्यते । नहि नानाकुसुमपरागनिचयानां मिलिता-नामपि [१]अतिसुगन्धात्मकेन्दिराकबरीभारसुरभीकरणोद्यमित्वं सम्भवति । भगवतस्तु "सदेहः सुखगन्धश्च" इति सुगन्धशरीरावयवत्वात् तत्सम्बद्धरेणूनां तत्त्वं सम्भवतीति ॥

ननु भाष्यकारीयं 'नमो भगवते' इत्याद्यमाद्यं पद्यं व्यर्थम् । आथर्वण्या ब्राह्मणोपनिषदो व्याख्यानस्य निर्विघ्नपरिसमाप्त्याद्यर्थमङ्गलनिबन्धनरूपं तदिति चेद् उपनिषद एवाधिकार्यादिशून्यतयाऽनुपादेयत्वात् । अधिकार्यादि-मत्त्वेनोपादेयत्वेऽप्यव्याख्येयत्वात् । गहनार्थत्वेन व्याख्येयत्वेऽपि वासुदेवस्यैव प्रणामे बीजाभावादित्यत आह– **इहेति** ॥ अधिकार्यनधिकारिवर्ग इत्यर्थः । खल्विति वाक्यालङ्कारे । उक्तार्थस्य प्रसिद्धिद्योतने वा वर्तते । 'समुद्रोऽब्धिर-कूपारः पारावारः सरित्पतिः' इत्यमरोक्तेः पारावारः समुद्रः । जननी तनयमि-वेत्यनेन तद्वत् केवलानुकम्पावशादेवोद्दिधीर्षुः उद्धर्तुमिच्छुरित्युक्तं भवति । एतच्चाभिमानिव्यपेक्षया ॥ **इतिकर्तव्यतामन्तरेणेति** ॥ साक्षादुपकारकाङ्गं विनेत्यर्थः । **न्यायगर्भं भाष्यं करिष्यन्निति** ॥ तत्वार्थनिश्चये न्यायानाम्

१. 'अतिसुन्दरात्मक–' (पा.)

अङ्गत्वेन तत्प्रतिपादकभाष्यस्येतिकर्तव्यतात्वमिति भावः । एतच्च 'यत्तच्छान्तमजरम्' इत्यादिनेत्यादौ । वक्ष्यत इत्यस्यानुवृत्तिर्द्रष्टव्या ।। **इष्णुच्प्रत्ययेनोक्तमिति ।।** 'आकेस्तच्छीलतद्धर्मतत्साधुकारिषु' (पा.सू.३.२. १३४)इत्यधिकृत्य 'भुवश्च' (पा.सू.४.१.४७) इत्यनेन सूत्रेण ताच्छील्येऽर्थे प्रोपसृष्टस्य भूधातोरिष्णुच्प्रत्यये निष्पन्नस्य प्रभविष्णव इत्यस्य तत्स्वाभाव्यार्थत्वं युक्तमित्यर्थः ।। **वर्तमानापदेशेनेति ।।** सर्जनक्रियाया इदानीं निवृत्तत्वेऽपि तत्स्वभावस्यानुवृत्तत्वेन वर्तमानार्थकलट्प्रयोग इति भावः ।। **वेधस इतीति ।।** "वेधा विधौ बुधे विष्णौ" इति विश्वकोशे वेधश्शब्दस्य बुधवाचकत्वोक्त्या मुख्यत्वात् सार्वज्ञार्थत्वसिद्धिः । **तच्छेषतयेति ।।** तत्सृज्यत्वेन वासुदेवोपसर्जनत्वेनेत्यर्थः । प्रतिपाद्या इति वचनविपरिणामेनानुवर्तते । तज्ज्ञानफलं च सूचितमित्यन्वयः । **उपासत इति ।।** उपास्त इत्यर्थः ।। **तदेव भवतीति ।।** तत्सदृश एव भवत्युपासकः । तदेव उपास्यगुणजातसदृशगुणजातमेवोपासकानां भवतीति वाऽर्थः ।। **विरजो ब्रह्मलोक इतीति ।।** 'ब्रह्माणि जीवाः सर्वेऽपि' इति जीववाचको ब्रह्मशब्दो भावप्रधानः । तथाच ब्रह्मत्वस्य जीवत्वस्याऽनन्दादिस्वरूपत्वस्य लोकः प्रकाशोऽनुभवः तेषाम् उपनिषदुक्तब्रह्मज्ञानिनां भवतीत्यर्थ [१]इत्यत्राभिप्रेतम् । उत्तरत्र ब्रह्मलोको वैकुण्ठादिः प्राप्यो भवतीत्यर्थान्तरमुक्तमिति ज्ञातव्यम् ।। **अथेति ।।** आद्यपद्यनिबन्धनानन्तरमित्यर्थः ।। **लाघवेनेति ।।** व्याख्यानरूपप्रमाणविरोधेनैवापव्याख्याननिराकरणं लभ्यत इति लाघवमित्यर्थः ।। **अत्रेति ।।** उपनिषदीत्यर्थः ।। **आख्यायिकेति ।।** उपलब्धार्थविषयककथेत्यर्थः ।। अतिप्रशस्ततरा इयं विद्येत्यन्वयः ।।

ननु श्रद्धादीनां निष्प्रयोजनत्वे कैश्चिदनुष्ठानमात्रेण कथमनुष्ठेयत्वम् ? अतो नेदं तात्पर्यकथनं युक्तमित्यत आह– **स्मर्यते हीति ।। सुकेशा नामत इति ।।** शोभनाः केशा यस्येति विग्रहे सुकेशशब्दात् परस्य प्रथमैकवचनस्य

---

१. 'इत्यभिप्रेतं' (पा.)

सोः 'सुपां सुलक्–' (पा.सू.७.१.३९) इत्यादिना आकारादेशे सवर्णदीर्घे च सुकेशेत्याकारान्तं रूपं ज्ञेयम् ॥ **कोसलायामिति** ॥ नगर्यामिति शेषः । विदर्भेषु देशेषु । कदाचित् कचित् समवेता इत्यध्याहारोक्तिः ॥ **अधिकारेति** ॥ 'भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान्नरः' इत्याद्युक्तेरिति भावः ॥ १ ॥

**(उपनिषत्)**

**तान् ह स ऋषिरुवाच । भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान् पृच्छत । यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥**

**(टीका)**

तानागतान् ह किल स ऋषिः पिप्पलाद उवाच । किमिति ? यद्यपि यूयं प्रागेव तपआदिसम्पन्नास्तथाऽपि भूयः पुनरेव तपसा सर्वेन्द्रियनिग्रहलक्षणेन विशेषतोऽपि ब्रह्मचर्येण श्रद्धयाऽऽस्तिक्यनिष्ठया च युक्ताः संवत्सरमेकमस्मान् परिचरन्तः संवत्स्यथ सम्यग् वसत । ततो यथेष्टं प्रश्नान् प्रष्टव्यार्थान् पृच्छत । युष्माभिः पृष्टं च प्रतिवक्तुं यदि वयं विज्ञास्यामः तर्हि सर्वं वो युष्मभ्यं वक्ष्याम इति । न ह्येवं सत्यवचने कारणमस्तीति हशब्दः ॥ २ ॥

**(प्रकाशिका)**

आ सम्यक् ब्रह्मचर्येणेत्यर्थमभिप्रेत्याऽऽह– **विशेषतोऽपि ब्रह्मचर्येणेति** ॥

**(मङ्गालीयम्)**

**यद्यपि यूयं प्रागेव तपआदिसम्पन्ना** इति ॥ एतद् 'भूय एव तपसा' इत्याद्युक्तेस्तात्पर्यवचनम् । इन्द्रियमात्रनिग्रहवाचिना तपःशब्देन गुह्येन्द्रिय-

निग्रहरूपब्रह्मचर्यवाचिनो ब्रह्मचर्यशब्दस्यागतार्थत्वाय विशेषतोऽपीत्युक्तम् । उत्तरत्र पृच्छतेति लटो विद्यमानत्वात् तदनुसारेण संवत्स्यथेति लृडपि लडन्तत्वेन व्याख्यातः । 'सर्वं ह वो वक्ष्यामः' इत्यत्र हशब्दस्य तत्रैव सम्बन्धे किला-र्थत्वासम्भवाद् व्यत्यस्तान्वये च 'तान् ह स ऋषिरुवाच' इत्यत्र विद्यमानेन पौनरुक्त्यमित्यत आह– **न ह्येवं सतीति** ॥ २ ॥

## (उपनिषत्)

*(सृष्टिकर्तृविषयकः प्रथमः प्रश्नः)*

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति तस्मै स होवाच प्रजाकामो हवै प्रजापतिः स तपोऽतप्यत ॥ ३ ॥**

## (टीका)

अथ तदुक्तनियमानुष्ठानसमनन्तरम् । तेषां मध्ये कबन्धी कात्यायन उपेत्योपसदनं कृत्वा पिप्पलादं पप्रच्छ । 'पाठक्रमादर्थक्रमो बलीयान्' इति पश्चादुक्तस्यापि कात्यायनस्य प्रश्नः प्रतिवचनं च प्रथममुक्तम् । एवमन्यत्रापि द्रष्टव्यम् । तं च क्रमं तत्रैव दर्शयिष्यामः । किमिति? भगवन् कुतो निमित्तकारणात् पुरुषादिमाः देवाद्याः सर्वाः प्रजा उत्पद्यन्त इति । ह वा इति प्रजानां प्रजननस्य सुप्रसिद्धताद्योतकौ निपातौ । सुप्रसिद्धं तावत् प्रजानां प्रजननम् । न चैतदन्तरेण कारणमुपपन्नम् । सर्वदाऽपि प्रसङ्गात् । न चाचेतनैरेव कारणैः । चेतनानधिष्ठितानां कार्यकरत्वादर्शनात् । न च जीवोऽधिष्ठाता । अस्वतन्त्रत्वात् । नापीश्वरः । तदनुपलम्भादिति प्रश्ना-शयः । यद्यपि न भगवान् सर्वेषां प्रत्यक्षगोचरो वर्तमानः कुलाल इव घटं, प्रजाः जनयति । तथाऽपि जगत्कारणीभूतान् प्राणादीनुत्पाद्य तेष्वाविश्य तान्निमित्तीकृत्य निखिलाः प्रजा जनयतीति न कश्चिद्विरोध इत्यभिप्राय-

वांस्तस्मै पृष्टवते कात्यायनाय स पिप्पलादः किलोत्तरमुवाच । किमिति? प्रजानां ब्रह्मादीनां पतिः पालकः परमेश्वरः कल्पादौ किलाऽत्मनः प्रजाकामो देवादिप्रजावत्त्वमात्मन इच्छन्नवर्तत । अथ स सर्वज्ञोऽपि लोकविडम्बनाय तपोऽतप्यत कर्तव्यमन्वालोचयत् ॥ ३ ॥

## (प्रकाशिका)

'पाठक्रमादर्थक्रमो ज्यायान्' इत्यत्र कबन्धी हि सृष्टिप्रकारं पृच्छति । तदन्ये तु 'कत्येव देवाः प्रजाः विधारयन्ते' इत्यादिना सृष्ट्युत्तरकालीन-पालनादिप्रकारान् पृच्छन्ति । अत एतत्प्रश्नप्रतिवचनयोरादित्वमित्यर्थः । 'किमिति' इत्यत्र किमिति पृष्टवानिति शेषः । 'चेतनानधिष्ठितानाम्' इत्यत्र चेतनेनापरिगृहीतानामित्यर्थः । अवर्ततेति योग्यक्रियाभिधानम् ॥

## (मङ्गालीयम्)

**उपसदनमिति ॥** विनयपूर्वकं समीपेऽवस्थानमित्यर्थः । ननु सुकेशा च भारद्वाज इति प्रथमोक्तस्य ऋषेः प्रश्नप्रतिवचनेऽनुक्त्वाऽन्तिमस्य कात्यायनस्य प्रथमतः प्रश्नप्रतिवचनकथनं किमर्थं कृतमित्यत आह– **पाठक्रमादिति ॥** पूर्वमीमांसायां प्रथमेऽध्याये 'अर्थाच्च' इत्यधिकरणे 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्युदाहृत्यायं न्याय उदाहृतः । तथाहि । 'क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात्' इत्यधिकरणे 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इत्युक्तपञ्चप्रयाजेषु वाक्यपाठक्रमेणैव क्रमः प्रदर्शयिष्यते । वाक्यक्रमेणैव बुद्ध्यारूढानां प्राप्तक्रमस्य त्यागे कारणा-भावात् । तथाऽग्निहोत्रहोमयवागूपाकयोरपि वाक्यक्रमेणैव क्रमः प्राप्नोति । उक्तन्यायसाम्यादिति पूर्वपक्षं प्रापय्य 'अर्थाच्च' इति जैमिनिना राद्धा-न्तितम् । अर्थात् प्रयोजनवशादित्यर्थः । अग्निहोत्रहोमस्य द्रव्यसापेक्षत्वेन यवागूपाकस्य प्रतिपत्तिसापेक्षत्वेनाग्निहोत्रहोमे द्रव्यान्तरकल्पनाप्रसङ्गाद् यवागूपाकस्यापूर्वार्थकल्पनाप्रसङ्गाच्च वरं पूर्वं यवागूपाकः पश्चादग्निहोत्रहोम-

इति । एवं पञ्चमादिप्रश्नानां षष्ठप्रतिवचनादिसापेक्षत्वात् प्रथमतो वेदपुरुषेण षष्ठप्रश्नप्रतिवचनानुवादः कृत इति भावः । **एवमन्यत्रापीति** ॥ भार्गव-वैदर्भ्यादिप्रश्नादिष्वित्यर्थः ॥ **तं च क्रममिति** ॥ सापेक्षत्वरूपार्थक्रमम् । तत्र तत्र तत्तत्प्रश्नसङ्गतिकथनावसर इत्यर्थः ॥ **किमितीति** ॥ किं पप्रच्छेत्या-काङ्क्षायामाहेत्यर्थः ॥

ननु कुतो निमित्तकारणात् [१]प्रजायन्त इति निमित्तकारणप्रश्नस्य किं बीजं कियन्ति च कारणानि कानि च तत्पक्षे बाधकानि येन कुतः कस्मात् कारणादिति प्रश्नः सङ्गच्छेतेत्यतस्तदेतत् सर्वं प्रदर्श्य प्रश्नार्थमाह– **ह वा इत्युपक्रम्य सुप्रसिद्धं तावदित्यादिना** ॥ नचाचेतनैरेव कारणैरुपपन्नमि-त्यन्वयः । तेष्वाविश्य स्वयमेव जनयति चेत् प्राणादीनां पराधीनमपि जगत्-कर्तृत्वं न स्यात् । जीवाधिष्ठितशरीरवदित्यतः 'तान्निमित्तीकृत्य' इत्युक्तम् । हेत्यस्यार्थः– **किलेति** ॥ **किमितीति** ॥ किमुवाचेत्याकाङ्क्षायामाहेत्यर्थः । 'प्रजाकामो हवै प्रजापतिः' इति श्रुतौ आत्मनः प्रजाः देवादीन् यत्किञ्चिदर्थं कामयत इत्यर्थः प्रतीयते । न चासौ युक्तः । अद्यापि देवादीनामनुत्पन्नत्वेन यत्किञ्चित्प्रयोजनोद्देशेन तेषां कामनायोगादित्यतो व्याख्याति– **देवादि-प्रजावत्त्वमात्मन इच्छन्नवर्ततेति** ॥ ३ ॥

**(उपनिषत्)**

*(भगवत्कृतमुख्यप्राणभारतीसृष्टिः)*

**स मिथुनमुत्पादयते रयिं च प्राणं चेति । एतौ मे बहुधा प्रजाः करिष्यत इति आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः ॥ ४ ॥**

**(भाष्यम्)**

**प्रजानां पालनाद् विष्णुः प्रजापतिरितीरितः ।**
**स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम् ॥**

१. 'प्रजा जायन्ते' (पा.)

**सूर्याचन्द्रगतौ देवः ससर्ज पुरुषोत्तमः।**
**तावाविश्य स्वयं विष्णुः सर्वसृष्टीः[१] करोत्यजः ॥**

## (टीका)

आलोचितकार्यश्च स प्रजापतिः मिथुनं स्त्रीपुरुषरूपं द्वन्द्वमुत्पादयते उदपादयत्। किं तत्? रयिं वित्ताभिमानिनीं भारतीम्। प्राणं मुख्यं चेत्येतत्। ननु सर्वाः प्रजाः सिसृक्षुः परमेश्वरः कथं तौ उदपादयदिति। एवं मन्यते स्म प्रजापतिः। एतौ रयिप्राणौ मे मम बहुविधाः प्रजाः करिष्यत इति। एतावाविश्याहं प्रजाः स्रक्ष्यामि इमौ प्रजासर्जने मम निमित्तीभविष्यत इति। अभूतां च तौ प्रजापतेः प्रजासर्गे निमित्तमित्युच्यते– **आदित्य इत्यादिना** ॥ ततोऽसौ प्राणः प्रजापतिना आदित्यादिषु सृष्टेष्वादित्यः आदित्यनामा आदित्यं प्रविष्टो बभूव। रश्मिरेव रयिरपि चन्द्रमाः चन्द्रमोनाम्नी चन्द्रमसमाविष्टा बभूव। एवं सूर्याचन्द्रगतौ तावाविश्य तौ निमित्तीकृत्य प्रजापतिः प्रजाः ससर्जेति वाक्यशेषः। तदेतदाह– **प्रजानामिति** ॥ सूर्याचन्द्रनामानौ तौ सूर्याचन्द्रगतौ चकारेति योज्यम् ॥ ४ ॥

## (मङ्गालीयम्)

प्राणं मुख्यं चेत्येतन्मिथुनमित्यन्वयः। रयिं प्राणमिति द्वितीया प्रथमार्थे। अत इतिकरणोपपत्तिः ॥ **कथं तावुदपादयदितीति** ॥ इत्याकाङ्क्षायां तदभिप्रायमाहेत्यर्थः। रयिप्राणौ मम बहुविधाः प्रजाः करिष्यत इति मत्त्वा तौ सृष्ट्वा तूष्णीमासीनश्चेन्न स्वयं जगत्कारणं स्यात् प्रजापतिरित्यतस्तदभिप्रायमाह– **एतावाविश्येति** ॥ रयिप्राणयोः सूर्याचन्द्रमसोः प्रवेशमात्रकथनेन भगवतस्तौ निमित्तीकृत्य स्रष्टृत्वं न लभ्यत इत्यसङ्गतिरित्यतो भाष्यानुसारेण श्रुतावध्याहरति– **एवं सूर्याचन्द्रगताविति** ॥ ४ ॥

---

१. 'सर्वसृष्टिं' ह.

(उपनिषत्)

रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः अथाऽदित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते यद् दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥ ५ ॥

*(जगत्सृष्ट्यर्थं भारतीमुख्यप्राणोदयः)*

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाऽभ्युक्तम् –

विश्वरूपं करिणं जातवेदसं
परायणं ज्योतिरेकं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः
प्राणः प्रजानामुदयत्येष सूर्यः ॥ ६ ॥

(भाष्यम्)

अमूर्तस्थः [१]स वायुस्तु मूर्तसंस्था सरस्वती ।
आदित्यस्थः स वायुस्तु प्राणानात्मनि सन्नयेत् ॥

प्राच्यप्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः ।
प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तराः स्मृताः ॥

शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ ।
सभार्याः कोणपैः सार्धं चत्वारो दिशिदिश्यपि ॥ * ॥

१. 'स वायुस्थः' ह.

## (टीका)

प्रकारान्तरेण तयोः प्रजोत्पत्तिनिमित्तत्वमुच्यते– **रयिर्वा इत्यादिना ॥** एतत्सर्वं रयिर्वै प्रमाणप्रसिद्धमेतत् । किं तत्सर्वम् । मूर्तं तेजोबन्नलक्षणम्, अमूर्तं च प्रकृत्यादिकमिति यदुपादानकारणं राशिद्वयं तस्माद् राशिद्वयात् प्रविभक्ता या मूर्तिः यन्मूर्तं सैव रयिः । सप्तम्यर्थे वा पञ्चमी । अमूर्तं प्राण इति शेषः । प्रकृत्यादिषु स्थित्वा तेषामुपादानत्वशक्तिं प्रेरयन्तौ तौ प्रजापतेः प्रजोत्पत्तौ निमित्तं भवत इति यावत् । तदिदमाह– **अमूर्तस्थ इति ॥** तावाविश्येति सर्वत्र सम्बध्यते । आदित्ये स्थित्वा प्राणः प्रजोत्पत्तिनिमित्तं भवतीत्युक्तम् । तत्कथमित्युच्यते– **अथेत्यादि ॥** अथशब्दः प्रकृतमूर्तादिप्रसङ्गादर्थान्तरद्योतकः । आदित्यः आदित्यस्थः प्राणः उदयन् उद्गच्छन् प्राचीं दिशं प्रकाशेन प्रविशतीति यत्तेन प्राच्यान् प्राणान् स्वरश्मिषु सन्निधत्ते सन्निवेशयति । स्वरश्मिभिस्तान् व्याप्नोतीति यावत् । एवं दक्षिणां दिशं प्रविशतीति यत्तेन दक्षिणान् प्राणान् स्वरश्मिषु सन्निधत्त इत्यादि योज्यम् । दिशोऽन्तरा दशदिशां मध्ये । अवान्तरदिशां प्राच्यादिग्रहणेनैव गृहीतत्वात् । अन्यथा प्राच्यान् प्राणानित्यादिबहुवचनायोगात् । यत्सर्वमिति निगमनम् ॥ ५ ॥

अनेनाशेषजगत्प्रकाशकतया प्रजोत्पत्तिनिमित्तत्वमुक्तम् । न केवलमेतावत्, किं नाम? स एष आदित्ये स्थितो विश्वरूपः पूर्णरूपोऽदनादग्निः प्राणो वैश्वानरो विश्वनरसम्बन्धी तापनपाचनशोषणादिना सर्वप्रजोत्पत्तिहेतुः सन्नुदयते । 'आदित्यो हवै प्राणः' इति या प्रसिद्धिः सूचिता सोच्यते– **तदेतदिति ॥** यदुक्तं तदेतदृचा विश्वरूपमिति मन्त्रेणाभ्युक्तं स्पष्टमुक्तमतो दृढतरं प्रतिपत्तव्यमिति । विश्वरूपं, कराः रश्मयोऽस्य सन्तीति करी तं करिणम् । जातवेदसं जातस्य सर्वस्य वेदितारम् । परायणं सर्वप्राणिनां परमाश्रयम् । एकं प्रधानम् । ज्योतिः प्रकाशकं तपन्तं तपनक्रियां कुर्वन्तम् । उपलक्षणं चैतत् । शोषणादिकं च कुर्वाणमादित्यमण्डलस्थं पुरुषं जानी-

यात् । किमिति? सहस्ररश्मिरनन्ततेजाः शतधाऽनन्तरूपैः । सर्वप्राणिषु वर्तमानो यः प्राण एष प्रजानामुत्पत्तये सूर्ये स्थित्वोदयतीति । तदेतदाह– **आदित्यस्थ इति ॥** प्राणान् प्राच्यादीनात्मनि स्वरश्मिषु सन्नयेत् सन्निवेशयतीत्यर्थः । के ते प्राच्यादयः प्राणा इति । तत्तद्दिग्गत-प्राणिप्रणयनादिन्द्रादयो दिक्पाला एवेत्याह– **प्राच्याः प्राणा इति ॥** तथाशब्दो वक्ष्यमाणदक्षिणादिसमुच्चयार्थः । कथं तेषु बहुवचनमित्यत आह– **सभार्या इति ॥** सभार्यैरग्न्यादिभिः कोणपैः सार्धमिन्द्रादय इत्यर्थः । यदध इत्यादौ नैतत्सम्बद्धच्यते, सभार्या इत्येव । अतस्तत्र बहुवचनसम्पादनाय शेषमित्रावित्यादिद्वयोरुक्तिः । दिङ्मध्यस्था अपि केचिज्ज्ञातव्याः । एवं चन्द्रमसि स्थिताया देव्या अप्योषधिजननादिद्वारेण प्रजोत्पत्तिनिमित्तत्व-मुपपादनीयमिति ॥ ६ ॥

## (प्रकाशिका)

'रयिर्वा एतत्सर्वम्' इति श्रुतिवाक्ये रयिपदेन प्राणोऽप्युपलक्ष्यते । एवं च तावुभौ सूर्याचन्द्रमसोः स्थित्वा सृष्टिकरणात् पूर्वमिदं सर्वं जगत् ससृजतुरित्यर्थः । सूर्ये स्थित्वा शोषणपानादीनां या सृष्टिः, चन्द्रे स्थित्वौषध्या-दीनां च या सृष्टिः सा सर्वाऽपि मूर्तामूर्तात्मकप्रपञ्चसृष्टिं विनाऽनवसर-दुस्थेत्यतः सर्वोपयुक्तपञ्चभूतसृष्टिः महदव्यक्ताख्यतत्त्वाभिमानिनि जडरूपेणैव प्रकृतेति भावः । 'तस्मान्मूर्तिरिव रयिः' इत्यत्र तस्मिन् राशिद्वय इति सप्तम्यर्थे पञ्चमीति भावेनोक्तं– **सप्तम्यर्थ इति ॥** मूर्तामूर्तयोः प्रस्तुतत्वात्, तत्र मूर्तस्य रयित्वोक्तावमूर्तस्य प्राणत्वमपि प्रकरणवशाल्लभ्यते । तथाऽपि स्पष्टीकरणा-यामूर्तं प्राण इति शेष इत्युक्तम् । 'अन्यथा प्राच्यान् प्राणान्' इत्यत्रान्यथाऽवान्तर-दिशां प्राच्यादिष्वसङ्ग्रहे प्राच्यान् दक्षिणानित्यादि बहुवचनं न स्यात् । प्राचीनप्राणस्य स्वभार्यया सह द्वित्वसम्भवेऽपि बहुवचनायोगात् । कोणाभि-मानिस्वभार्यासहिताग्नेरपि सङ्ग्रहे चतुर्णामपि लाभाद् बहुवचनोपपत्तिरिति

भावः । दशदिशामवान्तरप्रदेशस्य च प्रागेवोक्तत्वात् पुनः सर्वपदवाच्य-स्यान्यस्यायोगान्निगमनमित्युक्तम् । 'अनेन सकलजगत्प्रकाशकतया प्रजोत्पत्ति-निमित्तत्वमुक्तम्' इत्यत्र कृष्यादियोग्यप्रदेशादर्शने कृषिरेव कर्तुं न शक्यते । अतो नरादिस्थिरजीवसृष्टौ प्रकाशस्योपयोगः । धनधान्यादीनामसङ्ग्रहे ग्रामान्तरगमनाभावे विवाहादिक्रियाऽपि न स्यात् । भोजनादिक्रियाऽपि न स्यात् । एवं चान्नपानादीनामसम्भवे प्रजाजननोपयुक्तवीर्यसङ्ग्रहोऽपि न स्यात् । गर्भाधानोपयुक्तभार्यासङ्ग्रहोऽपि न स्यात् । अतश्चराचरात्मकप्रजोत्पाद-नाय सूर्यादीनां प्रकाशोऽप्यवश्यं सहकारीति भावः । एवं सूर्यस्योष्णकिरण-सम्बन्धाभावेऽङ्कुरादीनामुपचयोऽपि 'दशवैद्यसमो वह्निर्दशवह्निसमो रविः' इति वचनाज्जनानामारोग्यादिकमपि न स्यात् । अतः सौरोष्णप्रकाशस्यान्न-पानादीनां पाचनशोषणादिनाऽऽरोग्यजनकत्वेनापि प्रजोत्पत्तावुपयोगित्वं द्रष्टव्यमिति ज्ञेयम् ॥

## (मङ्गालीयम्)

वायुभारत्योः सृष्ट्यनन्तरमेव सूर्यादौ प्रवेशस्य वक्तव्यतया सूर्याचन्द्रगतौ तौ ससर्जेत्यनुपपन्नमित्यतो योजयति– **सूर्येति** ॥ **योज्यमिति** ॥ वायुं सरस्वतीं च ससर्ज तदनन्तरं सूर्यादिनामानौ तौ सूर्याचन्द्रगतौ ससर्ज चकारेति ससर्जेत्यस्याऽवृत्त्या भाष्यं व्याख्येयमित्यर्थः । 'तावाविश्य' इत्यादिकं भाष्यमुपनिषद्यध्याहारकथनरूपमिति ज्ञेयम् । सूर्याचन्द्रगतौ ससर्जेत्यनेन प्राणरय्योः स्वत एव सूर्याचन्द्रमसोः प्रवेशप्रतीतिरपोढा भवति । रयिप्राणयोः सूर्याद्यधिष्ठानेन प्रजोत्पत्तिनिमित्तत्वस्योक्तत्वात् प्रकारान्तरेणेत्युक्तम् । वा इत्यस्य व्याख्यानम्– **प्रमाणसिद्धमेतदिति** ॥ किं तत्सर्वमिति मूर्तिरेव रयि-रित्यन्तस्यावतारिका ॥ **मूर्तं तेजोबन्नलक्षणमिति** ॥ "मूर्तं सदिति सम्प्रोक्त-ममूर्तमसदुच्यते" इति श्रुतौ मूर्तामूर्तशब्दयोः सदसच्छब्दपर्यायत्वोक्त्या 'यदन्य-द्वायोश्चान्तरिक्षाच्चैतत्सत्' इति सच्छब्दस्य पञ्चभूतानां मध्ये वाय्वन्तरिक्षा-तिरिक्ततेजोबन्नपरत्वकथनेन मूर्तं तेजोबन्नलक्षणमिति व्याख्यातम् ।

वाय्वन्तरिक्षपरेणामूर्तशब्देन कारणप्रसङ्गात् तेजोबन्नव्यतिरिक्तकारणत्वावच्छिन्नकारणमात्रं विवक्षितमिति भावेनाऽऽह–**अमूर्तं च प्रकृत्यादिकमिति ॥** यन्मूर्तं चेति यच्छब्दस्य तस्मादित्युत्तरतच्छब्दान्वयं दर्शयति– **इति यदुपादानकारणं राशिद्वयमिति ॥** तेजोबन्नलक्षणं तदतिरिक्तं प्रकृत्यादिकमिति यद्राशिद्वयं तस्मादित्यर्थः ॥ **प्रविभक्ता या मूर्तिरिति ॥** प्रविभक्तेति पञ्चम्यर्थकथनम् । 'पञ्चमी विभक्ते' (पा.सू.२.३.४२) इति सूत्रेण जात्यादिभिर्निर्धार्यमाणस्य पृथक्करणे द्योत्ये पञ्चमी स्यात् । यथा क्षत्रियाद् ब्राह्मणः पूज्य इत्यर्थकेन जातयाऽनया पञ्चम्या प्रकृतराशिद्वयमध्ये एकराशेः पृथक्करणरूपविभागबोधनात् । ततश्च मूर्तामूर्तराशिद्वयान्तर्गतामूर्तभिन्नं रयिरिति श्रुत्यर्थो भवति । उपक्रमानुरोधान्मूर्तिरित्यस्य मूर्तमिति व्याख्यानम् ॥

नन्वनेन सूत्रेण पञ्चमी न युक्ता । निर्धार्यमाणस्य सामान्यशब्दोपात्तेन यत्र सामान्याकारेणापि अभेदो नास्ति तत्रैवानेन पञ्चम्या विधानात् । यथा 'माधुराः पाटलिपुत्रेभ्य आढ्यतराः' इति । 'गवां गोषु वा बहुक्षीरा कृष्णा' इतिवन्निर्धार्यमाणस्योपादानराशिद्वयात् सामान्याकारेणाभेदस्यैव विद्यमानत्वात् । 'यतश्च निर्धारणम्' (पा.सू.२.३.४१)इत्यनेन षष्ठीसप्तम्योरन्यतरस्या एव न्याय्यत्वादित्यस्वरसादाह– **सप्तम्यर्थे वा पञ्चमीति ॥** तथाच तस्मान्मूर्तामूर्तरूपकारणसमुदायमध्ये मूर्तिर्मूर्तं रयिः सरस्वत्यभिमन्यमानमित्यर्थ उक्तो भवति । श्रुतौ न्यूनतामाशङ्क्याऽऽह–**अमूर्तं प्राण इति शेष इति ॥** तस्मादित्येतदत्रापि सम्बध्यते । अर्थस्तु पूर्ववदेव । समुदायार्थमाह– **प्रकृत्यादिष्विति ॥** 'अमूर्तस्थः स वायुस्तु' इत्यादिना भाष्ये 'तस्मान्मूर्तिरेव रयिः' इत्यादिना श्रुतौ च रयिप्राणयोर्मूर्तादिस्थत्वकथनमात्रमसङ्गतम् । प्रजापतेः प्रजासर्गे तयोर्निमित्तत्वाप्रतिपादनादित्यतः 'तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः' इत्येत् 'अमूर्तस्थः स वायुः' इत्यादावनुवृत्त्या योज्यमित्याह– **तावाविश्येति सर्वत्र सम्बध्यत इति ॥** सर्वत्र अत्र संवत्सरस्थो भगवानित्यादौ । भर्तृस्थः स स्वयं वायुरेवमित्यन्ते सर्वत्रेत्यर्थः ॥ **आदित्ये**

**स्थित्वेति** ।। 'आदित्यो ह वै प्राणः' इत्यत्रेत्यर्थः ।। **तत्कथमित्युच्यत इति** ।। तत्कथमित्यत उच्यत इत्यर्थः । उक्तविवरणत्वेऽथशब्दोऽनुपपन्न इत्यत आह– **अथशब्द इति** ।। सन्निधत्त इत्येतदन्तर्णीतणिच्त्वमित्यभिप्रेत्य सन्निवेशयतीत्युक्तम् ।। **इत्यादि योज्यमिति** ।। यत्प्रतीचीं दिशं प्रविशति तेन प्रतीच्यान् प्राणान् स्वरश्मिषु सन्निधत्ते । यदधोदिशं प्रविशति तेनाधस्थान् प्राणान् स्वरश्मिषु सन्निधत्ते । यदूर्ध्वं प्रविशति तेनोर्ध्वस्थान् प्राणान् स्वरश्मिषु सन्निधत्ते । यदन्तरा दिशः प्रविशति तेनान्तरास्थान् प्राणान् स्वरश्मिषु सन्निधत्त इति योज्यमित्यर्थः । आग्नेयादीनां दिशाम् अन्तरादिश इत्यनेन ग्रहणं किं न स्यादित्यत आह– **अवान्तरदिशामिति** ।। ननु 'अथाऽदित्य उदयन्' इत्यादिनोक्तमेव प्रमेयं यत्सर्वमित्यादिना पुनः किमर्थ-मुच्यत इत्यत आह– **यत्सर्वमिति निगमनमिति** ।। ५ ।।

अभिप्रायमाह– **अनेनेति** ।। 'अथाऽदित्य उदयन्' इत्यादिनेत्यर्थः । अत्राशेषशब्देन वैवक्षिकाशेषस्य विवक्षितत्वान्नातिप्रसङ्गः । प्रजाशब्देन कार्यं गृह्यते । घटाद्युत्पत्तिं प्रति सौरालोकस्यापेक्षितत्वाद् विश्वरूप इत्यादेरथाऽ-दित्य इत्यादेरिव प्रकृतोपपादकत्वेनोपयोगादर्शनात् प्राणमाहात्म्यान्तरोप-पादकत्वेनोपयोगं दर्शयति– **न केवलमिति** ।। यद्वा, सूर्ये स्थितस्य प्रजो-त्पत्तिनिमित्तत्वमुक्त्वा 'स एष वैश्वानरः' इति वाक्येऽग्निस्थस्याप्युच्यत इति प्रतीयतेऽतः पूर्वानुवादेनैतद्वाक्यमवतार्य व्याचष्टे– **अनेनेति** ।। सूर्यस्थत्व-स्यैव प्रतिज्ञानादुदाहरिष्यमाणमन्त्रेऽप्येवमेव प्रतीतेरित्यर्थः । विश्वनर-सम्बन्धीत्यस्य विवरणम्–**तापनेत्यादि** ।। **जातस्येति** ।। विद्यमानस्येत्यर्थः । 'प्राणो वै जातवेदाः स हि जातानां वेद' इति बृहद्ब्राह्मणवाक्यादेवं नि-र्वचनम् ।। **उपलक्षणं चैतदिति** ।। 'तापिनी पाचिका चैव शोषिणी च प्रकाशिनी' इत्युक्तत्वादिति भावः । सन्नयेदिति विध्यनुपयोगमाशङ्क्याऽह– **सन्निवेशयतीत्यर्थ इति** ।। के ते प्राच्यादयः प्राणा इतीत्यनन्तरमाकाङ्क्षा-यामिति शेषः । सभार्या इत्येतत् तृतीयान्ततया विपरिणम्य कोणपैरित्यनेनापि

सम्बध्यते । तथाच दिशिदिशि चत्वार इत्येतदुपपद्यत इत्यभिप्रेत्याऽह– **सभार्यैरग्न्यादिभिः कोणपैरिति** ॥ इन्द्रयमवरुणसोमाः सभार्याः सभार्यैरग्न्यादिकोणपैः सार्धं शेषमित्रौ वीन्द्रकामावित्येते सभार्या दिशिदिशि प्राच्यादिदिक्षु अध ऊर्ध्वं च चत्वारो वर्तन्त इति भाष्यवाक्यार्थः ॥ **एतदिति** ॥ कोणपैः सार्धमित्येतदित्यर्थः । सभार्या इत्येव यदध इत्यादौ सम्बध्यत इत्यन्वयः ॥ **केचिज्ज्ञातव्या इति** ॥ अत्र भाष्ये प्रमाणान्तरे च दिङ्मध्याभिमानिनामनुक्तत्वात् केचिज्ज्ञातव्या इत्येवोक्तमिति केचिदाहुः । विनायकः, विवस्वान्नामा सूर्यः, एतत्पत्न्यौ चेति सम्प्रदाय इत्यपरे ॥ ६ ॥

**(उपनिषत्)**

*(भारतीमुख्यप्राणाभ्यां कालनियमनप्रकारः)*

**संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तद् ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष वै रयिर्यः पितृयाणः ॥ ७ ॥ अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽदित्यमभिजयन्ते । एतद् वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः ॥**

*(देवयानपितृयाणनिरूपणम्)*

**तदेष श्लोकः –**

**पञ्चपादं पितरं द्वादशाकृतिं**
**दिव आहुः परे अर्धे पुरीषिणम् ।**
**अथेमे अन्य उ परे विचक्षणं**
**सप्तचक्रे षळर आहुरर्पितमिति ॥ ८ ॥**

## (भाष्यम्)

संवत्सरस्थो भगवान् वागीरावयनस्थितौ ॥ * ॥

## (टीका)

अथ सर्वोत्पत्तिनिमित्तकारणं संवत्सरादिलक्षणं कालं तदवान्तरभेदोत्तरायणाद्यधिष्ठातारौ रयिप्राणौ चाधिष्ठाय प्रजापतेः प्रजाकारणत्वमुच्यते – **संवत्सर इति** ॥ प्रजापतिः संवत्सरो वै संवत्सरस्थः सन् प्रजा जनयतीति प्रसिद्धम् । तस्य संवत्सरस्य ये अयने सूर्यगतिविशेषोपलक्षितौ देवयानपितृयाणलक्षणदेवताविशेषाभिमतौ भागविशेषौ नामतो दक्षिणं चोत्तरं च तयोः रयिप्राणावधिष्ठातारावित्ति शेषः । कुत एतदित्युच्यते– **तद्य इत्यादि** ॥ तत्तत्र साधकेषु ये ऋषयः प्रजाकामाः, मोक्षेतरफलकामाः सन्त इति यावत्, इष्टं यजनं पूर्तमन्नप्रदानादिकं कृतमन्यच्च कर्मेत्येतदुपासतेऽनुतिष्ठन्ति त एते दक्षिणं पितृयाणं प्रतिपद्यन्ते । प्रतिपन्नाश्च ते चान्द्रमसमेव लोकमभिजयन्ते प्राप्नुवन्ति । त एव पुनः स्वकर्मावसाने तस्माच्चन्द्रलोकादावर्तन्ते ह्वै । यत एवं पितृयाणेन गतानां पुनरावृत्तिमच्चन्द्रलोकप्राप्तिलक्षणं फलं प्रसिद्धं तस्माच्चन्द्राधिष्ठात्री रयिरेवैषः यः पितृयाणो वै पितृयाणाधिष्ठात्रीति गम्यते ॥ ७ ॥

अथ ये मुमुक्षवस्तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा चोत्तरेण गतास्त आदित्यमभिजयन्ते ततश्च परमं ब्रह्म । यस्मादेतद्वै देवयानेन प्राप्यं परं ब्रह्मैव प्राणानामिन्द्रादीनामायतनमाधारः, एतदेवामृतमभयं चैतदेव परायणं मुक्तानामप्याश्रयोऽत एतस्मान्न पुनरावर्तन्ते इति तस्मादपुनरावृत्त्ययोग्यानां मार्गनिरोधकत्वादेवैषः आदित्यो निरोधोऽविदुषामित्युच्यते श्रुत्यन्तर इति । यत एवमुत्तरायणेन गतानामपुनरावृत्त्याऽऽदित्यप्राप्तिलक्षणं फलं प्रसिद्धं तस्मादादित्याधिष्ठाता प्राण एवोत्तरायणाधिष्ठातेति ज्ञायत इति वाक्यशेषः । आदित्यं प्राप्तानामपुनरावृत्तिरित्यत्र श्रुत्यन्तरसम्मतिरुक्ता– **तदेष इति** ॥ यच्चोक्तम्– केचित् पितृयाणेन यान्ति केचिद्देवयानेनेति तत्रैष

वक्ष्यमाणः श्लोको मन्त्रः सम्मतित्वेन भवति । हेमन्तशिशिरयोरैक्येन पञ्चर्तवस्तदभिमानिनः पादा अंशा यस्य तं पञ्चपादम् । पितरं प्रजानां पोषकम् । द्वादशमासाभिमानिदेवता आकृतयो रूपाणि यस्य तं द्वादशाकृतिम् । विचक्षणं विवेकिनम् । सप्त चक्राणि, चङ्क्रम्यते रथ एभिरिति अश्वा यस्यासौ सप्तचक्रः तस्मिन्, षट्सङ्ख्याका अरा यस्यासौ षळरः तस्मिन् रथेऽर्पितं वर्तमानमादित्यं दिवोऽन्तरिक्षस्य परेऽन्यतरस्मिन् किञ्चिद्दक्षिणाश्रितेऽर्धे भागे गच्छन्तम् । पुरीषमुदकं तदस्यास्तीति तं पुरीषिणं वर्षणहेतुम्, तदुपलक्षितकालाभिमानिदेवतामार्गमिति यावत्, केचित्काम्यकर्मिणः स्वप्राप्यमाहुः । अथ तेभ्योऽन्ये इमे ज्ञानिनः दिव उ परे परस्मिन् किञ्चिदुत्तराश्रिते भागे गच्छन्तमादित्यं तदुपलक्षितकालाभिमानिदेवतामार्गं स्वप्राप्यमाहुरिति यावत् । तदेतदाह– **संवत्सरस्थ इति** ॥ ८ ॥

## (प्रकाशिका)

'तस्माच्चन्द्राधिष्ठात्री रयिः' इत्यत्र द्रव्यसाध्येष्ट्यादिकर्मफलदातृत्वेन रयिनाम्ना सूचितत्वाद् रयिश्चन्द्राधिष्ठात्रीति भावः । 'तस्मादादित्याधिष्ठाता प्राण एव' इत्यत्र 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति स्मृतेः 'तत्पुरुषो मानवः । स एनान् ब्रह्म गमयति' इति श्रुतेश्च प्राणस्य मोक्षदायकत्वादिति भावः । 'हेमन्तशिशिरयोरैक्येन' इत्यत्र अभिमानिदेवतयोरभिमन्यमानकालयोश्च द्वित्वेऽपि कालगुणभूतहिमस्यैकत्वादभिमन्यमानयोरभिमानिनोश्चैकत्वोक्तिरिति ज्ञेयम् ॥

## (मङ्गालीयम्)

अधिष्ठायेत्यनन्तरं प्रजापतिः प्रजाः सृजतीति शेषः । प्रजाकारणत्वं प्रजोत्पत्तिकर्तृत्वमिति वाऽर्थः । इति प्रसिद्धमिति वैशब्दार्थकथनम् । सूर्यगतिविशेषोपलक्षितौ दक्षिणोत्तरदेशयोः सूर्यगमनविशेषेणोपलक्षितौ व्यावर्तितौ । देवयानपितृयाणदेवताविशेषाभिमतौ देवयानपितृयाणसञ्ज्ञकमार्गद्वयाभिमानि-

देवताविशेषाभिमन्यमानौ । भागविशेषौ अंशविशेषौ ।। **कुत एतदित्युच्यत इति ।।** एतद् रयिप्राणयोर्भागविशेषाधिष्ठातृत्वं कुतः प्रतिपत्तव्यमित्याकाङ्क्षायां तद्य इत्याद्युच्यत इत्यर्थः ।। **अनुतिष्ठन्तीति ।।** कुर्वन्तीत्यर्थः । इष्टापूर्तादिकर्तारः प्रथमत एव चान्द्रमसं लोकं प्राप्नुवन्तीति भ्रान्तिनिरासाय वक्ष्यमाणं दक्षिण-मित्येतदादौ योजयति– **त एते दक्षिणं पितृयाणमिति ।।** अनेन "धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" इति गीतोक्तमुपलक्षितं भवति ।। **चान्द्रमसमेवेति ।।** कर्मिणो ज्ञानिवच्चन्द्रलोकप्राप्त्यनन्तरं [१]वैश्वानरलोकं न प्राप्नुवन्तीत्यर्थः । पूर्ववाक्यार्थं 'एष वै रयिर्यः पितृयाणः' इत्यत्र हेतुतया योजयन् यदित्येतद्यत इत्यर्थकमिति व्याख्याति– **यत एवमिति ।।** गम्यस्यैव स्वप्राप्तिमार्गतदभिमानिदेवतास्वाम्यस्य वक्तव्यत्वात् । चन्द्रान्तर्गतसरस्वत्याः स्वप्राप्तिहेतुभूतपितृयाणनामकमार्गाधिष्ठातृदक्षिणायनाभिमानिदेवतामधिष्ठाय तन्नियन्तृत्वे वक्तव्ये तदभिमन्यमानदक्षिणायननियन्तृत्वमपि वाच्यमिति तदधिष्ठातृत्वं सेत्स्यतीति भावः ।। ७ ।।

**उत्तरेणेति ।।** उत्तरायणेन मार्गेण देवयानेनेत्यर्थः । एतदित्युत्तरत्रानुवादादाह– **ततश्च परमं ब्रह्मेति ।।** प्राणानामायतनत्वादिकं 'एतस्मान्न पुनरावर्तन्ते' इत्यत्र हेतुतयोक्तमित्यभिप्रेत्य योजयति– **यस्मादिति ।।** 'एतद् वै' इत्यत्र विद्यमानो वैशब्दोऽवधारणार्थ इत्यभिप्रेत्याऽह– **एतद्वै देवयानेन प्राप्यं परं ब्रह्मैवेति ।।** इतीत्यनूद्य तस्मादिति व्याख्यातम् । तस्यैव विवरणम्– **अपुनरावृत्त्ययोग्यानां मार्गनिरोधकत्वादेवेति ।।** निरोधोऽविदुषामिति च्छन्दोगश्रुतिवाक्यम् । 'एष वै रयिर्यः पितृयाणः' इतिवत् । 'एष वै प्राणो यो देवयानः' इति । एष निरोध इत्यनन्तरं श्रुतौ वक्तव्यस्यानुक्तेर्न्यूनतामाशङ्क्य पूर्ववाक्यार्थस्याध्या-हरिष्यमाणवाक्यार्थे हेतुतामभिप्रेत्य हेतुहेतुमद्भावं व्यञ्जयन् अध्याहरति– **यत एवमिति ।।** गम्यस्यैव स्वप्राप्तिमार्गतदभिमानिदेवतास्वाम्यस्य वक्तव्यत्वादा-दित्यान्तर्गतप्राणस्य स्वप्राप्तिहेतुभूतदेवयाननामकमार्गाधिष्ठात्रुत्तरायणा-

१. 'वैश्वानरादिलोकं' (पा.)

भिमानिदेवतामधिष्ठाय तन्नियन्तृत्वे वक्तव्ये तदभिमन्यमानउत्तरायणनि-
यन्तृत्वमपि वाच्यमिति तदधिष्ठातृत्वं सेत्स्यतीति भावः । उक्तवक्ष्यमाण-
श्रुत्योर्विषयभेदप्रदर्शनायोक्तमनूद्य तदेष इति वाक्यं गृहीत्वा व्याचष्टे–
**आदित्यमित्यादिना** ॥ अंशाः प्रतिबिम्बाः रूपाणि प्रतिमाः । सूर्यरथस्य
सप्त युञ्जन्ति रथमेकचक्रमिति एकचक्रत्वात् सप्तचक्र इत्येतत् सप्तचक्राणी-
त्यादिनाऽन्यथा व्याख्यातम् । पुरीषिणमिति विशेषणाद् दक्षिणाश्रितभाग
इति सिद्ध्यति ॥ ८ ॥

**(उपनिषत्)**

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः । शुक्लः प्राणः । तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् । अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते ॥ ९ ॥ अन्नं वै प्रजापतिस्ततो हैतद् रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति । तद् ये हैतत् प्रजापति-व्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् । तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १० ॥**

**इति प्रथमप्रश्नप्रतिवचनम्**

—०—

**(भाष्यम्)**

**मासस्थितः स भगवान् पक्षयोर्वाक् च मारुतः ।**
**अहोरात्रे तु भगवान् [१]प्राणो ह्यहनि वाङ् निशि ॥**

---

१. 'प्राणोऽह्न्यथ च' ह.

**दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती ।**
**भर्तृस्थः स स्वयं वायुरेवं जानन् विमुच्यते'**

**इति प्रजापतिसंहितायाम् ॥ * ॥**

—०—

## (टीका)

किं च मासो वै प्रजापतिः । मासलक्षणं कालमधिष्ठाय प्रजाः सृजतीति यावत् । तस्य मासस्यावयवभूतः कृष्णपक्ष एव रयिः । शुक्लपक्षः प्राणः । पक्षद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावत् । कुत एतत् ? यस्मात् खल्वादित्योत्तरायणाधिष्ठाता प्राणः शुक्लपक्षे स्थितः तस्मादेव ह्येते उत्तरायणेनाऽदित्यं जिगमिषन्त ऋषयः शुक्लपक्षे इष्टिं यजनं निष्कामं प्राणपूजात्मकं कुर्वन्ति । यस्माच्चन्द्रदक्षिणायनाधिष्ठात्री रयिः कृष्णपक्षे स्थिता तस्मादेव हीतरे दक्षिणायनेन चन्द्रमसं प्रेप्सन्त ऋषय इतरस्मिन् कृष्णपक्षे काम्यां रयिं पूजारूपामिष्टिं कुर्वन्तीति यावत् । तदेतदाह–**मासस्थित इति** ॥ 'किं चाहोरात्रे' इत्यादि पूर्ववद् व्याख्येयम् । तदिदमाह–**अहोरात्रे त्विति** ॥ एकवद्भावस्य वैकल्पिकत्वेन श्रुतावहोरात्रे इति प्रथमा । भाष्ये तु सप्तमीति ज्ञातव्यम् । 'प्राणं वा' इत्यादिवाक्यं न साक्षात् प्रकृतेन सम्बध्यते । अतो मध्ये किमपि वक्तव्यं तदाह– **दम्पत्योरिति** ॥ एवं सति तदुपपादकत्वेनास्य सम्बन्धः । ये दिवा रत्या रतिहेतुभूतया स्त्रिया संयुज्यन्ते संयोगमाचरन्ति त एते प्राणं स्कन्दन्ति निर्गमयन्ति । यत्र क्वचन परित्यजन्ति । यद्रात्रौ रत्या संयुज्यते तदिदं ब्रह्मचर्यसममेवेति तावत् प्रसिद्धम् । तेन ज्ञायते रात्र्यधिष्ठात्री रयिः स्त्रियां वर्तते, अहरधिष्ठाता प्राणः पुंसीति । तथा हि । दिवा पुरुषरेतसि प्राणस्याधिकं सन्निधानम् । न तदा देव्याः स्त्रियां तावत् । ततश्च दिवा पुरुषरेतसि स्थिते प्राणे स्त्रियं प्राप्ते यत्र क चासावनेन त्यक्तो भवति । रात्रौ तु स्त्रियां देव्या अधिकं सन्निधानमिति । तदा प्राणः स्वभार्यामेव प्राप्तो वर्तत इत्युपपद्यत इति ॥ ९ ॥

किं चान्नं वै प्रजापतिः। कथमन्ने स्थितस्य प्रजापतेः प्रजाजनकत्वमिति? ततोऽन्नात् खल्वेतद्रेतो जायते। किं चातः? तस्माद्रेतसो हीमा मानुषादि-प्रजाः प्रजायन्त इति। अन्ने स्थित्वा तद् रेतोरूपेण परिणाम्य तदुपादानीकृत्य प्रजापतिः प्रजाः सृजतीति यावत्। एवं परमेश्वरो निमित्तोपादानभूतान् पदार्थान् द्वारीकृत्य प्रजाः सृजतीति विदुषां फलमुच्यते— **तदित्यादिना**॥ तत्तत्र प्रजासु ये खलु पुरुषास्तदेतद्यथोक्तं प्रजापतेः व्रतं कर्म चरन्ति जानन्ति ते मिथुनमुत्पादयन्ते साध्वपत्या भवन्ति। तेषामेवैष सत्याख्यो ब्रह्मलोकः प्राप्यो भवति। येषां तपो ब्रह्मचर्यं चास्ति, येषु सत्यं सत्यवचनं प्रतिष्ठितं नियमेन स्थितम्। न केवलमेतावत्। किं तु यावद् ब्रह्मलयं तत्र स्थितानामेव तेषामसौ विरजोऽप्राकृतो ब्रह्मलोको वैकुण्ठादिः प्राप्यो भवति। येषु जिह्मं कौटिल्यमनृतमसत्यवचनं माया विप्रलिप्सेत्येव-मादिदोषा न सन्ति तेषामिति सम्बन्धः। सत्यवचनादिगुणाभिधानेन सिद्धस्याप्यनृतादिदोषाभावस्योक्तिरादरार्थेति। तदिदमाह—**एवमिति**॥१०॥

### ॥ इति प्रथमप्रश्नप्रतिवचनम् ॥

### (मङ्गालीयम्)

'संवत्सरो वै प्रजापतिः' इत्युक्तत्वात् तत्समुच्चयार्थं किञ्चेत्युक्तम्॥ **कुत एतदिति**॥ रयिप्राणयोः कृष्णशुक्लपक्षस्थितत्वं कस्मात् प्रमाणात् प्रतिपत्तव्यमित्यर्थः। रयिप्राणयोः कृष्णशुक्लपक्षस्थितत्वस्य [१]साध्यत्वलाभाय तस्मादेत इत्यत्रैवकारमध्याहृत्य व्याख्याति— **तस्मादेव हीति**॥ 'मासो ह वै प्रजापतिः' इत्युक्तत्वात् किञ्चेत्युक्तम्। न केवलमेतावदिति तस्यार्थः। **पूर्ववद् व्याख्येयमिति**॥ अहोरात्रकालमधिष्ठाय प्रजापतिः प्रजाः सृजति। तस्यावयवभूतमहरेव प्राणो रात्रिरेव रयिः। अहोरात्राख्यभागद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावदिति पूर्ववदित्यर्थः॥

१. क्वचित् **'लाभाय'** इत्येव पाठः।

ननु श्रुतौ संवत्सरो वै मासो वै इत्यादिप्रथमान्तोपक्रमादहोरात्रमिति प्रथमान्ते वक्तव्ये कथं सप्तमीनिर्देश इत्यत आह– **एकवद्भावस्येति** ॥

अयं भावः । श्रुतावहोरात्रे इति इतरेतरयोगद्वन्द्वाश्रयणेन प्रथमाद्विवचनमेव । एकवद्भावस्य 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति परिभाषया वैकल्पिकत्वादिति । एवमेव भाष्ये प्रथमाद्विवचनमिति न भ्रमितव्यमित्याह– **भाष्ये त्विति** ॥ एकवद्भावेनाहोरात्र इति सप्तम्येकवचनमेव । अह्नि निशीति सप्तम्यन्तप्रायपाठादित्यर्थः ॥

ननु 'दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती । भर्तृस्थः स स्वयं वायुः' इति भाष्यमुपनिषदर्थाप्रतिपादकत्वादसङ्गतमिति प्रतीतिं वारयितुं गमयति– **प्राणं वा इत्यादिवाक्यमिति** ॥ **न साक्षात् प्रकृतेनेति** ॥ प्राणस्याहरभिमानित्वकथनेन सरस्वत्या रात्रिस्वामित्वकथनेन च साक्षात्सम्बन्धाभावादिति भावः । न सम्बध्यत इत्यनन्तरमत इति शेषः ॥ **एवं सतीति** ॥ अहोरात्राभिमानिप्राणसरस्वत्योर्भर्तृभार्यादेवतात्वे सतीत्यर्थः । **तदुपपादकत्वेन** अहोरात्राधिष्ठातृप्राणसरस्वत्योर्भर्तृभार्यादेवतात्वोपपादकत्वेन । **अस्य** 'प्राणं वा एते प्रस्कन्दन्ति' इत्यादिवाक्यस्येत्यर्थः । तदुपपादकत्वप्रकारं दर्शयति– **ये दिवा रत्येति** ॥ ननु यद् दिवास्त्रीसङ्गस्यायोग्यदेशे मुख्यप्राणनिर्यापनप्रत्यवायहेतुत्वं, यच्च रात्रौ स्त्रीसङ्गस्य ब्रह्मचर्यसमपुण्यापादकत्वं तदन्यथानुपपत्त्या प्राणसरस्वत्योर्न साक्षादहोरात्रगतत्वं सेत्स्यति । किं नाम ? भर्तृभार्यागतत्वमेवेति यदुक्तं तदयुक्तम् । वाक्प्राणयोः स्त्रीपुरुषस्थितत्वस्योक्तप्रमेयोपपादकत्वे सत्येव तत्सिद्ध्येत् । नच तदस्ति । तयोः सर्वदा स्त्रीपुरुषयोः सन्निधानात् । दिवासङ्गस्यापि पापापादकत्वायोगात् । एवमपि पापहेतुत्वे रात्रावपि तत्प्रसङ्गेन ब्रह्मचर्यसाम्यानुपपत्तेश्च ॥

किञ्च, प्राणस्य पुंस्थितत्वमात्रेणाहरधिष्ठातृत्वं भारत्याश्च स्त्रीगतत्वमात्रेण रात्र्यधिष्ठातृत्वं कथं सिद्ध्येदित्यतोऽभिप्रायमाविष्करोति– **तथा हीत्या-**

**दिना** ॥ न वयं 'प्राणं प्रस्कन्दन्ति' इत्याद्युपपत्त्या तयोर्दम्पतीगतत्वमात्रं ब्रूमः । किन्तु तत्तत्काले तत्रतत्र विशेषतः सन्निधानं च । यस्मादहरधिष्ठाता प्राणः पुंसि वर्तते तस्मादेव स स्वाभिमन्यमाने काले तत्र विशेषतः सन्निधत्ते । यस्माद् रात्र्यधिष्ठात्री रयिः स्त्रियां वर्तते तस्मादेव सा स्वाभिमन्यमाने काले तत्र विशेषतः सन्निधत्त इति । अतो न काचिदनुपपत्तिरिति भावः । रात्रौ स्त्रियां सरस्वत्या यावदधिकं सन्निधानं तदनुगुणं पुरुषे प्राणस्यापि सन्निधानं विद्यते । दिवा तु प्राणस्य पुंसि ततोऽप्यधिकं सन्निधानमित्यत उक्तमुपपद्यते ॥ ९ ॥

एकेन प्रकारेणोपादानत्वस्य यन्मूर्तं चेत्यादावुक्तत्वादन्नं वा इत्येतत् किञ्चेत्यवतारितम् । प्रजाजनकत्वमितीत्यनन्तरम् आकाङ्क्षायामाहेति शेषः । पितामहादिवत् परम्परया जनकत्वोपचार इति प्रतीतिनिरासायाऽह– **अन्ने स्थित्वेत्यादि ॥ चरन्ति जानन्तीति** ॥ चर गतिभक्षणयोरिति धातुव्याख्यानाद् गत्यर्थानामवगत्यर्थत्वमिति भावः । मिथुनोत्पादनस्याज्ञानिसाधारण्यादाह– **साध्वपत्या इति** ॥ 'तेषामेवैषः' इत्यादिवाक्यद्वयं भिन्नविषयत्वप्रतीतिनिरासाय व्याचष्टे– **तेषामेवैष इति** ॥ प्रतिष्ठितमित्यत्र प्रतिशब्दार्थः– **नियमेनेति** ॥ माया चेत्यत्र चशब्दस्यानुक्तसमुच्चायकत्वमभिप्रेत्याऽह– **एवमादिदोषा इति** ॥ १०॥

**॥ इति प्रथमप्रश्नप्रतिवचनम् ॥**

—०—

## अथ द्वितीयः प्रश्नः

### (उपनिषत्)

*(स्थितिकर्तृविषयकः द्वितीयः प्रश्नः)*

**ॐ ॥ अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजा विधारयन्ते । कतर एतत् प्रकाशयन्ते । कः पुनरेषां वरिष्ठ इति ॥ १ ॥ तस्मै स होवाच । आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ् मनश्चक्षुः श्रोत्रं च । ते प्रकाश्या अभिवदन्ति । वयमेतद् बाणमवष्टभ्य विधारयाम इति ॥ २ ॥**

### (भाष्यम्)

'वायुरग्निः' इत्यत्र [१]भूतवायुरुच्यते । प्राणशब्देन प्रधानवायुः ॥ * ॥

### (टीका)

**॥ अथ हैनं भार्गवः ॥** प्रश्नार्थस्योक्तानन्तर्यसूचकोऽथशब्दः । उक्तं परमेश्वरस्य सकलप्रजाजनकत्वम् । लब्धजन्मनः स्थित्यादीति तदनन्तरं स्थितिज्ञानहेतुत्वं वक्तव्यम् । प्राक् प्राणस्य वरिष्ठत्वमभिप्रेतम् । तच्चोपपादनीयमिति तदर्थमुत्तरो ग्रन्थः । भगवन् कत्येव कियत्सङ्ख्याकाः कतरे च देवाः प्रजा विधारयन्ते? कति कतरे च देवा एतद्विषयजातं प्रकाशयन्ते ? कान्निमित्तीकृत्य परमेश्वरः प्रजानां स्थितिं विषयप्रकाशं च करोतीति यावत् । एषां धारणप्रकाशहेतूनां देवानां मध्ये को वा वरिष्ठोऽतिशयेन वरः ॥१॥

१. 'भूतवायुः ।'

पूर्वोक्तरीत्या प्राणेन भाव्यम् । तत्कथमित्येवं पृष्ठवते तस्मै स होवाच । एष आकाश आकाशाभिमानी देवो ह वै यस्त्वया धारकः पृष्टः । एवं वायुरग्निरित्यादि । अत्रोपलक्षणत्वेन पृथिवी च पृथिवीमात्रा चेत्यादिवक्ष्यमाणाः सर्वेऽपि तत्त्वदेवा ग्राह्याः । तेषु चक्षुरादयः प्रकाशहेतवोऽन्ये स्थितिहेतव इति ज्ञातव्यम् । उक्तमात्रग्रहणे कः पुनरेषां वरिष्ठ इति प्रश्नाननुगुणः परिहारः स्यात् । तत्र वायुशब्दस्य प्रधानाप्रधानवायुसाधारण्यादुभयोरपि वक्तव्यत्वात् कोऽत्राभिप्रेत इति चिन्तायामाह– **वायुरिति** ॥ भूतप्रकरणत्वादिति भावः । वायाविन्द्र इत्यादाविवात्र प्रधानवायुः किं न स्यात्तस्यापि वक्तव्यत्वादित्यत आह– **प्राणशब्देनेति** ॥ 'तान् वरिष्ठः प्राण उवाच' इत्युत्तरत्र प्रधानवायुः प्राणशब्देन परामृश्यते । यद्यत्रासौ वायुशब्देन प्रकृतो न स्यात् कथं तर्हि प्राणशब्देन परामृश्येत । न ह्येवं बाधकमन्तरेण क्वचिदुपलब्धम् । लक्षणयाऽपि तस्य ग्रहणसम्भवाद् इति भावः । न च वाच्यमुभयोरपि वाचकोऽस्त्विति । उक्तादेव हेतोः । न ह्येवं वक्तव्यं सर्वमप्युक्तं स्यात् । येन सकृदुच्चरितस्य शब्दस्यार्थद्वयं प्रतिपद्येमहीति ॥

एतेषां च प्राणस्य वरिष्ठत्वावधारणायाऽख्यायिकोच्यते– **ते प्रकाश्या इत्यादि** । त एते धारकाः प्रकाशकाश्च देवाः प्राकाश्याः प्रकाशवन्तः, अभि अभितः उच्चैरिति यावत्, अभिवदन्ति कदाचिदन्योन्यं स्पर्धयैवाभ्यवदन् । किमिति ? वयमेतद् बाणं शरीरमवष्टभ्याऽश्रित्य विधारयामः प्रकाशयामश्चेति । अहमेव स्वातन्त्र्येण देहधारको न त्वमपि धारकः, अहमेव स्वातन्त्र्येण विषयप्रकाशको न त्वमपि प्रकाशक इति यावत् ॥ २ ॥

## (प्रकाशिका)

'उक्तमात्रग्रहणे' इत्यत्र उक्तमात्रग्रहणे पञ्चदेवतामात्रग्रहणे शब्दादितन्मात्रादेवतानामुपलक्षणतयेन्द्रियाभिमानिदेवतातां चाग्रहणे वायोः सर्वदेवोत्तमत्वासिद्ध्या 'कस्स्विद्देवतानां वरिष्ठः' इति प्रश्नो न स्यात् । 'लक्षणयाऽपि

तद्ग्रहणसम्भवात्' इत्यत्र 'गवां मध्ये कृष्णा गौर्विशिष्टा' इत्यादाविवोत्कृष्टतया वक्तव्यप्राणस्यापि निर्धारणीयमध्ये प्रवेशावश्यम्भावादसावावश्यकः । प्राणस्यापि वायुशब्देनोक्तौ वायोरप्यभिमानित्वाविशेषात् साम्यशङ्का स्यात् । कस्यायं परामर्श इति च न निश्चेतुं शक्यते । तस्मादुपलक्षणयोभयोर्ग्रहणमिति भावः । 'न ह्येवं वक्तव्यं सर्वमप्युक्तं स्यात्' इत्यत्र एवं सति मुख्यवाच्यानामेवालाभेन भूतपञ्चकवाचकपदैरप्यनुक्तानामपीन्द्रियाभिमानिदेवतानामसङ्ग्रहप्रसङ्गेन प्राणादवरत्वेन वक्तव्यं सर्वमुक्तं न स्याद्धि । अतो लक्षणैवाऽश्रयणीयेति भावः । 'प्रकाशवन्तः' इत्यत्र प्राकाश्याः वक्ष्यमाणप्रमेयस्य सर्वेषां प्रकाशने योग्या इत्यर्थः । तस्याभिप्रायमाह– **उच्चैरिति यावदिति** ॥

## (मङ्गालीयम्)

**अथ हैनं भार्गवः** ॥ ननु कात्यायनप्रश्नप्रतिवचनान्तरं सुकेशादिप्रश्नप्रतिवचनानि विहाय भार्गवप्रश्नप्रतिवचने कुतो वक्तव्ये इत्याशङ्कापरिहारायोक्तमथशब्दं व्याचष्टे– **प्रश्नार्थस्योक्तानन्तर्यसूचकोऽथशब्द इति** ॥ स्थित्यादीत्यतःपरं सम्भवतीति शेषः । तदनन्तरं सृष्टिकथनानन्तरम् । **स्थितिज्ञानहेतुत्वमिति** ॥ स्थितिहेतुत्वं ज्ञानहेतुत्वं चेत्यर्थः । अत एव प्राक् स्थित्यादीत्युक्तम्– **अभिप्रेतमिति** ॥ 'स मिथुनमुत्पादयते' इति प्रथममुत्पत्तिकथनेनैतौ मे बहुधा प्रजाः करिष्यत इति प्रजापतेस्तपःप्रकारप्रदर्शकवाक्ये बहुधा प्रजाकरणवचनेन वा प्राणस्य वरिष्ठत्वमभिप्रेतमित्यर्थः ॥ **कत्येव कियत्सङ्ख्याका इति** ॥ 'किमः सङ्ख्यापरिमाणे डति च' (पा.सू.५.२.४१) इति सूत्रेण किंशब्दात् सङ्ख्यापरिमाणविशेषप्रश्नार्थाड्डतिप्रत्ययविधानादिति भावः ॥ **कतरे चेति** ॥ के च देवा इत्यर्थः । 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' (पा.सू.५.३.९२) इति सूत्रेण किंशब्दान्निर्धारणार्थे डतरच्प्रत्यय इति भावः । **विषयजातं** शब्दादिसमूहम् । ननु 'परं ब्रह्मान्वेषमाणाः' इत्युक्तत्वात् परब्रह्मजिज्ञासुना भार्गवेण धारकादिदेवताविषयकप्रश्नः कथं क्रियत इत्यतः प्रश्नतात्पर्यमाह– **कान् निमित्तीकृत्येति** ॥ 'एतावदेवाहमेतद् ब्रह्म वेद'

पूर्वोक्तरीत्या प्राणेन भाव्यम् । तत्कथमित्येवं पृष्ठवते तस्मै स होवाच । एष आकाश आकाशाभिमानी देवो ह वै यस्त्वया धारकः पृष्टः । एवं वायुरग्निरित्यादि । अत्रोपलक्षणत्वेन पृथिवी च पृथिवीमात्रा चेत्यादिवक्ष्यमाणाः सर्वेऽपि तत्त्वदेवा ग्राह्याः । तेषु चक्षुरादयः प्रकाशहेतवोऽन्ये स्थितिहेतव इति ज्ञातव्यम् । उक्तमात्रग्रहणे कः पुनरेषां वरिष्ठ इति प्रश्नाननुगुणः परिहारः स्यात् । तत्र वायुशब्दस्य प्रधानाप्रधानवायुसाधारण्यादुभयोरपि वक्तव्यत्वात् कोऽत्राभिप्रेत इति चिन्तायामाह– **वायुरिति** ॥ भूतप्रकरणत्वादिति भावः । वायाविन्द्र इत्यादाविवात्र प्रधानवायुः किं न स्यात्तस्यापि वक्तव्यत्वादित्यत आह– **प्राणशब्देनेति** ॥ 'तान् वरिष्ठः प्राण उवाच' इत्युत्तरत्र प्रधानवायुः प्राणशब्देन परामृश्यते । यद्यत्रासौ वायुशब्देन प्रकृतो न स्यात् कथं तर्हि प्राणशब्देन परामृश्येत । न ह्येवं बाधकमन्तरेण क्वचिदुपलब्धम् । लक्षणयाऽपि तस्य ग्रहणसम्भवाद् इति भावः । न च वाच्यमुभयोरपि वाचकोऽस्त्विति । उक्तादेव हेतोः । न ह्येवं वक्तव्यं सर्वमप्युक्तं स्यात् । येन सकृदुच्चरितस्य शब्दस्यार्थद्वयं प्रतिपद्येमहीति ॥

एतेषां च प्राणस्य वरिष्ठत्वावधारणायाऽऽख्यायिकोच्यते– **ते प्रकाश्या इत्यादि** । त एते धारकाः प्रकाशकाश्च देवाः प्राकाश्याः प्रकाशवन्तः, अभि अभितः उच्चैरिति यावत्, अभिवदन्ति कदाचिदन्योन्यं स्पर्धयैवाभ्यवदन् । किमिति ? वयमेतद् बाणं शरीरमवष्टभ्याऽश्रित्य विधारयामः प्रकाशयामश्चेति । अहमेव स्वातन्त्र्येण देहधारको न त्वमपि धारकः, अहमेव स्वातन्त्र्येण विषयप्रकाशको न त्वमपि प्रकाशक इति यावत् ॥ २ ॥

## (प्रकाशिका)

'उक्तमात्रग्रहणे' इत्यत्र उक्तमात्रग्रहणे पञ्चदेवतामात्रग्रहणे शब्दादितन्मात्रादेवतानामुपलक्षणतयेन्द्रियाभिमानिदेवतातां चाग्रहणे वायोः सर्वदेवोत्तमत्वासिद्ध्या 'कस्स्विद्देवतानां वरिष्ठः' इति प्रश्नो न स्यात् । 'लक्षणयाऽपि

तद्ग्रहणसम्भवात्' इत्यत्र 'गवां मध्ये कृष्णा गौर्विशिष्टा' इत्यादाविवोत्कृष्टतया वक्तव्यप्राणस्यापि निर्धारणीयमध्ये प्रवेशावश्यम्भावादसावावश्यकः । प्राणस्यापि वायुशब्देनोक्तौ वायोरप्यभिमानित्वाविशेषात् साम्यशङ्का स्यात् । कस्यायं परामर्श इति च न निश्चेतुं शक्यते । तस्मादुपलक्षणयोभयोर्ग्रहणमिति भावः । 'न ह्येवं वक्तव्यं सर्वमप्युक्तं स्यात्' इत्यत्र एवं सति मुख्यवाच्यानामेवालाभेन भूतपञ्चकवाचकपदैरप्यनुक्तानामपीन्द्रियाभिमानिदेवतानामसङ्ग्रहप्रसङ्गेन प्राणादवरत्वेन वक्तव्यं सर्वमुक्तं न स्याद्धि । अतो लक्षणैवाऽश्रयणीयेति भावः । 'प्रकाशवन्तः' इत्यत्र प्राकाश्याः वक्ष्यमाणप्रमेयस्य सर्वेषां प्रकाशने योग्या इत्यर्थः । तस्याभिप्रायमाह– **उच्चैरिति यावदिति** ॥

## (मङ्गालीयम्)

**अथ हैनं भार्गवः** ॥ ननु कात्यायनप्रश्नप्रतिवचनान्तरं सुकेशादिप्रश्नप्रतिवचनानि विहाय भार्गवप्रश्नप्रतिवचने कुतो वक्तव्ये इत्याशङ्कापरिहारायोक्तमथशब्दं व्याचष्टे– **प्रश्नार्थस्योक्तानन्तर्यसूचकोऽथशब्द इति** ॥ स्थित्यादीत्यतःपरं सम्भवतीति शेषः । तदनन्तरं सृष्टिकथनानन्तरम् । **स्थितिज्ञानहेतुत्वमिति** ॥ स्थितिहेतुत्वं ज्ञानहेतुत्वं चेत्यर्थः । अत एव प्राक् स्थित्यादीत्युक्तम्– **अभिप्रेतमिति** ॥ 'स मिथुनमुत्पादयते' इति प्रथममुत्पत्तिकथनेनैतौ मे बहुधा प्रजाः करिष्यत इति प्रजापतेस्तपःप्रकारप्रदर्शकवाक्ये बहुधा प्रजाकरणवचनेन वा प्राणस्य वरिष्ठत्वमभिप्रेतमित्यर्थः ॥ **कत्येव कियत्सङ्ख्याका इति** ॥ 'किमः सङ्ख्यापरिमाणे डति च' (पा.सू.५.२.४१) इति सूत्रेण किंशब्दात् सङ्ख्यापरिमाणविशेषप्रश्नार्थाड्डतिप्रत्ययविधानादिति भावः ॥ **कतरे चेति** ॥ के च देवा इत्यर्थः । 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्' (पा.सू.५.३.९२) इति सूत्रेण किंशब्दान्निर्धारणार्थे डतरच्प्रत्यय इति भावः । **विषयजातं** शब्दादिसमूहम् । ननु 'परं ब्रह्मान्वेषमाणाः' इत्युक्तत्वात् परब्रह्मजिज्ञासुना भार्गवेण धारकादिदेवताविषयकप्रश्नः कथं क्रियत इत्यतः प्रश्नतात्पर्यमाह– **कान् निमित्तीकृत्येति** ॥ 'एतावदेवाहमेतद् ब्रह्म वेद'

इत्युपसंहारवाक्येन परिहारवाक्यस्यापि भगवद्विषयकत्वावगमाच्चैतदेव प्रश्नतात्पर्यमित्यवधेयम् । अत एव पूर्वखण्डेऽपि 'तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः' इति भाष्ये प्रश्नतात्पर्यमुक्तम् ।। **अतिशयेन वर इति** ।। वरशब्दादतिशयार्थे 'अतिशायने तमबिष्ठनौ' (पा.सू.५.३.५५) इति इष्ठन्प्रत्यय इत्यर्थः ।। १ ।।

ननु 'कः पुनरेषां वरिष्ठः' इति वरिष्ठत्वमनूद्यते । नचासिद्धस्यानुवादो भवतीत्यतः प्रागुक्तरीत्या मुख्यप्राणस्य वरिष्ठत्वं सिद्धवत्कृत्य प्रकारप्रश्न एव नतु वरिष्ठस्वरूपप्रश्न इति प्रश्नाभिप्रायमाह– **पूर्वोक्तरीत्येति** ।। पूर्वखण्डे मुख्यप्राणस्याशेषप्रजोत्पत्तौ मुख्यद्वारत्वमुक्तम् । अतः स्थित्यादावपि स एव मुख्यहेतुरिति वाच्यम् । यतो महाराजत्वमिव युवराजत्वमपि अखण्डं लोके दृश्यते । तत्र किंप्रमाणकं किंप्रकारकं वा वरिष्ठत्वमिति प्रश्नार्थः । यथाश्रुते प्रश्नस्य सिद्धार्थत्वप्रसङ्गात् परिहारानानुगुण्याच्चेति भावः । **एष आकाशाभिमानीति** ।। आकाश इत्यस्य व्याख्या– **आकाशाभिमानीति** । यस्त्वया धारकः पृष्ट एष आकाशाभिमानी देवो हवा इत्यन्वयः ।। **एवं वायुरग्निरित्यादीति** ।। यस्त्वया धारकः पृष्टः स वायुरग्निरित्यादि । तथा प्रकाशहेतुत्वेन यः पृष्टः स मनश्चक्षुरादीति योजनीयमित्यर्थः । ननु चतुर्थखण्डे धारकाणां प्रकाशकानां च बहूनां वक्ष्यमाणत्वात् नवानामेवात्र कथं कथनमित्यत आह– **अत्रोपलक्षणत्वेनेति** ।। आकाशादिभूतवाचकशब्दपञ्चकेन पञ्चतन्मात्राः वाक्शब्देन कर्मेन्द्रियाणि तद्विषयाश्च चक्षुःश्रोत्रमनःशब्दैर्ज्ञानेन्द्रियाणि तद्विषयाः तत्र देवाकाशादिसर्वधारको मुख्यप्राणश्चेत्येते सर्वेऽपि तत्त्वदेवा इत्यर्थः । धारकाणां प्रकाशकानां च सङ्कल्प्योक्तेस्तत्र विवेकमाह– **तेषु चक्षुरादय इति** ।। 'चक्षुश्च द्रष्टव्यं च' इति चक्षुष एवाऽदावुत्तरत्रोक्तेश्चक्षुरादय इत्युक्तम् । **अन्ये** पृथिव्यादयः । लक्षणाहेतुं मुख्यार्थानुपपत्तिं दर्शयति– **उक्तमात्रग्रहण इति** ।। **कः पुनरेषां वरिष्ठ इति प्रश्नाननुगुणः परिहारः**

**स्यादिति ॥** एषां धारकाणां प्रकाशकानां च तत्त्वाभिमानिनां सर्वेषां मध्ये को वा वरिष्ठ इति प्रश्नस्य 'तान् वरिष्ठः प्राण उवाच' इति परिहारोऽननुगुणः स्यात् । उक्तानामा-काशादीनां नवानां देवानां मध्ये मुख्यप्राणस्यानुक्तत्वेन तदपेक्षया वरिष्ठत्वकथनस्यानन्वितत्वात् । तस्मात् प्रश्नप्रतिवचनानुगुण्यायोक्तेषु प्राणोऽवश्यं लक्षणीयः । तथाच किमर्धजरतीयन्यायेन प्राणावसितसर्वदेवोत्तम-त्वलाभाय लक्षणया वक्ष्यमाणसर्वतत्त्वदेवानां ग्रहणे तन्मध्ये मुख्यप्राणस्य वरिष्ठत्वेन 'कः पुनरेषां वरिष्ठः' इति निर्धारणषष्ठ्याः सम्भवेन चतुर्थप्रश्ने वक्ष्यमाणसर्व-देवानां ग्रहणं युक्तमित्यर्थः ॥ **तत्रेति ॥** उपलक्षणया सर्वदेवानां ग्रहणे सतीत्यर्थः । ननु यस्य वक्तव्यत्वं स एव गृह्यतामित्यत आह– **उभयोरपीति ॥** वचनवृत्त्योभयोर्ग्रहणे वक्ष्यमाणबाधकप्राप्त्या एकस्यैव वचन-वृत्त्या ग्रहणे कर्तव्ये को वा वचनवृत्त्या ग्राह्य इति चिन्तायामित्यर्थः । 'वायुरग्निः' इत्यत्र भूतवायुरुच्यत इति मूले हेतोरनुक्त्या न्यूनतेत्यतो मूलाभिप्रेतं हेतुमाह– **भूत-प्रकरणत्वादिति भाव इति ॥** यथाऽऽह जैमिनिः– 'विशये प्रायदर्शनात्' इति । 'वत्समालभेत' इत्यत्राऽलम्भनं हिंसोत स्पर्श इति विशये गोदोहनप्रकरणात् स्पर्श एवेति ॥

ननु प्राणशब्देन प्रधानवायुरुच्यत इत्युत्तरभाष्यं व्यर्थम् । 'तान् वरिष्ठः प्राण उवाच' इत्यत्र वरिष्ठत्वविशेषणादेव प्राणशब्दस्य प्रधानवायुपरत्व-निश्चयेन पूर्वत्र वायुशब्द इव सन्देहाभावेन प्राणशब्दस्याव्याख्येयत्वादित्या-शङ्क्य नेदं भाष्यं प्राणशब्दस्य व्याख्यानार्थं प्रवृत्तं येनोक्तदोषः स्यात् । किन्तु पूर्वत्र वायुशब्देन भूतवायुरुच्यते भूतप्रकरणत्वादित्युक्तम् । तत्र प्रकरणमुल्लङ्घ्य वायुशब्देन प्रधानवायोरेव ग्रहणे बाधकं दर्शयितुमिति भावेन तद्भाष्यमवतारयति– **वायाविन्द्र इत्यादाविवेति ॥** 'भूतेषु तच्छ्रुतेः' (ब्र.सू.४.२.५) इत्यधिकरणे । आकाशादिभूतेषु देवानां लयकथनावसरे 'वाया-विन्द्रः सोम आदित्यो बृहस्पतिः' इत्यादिवाक्ये इन्द्रादिलयाधिकरणत्वेन

लिङ्गेन भूतप्रकरणं बाधित्वा वायुशब्देन भूतवायुं परित्यज्य यथा मुख्य-वायुर्गृह्यते । तद्वदत्रापि भूतप्रकरणं बाधित्वा वायुशब्देन प्रधानवायुः किं न गृह्यत इत्यर्थः ॥

ननु भूताभूतसाधारणो यः शब्दो भूतप्रकरणे श्रूयते स भूतपर एव । 'यः साधारणः शब्दो यत्प्रकरणे पठ्यते स तत्परः' इति व्याप्तेः । वायुशब्दस्य प्रधानवायुपरत्वेन व्यभिचारचोदनं न युक्तम् । 'भूतेषु तच्छ्रुतेः' (ब्र.सू.४.२.५) इत्येतद्विवरणात्मके 'नैकस्मिन् दर्शयतो हि' (ब्र.सू.४.२.६) इत्यत्र सूत्रे उदाहृतस्यास्य वाक्यस्य भूतपरत्वेन प्रधानवायोरपि भूतत्वस्यैवाङ्गीकर्तव्यत्वात् । अत एव 'प्रधानवायुस्त्विह भूतनामा' इत्याद्यनुव्याख्याने प्रधानवायोर्भूतत्व-मुक्तम् । तस्मादत्रापि वायुशब्दस्य भूतपरत्वात् कथं व्यभिचारः ? पूर्वं प्रधानवायुव्यावृत्त्यर्थं भूतप्रकरणत्वादिति हेतूक्तिश्चायुक्तेति चेन्न । भूतप्रकरणे श्रुतो वायुशब्दः 'खं वायुर्ज्योतिरापः', 'आकाशाद् वायुः' इत्यादौ नियमेना-वान्तराभिमानिपर एव दृश्यते । अतोऽत्रापि स एवोच्यते न प्रधानवायुरित्या-शयेनोक्तावियमाशङ्कोदेतीत्यङ्गीकारात् । नन्वत्र प्रधानवायुपरत्वज्ञापकाभावे सतीति विशेषणमभिप्रेतम् । 'वायाविन्द्रः' इत्यत्र तु इन्द्रलयाधिकरणत्वं ज्ञापकमस्तीति विशेषणाभावान्न व्यभिचार इत्यत आह– **तस्यापि वक्तव्य-त्वादिति** ॥ तर्ह्यवश्यवक्तव्यत्वं मुख्यपरत्वज्ञापकमत्राप्यस्तीति विशेषणा-सिद्धिरिति भावः । केचित्तु, तत्र लिङ्गवदत्र प्रकरणबाधकं किमित्यत आह– **तस्यापीति** ॥ तस्याप्यवश्यवक्तव्यत्वान्यथानुपपत्त्या प्रकरणबाधो युक्त इति व्याचक्षते । प्राणशब्देन प्रधानवायुरित्यत्रोच्यत इत्यनुवृत्तौ सत्यां नैतच्छङ्का-परिहारकमेतद्वाक्यं स्यादतोऽध्याहृत्य योजयति– **तान् वरिष्ठ इति** ॥

ततश्चैवं भाष्याशयः । मुख्यप्राणस्य 'आकाशो हवा एष देवः' इति धारक-प्रकाशकदेवप्रतिपादकवाक्येऽनुक्तौ धारकत्वप्रकाशकत्वाप्रसक्तेः 'तान् वरिष्ठः प्राण उवाच' इत्यत्र धारकप्रकाशकैर्धारणप्रकाशनविषये विवादकरणासम्भवेन 'कः पुनरेषां वरिष्ठः' इति निर्धारणषष्ठीबलेन च पूर्वोक्त एव प्राणोऽत्र

वरिष्ठत्वावधारणाय परामृश्यत इति वाच्यम् । यदि स वायुशब्देनोक्तः स्यान्न तर्हि प्राणशब्देन परामृश्येत । शब्दान्तरेण प्रस्तुतस्य शब्दान्तरेण परामर्शस्य बाधकं विनाऽदर्शनात् । तथाच प्राणशब्देन परामर्शानुपपत्त्या प्रतिहतशक्तिक-मवश्यवक्तव्यत्वं वायुशब्दस्य प्रधानवायुपरत्वमवगमयितुं नालमिति । केचित्तु 'वरिष्ठः प्राण उवाच' इति सिद्धवन्निर्देशेनैव परामर्श इति ज्ञायत इत्याहुः । शङ्कते– **यद्यत्रेति ॥** वायुशब्देनाप्रकृतत्वे तद्वाचकपदान्तराश्रवणात् प्रकृतत्व-मेव न स्यात् । तथाचाप्रकृतपरामर्शदर्शनात् प्राणपदेन परामर्श एव न स्यादिति प्रतितर्कविरुद्धशक्तिस्तर्को न परबाधनायालमिति भावः । ननु क्वचिद् बुद्धिप्रकृतस्यापि परामर्शो दृश्यते । तत् कथमेतदित्यत आह–**न हीति ॥** उत्तरमाह–**लक्षणयाऽपीति ॥** नहि शक्त्यैव प्रकृततया भवितव्य-मिति नियमः । 'तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति' इत्यादौ लक्षणया गृहीतानामपि चक्षुरादीनां परामर्शदर्शनादिति भावः ॥

यद्यत्रासौ वायुशब्देन प्रकृतः स्यादिति नञ्विना कृतपाठः क्वचिद् दृश्यते । तस्यैवं योजना । नह्यप्रकृतस्य परामर्शो युज्यत इति पूर्वं वायुशब्देन प्रकृतः प्रधानवायुः प्राणशब्देन परामृश्यते इति वक्तव्यम् । नच तथा युज्यते । कुत इत्यत उक्तम्– **यदीति ॥** यद्यसौ प्राणः अत्र पूर्ववाक्ये वायुशब्देन प्रकृतः स्यात् कथं तर्हि प्राणशब्देन परामृश्येत । शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शस्यादर्शनेनायोगात् । ननु 'आत्मन आकाशः सम्भूतः' इत्यत्र 'ब्रह्मशब्दोदिते तस्मिन् आत्मशब्दं प्रयुज्य च' इत्यनुव्याख्यानोक्तरीत्या 'ब्रह्मविदाप्नोति परम्' इति ब्रह्मशब्देन प्रकृतस्याऽत्मशब्देन परामर्शस्य 'स वा एषः' इत्यन्यप्रारम्भादिति भाष्योक्तरीत्या आत्मशब्दोदितस्य पुरुषशब्देन 'स वा एष पुरुषोऽन्नरसमयः' इति परामर्शस्य च दर्शनात् । कथं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शो नोपलभ्यत इत्यत उक्तम्– **नह्येवं बाधकमन्तरेणेति ॥** एवं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण ग्रहणम् । अग्रहणे बाधकमन्तरेण कुत्रचिदुपलब्धम् । येनात्र वायुशब्देन प्रकृतस्य

प्राणशब्देन ग्रहणं युज्येत । अग्रहणेऽपि बाधकाभावात् । आत्मशब्देनापरामर्शे उत्तरवाक्यस्य पूर्ववाक्यप्रपञ्चकत्वानुपपत्तिरूपबाधकसत्त्वाद् ब्रह्मशब्दोदितस्यापि आत्मशब्देन परामर्शोऽभ्युपगतः । पुरुषादिशब्दे तु रसशब्देन विशेषणादिकं बाधकमित्यर्थः ॥

नन्वप्रसक्तपरामर्शायोगेन प्रधानवायोरपि प्रागवश्यं वक्तव्यत्वमत्रापि बाधकमित्यत आह– **लक्षणयाऽपीति** ॥ तस्य मुख्यवायोः । **ग्रहणसम्भवा-दिति** ॥ नन्वेवं 'वायाविन्द्रः' इत्यादाविवात्र बाधकाभावाद् भूतप्रकरणत्वेन लिङ्गेन भूतवायुरुच्यतां नाम । तथाऽपि मुख्यवायावपि वायुशब्दमुख्य-वृत्तिसद्भावात्[1] तां परित्यज्य तस्य प्रकृतत्वलाभाय जघन्यवृत्त्यङ्गीकारो जघन्यः । सुरसरिति निवसतः पुरुषस्य जललाभार्थं कूपखननन्याय-साम्यादित्याशङ्क्य परिहरति– **नच वाच्यमिति** ॥ **उक्तादेवेति** ॥ 'वायु-शब्देन प्रकृतत्वे प्राणशब्देन न परामृश्येत' इत्युक्तादेव हेतोरित्यर्थः । बाधके सति मुख्यं परित्यज्य जघन्यवृत्त्यङ्गीकारो युक्त एव । 'तस्यान्ते सुषिरं सूक्ष्मम्' इत्यत्र सर्वपदवाच्येऽपि ब्रह्मणि सुषिरपदलक्षणाया दृष्टत्वादिति भावः ॥

ननु बाधके सति शब्दान्तरेण प्रस्तुतस्य शब्दान्तरेण परामर्शोऽस्ति । अत्रापि परामर्शान्यथानुपपत्त्या पूर्वप्रकृतत्वे वाच्ये लक्षणया च तदङ्गीकारे वृत्तिद्वयमङ्गीकरणीयमिति गौरवमेव बाधकमस्ति । तस्माद् भूते क्लृप्तया शक्त्यैव मुख्योऽप्युच्यत इत्यङ्गीकरणमेव वरमित्याशङ्क्य विपक्षे ततोऽपि गौरवमाह– **नह्येवमिति** ॥ वाचकत्वाङ्गीकारेऽपीत्यर्थः । यथा नानार्थेषु गवादिशब्देषु घटत्वपृथिवीत्वादिप्रवृत्तिनिमित्तनानात्वेन शक्तिरपि नाना । तथा भूते वायौ मुख्ये च शक्तिर्भिन्नैवेत्यङ्गीकर्तव्यम् । धारणप्रकाशनहेतुतया क्लृप्ताशेषतत्त्वदेवोपलक्षणं च कार्यम् । एवं च वृत्तित्रयमङ्गीकार्यमिति लक्षणा-मनङ्गीकुर्वन् चोरभयाद् घोरमृगाकीर्णं गहनं वनं प्रविष्ट इवाऽपद्यते । तस्माद्

१. **'मुख्यवृत्तिसद्भावात्'** इत्येव क्वचित् पाठः ।

वक्ष्यमाणतत्तद्देवतात्वावच्छेदेन लक्षणायां तत्र प्राणस्यापि प्रविष्टत्वेन सोऽपि तयैव गृह्यत इति न तदर्थं पुनः प्रयत्नान्तरमिति लक्षणापक्ष एव लाघवमिति भावः ॥ **येनेति** ॥ सकृदुच्चरितशब्दस्य सकृदेवार्थप्रत्यायकत्वनियमात् । शब्दश्रवणानन्तरं तत्तदर्थशक्तिस्मरणस्य क्रमिकत्वेनैकदाऽनेकार्थस्मरणानुपपत्तेरिति भावः ॥ **एतेषां चेति** ॥ वाय्वादीनां देवानां मध्य इत्यर्थः । **त एते धारका इति** ॥ अयं तच्छब्दः पूर्वोक्तधारकपरामर्शकः । नतु प्राकाश्यविशेषणमिति भावः । अत एव समुच्चायकश्चशब्दोऽप्यध्याहृतः । प्राकाश्यशब्दस्य प्रकाशका इति कथं व्याख्या ? इत्याशङ्क्य ण्यत्प्रत्ययोऽयं प्राकाशशब्दान्मत्वर्थे इति भावेनाऽह– **प्राकाश्याः प्रकाशवन्त इति** ॥ प्रकाशजनका इत्यर्थः । 'संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इत्युक्तेर्जन्यजनकभावलक्षणसंसर्गोऽत्र विवक्षित इति भावः ॥

यद्वा, त इति तच्छब्दः पूर्वोक्तानां धारकाणां प्रकाशकानां चोभयेषां परामर्शक इत्यभिप्रेत्य 'त एते धारकाः प्रकाशकाश्च देवाः' इत्युक्तम् । तर्हि प्राकाश्या इत्यधिकमित्याशङ्क्य तच्छब्दोक्तानां तेषां विशेषणमित्यभिप्रेत्य प्राकाश्याः प्रकाशवन्त इति व्याख्यातम् ॥

ननु ते धारकाः प्रकाशकाश्च देवा वदन्ति अवदन्नित्येव वक्तव्ये प्राकाश्याः प्रकाशवन्तः अभि अभित इत्यनयोः क्वोपयोगः ? अर्थविशेषालाभादित्यतस्तयोस्तात्पर्यमाह– **उच्चैरिति यावदित्यादि** ॥ लडर्थस्य बाधाद् अवदन्नित्युक्तम् । अभिवदन्तीत्यत्राभिशब्दस्याव्ययत्वेनानेकार्थत्वमभिप्रेत्याभि 'उच्चैरिति यावत्' इत्युक्तमिति केचित् । अत्राभि उच्चैरिति क्वचित् पाठः ॥ **बाणं शरीरमिति** ॥ 'शान्तिं निर्वाणपरमाम्' इत्यादौ निर्वाणशब्दस्य प्राकृतशरीरराहित्येन निमित्तेन मोक्षे प्रयोगाद् वबयोरभेदेन बाणशब्दोऽपि शरीरवाचीत्यर्थः । 'वयमेतद् बाणम्' इति सामान्येनोक्तस्य बहुवचनस्य विविच्येतरप्रतिषेधपूर्वकं तात्पर्यमाह– **अहमेव स्वातन्त्र्येणेति** ॥ २ ॥

### (उपनिषत्)

*(वायुजीवोत्तमत्वप्रतिपादनम्)*

तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथ । अहमेवैतत् पञ्चधाऽत्मानं विभज्यैतद् बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः । सोऽभिमानादूर्ध्वमुत्क्रमत इव । तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते। तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते ॥ ३ ॥ तद्यथा मधुमक्षिका मधुकर-राजानमुत्क्रामन्तं सर्वा एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते । एवं वाङ् मनश्चक्षुः श्रोत्रं च । ते प्रीताः प्राणं स्तुवन्ति ॥

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः ।<br>
एष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ४ ॥

*(मुख्यप्राणस्य सर्वाश्रयत्वोक्तिः)*

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।<br>
ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च ॥

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।<br>
तुभ्यं प्राण प्रजास्त्विमा यत् प्राणैः प्रतितिष्ठसि ॥

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।<br>
ऋषीणां चरितं सत्यमथर्वाऽङ्गिरसामपि ॥ ५ ॥

इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।<br>
त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥

**यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।**
**आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥**

**व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः ।**
**वयमद्यस्य दातारः पिता त्वं मातरिश्व नः ॥ ६ ॥**

**या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।**
**या मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥**

**प्राणस्यैतद्वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम् ।**
**मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ ७ ॥**

**इति द्वितीयः प्रश्नः**

—०—

**(टीका)**

तानेवं मन्यमानान् वरिष्ठः प्राण उवाच । किमिति ? वयमेव धारकाः प्रकाशकाश्चेत्येवंविधं मोहं मिथ्याज्ञानं मा प्राप्नुत । कुतोऽयं मोहः ? यस्मादहमेवैतदेतस्मिन् शरीरे पञ्चधा प्राणादिरूपैरात्मानं प्रविभज्य प्रविभक्तं कृत्वैतद्बाणमवष्टभ्य विधारयामि प्रकाशयामि चेति । तत् श्रुत्वा तेऽश्रद्दधाना अप्रत्ययवन्तो बभूवुः कुत एतदित्थमिति । स मुख्यप्राणस्तेषां प्रत्यायनायाभिमन्यत इत्यभिमानो देहस्तस्मादूर्ध्वमुत्क्रामत इव किञ्चिदूर्ध्वमुदक्रामत् । अथ तस्मिन् प्राणे उत्क्रामति सति इतरे सर्व एवाऽऽकाशादिदेवाः शरीरधारणादौ स्वस्थितौ चासमर्थाः उत्क्रमन्ते उदक्रामन् । अस्य यादृच्छिकत्वपरिहाराय पुनस्तस्मिन् प्राणे प्रतिष्ठमाने शरीर एव प्रतितिष्ठति सर्व एव देवाः प्रतिष्ठन्ते शरीरे प्रतितिष्ठन्ति ॥ ३ ॥

किमिव ? तत्तत्र लोके यथा मधुमक्षिकाः मधुकराः मधुकरराजानं प्रधानमधुमक्षिकां मधुस्थानादुत्क्रामन्तीमनु सर्वा एवोत्क्रामन्ति, तस्यां च

प्रतिष्ठितायां सर्वा एव तत्र प्रतितिष्ठन्ति एवं वागादयो देवाः इति इत्थमन्वयवव्यतिरेकाभ्यां प्राणस्य वरिष्ठत्वेऽवधारिते प्रतीतास्ते देवाः त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तद्गुणक्रियादिप्रवर्तक इति प्राणं स्तुन्वन्ति अस्तुवन् । तदुच्यते– **एषोऽग्निरित्यादि ॥** एषः प्राण एवाग्निः संस्तपति । एष एव सूर्योऽपि संस्तपति । मघवानप्येष एवेति शेषः । पृथिवी रयिश्च यत् सदसत् मूर्तामूर्तं यच्चामृतं मुक्तजातं तदप्येष एव ॥ ४ ॥

कथमेतत्सर्वं प्राण इति । उक्तं वक्ष्यमाणं च विव्रियते–**अरा इति ॥** तस्मात्सर्वं प्राण इत्युच्यत इति शेषः । परोक्षतया स्तुतोऽपरोक्षतया स्तूयते– **प्रजापतिरित्यादिना ॥** प्रजापतिर्दक्षादिस्त्वमेव । गर्भे च गर्भस्थप्रेरकतया त्वमेव चरसि । प्रतिजायसे जनिक्रियां च त्वमेव करोषि । हे प्राणेमा देवाद्याः प्रजास्तुभ्यं त्वदीयाः । कुतः? यद्यस्मात्त्वं प्राणैश्चक्षुरादिभिः सह धारणादिकं कुर्वन् शरीरे प्रतितिष्ठसि तस्मात् । न केवलं तपनक्रियावा- नग्निः प्राणः किन्तूच्यते– **देवानामिति ॥** त्वं देवानां वह्नितमो यज्ञभाग- वाहकतमोऽसि। पितॄणां प्रथमा स्वधा । मुख्यस्वधावाहकोऽपि त्वमेवासि । त्वमेवाथर्वाङ्गिरसामृषीणां चरितमाचारः सत्यवचनं चासि ॥ ५ ॥

'इन्द्रस्त्वम्' इति मघवानित्युक्तविवरणम् । तेजसा युक्त इति शेषः । वायुरित्यस्य विवरणं त्वमन्तरिक्ष इति । न केवलं सूर्यस्य तापकत्वं प्राणाधीनं, किन्तु ज्योतिषां ग्रहाणां पतित्वं च । पर्जन्यत्वविवरणं यदेति । हे प्राण यदा त्वं पर्जन्यरूपोऽभिवर्षसि अथ तदा ते त्वदीया इमाः मानुषादिप्रजाः कामाय यथेष्टमन्नं भविष्यतीति निश्चित्याऽनन्दरूपा आनन्दवत्यस्तिष्ठन्ति । हे प्राण त्वं व्रात्यो व्रतनिष्ठ एकर्षिरथर्ववेदद्रष्टाऽसि । विश्वस्यात्ता संहर्ता यमादिश्च त्वमसि । सतां पतिः, संश्चासौ पतिश्चेति वा सत्पतिस्त्वमसि । वयं तवाद्यस्य भोज्यस्य दातारः, त्वत्पूजका इति यावत् । कुतः? हे मातरिश्व मातरिश्वन्, त्वं नो अस्माकं पिताऽसि । मातरिश्वनः भूतवायोः पितेति वा ॥ ६ ॥

एवं स्तुत्वा प्रकृतं तूच्यते– **या त इत्यादि** ॥ या ते त्वदीया तनूः मूर्तिर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि या च मनसि सन्तता सम्यग् व्याप्य वर्तमाना एवमन्येष्वपि तत्त्वेषु या प्रतिष्ठिता तां शिवां शान्तां कुरु । मोत्क्रमीः वागादिभ्यस्तथोत्क्रमणं माऽकार्षीः । वागादिषु प्राणस्य प्रतिष्ठितत्वं कुतः? यत एतत्सर्वं वागादिकं प्राणस्य तव वशे वर्तते । न त्वां विना प्रवर्तितुं क्षमम् । न केवलमध्यात्मं, किन्तु त्रिदिवे स्वर्गे यत् प्रतिष्ठितम् । अधिदैवादिकं चेति यावत् । वागादिषु स्थित्वा च त्वमस्मान् माता पुत्रानिव रक्षस्व पालय । श्रीः श्रियं, प्रजाधारणशोभामिति यावत्, प्रज्ञां प्रज्ञानं प्रकाशकत्वशक्तिं च नो अस्माकं विधेहि कुर्विति स्तुन्वन्तीति सम्बन्धः ॥ ७ ॥

**॥ इति द्वितीयप्रश्नप्रतिवचनम् ॥**

## (प्रकाशिका)

'अप्रत्ययवन्तः' इत्यत्र अप्रत्ययवन्तोऽविश्वासवन्त इत्यर्थः । 'तस्मादूर्ध्व-मुत्क्रमत इव' इत्यत्र स्वमहिमस्फोरणाय देहात् किञ्चिदविदूरे उत्क्रान्तवान्न तु वस्तुगत्योत्क्रमणमित्यत इवशब्दः । 'वह प्रापणे' इति धातोः वकारहकारयो-र्मध्ये हि नुम्प्रत्यये कृते वह्निशब्दनिष्पत्तिमभिप्रेत्योक्तं 'यज्ञभागवाहकतमः' इति । 'पर्जन्यरूपेणाभिवर्षसि' इति वदता परं 'पॄ पालनपूरणयोः' इति धातोः परपोषकजलजननयोग्यः पर्जन्य व्युत्पत्तिः सूचिता ॥

## (मङ्गालीयम्)

**मन्यमानानिति** ॥ अहङ्कारं कुर्वत इत्यर्थः ॥ **प्राणादिरूपैरिति** ॥ वागादिरूपैश्चेति शेषः । मुख्यप्राणो वागादीन्द्रियेषु प्रकाशाद्यर्थं वागादिरूपेण तिष्ठतीत्यत्र ज्ञापकमुत्तरत्र 'त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तत्तद्गुण-क्रियादिप्रवर्तक इति प्राणं स्तुन्वन्ति' इति टीकाकारवचनमेव । 'अप्रत्ययवन्तः'

इत्युक्तमविश्वासं निर्दिशति– **कुत एतदित्थमितीति ॥ अभिमानो देह इति ॥** अभिपूर्वकमन्यतेः 'अकर्तरि च कारके सञ्ज्ञायाम्' (पा.सू.३.३.१९) इति कर्मणि घञ् । उत्क्रमत इवेति इवशब्दार्थः– **किञ्चिदिति ॥** उक्तं च बृहदारण्यकभाष्ये– 'उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते' इत्यभिधानम् । 'दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्' इति प्रयोगाद् वेति । इदानीमुत्क्रमणाभावाच्छान्दसो लकारव्यत्यय इति भावेनाऽह– **उदक्रामदिति ॥** एवमुत्तरत्रापि ज्ञेयम् । उत्तरत्र प्रतितिष्ठतीति प्रतिष्ठोक्तेः तदुपयुक्तमध्याहरति– **स्वस्थितौ चेति ॥** अत्र यद्यपि प्राणसंवादादिविषये महैतरेये तत्त्वदेवानाम् एकैकस्योत्क्रमणानन्तरं मुख्यप्राणस्योत्क्रमणम् एकैकस्य प्रवेशानन्तरं प्रवेशश्चेति उत्क्रमणप्रवेशौ प्राणस्य पश्चादेव प्रतीयेते । अत्र छान्दोग्ये च प्राणस्यैवाऽदावत्क्रमणम् इतरेषां विराड्देहेऽवस्थातुमसामर्थ्येन पश्चादुत्क्रमणं प्रतीयत इति विरोधो भवति । तथाऽपि कल्पभेदेन वा एकस्मिन्नेव कल्पे द्विवारमुत्क्रमणप्रवेशकल्पनया वाऽविरोधो ज्ञेयः । तथा हि– 'वागुदक्रामद् अवदन्नश्नन् पिबन् आस्तैव । वाक् प्राविशद् अवददेव' इत्यादिना एकैकस्य देवस्योत्क्रमणप्रवेशाभ्यां विराड्देहस्य पातनोत्थानयोरसामर्थ्ये निर्णीते सत्यपि मिलितानामस्माकं सर्वतत्त्वदेवानां मुख्यप्राणेन विना एतद्देहधारकत्वादिसामर्थ्यं भविष्यतीत्यभिमानेन 'वयमेतद् बाणमवष्टभ्य विधारयामः' इति पुनर्विवादे प्रसक्ते 'तान् वरिष्ठः प्राण उवाच' इत्यादिना मुख्यप्राणस्यैव प्रथमं देहादुत्क्रमणं तदनन्तरं तेषामवस्थानमेवाशक्यं किमुत धारणादिसामर्थ्यमिति सूचयितुं 'तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते' इतीतरदेवानां पश्चादुत्क्रमणं चोच्यत इत्यविरोध इति ॥ ३ ॥

नन्वभिमानेन प्रवृत्तानां देवानां कथं प्राणस्तावकत्वमित्यतस्तत् सङ्गमयति– **इत्थमिति ॥** प्रतीताः विश्वासवन्तः 'एष पृथिवी रयिः' इत्यत्र एष इति सकृच्छ्रवणात् समग्रमेकवाक्यतया योजयति–**पृथिवी रयिश्चेत्यादि** ॥ ४ ॥

ननु 'एषोऽग्निस्तपत्येष सूर्यः' इत्यादौ प्राणस्याग्न्याद्यभेदप्रतीतेः सर्वदेवादिषु स्थित्वा तत्तन्नामेत्याद्यर्थाप्रतीतेरुक्तप्रकारेण 'प्राणं स्तुन्वन्ति' इति वचनमयुक्तमित्याशङ्कानिवर्तकत्वेन ' अराः' इति वाक्यमवतारयति– **कथमेतदिति ॥** 'कथमेतत् सर्वं प्राण इति' इत्याक्षेपः । 'उक्तं वक्ष्यमाणं च विव्रियते' इति परिहारः । 'एषोऽग्निस्तपत्येष सूर्यः' इत्याद्युक्तं 'प्रजापतिश्चरसि गर्भे त्वमेव' इत्यादि वक्ष्यमाणं च विव्रियत इत्यर्थः । उक्तशङ्कापरिहारार्थमुक्तविवरणं क्रियते चेत् 'प्रजापतिश्चरसि' इत्यादेर्विवरणाभावात् तत्रोक्तशङ्कापरिहारो न स्यादित्यत उक्तम्– **वक्ष्यमाणं चेति ॥** सर्वं प्रतिष्ठितमिति सामान्यत एवोक्तत्वादिति भावः । अरा इवेति श्लोके प्राणस्य सर्वात्मकत्वघटना न प्रतीयत इत्यतोऽध्याहृत्य तां दर्शयति–**तस्मात् सर्वं प्राण उच्यत इति शेष इति ॥** तस्मात् सर्वधारकत्वात् । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इ-त्युक्तेः । सर्वस्य तदधीनत्वेन तदात्मकत्वव्यपदेश इत्यर्थः । 'अरा इव' इति श्लोकः पूर्वोक्तस्य 'एषोऽग्निः' इत्यादेरभेदव्यपदेशस्य 'प्रजापतिश्चरसि गर्भे त्वमेव' इति वक्ष्यमाणप्रजापत्यभेदव्यपदेशस्य चोपपादक इति । 'उक्तं वक्ष्यमाणं च विव्रियते' इत्युक्तम् । रथनाभावरा इव मुख्यप्राणे सर्वं प्रतिष्ठितम् । तन्मध्ये किञ्चिन्निर्दिशति– **ऋच इत्यादि ॥** क्षत्रं क्षत्रियाः । ब्रह्म ब्राह्मणाः । च अन्यच्चेत्येतदिति तदर्थः । 'एषोऽग्निस्तपति' इत्यनेन 'देवानामसि वह्नितमः' इत्यस्य पौनरुक्त्यं परिहरति– **न केवलं तपनक्रियावानग्निः प्राण इति ॥** एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५ ॥

**ग्रहाणामिति ॥** शन्यादीनामित्यर्थः । **एकर्षिरथर्ववेदद्रष्टाऽसीति ॥** 'एकर्षिश्चाप्यथर्वणाम्' इति ऋग्भाष्योक्तेरिति भावः । उपजीव्या इति प्रतीतिनिरासायाऽह– **त्वत्पूजका इति ॥ हे मातरिश्वेति ॥** 'नङि सम्बुद्ध्योः' (पा.सू.८.२.८) इति नलोपनिषेधाभावश्छान्दस इति भावः । अत एवारुचेराह– **मातरिश्वनो भूतवायोरिति वेति** ॥ ६ ॥

अधिदैवादिकमित्यादिपदेनाधिभूतं गृह्यते । एतद्विवरणात्मकोत्तरखण्डे अधिदैवाधिभूतधारकत्वस्योक्तत्वात् । श्रीप्रज्ञाशब्दौ प्रकृतोपयोगितया व्याचष्टे— **प्रजाधारणशोभामिति यावदिति ॥ प्रकाशकत्वशक्तिं चेति** ॥ ७ ॥

**॥ इति द्वितीयप्रश्नप्रतिवचनम् ॥**

—०—

## अथ तृतीयः प्रश्नः

### (उपनिषत्)

*(मुख्यप्राणस्य प्रभुत्वविचारः)*

**ॐ ॥ अथ हैनं कौसल्यश्चाऽश्वलायनः पप्रच्छ। भगवन् कुत एष प्राणो जायते। कथमायात्यस्मिञ्छरीरे। आत्मानं वा प्रविभज्य कथं प्रतिष्ठते। केनोत्क्रमते। कथं बाह्यमभिधत्ते। कथमध्यात्ममिति ॥ १ ॥ तस्मै स होवाच। अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति। तस्मात् तेऽहं ब्रवीमि। आत्मत एष प्राणो जायते। यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् ॥ २ ॥**

### (भाष्यम्)

**आत्मतः परमात्मतः ॥ * ॥**

### (टीका)

**अथ हैनं कौसल्यः।** प्रागुक्तं परमेश्वरो निखिलजगज्जन्मादिकर्तेत्यादिः। तद्विवरणार्थोऽयमुत्तरो ग्रन्थः। भगवन् कुतः कस्मात् पुरुषाद् एष उक्त-लक्षणः प्राणो जायते? स मिथुनमुत्पादयते? रयिं च प्राणं चेत्युक्तमपि परमेश्वराज्जन्म एवमाढ्यस्य कथं नाम सम्भवतीत्यभिप्रायः। अहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामीत्युक्तम्। तत्र कथं कस्मात् कारणाद् अस्मिन् शरीरे प्राण आयाति प्रवर्तते? आत्मानं प्रविभज्य कथं प्रतिष्ठते प्रतितिष्ठति? के ते विभागाः? तैश्च किं कुर्वत् कुत्र स्थानविशेषे तिष्ठतीति यावत् ॥

तस्मिन्नुत्क्रान्ते सर्वेऽप्युत्क्रान्ता इत्युक्तम् । तत्र केन प्रविभागेन जीवादीनादायोत्क्रामति? प्राणस्यैतद्वशे यत् प्रतिष्ठितमित्युक्तम् । तत्र कथं केन रूपेण बाह्यमधिभूतादिकमभिधत्ते धारयति ? कथं चाध्यात्ममभिधत्ते? इत्येवं पृष्टवते तस्मै स होवाच । यस्मादेवं त्वमतिप्रश्नानतिशयितान् प्रष्टव्यार्थान् पृच्छसि तस्मात् त्वं ब्रह्मिष्ठो वेदविचारादिमानसि । न ह्यन्यथैवंविधाः प्रश्नाः सम्भवन्तीति । यस्माद् ब्रह्मिष्ठोऽसि तस्मादहं ते तुभ्यमुत्तरं ब्रवीमीति तं प्रशस्याऽद्यप्रश्नोत्तरमुच्यते– **आत्मत इति ॥** एषः एवं महामाहात्म्योऽपि प्राणः आत्मतो जायते । तत्कथम्? यथा खल्वेषा च्छाया पुरुषे शरीरे आतता अत्यन्तं शरीराधीना वर्तते एवमेतस्मिन्नात्मन्येतत्सर्वं प्राणादिकमाततम् । प्राणादप्याढ्यतमत्वादात्मनस्ततः प्राणस्य जन्म सम्भवत्येवेत्यभिप्रायः । आत्मशब्दस्यानेकार्थकत्वादुक्तोऽत्राभिप्रेत इति न ज्ञायते । तस्मादाह– **आत्मन इति॥** न ह्यन्यस्य प्राणजनकत्वादिकं सम्भवतीति भावः ॥ २ ॥

## (प्रकाशिका)

'एवमाढ्यस्य कथं नाम सम्भवति' इत्यत्र एवमेषोऽग्निस्तपत्येष सूर्य इत्यादिना बहुमहिमत्वेनोक्तस्यैवाऽढ्यस्येत्यर्थः । अभ्यधिकाशङ्काऽपि पृष्टस्यैव पुनः प्रश्न इति भावः ॥

## (मङ्गालीयम्)

**अथ हैनं कौसल्यः ॥ प्रागुक्तमिति ॥** प्रथमप्रश्ने प्रजापतिनामा परमेश्वरो रयिप्राणौ सृष्ट्वा तद्द्वाराऽखिलजगज्जन्मादिकर्तेत्युक्तम् । द्वितीयप्रश्नेऽपि आकाशादिमुख्यप्राणान्तदेवानां विष्णुसन्निधानेनैव धारकत्वं प्रकाशकत्वं चाभिप्रेतम । प्रथमत एव विष्णोः प्रजापतिनामोक्त्या प्रजाशब्देन जगतो भगवज्जन्मोक्त्या तस्य स्रष्टृत्वं लब्धम । पतिशब्देन पालकत्वं चेति भावः । आश्वलायनेन कृतप्रश्नेषु प्रथमः प्रश्नः सिद्धार्थ इत्याशङ्क्य परिहरति–

**स मिथुनमुत्पादयत इत्यादिना** ॥ **एवमाढ्यस्येति** ॥ द्वितीयप्रश्नोक्तप्रकारेण महानुभावस्येत्यर्थः ॥ **इत्यभिप्राय इति** ॥ तेन सिद्धार्थत्वं प्रश्नस्य नेत्युक्तं भवति । कथमित्यस्य कस्मात् कारणादिति व्याख्या । 'समवप्रविभ्यः स्थः' (पा.सू.१.६.२२) इति नियमात् प्रतिपूर्वस्थाधातोरात्मनेपदाप्रसक्तेराह– **प्रतितिष्ठते प्रति तिष्ठतीति** ॥ आत्मनेपदं छान्दसमिति भावः । परिहारानुसारेण प्रश्नतात्पर्यमाह– **के ते विभागा इत्यादिना** ॥ 'अधिभूतादिकम्' इत्यत्राऽदिपदेनाधिदैवं ग्राह्यम् ॥ १ ॥

## (उपनिषत्)

**मनोकृतेनाऽयात्यस्मिञ्छरीरे । यथा सम्राडेवाधिकृतान् विनियुङ्क्त एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेति एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ॥ ३ ॥**

**पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति । तस्मादेताः सप्तार्चिषो भवन्ति । हृदि ह्येष आत्मा ॥ ४ ॥**

## (भाष्यम्)

'विष्णोर्वायुः समुत्पन्नो वायोः सर्वाश्च देवताः ।
प्राणाद्यास्तान् नयन् प्राण आज्ञापयति राजवत् ।
स्वयं च पञ्चरूपः सन् दद्यान्मोक्षादिकं प्रभुः'

इति प्रभञ्जने ॥ * ॥

—०—

## (टीका)

द्वितीयप्रश्नस्योत्तरं **मन इति** । स चायं प्राणो मनोकृतेन मनःकृतेन, मनः परं ब्रह्म तत्कृतेन तन्निमित्तेन तत्प्रेरणयेति यावत्, आत्मनः प्रकृतस्य

मनोनिमित्तेनेच्छयेति वा । आयात्यस्मिन् शरीर इति । आत्मानं वेत्यादि-प्रश्नोत्तररूपे 'यथा सम्राट्' इत्यादिवाक्ये प्राणादिपञ्चकस्य मुख्यप्राणनि-योज्यत्वं ततो भिन्नत्वलिङ्गं प्रतीयते । 'पुण्येन पुण्यं लोकं नयति' इत्यादि-मोक्षदातृत्वादिलिङ्गेन तेनाभेदोऽपि । तस्य तन्नियोज्येष्वसम्भवात् । अतो व्यामिश्रमिव प्रतीयमानं वाक्यं समञ्जसीकर्तुम् 'आत्मत एष प्राणो जायते' इति वाक्यार्थसहितैतद्वाक्यार्थे समाख्यास्मृतिमेव पठति– **विष्णोरिति** ॥ ततश्चैवं योजनीयम् । यत् पृष्टं त्वयाऽऽत्मानं वा प्रविभज्येति तत्रास्ति विवेक्तव्यम् । द्विविधं तावत् प्राणादिपञ्चकम् । एकं मुख्यप्राणाज्जातं ततोऽतिरिक्तम् । अपरं तदात्मकमिति । तत्र यथा लोके सम्राट् सार्व-भौमोऽधिकृतान्नियोगिनो विनियुङ्क्ते । कथम्? त्वमेतान् पाटलिपुत्रादीन् ग्रामानधितिष्ठस्व तदाधिपत्येन तिष्ठेत्येकम् । अन्यच्च त्वमेतान् कौशाम्बीप्रभृतीन् ग्रामानधितिष्ठस्वेति । एवमेवैष मुख्यप्राण इतरान् भिन्नानात्मनो जातत्वा-दुपचारेणाऽत्मप्रविभागान् प्राणान् वायून् पृथक् पृथगेव स्थानेषु सन्निधत्ते स्थापयति । स्वयं च तत्तत्क्रियाप्रवर्तकतया तत्र प्राणादिपञ्चरूपोऽवतिष्ठत इत्याशयः ॥ ३ ॥

पृथक् पृथग् इत्युक्तं विव्रितये– **पायूपस्थ इत्यादि** ॥ पायुश्चोपस्थश्च पायूपस्थम् । तत्र मलादेरपनयनाद् अपानं वायुमात्मनो रूपेणापानेनाधिष्ठितं सन्निधत्त इति सम्बन्धः । चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रम् । तस्मिन् मुख-नासिकाभ्यां सह मुखे नासिकायां चेति यावत्, प्राणः स्वयं मुख्य एव श्वासादिप्रणयनात् प्राणनाम्ना रूपेण प्राणवायुमधिष्ठाय प्रतितिष्ठति । समानस्तु समाननामानं वायुमधिष्ठाय मध्ये प्राणापानयोर्नाभिदेश इति यावत्, प्रति-तिष्ठति । स चैष यस्मादेतद्धुतं भुक्तमन्नं समं यथाशरीरावयवं नयति तेन समाननामेति शेषः । किं तेन? तस्मादन्नस्य समीकरणादेताः सप्तार्चिषः सप्त-ज्ञानेन्द्रियवृत्तयो भवन्ति । नन्वात्मैव विषयसंसर्गेणताननुभविष्यति । किमि-न्द्रियवृत्तिभिरिति । मैवम् । हृदि ह्येष आत्मा जीवः स्वरूपेण वर्तते । अतः कथं तस्याणोर्विषयसङ्गतिः स्यादिति ॥ ४ ॥

## (प्रकाशिका)

'सप्तज्ञानेन्द्रियवृत्तयः' इत्यत्र घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोबुद्धिभेदेन सप्त ज्ञानेन्द्रियवृत्तयो भवन्तीत्यर्थः ॥

## (मङ्गालीयम्)

प्रशस्य स्तुत्वा । मनोकृतेनेत्यत्र ककारस्य हश्त्वाभावात् 'हशि च' (पा.सू. ६.१.११४) इत्युत्वाप्राप्तेरुत्वं च्छान्दसमित्यभिप्रेत्याऽह– **मनःकृतेनेति** ॥ **मनः परं ब्रह्मेति** ॥ 'मननान्मन उद्दिष्टः' इति वचनात् 'मनो ब्रह्म' इति श्रुतेश्चेति भावः ॥ **आत्मनः प्रकृतस्येति** ॥ प्रकृतत्वादात्मन इत्यध्याहार इति भावः । **आत्मानं वेत्यादिप्रश्नेति** ॥ आत्मानं प्रविभज्य कथं प्रतिष्ठत इति प्रश्नेत्यर्थः ॥ **मोक्षदातृत्वेति** ॥ पुण्यलोकशब्देन मुख्यत्वान्मोक्षग्रहणादिति भावः । 'स एनान् ब्रह्म गमयति' 'विष्णुर्हि दाता मोक्षस्य वायुश्च तद-नुज्ञया' इत्युक्तेर्मोक्षदातृत्वं मुख्यप्राणस्य लिङ्गम् ॥ **व्यामिश्रमिवेति** । विरुद्धार्थमिवेत्यर्थः । आत्मनो जातत्वादुपचारेणाऽत्मप्रविभागानित्येतत् । के ते विभागा इत्यादि विभागप्रश्नोत्तरम् । भिन्नेषु भागत्वमुपचारेण घटनीय-मिति भावः । स्वयं च तत्तत्क्रियेत्यादिकोऽर्थः 'प्राणः स्वयं प्रतिष्ठते' इति श्रुत्या ध्वनित इत्याशयः ॥ ३ ॥

**पायूपस्थमिति** ॥ प्राण्यङ्गत्वादेकवद्भाव इति भावः ॥ **तेन समाननामेति शेष इति** ॥ कश्चैषां व्यापार इति प्रश्नपरिहारे समानोदानपदयोः प्रवृत्ति-निमित्तस्य श्रुतावुदितत्वात् तदनुसारेणापानादिपदेष्वपि तदुक्तिरिति ज्ञेयम् । किं तेनेति तस्मादित्यस्यावतारिका ॥ **सप्तज्ञानेन्द्रियवृत्तय इति** ॥ चक्षुरादि-ज्ञानेन्द्रियाणां मनोबुद्धिभ्यां सह सप्तत्वं द्रष्टव्यम् । 'हृदि ह्येष आत्मा' इत्यस्य प्रकृतोपयोगादर्शनात् तत् सङ्गमयितुं शङ्कते– **नन्विति** ॥ **विषय-संसर्गेणेति** ॥ तस्य ज्ञानरूपत्वादिति भावः ॥ ४ ॥

### (उपनिषत्)

**अत्रैतदेकशतं नाडीनाम् । तासां शतंशतमेकैकस्यां द्वासप्ततिं प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति । अथैकयोर्ध्वं उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ५ ॥**

### (टीका)

व्यानस्य प्रवृत्तिं वक्तुमुच्यते– **अत्रेत्यादि** ॥ अत्र शरीरे । यदेतदेकशतमेकोत्तरं शतं नाडीनां शिराणां भवति तासां नाडीनां मध्ये एकैकस्यां नाड्यां शतं शतं प्रतिशाखा नाड्यो भवन्ति । पुनस्तासां च प्रतिशाखा नाड्यो भवन्तीति वक्तव्यम् । एवं च सम्भूय प्रतिशरीरं तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात् । प्रतिशाखानाडीसहस्राणां द्वासप्ततिमिति द्वितीया षष्ठ्यर्थे योजनीया । किं चातः? आसु नाडीषु विविधं नयनाद् व्यानो व्यानवायुमधिष्ठाय चरति । अथोदानस्तूदानवायुमधिष्ठायैकया नाड्या सुषुम्नयोर्ध्वगतिश्चरति । स च तत्र चरन् पुण्येन जीवकृतं पुण्यं निमित्तीकृत्य पुण्यं स्वर्गादिलोकं नयति । एवं ज्ञानेन मोक्षमिति च द्रष्टव्यम् । अत एवोर्ध्वं नयनादुदानः । पापेन पापं नरकादिकं दुःखबहुलं लोकं नयति । उभाभ्यां समप्रधानाभ्यां पुण्यपापाभ्यां समदुःखसुखं मनुष्यलोकं नयतीति ॥ ५ ॥

### (मङ्गालीयम्)

एकशब्दस्य वैयर्थ्यमाशङ्क्य व्याख्याति– **एकोत्तरशतमिति** ॥ ननु एकोत्तरशतनाडीनां मध्ये एकैकस्यां शतसङ्ख्याकोपनाड्यो भवन्तीत्युक्तौ शतोत्तरायुतसङ्ख्याकनाडीनां लाभेऽपि वक्ष्यमाणद्वासप्ततिसहस्रनाडीनां कथं लाभ इत्यत आह– **पुनस्तासां चेति** ॥ अयुतसङ्ख्याकनाडीनां मध्ये

एकैकस्यां सप्तसप्तप्रतिनाड्यः । शतानां नाडीनां मध्ये एकैकस्यां विंशति-विंशतिप्रतिशाखानाड्यो भवन्तीति वक्तव्यमित्यर्थः । ततश्च सम्भूय प्रति-शाखानाडीनां द्वासप्ततिसहस्राणि सम्पद्यन्त इति ज्ञेयम् । प्रतिशरीरमिति द्वासप्ततिं द्वासप्ततिमिति वीप्साभिप्रायवर्णनम्– **द्वितीयेति** ॥ नाडीसहस्रा-णीति द्वितीयेत्यर्थः ॥ **षष्ठ्यर्थे योजनीयेति** ॥ यद्यपि 'आदशतः सङ्ख्याः सङ्ख्येये अतः परं सङ्ख्याने सङ्ख्येये च' इति वचनाद् द्वासप्ततिशब्दस्य सङ्ख्येयपरत्वेन नाडीसहस्रशब्दसामानाधिकरण्यसम्भवात् 'शतं ब्राह्मणाः' इत्यादिवद् द्वासप्ततिं द्वासप्ततिं नाडीरूपसहस्राणि जानीयादिति यथाश्रुतैव योजना सम्भवति नतु षष्ठ्यर्थे द्वितीयेति योजनेति । तथाऽपि 'युगानामेक-सप्ततिम्' इत्यादौ सङ्ख्यायां सङ्ख्याशब्दस्य प्रयोगप्राचुर्यात् सङ्ख्यावाचित्वमेव स्वीकृत्य विभक्तिविपरिणामेन षष्ठ्यर्थे द्वितीया योजितेति ज्ञेयम् । अथैक-येत्यत्र एकया सहस्रासु प्रधानया नाड्या पुण्यं लोकं नयतीति प्रतीयते । इदं चानुपपन्नम् । सुषुम्नाया मोक्षमार्गत्वादित्यतः चरतीत्यनुकृष्य भिन्नवाक्यतया व्याचष्टे– **अथेति** ॥ 'पुण्येन' इत्यादौ पुण्यादिलोकनयने स्वकृतं पुण्यादिकं निमित्तमुच्यत इत्यन्यथाप्रतीतिनिरासायाऽऽह– **जीवकृतमिति** ॥ **निमित्ती-कृत्येति** ॥ कर्तृकरणयोस्तृतीयाया असम्भवाद् हेतौ तृतीयेत्युक्तं भवति ॥ **एवं ज्ञानेनेति** ॥ दद्यान्मोक्षादिकमिति भाष्यादिति भावः । पुण्यपापयोर-न्यतरप्राचुर्येण पुण्यादिलोकप्राप्तेः समप्रधानाभ्यामित्युक्तम् । साधनानुरूप्यद्योतनाय 'समदुःखसुखम्' इति मनुष्यलोकविशेषणम् ॥ ५ ॥

**(उपनिषत्)**

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणम-नुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः। तेजो ह वा उदानः । तस्मादुप-शान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ॥ ६ ॥**

## (टीका)

कथं बाह्यमित्यादिप्रश्नद्वयं परिह्रियते– **आदित्य इत्यादि ॥** मुख्यप्राण एव हि प्राणनामा बाह्यो बहिर्भवः आदित्यः आदित्ये स्थितः तन्नाम दधत् उदेति उद्गच्छति । एष आदित्यस्थः प्राण एवैनं चाक्षुषं चक्षुषि भवं प्राणवायुमनुगृह्णानो वर्तते । एतेन मुख्यप्राणः प्राणनाम्ना रूपेण बहिरादित्यं धत्ते, अध्यात्मं चाऽदित्यस्थः प्राणः अधिष्टानभूतेनाऽदित्येन सहैव चक्षुषि स्थित्वा चक्षुस्तदभिमानिनं च प्राणवायुमित्युक्तं भवति । एवमुत्तरत्रापि ज्ञातव्यम् । बहिः पृथिव्यां या धारिकाऽपानाख्या देवता सैषा पुरुषस्यापानं देहे वर्तमानमपानवायुमवष्टभ्य धृत्वाऽन्तरा शरीरान्तर्वर्तते । अन्तरा द्यावा-पृथिव्योर्मध्ये । यदाकाशो य आकाशः आकाशधारकः समानः सोऽध्यात्मं समानवायुं धत्ते । यो बहिर्वायुधारको व्यानः स एवान्तर्व्यानो व्यानवायु-धारकः । बहिस्तेजोधारको य उदानः स उदानः उदानवायुं धत्ते इत्येतत् प्रसिद्धम् । कथमिति? यस्मात्तेजोऽधिष्ठातोदानः तेनाधिष्ठानेन तेजसा सहैवान्तरुदानं दधत् प्राणिनां जीवनहेतुर्वर्तते । तस्मादेव हि यः पुरुषः उपशान्ततेजा भवति स तेजसोऽपगमनेनोदानस्याप्यपगमनमनुमाय मनसि सम्पद्यमानैरिन्द्रियैः सह पुनर्भवं जन्मान्तरं मरणमिति यावत्, प्राप्स्यतीत्य-नुमीयते लोकैरिति ॥ ६ ॥

## (मङ्कालीयम्)

कथं बाह्यमित्यादीत्यत्राऽदिशब्देन कथं चाध्यात्ममिति प्रश्नग्रहणम् । कथमभिधत्त इति प्रश्नपरिहाराय तं दधदित्युक्तम् । तं दधत् तद्धारकः सन् उद्गच्छति ऊर्ध्वम् ऊर्ध्वभागं गच्छति । प्राण एव मुख्यप्राण एव । प्राणवायुं स्वदासभूतं प्राणवायुम् अनुगृह्णानो धारणादिनाऽनुग्रहं कुर्वाणः । अभिप्रायमाह– **एतेनेति ॥** ननु प्राणादिरूपाणामध्यात्मधारकत्वं पूर्व-मेवोक्तम् । सत्यम् । अधिदैवादिगतानि प्राणादिरूपाणि तेभ्यो विभक्तानि

तान्येव स्वाधिष्ठानैः सह जीवशरीरे स्थित्वा स्वानुग्राह्यं प्राणादिपञ्चकं धृत्वा जीवधृत्यनुकूलानि भवन्तीत्यत्रोच्यते । पूर्वं तु श्वासप्रणयनादिव्यापारविशेषवन्ति केवलाध्यात्मगतान्येव तानि दासपञ्चकमधिष्ठाय स्थानविशेषेषु स्थितान्युदितानीति स्फुटत्वान्न दोषः । अत एव पुनः प्रश्नवाक्यमप्युपपद्यते । अधिष्ठानेन सह स्थितिस्तु 'तस्मादुपशान्ततेजाः' इत्यत्र स्फुटीकृता । **तदभिमानिनं च प्राणवायुमिति** ॥ अभिधत्त इति पूर्वेणान्वयः । **एवमुत्तरत्रापि ज्ञातव्यमिति** ॥ मुख्यप्राणोऽपाननाम्ना रूपेण बहिः पृथिवीमभिधत्ते । अध्यात्मं चाधिष्ठानभूतया पृथिवीदेवतया सहैव पुरुषस्यापानदेशे स्थित्वाऽपानवायुं जडभूतं तदभिमानिनं च स्वदासभूतम् अपानवायुमभिधत्ते । तथा बहिर्द्यावापृथिव्योर्मध्ये य आकाशधारको मुख्यप्राणरूपः समानवायुः स स्वाधिष्ठानेनाऽकाशेन सह पुरुषशरीरे जडभूतं समानवायुं तदभिमानिनं स्वदासभूतं समानवायुमभिधत्ते । तथा बहिर्वायुधारको यो व्यानो मुख्यप्राणस्वरूपः स एव स्वाधिष्ठानभूतेन वायुना सह पुरुषशरीरगं जडभूतं व्यानवायुं तदभिमानिनं स्वदासभूतं व्यानमभिधत्ते । तथा बहिस्तेजोधारको य उदानो मुख्यप्राणस्वरूपः स स्वाधिष्ठानभूतेन तेजसा सह पुरुषदेहगं जडभूतमुदानं तदभिमानिनं स्वदासभूतमुदानं चाभिधत्त इति द्रष्टव्यमित्यर्थः । अन्तरेत्यस्याऽवृत्तिमभिप्रेत्याऽह– **अन्तरा द्यावापृथिव्योर्मध्ये यदाकाश इति** ॥ 'ह वै' इत्येतस्य व्याख्यानम्– **इत्येतत् प्रसिद्धमिति** ॥ अत्र यत् तेजोधिष्ठानकमुख्यप्राणरूपोदानस्य देहेऽधिष्ठानभूततेजसा सह स्थित्वोदानधारकत्वमुक्तं तदुपपादकत्वेन 'तस्मादुपशान्ततेजाः' इति मूलं योजयितुमवतारयति– **कथमितीति** ॥ तेजसा सहैवोदानो वर्तत इति कथं ज्ञातव्यमित्यर्थः ॥ **अन्तरिति** ॥ शरीरान्तरित्यर्थः । स इत्यस्य प्राप्स्यतीति क्रिययाऽन्वयः । अनुमायेति ल्यबन्तस्यानुमीयत इत्युक्तानुमित्यपेक्षयोदानापगमानुमितेः पूर्वकालत्वादुपपत्तिः । अनुमीयते विद्वद्भिरिति शेषः ॥ ६ ॥

(उपनिषत्)

**यच्चित्तस्तेनैष प्राणमायाति। प्राणस्तेजसा युक्तः स हाऽत्मना यथासङ्कल्पितं लोकं नयति। य एवं विद्वान् प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति। तदेष श्लोकः—**

**उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा।**
**अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते**
**विज्ञायामृतमश्नुत इति॥ १२॥**

**॥ इति तृतीयप्रश्नप्रतिवचनम् ॥**

(टीका)

सङ्गतिविशेषलाभात् केनोत्क्रमत इति प्रश्नस्योत्तरमिदानीमुच्यते। **यच्चित्त इति** ॥ एष पुरुषो यच्चित्तो मरणकाले यद्विषयचित्तो भवति तेन तद्विषयेण चित्तेन सह प्राणं मुख्यमायाति। तत्समीपं प्राप्नोति। प्राणस्तु तेजसोदानेन युक्तः परामात्मना सह जीवं यथासङ्कल्पितं, तेन जीवेन मरणकाले यादृशः सङ्कल्पितः स्मृतः तथाविधलोकं शरीरं नयति प्रापयतीति। अत एव यच्चित्त इत्युक्तम्। स्वाभिप्रेतमिति वा। अनेनोदानरूपेणोत्क्रमणमित्युक्तं भवति। एवम्भूतप्राणविज्ञानस्य फलमुच्यते— **य एवमिति** ॥ यो विद्वानेवम् उक्त-लक्षणं प्राणं वेद विजानाति नास्य विदुषः प्रजा हीयते। अविच्छिन्नसन्तानो भवतीत्यैहिकम्। परत्र चामृतो मुक्तो भवति। तदेष श्लोकः। प्राणस्योत्पत्तिं, परमात्मनः आयतिं प्रवर्तनं, शरीरे तदिच्छया स्थानमवस्थानम्, पायूपस्थादि पञ्चधा प्राणादिरूपेण विभुत्वं विविधभवनं स्वाम्यं वा, तथा अध्यात्मम् अध्यात्मधारकत्वं, चशब्देन बाह्यधारकत्वमुत्क्रमणं चेत्येतद् विज्ञाय विशेषेण ज्ञात्वाऽमृतं मोक्षमश्नुते प्राप्नोति ॥ ७ ॥

**॥ इति तृतीयप्रश्नप्रतिवचनम् ॥**

## (प्रकाशिका)

'सङ्गतिविशेषलाभात्' इत्यत्र शरीरेऽवस्थितिप्रपञ्चनोत्तरं देहादुत्क्रमणकथनस्य सङ्गतत्वादिति भावः । 'यच्चित्तः इत्युक्तम् स्वाभिप्रेतमिति वा' इत्यत्र स्वयं यच्चित्तो भवति तमित्यभिप्रायेण स्वाभिप्रेतमित्युक्तम् ॥

एवमनेकोपनिषत्सु बहुशः प्रस्तूयमानः सर्वस्रष्टृत्वसर्वपालकत्वसर्वदेवोत्तमत्वादिरूपो मुख्यप्राणस्य महिमा पुराणादिषु कुतो न प्रपञ्चित इति चेत् सत्यम् । मूलरूपेण न त्वं जगति प्रसिद्धो भव, तवावतारा एव प्रसिद्धा भवन्त्विति कण्वस्य शापरूपवचनपरिपालनाय व्यासवाल्मीकिप्रभृतयः स्वकृतग्रन्थेषु मूलरूपमुख्यप्राणस्य महिमानं न प्रायेण प्रपञ्चयामासुः । किन्तु मूलरूपी भगवांस्तु हनुमद्भीमादितदवतारकथामेव रामायणभारतपुराणादिस्वकृतपौरुषेयग्रन्थेषु मुनीनां मान्यतासिद्ध्यर्थं प्रपञ्चयाञ्चक्रे । अपौरुषेयतया पुरुषानपेक्षितोपनिषद्विद्यासु सर्वसृष्ट्युत्तरकालीनकण्वादिमुनिभ्योऽपि पूर्वं विद्यमानस्वभक्तशिरोमणेः सर्वदेवोत्तमस्य मूलरूपमुख्यप्राणस्य गुणाननेकधा गणयामास । अपि च रुद्रसूर्यस्कन्दादीन् देवान् नानादुर्मतप्रवृत्तौ निमित्तीकुर्वन्नपि नारायणो नित्यमविच्छिन्नस्वधर्माणं, नित्यमेतेषु कृतसख्यं, स्वहिततममत एव परमप्रियं प्राणमसज्जनेषु गोपयितुं रहस्यरूपोपनिषद्विद्यायामेव बहुशो न्यरूरूपत् । न तु स्त्रीशूद्रादीनामपि श्रवणयोग्यतन्त्रविद्यासु व्यासादिस्वावताररूपेणापि निरूपयामास । अत एव सर्वदेवोत्तमतया हरिभक्ताग्रेसरतया चोपनिषदाचार्यमध्वगुरोरुपदेशेन तन्मतानुवर्तिभिस्तत्त्ववादिभिः प्रस्तूयमानमुख्यप्राणाख्यतत्त्वस्य सकलश्राव्यपौरुषेयविद्यास्वपि तथैव विस्तरेणाप्रस्तावात् सदसद्रूपमतभेदमप्यनुमतमेव चेत्येके । एतदेवाभिप्रेत्य कण्वोऽपि प्राणप्रेरणयैव शापव्याजेन तदानुकूल्यमेव चक्रे, न तु तस्य प्रातिकूल्यमिति सर्वस्यापि समाधानसम्भवेन चोद्यस्यैवानवकाशात् ॥

(उपनिषत्)

**यच्चित्तस्तेनैष प्राणमायाति। प्राणस्तेजसा युक्तः स हाऽत्मना यथासङ्कल्पितं लोकं नयति। य एवं विद्वान् प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति। तदेष श्लोकः–**

**उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा।**
**अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते**
**विज्ञायामृतमश्नुत इति॥ १२॥**

**॥ इति तृतीयप्रश्नप्रतिवचनम् ॥**

(टीका)

सङ्गतिविशेषलाभात् केनोत्क्रमत इति प्रश्नस्योत्तरमिदानीमुच्यते। **यच्चित्त इति**॥ एष पुरुषो यच्चित्तो मरणकाले यद्विषयचित्तो भवति तेन तद्विषयेण चित्तेन सह प्राणं मुख्यमायाति। तत्समीपं प्राप्नोति। प्राणस्तु तेजसोदानेन युक्तः परामात्मना सह जीवं यथासङ्कल्पितं, तेन जीवेन मरणकाले यादृशः सङ्कल्पितः स्मृतः तथाविधलोकं शरीरं नयति प्रापयतीति। अत एव यच्चित्त इत्युक्तम्। स्वाभिप्रेतमिति वा। अनेनोदानरूपेणोत्क्रमणमित्युक्तं भवति। एवम्भूतप्राणविज्ञानस्य फलमुच्यते– **य एवमिति**॥ यो विद्वानेवम् उक्त-लक्षणं प्राणं वेद विजानाति नास्य विदुषः प्रजा हीयते। अविच्छिन्नसन्तानो भवतीत्यैहिकम्। परत्र चामृतो मुक्तो भवति। तदेष श्लोकः। प्राणस्योत्पत्तिं, परमात्मनः आयतिं प्रवर्तनं, शरीरे तदिच्छया स्थानमवस्थानम्, पायूपस्थादि पञ्चधा प्राणादिरूपेण विभुत्वं विविधभवनं स्वाम्यं वा, तथा अध्यात्मम् अध्यात्मधारकत्वं, चशब्देन बाह्यधारकत्वमुत्क्रमणं चेत्येतद् विज्ञाय विशेषेण ज्ञात्वाऽमृतं मोक्षमश्नुते प्राप्नोति॥ ७॥

**॥ इति तृतीयप्रश्नप्रतिवचनम् ॥**

## (प्रकाशिका)

'सङ्गतिविशेषलाभात्' इत्यत्र शरीरेऽवस्थितिप्रपञ्चनोत्तरं देहादुत्क्रमण-कथनस्य सङ्गतत्वादिति भावः। 'यच्चित्तः इत्युक्तम् स्वाभिप्रेतमिति वा' इत्यत्र स्वयं यच्चित्तो भवति तमित्यभिप्रायेण स्वाभिप्रेतमित्युक्तम् ॥

एवमनेकोपनिषत्सु बहुशः प्रस्तूयमानः सर्वस्रष्टृत्वसर्वपालकत्व-सर्वदेवोत्तमत्वादिरूपो मुख्यप्राणस्य महिमा पुराणादिषु कुतो न प्रपञ्चित इति चेत् सत्यम्। मूलरूपेण न त्वं जगति प्रसिद्धो भव, तवावतारा एव प्रसिद्धा भवन्त्विति कण्वस्य शापरूपवचनपरिपालनाय व्यासवाल्मीकिप्रभृतयः स्वकृतग्रन्थेषु मूलरूपमुख्यप्राणस्य महिमानं न प्रायेण प्रपञ्चयामासुः। किन्तु मूलरूपी भगवांस्तु हनुमद्भीमादितदवतारकथामेव रामायणभारतपुराणादि-स्वकृतपौरुषेयग्रन्थेषु मुनीनां मान्यतासिद्ध्यर्थं प्रपञ्चयाञ्चक्रे। अपौरुषेयतया पुरुषानपेक्षितोपनिषद्विद्यासु सर्वसृष्ट्युत्तरकालीनकण्वादिमुनिभ्योऽपि पूर्वं विद्यमानस्वभक्तशिरोमणेः सर्वदेवोत्तमस्य मूलरूपमुख्यप्राणस्य गुणाननेकधा गणयामास। अपि च रुद्रसूर्यस्कन्दादीन् देवान् नानादुर्मतप्रवृत्तौ निमित्तीकुर्वन्नपि नारायणो नित्यमविच्छिन्नस्वधर्माणं, नित्यमेतेषु कृतसख्यं, स्वहिततममत एव परमप्रियं प्राणमसज्जनेषु गोपयितुं रहस्यरूपोपनिषद्विद्यायामेव बहुशो न्यरू-रूपत्। न तु स्त्रीशूद्रादीनामपि श्रवणयोग्यतन्त्रविद्यासु व्यासादिस्वावताररूपेणापि निरूपयामास। अत एव सर्वदेवोत्तमतया हरिभक्ताग्रेसरतया चोपनिषदा-चार्यमध्वगुरोरुपदेशेन तन्मतानुवर्तिभिस्तत्त्ववादिभिः प्रस्तूयमानमुख्य-प्राणाख्यतत्त्वस्य सकलश्राव्यपौरुषेयविद्यास्वपि तथैव विस्तरेणाप्रस्तावात् सदसद्रूपमतभेदमप्यनुमतमेव चेत्येके। एतदेवाभिप्रेत्य कण्वोऽपि प्राणप्रेरणयैव शापव्याजेन तदानुकूल्यमेव चक्रे, न तु तस्य प्रातिकूल्यमिति सर्वस्यापि समाधानसम्भवेन चोद्यस्यैवानवकाशात् ॥

## (मङ्गालीयम्)

**सङ्गतिविशेषलाभादिति** ॥ यद्यपि कथमभिधत्त इत्यादिप्रश्नपरिहारात् पूर्वमेव प्रश्नानुसारेण केनोत्क्रमत इति प्रश्नोत्तरं वक्तव्यम् । तथाऽप्यध्यात्मं तेजोनियामकस्योदानस्य जीवनहेतुत्वमुक्त्वा तदुपपादयितुं 'तस्मादुपशान्ततेजाः' इति जीवानां मरणस्योदानाधीनत्वकथनप्रसङ्गादुत्क्रमणमपि उदानरूपेणैव भवतीति केनोत्क्रमत इति प्रश्नपरिहारकथने सङ्गतिविशेषलाभादिदानीं केनोत्क्रमत इति प्रश्नोत्तरमुच्यत इत्यर्थः । अत एवोदानरूपेणोत्क्रमणमित्यनुपदमेव वक्ष्यति– **परमात्मना सहेति** ॥ 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुतेरिति भावः ॥ **यथासङ्कल्पितमिति** ॥ 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्' इति स्मृतेरिति भावः । इच्छार्थकस्य सङ्कल्पितशब्दस्य स्मृत्यर्थत्वे ज्ञापकमाह– **अत एवेति** ॥ यथा प्रतीतार्थत्वेऽप्यविरोध इत्याह– **स्वाभिप्रेतमिति** ॥ अनेनाऽत्मना स्वेन सङ्कल्पितमित्यपि योजनोक्ता भवति ॥ **अनेनेति** ॥ प्राणरूपस्यैवोत्क्रमणहेतुत्वे तेजसा युक्त इति विशेषणं व्यर्थं स्यात् । अत उदानरूपेण जीवादीन् गृहीत्वा तेन साकं परमात्मान-मनूत्क्रामतीति ज्ञेयमित्यर्थः । एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्त इत्येतदर्थसङ्ग्रहाय विभुत्वमित्यस्य स्वाम्यं वेति व्याख्याना-न्तरम् ॥ **चशब्देनेति** ॥ समुच्चितमिति शेषः । बाह्यधारकत्वमादित्यपृथिव्यादि-धारकत्वम् । उत्क्रमणम् उदानरूपेणेति शेषः ॥ ७ ॥

**॥ इति तृतीयप्रश्नप्रतिवचनम् ॥ ३ ॥**

## अथ चतुर्थः प्रश्नः

### (उपनिषत्)

*(स्वप्नसुषुप्त्योः परमात्माधीनत्वोक्तिः)*

**ॐ ॥ अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति । कान्यस्मिन् जाग्रति । कतर एष देवः स्वप्नान् पश्यति । कस्यैतत् सुखं भवति । कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥**

### (टीका)

**अथ हैनं सौर्यायणीति** । उक्तं प्राणादेरखिलस्यापि जगतो भगवदधीनत्वम् । तन्न केवलं जाग्रदवस्थायाम् । किन्नाम ? स्वप्नसुषुप्त्योरपीति दर्शयितुमुत्तरो ग्रन्थः । भगवन्नेतस्मिन् पुरुषे शरीरिणि स्वपति सति कानि दैवानि स्वपन्ति स्वव्यापारादुपरमन्ते? भाव्यं हि केषाञ्चिद् व्यापारोपरमेण । अन्यथा स्वापस्यैवासम्भवात् । कानि दैवान्यस्मिन् पुरुष स्वपति जाग्रति स्वव्यापरं कुर्वन्ति? सर्वेषामुपरमे शरीरावस्थानासम्भवात् । स्वापोऽपि द्विविधः । स्वप्नसुषुप्तिभेदात् । तत्र स्वप्ने य एष देवः स्वप्नान् स्वप्नस्थान् पदार्थान् पश्यति स कतरः? सर्वेन्द्रियाणामुपरतत्वात् केनेन्द्रियदेवेन जीवः स्वाप्नान् पदार्थाननुभवतीत्यभिप्रायः । सुषुप्तौ च यत् सुखं भवति तत् कस्य? तदोपरतकरणस्य जीवस्य विषयसंसर्गाद्यभावेन कथं सुखानुभवो घटते इत्याशयः । एते च स्वपन्तो जाग्रतः स्वप्नाद्यवस्थावांश्च न तावत् स्वतन्त्राः । बहूनां तदयोगात् । न च जीवाधीनाः । क्वचिदतद्वशत्वस्यापि दर्शनात् । न च मुख्यप्राणाधीनाः । तस्यापि जीवत्वेनानवस्थितेरसम्भवाच्च । अतः

पराधीना एते सर्वे कस्मिन् सम्प्रतिष्ठिता भवन्ति? परमेश्वरश्चेत् तदाश्रयः तत्कृत इत्यभिप्रायः ॥ १ ॥

## (प्रकाशिका)

'कतर एष देवः' इत्यत्रैष जीवो यस्य बलात् स्वप्नान् स्वाप्नपदार्थान् पश्यति । स कतर इत्यर्थः । टीकावाक्ये तु स्वाप्नस्थान् पदार्थान् पश्यति दर्शयतीत्यभिप्रेतम् । अत एवोत्तरवाक्ये केनेन्द्रियदेवेनेत्युक्तम् । 'अनवस्थितेरसम्भवाच्च' (ब्र.सू.१.२.१७) इत्यत्र नियामकजीवपरम्पराग्रहणेऽनवस्थितेर्मुख्यप्राणस्यापि जीवत्वाविशेषेणासम्भवाच्चेत्यर्थः । 'तत् कुतः' इत्यत्र तत् परमेश्वराधीनत्वं कुतः कस्मात् प्रमाणाद् वेदितव्यम् । प्रत्यक्षेण तस्यादर्शनादिति भावः ॥

## (मङ्गालीयम्)

**अथ हैनं सौर्यायणी**॥ नन्वत्र क्रियमाणाः प्रश्नाः सर्वेऽप्यनुपपन्नाः । केषाञ्चिद् व्यापारोपरमः केषाञ्चिन्नेति सिद्धे कानि स्वपन्ति कानि जाग्रति चेति प्रष्टव्यत्वाद् जीवस्यैव स्वप्नदर्शनं सुखं चेत्यनुभवसिद्धत्वेन सिद्धार्थतापातात् । सर्वेषामन्याधीनत्वे सिद्धे किमधीना इति प्रष्टव्यत्वाद् दर्शनश्रवणादीनाम् इन्द्रियव्यापाराणां जीवप्रयत्नानुविधायितादर्शनेन जीवाधीनत्वस्य वा, क्वचिज्जीवप्रयत्नव्यतिरेकेऽपि तद्दर्शनेन तदनियमावगमेऽपि 'प्राणस्यैतद्वशे सर्वम्' इत्यादिपूर्वोक्तरीत्या मुख्यप्राणाधीनत्वस्य वा, तस्यापि जीवत्वेन स्वातन्त्र्यासम्भवे 'यथैषा पुरुषे च्छाया' इति सर्वस्य परमेश्वरवशत्वस्योक्तत्वेन परमेश्वरवशत्वस्य वा सम्भवेन प्रश्नानवकाशाच्चेत्यतो वक्ष्यमाणपरिहारानुसारेण तदभिप्रायं वदंस्तत्र तत्रान्यथाप्रतीतिं च निराकुर्वन् व्याचष्टे– **भगवन्नित्यादि ॥ स्वपति सतीति ॥** इयं शेषोक्तिः । जाग्रदवस्थायां पुरुषशरीरे इन्द्रियदेवानाम् उपरमाभावात् स्वापकाले गाढनिद्रायुतत्वेन स्वाप्नपदार्थदर्शनाभावात् कथं स्वाप्नपदार्थदर्शनप्रश्न इत्यत आह– **स्वप्नो द्विविध इति ॥** ननु शरीरिणो जीवस्यैव स्वप्नद्रष्टृत्वाद् इन्द्रियदेवानां च

तदभावात् 'कतर एष देवः स्वाप्नान् पश्यति' इति प्रश्नासम्भवमाशङ्क्य तदभिप्रायमाह– **सर्वेन्द्रियाणामिति** ।। तत्र तत्र पृथगेव वाऽवतारिका द्रष्टव्या । तथाच पश्यतीत्येतदन्तर्णीतण्यर्थकमित्युक्तं भवति । योजना तु कतर इन्द्रियाभिमानी देवः [1]स्वप्नावस्थापन्नं जीवं स्वप्नान् स्वाप्नपदार्थान् पश्यति दर्शयतीति । विषयसंसर्गादीत्यादिशब्देन विषयानुभवो गृह्यते । **बहूनां तदयोगादिति** ।। एकस्मिन् शरीरे बहूनां स्वातन्त्र्ये एकस्मिन्नेव क्षणेऽनेकविरुद्धादिक्रियाप्राप्त्या शरीरमुन्मथ्येतेति भावः ।। **कचिदतद्वशत्वस्यापीति** ।। निद्रारोगादिप्रतिबन्धे इन्द्रियदेवानां जीवापेक्षितज्ञानाद्यकरणदर्शनादिति भावः । 'अनवस्थितेरसम्भवाच्च नेतरः' (ब्र.सू.१.२.१७) इति सूत्रोक्तदूषणमाह– **तस्यापीति** ।। तस्यापि जीवत्वेनेन्द्रियदेवादिवन्नियामकान्तरसापेक्षत्वे तस्याप्येवं तस्याप्येवमित्यनवस्थितिः । स्वातन्त्र्यं चेदसम्भवः । अस्य जीवत्वमेव न स्यादिति भाव इति केचित् । जीवभूतस्य मुख्यप्राणस्य जीवान्तरनियामकत्वेऽस्येश्वरनियम्यत्वानङ्गीकारे जीवान्तरनियम्यत्वमङ्गीकार्यम् । तस्याप्येवं तस्याप्येवमित्यनवस्थानात् । मुख्यप्राणस्यापि जीवत्वाविशेषाज्जीवनियामकत्वासम्भवाच्चेत्यर्थ इत्यपरे । **तत्कुत इति** ।। सर्वाश्रयत्वोपपादकं किमद्भुतं परमेश्वरस्य माहात्म्यमित्यर्थः ।। १ ।।

**(उपनिषत्)**

**तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति । ताः पुनरुदयतः प्रचरन्त्येवं पुनः हैतत् सर्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽदत्ते नाऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ।। २ ।।**

---

१. 'स्वाप्नावस्थापन्नं' (पा.)

### (भाष्यम्)

*(परमात्मनः तत्त्वाभिमानिदेवताश्रयत्वप्रतिपादनम्)*

**रश्मीनामविशेषेऽपि [१]ह्यन्यद्दृष्टिव्यपेक्षया।**
**सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तददर्शनात्॥**

**'एवं विष्णोस्तु सामीप्याद् देवानां सुप्तिगस्य तु।**
**व्यवहाराकरत्वाच्च [२]एकीभाव इतीर्यते' इति च॥**

### (टीका)

एवं पृष्टवते तस्मै सहोवाच– **यथेत्यादि** । अत्रार्कमरीचीनां यत्तेजो-मण्डलेऽस्तमये एकीभावकथनं, यच्चोदये तस्मात् पुनः प्रचारवचनं तदनुपपन्नम् । अत्रास्तमयेऽपि देशान्तरे पृथक् दर्शनादिनाऽऽदित्यरश्मीनामुदयास्तमययोरविशेषात् । इन्द्रियादिदेवानां चात्र स्वापे वक्तव्ये मनस्येकीभाव-कथनं कुत्र सङ्गच्छते ? कथं वा युज्यते ? न हि भिन्नयोरभेदः क्वचिद्दृष्टः । कथं च मनसः परदेवत्वमित्यत एतद्वाक्यं समञ्जसयितुं व्याख्यानरूपां स्मृति-मुदाहरति– **रश्मीनामिति** ॥ **सुप्तिगस्य देवानामिति** ॥ तत्तदिन्द्रिया-द्यभिमानिदेवानामित्यर्थः । सुप्तिगस्य तद्देवानां चेति वा । ततश्चायमार्थः– हे गार्ग्य, यथाऽर्कस्यास्तमदर्शनं गच्छतस्सतः सर्वा एव मरीचयः सर्वेऽपि रश्मयः एतस्मिन् दृश्यमाने तेजोरूपमण्डले एकीभवन्ति तत्रैकीभूता इव दृश्यन्ते, प्रकाशनादिव्यापारादुपरमन्त इति यावत्, ताः पुनस्ते तु रश्मयोऽर्कस्य पुनरुदयतः सतः प्रचरन्ति तस्मान्मण्डलान्निर्गत्य लोके प्रचरन्तीव दृश्यन्ते, स्वव्यापारं कुर्वन्तीति यावत्, एवं खल्वेतत्सर्वं शरीरी तदिन्द्रियदेवताजातं च परे देवे विष्णौ स्वप्नावस्थायां मनसि स्थिते, सुषुप्तौ तु हृदयाकाशस्थे एकीभवति। जागरे तु प्रचरति ।अनेन स्वप्ने मनोव्यतिरिक्तानामेवोपरमः ।

---

१. 'ह्यन्नदृष्टिव्यपेक्षया' ह.

२. 'एकीभाव इवेर्यते' ह.

सुषुप्तौ तु तस्यापीति सूचितम् । यत एवं तेन कारणेन तर्हि तदा स्वापे एष पुरुषो जीवो न शृणोतीत्यादि । नेयायते न गच्छति । स्वप्नविवक्षया चैतत् । सुषुप्तौ तु न मनुत इत्याद्यपि द्रष्टव्यम् । यत एवं जीवः स्वापे परं देवं प्राप्नोति अत एव हि तदा स्वपितीत्याचक्षते विद्वांसः । स्वं स्वतन्त्रं देवम् अप्येतीति कृत्वेति ॥ २ ॥

## (प्रकाशिका)

मनस्येकीभवतीत्येतदुपलक्षणमिति भावेनाऽऽह– **सुषुप्तौ हृदयाकाशस्थ इति** ॥ तदा मनसोऽप्युपरतत्वादित्यर्थः । 'न मनुते इत्याद्यपि द्रष्टव्यम्' इत्यत्राऽऽदिशब्देन न स्वप्नान् पश्यति, नापि स्वाप्नविषयभोगजसुखमनुभवतीत्यादि गृह्यते । 'स्वं स्वतन्त्रमप्येति' इति वदता 'स्वं ह्यपीतो भवति' इति श्रुत्यन्तरे व्याख्यानात् स्वपितीत्यत्रापि पिधानार्थकापीत्युपसर्गादिण् गताविति धातोश्च गुणस्य चाविवक्षायां 'समाने पूर्वलोपः' इति वचनात्तदुपपदेऽकारलोपे च सति स्वपीत्यपीतीत्यर्थः सूचितः ॥ २ ॥

## (मङ्गालीयम्)

'यथा गार्ग्य' इति वाक्यस्य प्रतीतार्थे लेशतोऽनुपपत्तिं प्रदर्श्यार्थान्तरमुच्यते भाष्ये । तत्र भाष्योक्तामनुपपत्तिं विवृण्वन् तद्दिशा दार्ष्टान्तिकवाक्यस्याऽऽपातप्रतीतार्थेऽप्यनुपपत्तिं वदन् भाष्यमवतार्य किञ्चिद् व्याचष्टे– **अत्रार्कमरीचीनामित्यादिना** ॥ **अत्रेति** ॥ अस्मिन् वाक्य इत्यर्थः । **अत्रेति** ॥ एतद्देश इत्यर्थः । पृथगूदर्शनादिनेत्यादिशब्देन प्रकाशनादिव्यापार उच्यते । **स्वापे वक्तव्य इति** ॥ [1]इन्द्रियप्रेरणाख्यव्यापारोपरम इत्यर्थः ॥ **सुप्तिगस्येति** ॥ सुप्त्यवस्थापन्नस्य जीवस्य सम्बन्धिनो ये देवाः तेषामित्यर्थमभिप्रेत्य सम्बन्धप्रदर्शनाय तदिन्द्रियाद्यभिमानीत्युक्तमित्यर्थः । सुप्तिगस्यापि भगवत्सामीप्यस्य प्रमितत्वाच्चशब्दमध्याहृत्य द्वितीयं व्याख्यानम् ॥

१. 'इन्द्रियप्रेरणारूपव्यापारोपरमः' (पा.)

**ततश्चायं समग्रभाष्यार्थः ।।** अन्यदृष्टिव्यपेक्षया अन्येषां देशान्तरगतानां पृथग्दर्शनान्निमित्तात् । उपलक्षणमेतत् । प्रकाशनादिव्यापाराच्च सूर्यरश्मीनामुदयास्तमययोरविशेषेऽपि अस्तमये तददर्शनात् । तेषां रश्मीनामेतद्देशगतैः प्रकाशनादिव्यापारहेतुत्वेनादृष्टत्वाद् जातरश्मयः सूर्यमण्डलं यान्तीति भ्रान्त्या तथा व्यवह्रियन्ते । एवमुदयेऽपि मण्डलमात्रदर्शनानन्तरं रश्मीनां क्रमेण दृष्टेर्मण्डलान्निर्गत्य चरन्तीति भ्रान्त्यैवोच्यन्त इति द्रष्टव्यम् । तथाच भ्रान्तिप्रतीतार्थो दृष्टान्ततयाऽत्रोच्यत इत्युक्तं भवति । अत्र दृष्टान्तवाक्ये तेजोमण्डल एकीभवन्तीति भ्रान्त्यनुवादेन मरीचीनां सूर्यमण्डललक्षणैकस्थानप्राप्तभ्रमनिमित्तत्वं प्रकाशतापनादिव्यवहारहेतुत्वं चेति यत् प्रमेयद्वयमभिप्रेतं तदनुसारेण दार्ष्टान्तिकवाक्यार्थ उच्यते–**एवमिति ।।** ईर्यते श्रुताविति शेषः । एकीभावशब्दप्रयोगस्य स्वरूपैक्यप्राप्तौ क्वाप्यदृष्टत्वात् । 'गावः सायं गोष्ठे एकीभवन्ति' इत्यादौ एकस्थाननिवासप्राप्तौ च दृष्टत्वात् । बहुतरक्षीरेणैकीभूतस्य पृथग्व्यवहारादर्शनेनैकीभावशब्दस्य तत्कार्ये प्रवृत्त्यकारणत्वे च लक्षणासम्भवादिति भावः । अत्र देवानां स्वस्वव्यापारकर्तृत्वमेव प्रकृतप्रश्नस्योत्तरतयाऽभिप्रेतं, भगवत्सामीप्यप्राप्तिस्तु स्वस्वस्थानेषु स्थितानां तेषां व्यापाराभावासम्भवात् तदुपपादकतयोक्ता । अन्यथाऽसङ्गतेः । तेन तर्ह्येष पुरुषो न शृणोतीत्यादिप्रपञ्चनाच्चेति । शरीरी जीवः ।। **मनसि स्थित इति ।।** मनसीत्यनन्तरं स्थित इति श्रुतौ शेषोक्तिः । तैजसनामकविष्णुविशेषणं चैतत् । उपनिषदि अन्यदप्यध्याहरति– **सुषुप्तावित्यादिना ।।** प्राज्ञनामकविष्णुविशेषणमेतत् । **अनेनेति ।।** उपनिषदि मनसीति वचनेनेत्यर्थः ।। **यत एवमिति ।।** स्वप्ने मनोव्यतिरिक्तसर्वेन्द्रियाणामुपरम इत्यर्थः । **स्वप्नविवक्षया चैतदिति ।।** दशेन्द्रियमात्रव्यापारराहित्यकथनमित्यर्थः । **न मनुत इत्याद्यपीति ।।** आदिशब्देन न बुद्ध्यते नाहङ्करोति न चेतयत इत्यादिपरिग्रहः । सङ्कल्पादिरूपमनोव्यापारादिकं न करोतीत्यर्थः । श्रुतौ सर्वेन्द्रियव्यापाराभावोक्त्यनन्तरं स्वपितीत्याचक्षते इत्यस्यासङ्गतत्वशङ्कावारणार्थं पूर्वोक्त-

हेत्वनुवादपूर्वकं कर्त्रध्याहारं कुर्वन् तद् वाक्यं योजयति— **यत एवमिति ॥** आचक्षते जीवमिति शेषः । अत्र 'स्वं ह्यपीतो भवति' इति श्रुत्यन्तरोक्त-हेतुमर्थकथनपूर्वकं योजयति— **स्वं स्वतन्त्रमिति ॥ अप्येतीति ॥** अपि अपिहितः प्राज्ञेन आलिङ्गितः । एति प्राज्ञं प्राप्नोतीत्यर्थः ॥ २ ॥

## (उपनिषत्)

*(प्राणाग्निविद्या)*

**प्राणाग्नय एवैतस्मिन् पुरे जाग्रति गार्हपत्यो हवा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते प्रणयना-दाहवनीयः प्राणो यदुच्छ्वासनिःश्वासावेतावाहुती समं नयति स समानो मनो ह वाव यजमान इष्टफलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ३ ॥**

## (टीका)

कानि जाग्रतीत्यस्योत्तरम्— **प्राणाग्नय इति ॥** स्वापकाले एतस्मिन् पुरे शरीरे प्राणाः प्राणादिमुख्यप्राणरूपाण्येवाग्नयः प्राणाग्नयः एव जाग्रति शरीरधारणादिस्वव्यापारं कुर्वंति । अग्नय इत्युपलक्षणम् । ऋत्विग्भावस्यापि वक्ष्यमाणत्वात् । कथं तेषामग्न्यादित्वमित्युच्यते गार्हपत्य इत्यादि । तेषां प्राणानामेषोऽपानो गार्हपत्यः पश्चिमत्वसाम्यात् । व्यानोऽन्वाहार्यपचनो दक्षिणाग्निः होमाङ्गत्वसाम्यात् । यस्माद्गार्हपत्यादाहवनीयः प्रणीयते । प्राणोऽप्यपानात् । तस्मात् प्रणयनात् प्रणयनसाम्यात् प्राण आहवनीयः । यद्यस्माद् द्वावेतौ उच्छ्वासनिश्वासौ ते एवाऽहुती समं यथाकालं नयति । तस्मादाहुत्योः समं नयनसाम्यात् समानः सोऽध्वर्युरिति यावत् । तत्र मननान्मनो जीवो यजमानः। पराधीनफलप्राप्तिसाम्यादित्युत्तरार्थं वचनम् । उदानः इष्टफलम् । यज्ञफलप्रतिपादक उद्गातेति यावत् । फलप्रतिपादकत्व-

साम्यात् । कथमुदानस्य फलप्रतिपादकत्वम् ? स उदानो ह्येनं यजमानं जीवमहरहः प्रतिदिनम् । सुप्ताविति यावत् । ब्रह्म सुषुम्नागतं गमयति प्रापयतीति । य एवं वेद तेनैवमिष्टं भवति । नित्यं ब्रह्मप्राप्तिफलं च तस्य भवतीति ज्ञापनायेदमुक्तम् । यत एवं मनोव्यतिरिक्तानामेवोपरमः स्वप्ने तस्माज्जीवस्य मनसः स्वप्नदर्शनं युक्तमिति ॥ ३ ॥

## (प्रकाशिका)

'ऋत्विग्भावस्यापि' इत्यत्र समानोदानयोरध्वर्यूद्गात्राख्यर्त्विग्भावस्यापि वक्ष्यमाणत्वादित्यर्थः । उपलक्षणं चैतत् । अग्निवद्धोमाङ्गत्वसाम्येन समानोदानयोरग्नित्वमपि द्रष्टव्यम् ॥ एवं च सति प्राणाग्नय इत्युक्तमुपपन्नमिति ज्ञेयम् । 'व्यानोऽन्वाहार्यपचनः' इत्यत्रान्वाहार्यपचन इति दक्षिणाग्नेः नाम । यद्यपि सर्वशरीरगतस्य व्यानस्य दक्षिणाग्निवद् दक्षिणभाग एव स्थितत्वं नास्ति । तथाऽपि श्वासरूपाहुतेः सर्वशरीरनाडीषु प्रापणेन श्वासरूप-होमाङ्गत्वसाम्याद् व्यानोऽन्वाहार्यपचन इति भावः । 'आहुती समं नयति' इत्यत्र समं स्थूलनाडीषु स्थूलतया मध्यमनाडीषु मध्यमतया सूक्ष्मनाडीषु सूक्ष्मतयेति नाडीनां समं यथा भवति तथा श्वासवायुं प्राणाग्निहोत्राङ्गभूतान्नाख्याहुतिरसं च नयतीति कृत्वा समान इत्यर्थः । आहुतीनां च समीकृत्य दानमध्वर्योः कृत्यम् । तस्मादयमध्वर्युरिति भावः । 'अहरहर्ब्रह्म गमयति' इत्युक्तब्रह्मगमनाख्यफलस्य जीवयोग्यत्वात्, मनुत इति मनो जीवः । यज्ञफलभोक्तृत्वात् स एव यजमान इत्यर्थः । **इत्युत्तरार्थमिति** ॥ उदानस्येष्टफलप्रतिपादकत्वसाम्येनोद्गातृत्वं वक्ष्यते । कस्मै इष्टफलं प्रयच्छत्युदानः इति शङ्कायाः जीवरूपयजमानायेत्युत्तरप्रदानार्थमित्यर्थः । 'इष्टं फलम्' इत्यत्रेष्टं फलं य उद्गायति स उद्गातोदान इत्यर्थः । इष्टफलप्रतिपादकसाम्नां गानकर्तोद्गातेवोदानोऽप्युत्कृष्टं ब्रह्म सुषुम्नानाड्या प्रापयित्वेष्टफलं भोजयति । तस्मादुदान उद्गातेति भावः । एतदेव स्पष्टयति–**स य एवमिति** ॥

एवमुद्गातृवत् । अत्र सुप्ते स्वप्नस्थानं गतेऽस्मिन्नेव जीवे । स्वप्नावस्थायामिति फलितकथनम् ॥

## (मङ्गालीयम्)

**प्राणाः प्राणादीति** ॥ प्राणा एवाग्नयः इति विवक्षितविग्रहगतबहुवचनार्थः– **प्राणादीति** । ननु प्राणापानव्यानानामेवोत्तरत्राग्नित्वस्य समानोदानयोरध्वर्यूद्गातृभावस्य वक्ष्यमाणत्वात् कथं प्राणादीनां पञ्चानामग्नित्वमुक्तमित्यत आह– **अग्नय इत्युपलक्षणमिति** ॥ उपलक्षणे बीजमाह– **ऋत्विग्भावस्यापीति** ॥ प्राणादीनां पञ्चानां मध्य इति शेषः । **अग्न्यादित्वमित्युच्यत इति** ॥ अग्नित्वम् ऋत्विक्त्वं च कथमित्यत उच्यत इत्यर्थः । **पश्चिमत्वेति** ॥ पश्चिमद्वारभूते गुदे विद्यमानत्वेनापानस्य पश्चिमत्वमित्यर्थः । **होमाङ्गत्वसाम्यादिति** ॥ 'व्यानाय स्वाहा' इति होमाङ्गत्वसाम्यादित्यर्थः ॥ **प्राणोऽप्यपानादिति** ॥ यथा गार्हपत्याग्नेः पृथक्कृत्वाऽऽहवनीयकुण्डे नीतोऽग्निराहवनीय इत्युच्यते तथाऽपानप्रदेशाद् अपानरूपमुख्यप्राणात् पृथक्कृतः श्वासरूपः मुखे नीत आहवनीय इति भावः ॥ **पराधीनेति** ॥ यथा प्रसिद्धयजमानस्य स्वर्गादिफलम् ऋत्विगधीनं तथा सुषुप्तौ जीवस्य सुखरूपफलप्राप्तेरुदानाधीनत्वादिति भावः । ननु 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' इत्युक्तप्राणाग्नित्वाद्युपपादनार्थं 'गार्हपत्यो हवै' इत्यादेः 'ब्रह्म गमयति' इत्यन्तस्य वाक्यस्य प्रवृत्ततया 'मनो ह वाव यजमानः' इत्यनेन मनःशब्दितजीवस्य यजमानत्ववचनं प्रकृतासङ्गतमेवेत्यत आह– **इत्युत्तरार्थं वचनमिति** ॥ उदानस्योद्गातृत्वोपपादनार्थं प्रवृत्ते 'स एष एनं यजमानमहरहर्ब्रह्म गमयति' इत्यस्मिन् वाक्ये एनं यजमानमिति परामर्शार्थम् उपोद्घातसङ्गत्या जीवस्य यजमानत्वमुक्तमिति भावः । उदानस्य कथमिष्टफलत्वमित्यतो लक्षणयेष्टफलशब्दं व्याचष्टे– **यज्ञफलप्रतिपादक इति** ॥ इष्टफलप्रतिपादकत्वकथनस्य कथमत्रोपयोग इत्यत आह– **उद्गातेति यावदिति** ॥ उदानस्य

फलप्रतिपादकत्वे कथमुद्गातृत्वमित्यत आह– **फलप्रतिपादकत्वसाम्यादिति ॥** उद्गातुर्यज्ञफलप्रतिपादकत्वेनोदानस्य तत्साम्यादिति भावः । ननूदानस्याहरहर्ब्रह्मगमकत्वे श्रवणादिसाधनवैयर्थ्यमित्यतो विवक्षितं ब्रह्मगमनमाह– **सुषुम्नागतमिति ॥** प्राज्ञमित्यर्थः । ननु कानि जाग्रतीति प्रश्नस्य प्राणा जाग्रतीति जागरणवचनेनैव परिहर्तव्यत्वादपृष्टप्राणाग्नित्वक्रत्वित्त्वकथनमसङ्गतमेवेत्यत आह– **य एवं वेदेति ॥ ब्रह्मप्राप्तिफलमिति ॥** ब्रह्मप्राप्तिलक्षणं मोक्षफलमित्यर्थः ॥ ३ ॥

## (उपनिषत्)

*(स्वप्नसुषुप्त्यनुभवनिरूपणम्)*

**अत्रैष देवः स्वप्ने महिमानमनुभवति । यद् दृष्टन्दृष्टमनुपश्यति श्रुतंश्रुतमेवार्थमनुशृणोति देशदिगन्तरे च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति । स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान् न पश्यति । अथ यदेतदस्मिन् शरीरे सुखं भवति ॥ ४ ॥**

## (भाष्यम्)

*(शरीरशब्दार्थविवरणम्)*

भगवतः शरीरवत् सादृश्ययुक्ते जीवे सुखं भवति । 'कस्यैतत् सुखं भवति' इति पृष्टत्वात् । नह्यचेतनस्य शरीरस्य सुखं भवति । 'यस्याऽत्मा शरीरम्' इति च श्रुतिः ।

'सादृश्याद् देहवज्जीवो विष्णोस्तस्य सुखं भवेत् ।
सुप्तौ तस्य सुखार्थं हि भगवान् सुप्तिमानयेत्' इति च ॥ ॐ ॥

—०—

## (टीका)

तृतीयस्य परिहार उच्यते– **अत्रेत्यादि** ॥ अत्रैतस्यामवस्थायां, मनोव्यतिरिक्तेन्द्रियोपरमे इति यावत्, एष देवो मनोनामा तेनानुगृहीतो जीव इति यावत्, स्वप्ने महिमानमात्मनो महत्त्वमन्यच्चानुभवति । तत्र च यमर्थं पश्यति तं प्राग् दृष्टमेवानुपश्यति । यः प्राक् श्रुतः तं श्रुतमेवार्थं शब्दं स्वप्नेऽनुशृणोति । एवमन्यदप्यनुभूतमेवानुभवति । नाननुभूतम् । किमस्मिन्नेव देशेऽनुभूतमेवानुभवति? न । किन्तु देशान्तरे दिगन्तरे च यत् प्रत्यनुभूतं पुनः पुनरनुभूतं तदेव स्वप्ने पुनः पुनः प्रत्यनुभवति । भ्रान्त्या तदेवेदमिति प्रत्यभिजानाति । नाप्यस्मिन्नेव जन्मन्यनुभूतमनुभवतीति नियमः । किन्त्वस्मिन् जन्मनि दृष्टमदृष्टं च, जन्मान्तरे दृष्टम् । एवमुत्तरत्रापि । अनुभूतम् । अननुभूतमिन्द्रियान्तरेण । सच्च तदानीमसच्च निवृत्तं चेत्येवं सर्वं पश्यति । स्वयं च सर्वोऽनेकप्रकारः संस्तत्पश्यति ॥

चतुर्थं परिहर्तुमुच्यते– **स यदेत्यादि** ॥ एवं स्वप्ने वर्तमानः स जीवो यदा तेजसा भगवदीयेनाभिभूतः आवृतो भवति, भगवन्तं प्रविशतीति यावत्, अत्रैतस्यां सुषुप्तिसञ्ज्ञायामवस्थायामेष देवो मनः स्वप्नान्न पश्यति । मनसोऽप्युपरतत्वान्न जीवः स्वप्नान् पश्यतीति यावत् । यस्मादेवं परमेश्वरतेजसाऽभिभूतो भवत्यथ तस्मात् तत्सन्निधानसामर्थ्योद्भूतं यत् सुखं तदस्मिन् शरीरे भवतीति न काचिदनुपपत्तिरिति ॥

अत्र शरीरशब्देन प्रसिद्धं शरीरमेवोच्यत इत्यन्यथाप्रतीतिनिरासायाऽह **भगवत इति** ॥ प्रातीतिक एवार्थः किं न स्यादित्यत आह– **कस्येति** ॥ कस्यैतत्सुखं भवतीति प्रश्नस्य हीदमुत्तरम् । न तु कुत्र जीवस्य सुखं भवतीति प्रश्नोऽस्ति । येन शरीरे प्रसिद्धे सुखं भवतीति परिहारः सङ्गतः स्यात् । अतः शरीरशब्देन परेणापि जीवो लक्षणीयः । ततो वरं शरीरशब्दस्तद्वाचकः इत्यङ्गीकरणमिति भावः । ननु प्रसिद्धशरीरस्यैव सुखं भवतु । ततो लक्षणाश्रयणमन्तरेणैव प्रश्नानुगुण्यं परिहारस्य भविष्यतीत्यत आह– **न हीति** ॥

ननु भवताऽपि शरीरशब्दस्य जीवे गौणी वृत्तिराश्रीयते । यथा भगवच्छरीरं भगवत्सदृशमेवं जीवोऽपि भगवच्छरीरमुच्यत इत्युक्तत्वात् । मयाऽपि शरीर-शब्देन शरीरी लक्ष्यत इत्युच्यते । अतः को विशेष इत्यत आह–**यस्येति** ॥ न जीवे शरीरशब्दो गौणोऽङ्गीक्रियते । येनाविशेषः स्यात् । किं नाम ? अबाधितश्रौतप्रयोगबलात् तद्वाचक एवाभ्युपगम्यते । तथाऽपि जीवादिप्रसिद्ध-शब्दं परित्यज्याप्रसिद्धशरीरशब्दोपादाने किं तात्पर्यमिति शङ्कानिरासाय भगवतः शरीरवत् सादृश्ययुक्तो जीव इति तात्पर्यमनेनोक्तम् । तथाहि– सुप्तौ सर्वेन्द्रियाणामुपरतत्वात् किंनिमित्तं सुखं, केन जीवोऽनुभवतीत्य-भिप्रायेण पृष्टे परमेश्वरसन्निधानसामर्थ्योद्भूतं सुखमात्मस्वरूपज्ञानेनासाव-नुभवतीति परिहारोऽभिप्रेतः । तत्राऽत्मनो ज्ञानस्वरूपत्वज्ञापनाय प्रसिद्धपद-परित्यागेन एतत्पदप्रयोग इति भावः । स्मृतिसमाख्यानाच्चायमेवार्थ इत्याह– **सादृश्यादिति** ॥ सादृश्यं च ज्ञानस्वरूपत्वम् ॥ ४ ॥

## (प्रकाशिका)

'एवमन्यदप्यनुभूतमेव' इत्यत्रान्यद् दृष्टश्रुतयोरन्यत् । एवं स्वप्नो यमर्थं जिघ्रति रसयते स्पृशयति च तमपि प्रागाघ्रातं प्राग् रसितं प्राक् स्पृष्टं तत्तदि-न्द्रियैरनुभवति । न त्वनाघ्रातमनास्वादितमस्पृष्टं चेति भावः । विप्रकृष्टदेशान्तरे दिगन्तरे च सकृदनुभूतस्य दृढसंस्काराभावेन स्वप्ने दर्शनायोगात् प्रत्यनुभूतं प्रति प्रति वारं वारमनुभूतमित्युक्तम् । जन्मान्तरे दृष्टमित्यत्र जन्मान्तरे दृष्टं स्वशिरश्छेदादिकमित्यर्थः । अत्यन्तासतः स्वप्नेऽपि दर्शनायोगात् । सदि-दानीं विद्यमानमसन् नष्टं चेत्यर्थः । सर्वः शूद्रचण्डालव्याघ्रादिनानारूपवान् ॥ ४ ॥

## (मङ्गालीयम्)

**तृतीयस्येति** ॥ 'कतर एष देवः स्वप्नान् पश्यति' इत्यस्येत्यर्थः । ननु देवानामस्वप्नत्वाद् 'एष देवः स्वप्ने महिमानमनुभवति' इत्ययुक्तमित्यत आह–

**तेनानुगृहीतो जीव इति यावदिति** ॥ ननु स्वस्य दुःखित्वादेरप्यनुभवात् कथं महिमानमित्युक्तमित्यतोऽपेक्षितमध्याहरति– **अन्यच्चेति** ॥ दुःखादिकं चेत्यर्थः । 'दृष्टन्दृष्टमनुपश्यति' इत्यत्र वीप्सायां द्विर्वचनमिति भ्रान्तिं वारयति– **यमर्थं पश्यतीत्यादिना** ॥ अनेन दृष्टन्दृष्टमिति द्विरुक्तेर्नित्य-वीप्सयोरित्यत्र नित्यशब्दस्यावधारणार्थत्वमाश्रित्य दृष्टमेवार्थमित्यर्थपरत्व-मुक्तं भवति । उत्तरत्र श्रुतमेवार्थमित्यादावेवकारस्तु अस्यैवार्थस्य स्पष्टी-करणार्थः । दृष्टश्रुतयोर्ग्रहणं स्पृष्टादेरुपलक्षणार्थमित्यभिप्रेत्याऽह–. **एवमन्य-दपीति** ॥ अदृष्टमित्यस्य सर्वथाऽदृष्टमित्यर्थप्रतीतेराह– **जन्मान्तर इति** ॥ तत्समभिव्याहृतदृष्टशब्दस्य प्रतियोगिसमर्पकस्यास्मिन् जन्मनि दृष्टमित्य-र्थकत्वेनास्य तद्भिन्नजन्मान्तरे दृष्टमित्यर्थकत्वमिति भावः ॥ **एवमुत्तरत्रा-पीति** ॥ अस्मिन् जन्मनि श्रुतं श्रुतं, जन्मान्तरेऽश्रुतम् अश्रुतं, घ्राणादिनाऽस्मिन् जन्मनि अघ्रातादिकम् अनुभूतं, जन्मान्तरे आघ्रातादिकमननुभूतमिति द्रष्टव्यमित्यर्थः । ननु अनुभूतं चाननुभूतं चेत्यस्य दृष्टं चादृष्टं च श्रुतं चाश्रुतं चेत्यनेन पौनरुक्त्यमाशङ्क्य गोबलीवर्दन्यायेन दृष्टादृष्टश्रुताश्रुतेत्येवंरूपविशेष-वाचिपदसमभिव्याहृतानुभूताननुभूतवाचिपदयोः अस्मिन् जन्मनि स्पृष्टादिकम् अनुभूतं जन्मान्तरे स्पृष्टादिकमननुभूतमित्यर्थकत्वान्न दोष इत्याह– **अनुभूत-मननुभूतमिन्द्रियान्तरेणेति** ॥ इन्द्रियान्तरेणेत्यस्य दृष्टिश्रुत्यतिरिक्तत्व-गादीन्द्रियेणेत्यर्थः । तदानीं स्वप्नकाले । सत् क्वचिद् विद्यमानम् । असन्निवृत्तं स्वप्नात् पूर्वं ध्वस्तम् । यद्यप्येतयोः सदसतोः स्वप्नावस्थायां दर्शनाभावः वासनामयत्वाभावात् । तथाऽप्यत्र सदसच्छब्दाभ्यां तत्सदृशयोर्ग्रहणमिति भावः ॥ **चतुर्थमिति** ॥ कस्यैतत्सुखं भवतीत्येतं[1] प्रश्नमित्यर्थः ॥ **भग-वन्तमिति** ॥ प्राज्ञमित्यर्थः ॥ ४ ॥

ननु शरीरशब्दस्याबाधितश्रौतप्रयोगबलाद् जीववाचित्वाङ्गीकारे भगवतः शरीरवदिति पूर्वभाष्ये जीवे शरीरशब्दस्य गौणवृत्तिप्रदर्शनमसङ्गतमित्यत

१. 'इत्येवं प्रश्नं' (पा.)

आह– **तथाऽपीति** ॥ शरीरशब्दस्य जीवे गौणवृत्त्यनङ्गीकारेऽपीत्यर्थः । तात्पर्यमेवोक्तमित्यत्र न गौणी वृत्तिः प्रदर्शितेत्यवधारणार्थः । किं तत् तात्पर्यमित्यतः तदुपपादयति– **तथा हीति** ॥ **परमेश्वरसन्निधानसामर्थ्योद्भूतमिति** ॥ अत्र स्वरूपसुखमनुभवतीति वक्तव्ये परमेश्वरेत्यादिवचनं तमोयोग्यानां स्वरूपसुखाभावेऽपि सुषुप्तिकाले सुखानुभवसमर्थनार्थम् । परमेश्वरपदग्रहणेन सुषुप्तिकाले मनस उपरमेऽपि अचिन्त्यैश्वर्यवशात् स्वसन्निधानेन निमित्तेन वृत्तिरूपं सुखं जनयित्वा सुखानुभवकरणस्य[1] सूचितत्वात् । मुक्तियोग्यनित्यसंसारिणां तु स्वरूपसुखस्य सत्त्वेन तदनुभवसम्भवः । सुषुप्तिकाले बाह्येन्द्रियाणामुपरमेऽपि स्वरूपेन्द्रियेणैव सौषुप्तिकसुखानुभव इति ज्ञातव्यम् ॥ **आत्मस्वरूपज्ञानेनेति** ॥ साक्षिरूपेणेन्द्रियेणेत्यर्थः ॥ **अन्तिमप्रश्नेति** ॥ पराधीना एते सर्वे कस्मिन् प्रतिष्ठिता भवन्ति ? परमेश्वरश्चेदाश्रयः तत्कुतः ? इत्यन्तिमप्रश्नेत्यर्थः ॥ **सदृष्टान्तो यथेति** ॥ तच्छब्दस्य प्रसिद्धार्थकस्य दृष्टान्तपरत्वमाश्रित्येदं वचनं ज्ञेयम् । परमेश्वरस्य सर्वाश्रयत्वं वृक्षस्य पक्ष्याश्रयत्वं येन प्रकारेण तेन प्रकारेणेति भावः ॥ **वासो यत्रेति** ॥ अत्र वाससो निवासस्य वृक्षो वासोवृक्ष इति षष्ठीतत्पुरुषः तस्य तात्पर्यार्थः– **वासो यत्राऽत्मनां तं वृक्षमिति** ॥ अत्राऽत्मशब्दः स्वात्मार्थः वासो निवासः । 'वस निवासे' इत्यतः वसेर्णिच्चेति भावेऽसुनप्रत्यये णित्वाद् वृद्धौ वासस् इति सान्तःशब्द इति केचिद् व्याचक्षते । वास इत्यस्याकारान्ततां सान्ततां वाऽभ्युपेत्य भिन्नपदत्वमाश्रित्य यत्राऽत्मनामित्यस्याध्याहारं चाङ्गीकृत्य वासो यत्राऽत्मनामिति व्याख्यानमित्यपि भाति । सम्प्रतिष्ठन्त इत्येतत् प्रपूर्वकतिष्ठतेर्गमनार्थत्वमाश्रित्य व्याचष्टे– **सम्प्रतिष्ठन्ते अभिगच्छन्तीति** ॥ 'प्रस्थानं गमनं गमः' इत्यमरोक्तेः रूढ्याश्रयेणार्थमुक्त्वा योगाश्रयेणाप्यर्थमाह– **तमाश्रित्य तिष्ठन्ति चेति** ॥ सम्प्रशब्दयोरुपसर्गत्वात् ससाधनक्रियाप्रतिपादकत्वेन तमाश्रित्येति व्याख्यातम् । पृथिव्यादिशब्दानां सङ्कल-

---

१. '**कारणस्य**' (पा.)

य्योक्तेः । केषाञ्चिच्छब्दानाम् अप्रतीतार्थत्वाद् विविच्यार्थमाह– **अत्र पृथिवीत्यादिनेति** ॥ श्रुतौ आपोमात्रेति समासपदे षष्ठ्याः 'सुपां सुपो भवन्ति' इति वार्तिकेन च्छान्दसो जसादेशः ॥ **अन्तःकरणपञ्चकमिति** ॥ अन्तःकरणप्रभेदपञ्चकमित्यर्थः । तत्र सङ्कल्पविकल्पात्मकं मनः । करोमि न करोमीति सङ्कल्पविकल्पौ । निश्चयात्मिका बुद्धिः । अस्वरूपे स्वरूपत्वबुद्धिरहङ्कारः । स्वातन्त्र्यबुद्धिरिति यावत् । अस्थिरस्मरणं चित्तम् । चित्तस्य विषयेषु व्याप्तिश्चेतना । बहुविषयकत्वमिति यावत् । ननु स्थलान्तरे मनोबुद्धिरहङ्कारश्चित्तं चेतनेति कथ्यते । अत्र तु पञ्चमं तेज इति; अतस्तद्विरोध इत्यत आह– **तेजःशब्देनेति** ॥ 'एवं हवै तत्सर्वं परे आत्मनि सम्प्रतिष्ठते' इति परमात्मनः सर्वनियामकत्वमुक्तम् । तदयुक्तम् । पृथिवी चेत्यादौ प्रकृत्यादेरनुक्तत्वादित्यत आह–**सर्वस्यापीति** ॥ प्रकृत्यादेः सर्वस्यापीत्यर्थः । सङ्ग्रहः । कर्तव्य इति शेषः । उपलक्षणया प्रकृत्यादेर्ग्रहणं कार्यमिति यावत् । एवममुख्यनियम्यमुक्त्वा मुख्यनियम्यमाह–**प्राण इति** ॥ तस्य कथं पृथिव्याद्यपेक्षया मुख्यनियम्यत्वमित्यत आह– **मुख्य इति** ॥ मुख्यवायुत्वादित्यर्थः । तदुपपादयति–**धारक इति** ॥ सर्वस्य धारकत्वात् । अयं भावः । पृथिव्यादेः साक्षान्मुख्यप्राणनियम्यत्वं मुख्यप्राणस्य साक्षाद् भगवन्नियम्यत्वमिति । तदेव दर्शयति–**तेन विधारयितव्यं पृथिव्यादिकं सर्वमिति** ॥४॥

## (उपनिषत्)

**स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते । एवं हैतत् सर्वं पर आत्मनि सम्प्रतिष्ठते । पृथिवी च पृथिवीमात्रा चापश्चाऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽकाशश्चाऽकाशमात्रा च । चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसनं च रसयितव्यं च त्वक् च स्पर्शयितव्यं.**

**च वाक् च वक्तव्यं च हस्तौ च दातव्यं च पादौ च गन्तव्यं च पायुश्च विसर्जयितव्यं च उपस्थश्चाऽनन्दयितव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ५ ॥**

## (टीका)

अन्तिमप्रश्नपरिहारः सदृष्टान्त उच्यते–**स यथेत्यादि** ॥ सोम्य सोमार्ह । सः दृष्टान्तः । यथा वयांसि पक्षिणो वासो यत्राऽत्मनां तं वृक्षं सम्प्रतिष्ठन्ते अभिगच्छन्ति तमाश्रित्य तिष्ठन्ति च एवं खल्वेतत् सर्वं पृथिव्यादितत्त्वजातं परे आत्मनि विष्णौ सम्प्रतिष्ठते । तदाधारमेव वर्तत इति । अत्र पृथिवीत्यादिना पञ्चमहाभूतान्युच्यन्ते । पृथिवीमात्रा चेत्यादिना गन्धादिपञ्चतन्मात्राः, चक्षुश्चेत्यादिना दशेन्द्रियाणि, द्रष्टव्यं चेत्यादिना रूपादितद्विषयाः, मन इत्यादिनाऽन्तःकरणपञ्चकं, मन्तव्यं चेत्यादिना तद्विषयाः, तेजःशब्देन चेतना गृह्यते इति सर्वस्यापि सङ्ग्रहः । प्राणो मुख्यो धारकस्तेन विधारयितव्यं पृथिव्यादिकं सर्वम् ॥ ५ ॥

## (मङ्गालीयम्)

**कथं सर्वस्य तदधीनतेतीति** ॥ कथं मुख्यप्राणद्वारा सर्वस्येश्वरनियम्यत्वं ज्ञातव्यमिति शङ्कायामित्यर्थः । ननु 'द्रष्टा स्प्रष्टा' इत्यादिना द्रष्टृत्वाद्युक्तिप्रतीतेश्चक्षुरादीनामीश्वराधीनत्वोक्तिः कथमित्यतो द्रष्टेत्यादावन्तर्णीतण्यर्थत्वमाश्रित्य चक्षुरादीनामित्यध्याहृत्य ईश्वराधीनत्वं घटयति– **चक्षुरादीनामिति** ॥ तथाच द्रष्टेत्यादौ चक्षुरादीनामिन्द्रियाणां तदभिमानिदेवतानां च दर्शयितेत्यादि प्रतिपदं बोध्यम् । 'दर्शनादिशक्तिप्रदः' इति तु तात्पर्योक्तिः । ननु 'विज्ञानात्मा' इत्यत्रापि अन्तर्णीतण्यर्थत्वे द्रष्टेत्यादिना पुनरुक्तिः स्यादित्यत आह– **स्वयं चेति** ॥ 'विज्ञानात्मा पुरुषः' इत्यस्योपयोगं

दर्शयति– **अतश्चेति** ॥ सर्वज्ञत्वात् पूर्णत्वाच्चेत्यर्थः । **तदस्येति** ॥ स चासावयं च तदयं तस्य तदस्य । तच्छब्देन पृथिव्याद्याधारत्वपरामर्शः । तथाच तदस्य पूर्वोक्तपृथिव्याद्याधारस्यास्य विज्ञानात्मनो वेदनस्य ज्ञानस्येत्यर्थः । **अच्छायमविद्यारहितमिति** ॥ 'छाया त्वविद्या सम्प्रोक्ता' इति काठकभाष्योक्तेरिति भावः ॥ **वेदयते विजानातीति** ॥ चुरादित्वात् स्वार्थे णिजिति भावः ॥ **सर्वप्रधानस्येति** ॥ सर्वो विष्णुस्तं जानातीति विग्रहः । विष्णोः सर्वत्वं नाम 'स्वातन्त्र्ये च विशिष्टत्वे' इत्युक्तेः सर्वप्राधान्यमित्यर्थः । **सर्वकारणस्य चेति** ॥ सर्वशब्दस्य तत्कारणे ब्रह्मणि लक्षणेति भावः । सर्वज्ञशब्दस्यैव गौणीवृत्तिमाश्रित्य पक्षान्तरमाह– **तत्सदृशत्वादिति** ॥ ब्रह्मसदृशत्वाज्जगत इत्यर्थः । पक्षान्तरमाह– **सर्वस्यापि कर्मादेरिति** ॥

**(उपनिषत्)**

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। सयो हैतमच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्व भवति । तदेष शोकः–**

**विज्ञानात्मा सह देवैश्च सर्वैः**
**प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।**
**तदेतदक्षरं वेदयते यस्तु सोम्य**
**स सर्वज्ञः सर्वमेवाऽविवेशेति ॥ ६ ॥**

**इति चतुर्थप्रश्नप्रतिवचनम्**

—०—

**(टीका)**

कथं सर्वस्य तदधीनतेत्युच्यते– **एष हीति** ॥ चक्षुरादीनामेतेषामेष हि दर्शनादिशक्तिप्रदः । स्वयं च विज्ञानात्मा विज्ञानस्वरूपः सर्वज्ञ इति यावत् ।

पुरुषः पूर्णत्वात् । अतश्चोपपन्नं तस्य सर्वाश्रयत्वमिति । तदस्य विज्ञानात्मनो वेदनस्य फलमुच्यते– **स य इति ॥** स विज्ञानात्मा पुरुषो यो यादृशलक्षणमेतमेवंविधमच्छायमविद्यारहितमत एवाशरीरं तस्मादेवालोहितं लोहितादिरूपरहितं शुभ्रं शुद्धं, प्राकृतरूपाद्यभावेऽपि अप्राकृतशुभ्रादिरूपयुक्तं वा, अत एवाक्षरं न क्षरतीति हे सोम्य यो वेदयते विजानाति स सर्वज्ञः सर्वप्रधानस्य सर्वकारणस्य च परिज्ञानात् सर्वज्ञ इव । तत्सदृशत्वात् सर्वस्य सर्वज्ञ एव वा । सर्वस्यापि कर्मादिर्ज्ञानस्य फलं परमात्मज्ञानं प्राप्तमनेनेति वा । ज्ञानी स्तूयते । सर्वं भवति सर्वं परिपूर्णं परं ब्रह्म तद्भवति । तद्भवति । तद्भूत इव तत्प्रविशतीति यावत् । तदेषः श्लोकः । विज्ञानात्मा विज्ञानस्वरूपो जीवः शरीरे सुखं भवतीति ह्युक्तः । प्राणाश्चक्षुरादयः तद्विषयाश्च रूपादयो भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैर्देवैरभिमानिभिः सूर्याद्यैः सह यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ति सम्प्रतिष्ठन्ते तदेतदक्षरं वेदयते विजानाति यः पुरुषः, सोम्येति कस्यचित्सम्बुद्धिः, सः उक्तप्रकारेण सर्वज्ञः । सर्वं परं ब्रह्माऽविवेशैवाऽविष्ट एव ध्रुवमाविशत्येवेति ॥ ६ ॥

**॥ इति चतुर्थप्रश्नप्रतिवचनम् ॥**

## (मङ्गालीयम्)

तथाच सर्वं कर्मादिकं जानातीति विग्रहः । ज्ञानिनोऽशेषकर्मज्ञानस्य बाधितत्वात् सर्वशब्देनाशेषकर्मसाध्यज्ञानविषयीभूतं ब्रह्म गृह्यते । यद्यप्येकैकस्य ज्ञानिनः सर्वकर्मकरणं नास्ति । तथाऽपि बहूनां तत्तत्कर्मजन्यज्ञानसम्भवात् सर्वकर्मजन्यज्ञानविषयत्वं ब्रह्मणः सम्भवति । ततश्च सर्वज्ञत्वं नाम बह्वधिकारिकृतसर्वकर्मजन्यज्ञानविषयीभूतब्रह्मज्ञत्वमेवेति भावः ॥ **प्राप्तमनेनेति ॥** ज्ञाधातोः 'आतोऽनुपसर्गे कः' (पा.सू.३.२.३) इति कर्तरि कप्रत्यय इति भावः । ज्ञानिनो ब्रह्मैक्यस्य बाधितत्वाद् उत्तरत्र प्रमाणवाक्ये 'सर्वमेवाऽविवेश' इति व्याख्यातत्वाच्चेत्यत आह– **तद्भूत इवेति ॥ विज्ञानस्वरूपो**

**जीव इति ॥** अत्र विशब्देन नित्योत्तमत्वरूपविशिष्टत्वं गृह्यते। आत्मशब्देन स्वरूपं देहो जीवश्च गृह्यते । ज्ञानशब्दश्च आनन्दाद्युपलक्षकः । तथाच वि सर्वदा विद्यमानं दुःखाद्यसम्भिन्नं यद् ज्ञानानन्दादिकं स एवाऽऽत्मा देहो यस्य स जीवो विज्ञानात्मेत्यर्थः । एतस्य कुत्रोपयोग इत्यत आह– **शरीरे सुखं भवतीति ह्युक्तमिति ॥** सौर्यायणेः गार्ग्यस्य प्रश्नोत्तरगतत्वात् सोम्येति तस्यैवाभिमुखीकरणमिति न भ्रमितव्यमित्याह– **सोम्येति कस्यचित् सम्बुद्धिरिति ॥** अस्य श्लोकगतत्वादिति भावः। आविवेशेत्यस्य लिट्त्वाद् भूतार्थत्वमात्रत्वभ्रान्तिं वारयति– **ध्रुवमाविशत्येवेति ॥** 'एष्यत्तु निश्चितं यत् तदतीतत्वेन भण्यते' इति वचनादिति भावः ॥ ६ ॥

**॥ इति चतुर्थप्रश्नप्रतिवचनम् ॥ ४ ॥**

—०—

## अथ पञ्चमः प्रश्नः

*(प्रणवोपास्तितत्फलविषयकः पञ्चमः प्रश्नः)*

**अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो हैतद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति। तस्मै स होवाच। एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद् विद्वानेतेनैवायनेनैकतरमन्वेति ॥ १ ॥**

### (टीका)

अथ हैनं शैब्यः। एवमुक्तलक्षणं परं ब्रह्म येन मन्त्रेणोपासितव्यम् , उपासितं च यत्फलं प्रयच्छति तदिदानीं वक्तुमयमुत्तरो ग्रन्थः। भगवन्नेतदेतेषु मनुष्येषु स यो यः कश्चित् प्रायणान्तं प्रयाणपर्यन्तं, यावच्छरीरादुत्क्रमणं तावदिति यावत्, ओङ्कारमोमित्याक्रियमाणं परमात्मानमभिध्यायीत। सर्वदा चिन्तयेदोमिति मन्त्रेणेत्यभिप्रायः। स पुरुषस्तेन ध्यानेन कतमं लोकं जयति प्राप्नोतीत्येवं पृष्टवते तस्मै स होवाच। यदोङ्कारः ओमित्याक्रियमाणं वस्तु तदेतत्परं चापरं च ब्रह्म। यस्मात्प्रणवो मुख्यतः परमात्मनः प्रतिपादकः, यस्माच्च तत्प्रतिमात्वेनामुख्यतो विरिञ्चप्रतिपादकश्च तस्माद् विद्वान् प्रणवेनोपासकः एतेनैवोपासनाख्येनायनेन गमनसाधनेन परापरब्रह्मणोरेकतरमन्वेति प्राप्नोति ॥

### (प्रकाशिका)

'परं चापरं च' इत्यत्र परं वैकुण्ठादिलोकस्थितमन्यानधिष्ठितं ब्रह्म, अपरं चतुर्मुखाख्यप्रतिमान्तर्गतं ब्रह्म। तदिदमुक्तं टीकाकृता– **अमुख्यतो**

**विरिञ्चप्रतिपादक इति** । गङ्गावाचकगङ्गापदस्य तत्सम्बन्धिनि तीरे अमुख्यप्रयोगवद् ब्रह्मान्तर्गतविष्णुवाचकप्रणवेन तत्सन्निधानात् लक्षणया विरिञ्चेऽपि प्रयोग इति भावः । 'अहमेवाखिलगुणो वाचकः प्रणवो मम' इति स्मृतेः, 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति गीतोक्तेश्च नारायणादिनामवत् प्रणवस्यापि विष्णुसाधारणनामत्वादिति भावः । 'प्रणवो-पासनाख्यायनेन' इत्यत्र 'अय पय गतौ' इति धातोः ब्रह्मगमनहेतुत्वात् प्रणवोपासनमेवायनमित्युच्यते ॥

## (मङ्गालीयम्)

**अथ हैनं शैब्यः** ॥ **एवमुक्तलक्षणमिति** ॥ पृथिव्यादिसर्वाधारत्व-लक्षणमित्यर्थः । ओङ्कारं प्रणवमित्यन्यथाप्रतीतिनिरासायाऽह– **ओमित्याक्रियमाणमिति** ॥ विष्ण्वादिशब्दान् विहायोङ्कारमित्युक्तेरभिप्रायमाह– **ओमिति मन्त्रेणेति** ॥ 'एकमात्रमभिध्यायीत' इत्यत्रावयवार्थाप्रतीतेर्विशेष्या-प्रतीतेश्च विग्रहप्रदर्शनपूर्वकं तद् वक्तुं तदुपयुक्तमाह– **अकारेत्यादिना** ॥ यद्यपि 'अवतेष्टिलोपश्च' इति उणादिसूत्रेण अवधातोर्मन्प्रत्ययं कृत्वा प्रत्यय-टिलोपं विधाय ततो 'ज्वरत्वर'(पा.सू.६.४.२०९) इति सूत्रेण धातोरुपधा-याश्चोठि सवर्णदीर्घे 'सार्वधातुकार्धधातुकयोः' (पा.सू.७.३.८४) इति गुणे ओमिति रूपनिष्पत्तिः 'ओतत्ववाची ह्योङ्कारः' इत्यनुव्याख्याने आचार्यैर-ङ्गीकृता । तथाऽपि व्याख्यानान्तरमेतदित्यवधेयम् । अस्मिन् पक्षे तु 'अत सातत्यगमने' इति धातोरौणादिके डप्रत्यये अ इति रूपम् । वेञः क्विपि 'वचिस्वपि' (पा.सू.५.१.१५) इति यजादित्वात् सम्प्रसारणे उ इति रूपम् । मन्यतेरौणादिके ड्विप्रत्यये म् इति रूपम् । पूर्वयोरकारोकारयोरा-द्गुणे ओमिति रूपनिष्पत्तिः । इममेव पक्षमभिप्रेत्याकारादीनामोङ्कारांशत्वोक्तिर-वधेया । श्रुतौ अंशस्यैव मात्रेति वचनं ज्ञेयम् । **तत्फलरूपमिति** ॥ एक-मात्रार्थज्ञानपूर्वकप्रणवोपासनफलरूपमित्यर्थः । महिमानं महत्त्वम् । अनुभवति

प्राप्नोति । 'द्विमात्रेण मनसि सम्पद्यते' इत्यस्याक्षरार्थमुक्त्वाऽभिप्रायमाह– **तिसृष्वित्यादिना** ॥ 'पुनरावर्तते' इत्यस्य सोमलोकं प्रति पुनरागच्छतीति भ्रान्तिनिरासायाऽह– **ततश्च्यवत इति** ॥ **पुनरभिवृद्धज्ञानो भवतीति** ॥ पूर्वमात्मान्तरात्मनोरपरोक्षज्ञानस्य जातत्वात् पुनरित्युक्तम् । ब्रह्मोपदेशस्य चरमत्वेन तदुपदिष्टप्रकारध्यानेनापरोक्षीकृतस्य साक्षान्मोक्षसाधनत्वात् । तस्य च वासुदेवत्वादिति भावेनोक्तम्– **वासुदेवमिति** ॥ कथमुक्तशङ्कापरिहार इत्यत आह– **पुरुषमीक्षित्वा चेति** ॥ श्रुतौ ततस्तं प्राप्नोतीत्यध्याहारेणेति भावः । तत्र युक्तिमाह– **समाख्यावशादिति** ॥ भाष्योदाहृतसमाख्या-वशादित्यर्थः । 'तत्र मुच्यते नात्र संशयः' इत्युक्तेरिति भावः । युक्त्यन्तरमाह– **यत्तच्छान्तमिति** ॥ **एतेनेति** ॥ 'प्रणवेन हरिं ध्यायन्' इत्यनेनेत्यर्थः । पर-व्याख्यानमनूद्य दूषयति– **अत्रेति** ॥ अत्राऽदिशब्देन त्रिमात्रेणैतेनैवाक्षरेणे-त्येतद् ग्राह्यम् । **प्रतीकतयेति** ॥ प्रतिमात्वेनेत्यर्थः ॥ **परास्तमिति** ॥ तृतीयया ओङ्कारस्य करणत्वोक्तेर्हरिमिति द्वितीयया च हरेरुपासनाकर्मत्वोक्तेरिति भावः । शङ्कते– **ओङ्कारमिति** ॥ **तत्रतत्रेति** ॥ ओङ्कारमिति प्रश्नवाक्ये एकमात्रमिति प्रतिवचने चेत्यर्थः । **न्यायादिति** ॥

'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥' (महाभा.उद्यो.अ-३७.१७)

इति भारतोक्तन्यायादित्यर्थः । **बहुशः श्रवणादिति** ॥ अतो वैलक्षण्यमिति भावः । ननु भवत्पक्षे एकमात्रमित्यादेः तृतीयान्तत्वेन विपरिणामः स्यात् । अस्माकं तु द्वितीयान्तत्वेनेति पक्षद्वयसाम्यं स्यादित्यत आह– **समाख्या त्वस्माकमिति** ॥ अङ्गीकृत्य चेदमुदितम् । वस्तुतः तृतीयाया बहुशः श्रवणेन साम्यस्यैवासिद्धेः । 'एकमात्रम्' इत्यादौ बहुव्रीहित्वा-द्यङ्गीकाराच्च । नन्वस्मत्पक्षेऽपि भवत्पक्षे समाख्यावत् 'ओङ्कारमभिध्यायीत' इत्युपक्रमे श्रवणात् साम्यमेवेत्यत आह– **त्रिमात्रेणेति** ॥ **उपसंहारश्च गरीयानिति** ॥ उपसंहारस्योपक्रमापेक्षया पश्चिमत्वेन व्याख्यानरूपत्वाद्

बलीयस्त्वमिति भावः ॥ **प्रत्युक्तं भवतीति** ॥ प्रमाणेऽन्यथा व्याख्यातत्वेनैतद्-व्याख्यानस्य तद्विरुद्धत्वादिति भावः ॥ २ ॥

## (उपनिषत्)

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते । स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति । अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते । यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ॥ २ ॥**

## (टीका)

किं प्रणवोपासनमात्रेणैकतरमन्वेति? मैवम् । यथावज्ज्ञात्वोपासनेनैवेत्युच्यते— **स इत्यादि** ॥ अकारोकारमकाराख्यांशत्रययुक्तो हि प्रणवः । तत्र स उपासको यद्येकमात्रमेका मात्रा वाचिका यस्य तं परमात्मानं प्रणवेनाभिध्यायीत, कामप्येकामेव मात्रां सम्यग् विदित्वा इतरे अविज्ञायेति यावत्, तर्हि स उपासकस्तेनैव ध्यातेन परमात्मना संवेदित एहीति सम्बोधित इव देहपातानन्तरं क्षिप्रमेव जगत्यां पृथिव्यामभिसम्पद्यते प्राप्नोति । जन्मेति शेषः । कथं कीदृशं जन्मेति । तमुपासकमृचः ऋग्वेदाभिमानिदेवताः पृथिव्यां मनुष्यलोकं मनुष्यशरीरं द्विजाग्र्यलक्षणमुपनयन्ते प्रापयन्ति । स च तत्र जन्मनि तप-आदिसम्पन्नस्तत्फलरूपं महिमानमनुभवति ॥

अथ यदि द्विमात्रेण द्वे मात्रे वाचिके यस्य तेन परमात्मना मनसि सम्पद्यते सङ्गतो भवतीति । तिसृषु प्रणवमात्रासु ये के वा द्वे मात्रे सम्यक् ज्ञात्वाऽन्यामविज्ञाय परमात्मानं चिन्तयतीति यावत्, तर्हि स उपासको यजुर्भिर्यजुर्वेदाभिमानिदेवताभिरन्तरिक्षस्थं सोमलोकमुन्नीयते । नीतश्च स तत्र सोमलोके विभूतिमैश्वर्यमनुभूय पुनरावर्तते । ततश्च्यवते । यत एवं तस्माद्यस्तु पुरुष एतं परं पुरुषं त्रिमात्रेण तिस्रो मात्रा अपि सम्यग् विदित्वेति यावत्, ओमित्येतेनैवाक्षरेणाभिध्यायीत स ध्याता ध्येयं परमेश्वरमपरोक्षीकृत्य तेजोरूपे सूर्ये सम्पन्नस्तं प्राप्तो भवति । सूर्यं प्राप्य चासौ यथा पादोदरः सर्पस्त्वचा जीर्णया विनिर्मुच्यते, एवं खलु स ध्यानी पाप्मना प्रारब्धेन विनिर्मुक्तो भवति । विधूतपापश्च स सामभिः सामाभिमानिदेवताभिः ब्रह्मलोकं सत्याख्यमुन्नीयते । तत्र च एतस्मात् सत्यलोकपतेः जीवघनात् जीवसारात् सकलजीवोत्तमाद् विरिञ्चात्तदुपदेशेनेति यावत्, परात्परमुत्तमोत्तमं पुरिशयं सकलजीवशरीरेषु शयितं पुरुषं पूर्णं वासुदेवमीक्षते । पुनरभिवृद्धज्ञानो भवतीति ॥ २ ॥

## (प्रकाशिका)

यथावज्ज्ञात्वेत्यस्य मात्रात्रयमेकीकृत्य तदुक्तगुणवत्तया ज्ञात्वेत्यर्थः ॥ ॥

## (उपनिषत्)

**तदेतौ श्लोकौ भवतः ।**

**तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता**
**अन्योन्यसक्ता अनविप्रयुक्ताः ।**
**क्रियासु बाह्यान्तरमध्यमासु**
**सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥**

ऋग्भिरेतं यजुर्भिरन्तरिक्षं
सामभिर्यत् तत् कवयो वेदयन्ते ।
तमोङ्कारेणैवायनेनान्वेति विद्वान्
यत् तच्छान्तमजरममृतमभयं परं चेति ॥ ३ ॥

॥ इति पञ्चमप्रश्नप्रतिवचनम् ॥

—०—

(भाष्यम्)

प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च ।
ज्ञानं चतुर्मुखात् प्राप्य मुच्यते नात्र संशयः ॥ * ॥

—०—

(टीका)

अत्र सम्यग् विदित्वा प्रणवेन भगवन्तमुपासीनस्य विरिञ्चलोकप्राप्तिः फलमुक्तम् । तन्नोपपद्यते । 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इत्यादिविरोधादित्याशङ्कां परिहर्तुमाह– **प्रणवेनेति** । पुरुषमीक्षित्वा च तं प्राप्नोतीत्यत्र व्याख्यातव्यम् । समाख्यावशादतो न विरोध इति भावः । 'यत्तच्छान्तम् इति मन्त्राच्च । एतेन 'एकतरमन्वेति' इत्यपि विवृतं भवति । अपरं ब्रह्म प्राप्य परमप्यन्वेतीति ॥

अत्र यद् द्विमात्रेणेत्यादि द्वितीयान्तत्वेन विपरिणम्य प्रणवस्यैव परमात्मप्रतीकतयोपास्यत्वं परैरुक्तं तदपि प्रणवेन हरिमित्युक्त्यैव परास्तम् । ओङ्कारमभिध्यायीतेति तत्र तत्र द्वितीयाश्रवणात् 'त्यजेदेकं कुलस्यार्थे' इति न्यायाद्विपरिणामो युक्त इति चेन्न । तृतीयाया अपि बहुशः श्रवणात् । समाख्या त्वस्माकमतिरिच्यते । 'त्रिमात्रेणोमित्येतेनैवाक्षरेण' इत्युपसंहारश्च

गरीयान् । 'ज्ञानं चतुर्मुखात् प्राप्य' इत्यनेन पराज्जीवघनादपि परं पुरुषमीक्षत इत्येतदपव्याख्यानं प्रत्युक्तं भवतीति ॥

तदेतौ श्लोकौ भवतः । तिस्रोऽकाराद्याः प्रणवमात्राः अनविप्रयुक्ताः विप्रयुक्ताः अन्योन्यमसम्बद्धाः एकैकशो ज्ञाताः । विप्रयुक्ता न भवन्तीत्यविप्रयुक्ताः न अविप्रयुक्ताः अनविप्रयुक्ताः विप्रयुक्ता एवेत्यर्थः । अन्योन्यसक्ताः परस्परं युग्मतया सम्बद्धाः । ये के वा द्वे द्वे ज्ञात्वेति यावत्, बाह्याभ्यन्तरमध्यमासु तारमन्द्रमध्यमरूपासूच्चारणक्रियासु प्रयुक्ताः उच्चरिताः मृत्युमत्यो भवन्ति । एकैकामेव वा द्वे वा ये केचित् सम्यग् ज्ञात्वा शेषमज्ञात्वोच्चैर्वा नीचैर्वा मध्यममानेन वोच्चारिताः प्रणवमात्राः नापुनरावृत्तिफलं प्रापयन्तीत्यर्थः । तासु सम्यक् प्रयुक्तासु तिस्रोऽपि सम्यग् ज्ञात्वोच्चारितासु सतीषु ज्ञो ज्ञानी न कम्पते न च्यवते अपुनरावृत्तिफलं प्राप्नोतीति । एतदर्थविवरणार्थो द्वितीयो मन्त्रः । एकमात्राज्ञानपूर्वकोपासनाद् ऋग्भिरेतं पृथिव्याख्यं मानुषं लोकमुपासको नीयते । द्विमात्राज्ञानपूर्वकोपासनाद्यजुर्भिरन्तरिक्षं तत्रत्यं सोमलोकं नीयते । यत्तत्कवयो ज्ञानिनो वेदयन्ते जानन्ति ज्ञापयन्ति वा परात्परं ब्रह्म यत्तच्छान्तं सुखोत्कर्षसीमाभूमिरूपम् अजरं जरादिवर्जितं परात्परं सर्वोत्तमं तं तद् ब्रह्मोङ्कारेणैवायनेन अयनसाधनमोङ्कारं मात्रात्रयात्मकं सम्यग् ज्ञात्वेति यावत्, सामभिरन्वेतीति ॥

**॥ इति पञ्चमप्रश्नप्रतिवचनम् ॥**

## (प्रकाशिका)

'तृतीयाया अपि बहुशः श्रवणात्' इत्यत्र 'त्यजेदेकं कुलस्यार्थे' इति त्वदुक्तवचनरीत्या तृतीयाया एकत्वाभावात्त्वयोदाहृतं प्रकृतासङ्गतमिति भावः ॥

'अन्योन्यसक्ताः' इत्यत्र अन्योन्यसक्तत्वं नामान्यस्याक्षरस्यान्येन सक्तत्वम् । तच्च द्वयोरेव सम्भवतीति भावेनाऽह टीकाकारः– 'युग्मतया सम्बद्धाः'

इति । मध्यमाक्षरस्योत्तरवर्णयोगेऽपि द्वित्वं भवति । अत ये के वा· द्वे द्वे ज्ञात्वा' इत्युक्तम् । 'बाह्याभ्यन्तरमध्यमासु' इत्यत्र सम्यक् ताल्वोष्ठपुट-व्यापारेणोच्चारणक्रिया बाह्येत्युच्यते । ईषत्ताल्वोष्ठपुटव्यापारेण क्रियमाणा मध्यमेत्युच्यते । मनसैवोच्चार्यमाणाऽऽभ्यन्तरेत्युच्यत इत्यर्थः ।। ७ ।।

## (मङ्कालीयम्)

अनविप्रयुक्ता इत्यत्र एको विशब्दो निषेधार्थकः । नञ्द्वयं चास्तीत्यभिप्रेत्य विप्रयुक्ता इत्यादिनाऽक्षरार्थमुक्त्वाऽभिप्रायमाह– **एकैकामेवेति ।। उपासको नीयत इति** ।। मन्त्रे एकमात्रद्विमात्रोपासकयोः पृथिव्यन्तरिक्षलोकप्राप्तौ सर्वथा स्वातन्त्र्याभावज्ञापनार्थं टीकाकारैरन्वेतीति मन्त्रोक्तपदान्वयसम्भवेऽपि नीयत इति कर्मणि प्रयोगः कृतः । ऋगाद्यभिमानिदेवानामेव तत्तल्लोकप्रापणे ईश्वरदत्तं किञ्चित् स्वातन्त्र्यमस्तीति सूचयितुं च । ज्ञानार्थकस्य विदेश्चुरादि-णिजन्तस्य व्याख्यानम्– **जानन्तीति** ।। तस्माद्धेतुमति णिचमङ्गीकृत्य व्याख्यानम्– **ज्ञापयन्तीति ।। शान्तं सुखोत्कर्षसीमाभूमिरूपमिति** ।। 'शं सुखम्' इति सुखनामसु शंशब्दस्य पाठात् सुखवाचित्वात् मुख्यामुख्यन्यायेन तस्योत्कृष्टपरत्वादन्तशब्दस्य मर्यादार्थकत्वादिति भावः ।। ३ ।।

**।। इति पञ्चमप्रश्नप्रतिवचनम् ।। ५ ।।**

—०—

## (उपनिषत्)

### अथ षष्ठः प्रश्नः

*(षोडशकलाविषयकः षष्ठः प्रश्नः)*

**ॐ ॥ अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ । तमहं कुमारमब्रुवम् । नाहमिमं वेद यद्यहमिममवेदिष्यं कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति योऽनृतमभिवदति । तस्मान्नार्हाम्यनृतं वक्तुम् । स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥**

## (टीका)

**अथ हैनं सुकेशाः ।** प्राक् प्राणादीनां शरीरिणश्च जाग्रत्स्वप्नसुषुप्तिषु परमेश्वराधीनत्वमभिहितम् । न तु मोक्षे । अतः सिंहावलोकनन्यायेन मुक्तावपि तेषां भगवदधीनत्वप्रदर्शनार्थ उत्तरो ग्रन्थः । प्रष्टव्यार्थेऽतिशयितबुभुत्सां स्वस्य ज्ञापयितुं पूर्ववृत्तान्तकथनम् । भगवन्, हिरण्यनाभो नामतः कोसलाया भवः कौसल्यः कस्यचिद्राज्ञः पुत्रो मामुपेत्य प्राप्य एनं वक्ष्यमाणं प्रश्नं प्रष्टव्यमर्थमपृच्छतापृच्छत् । हे भारद्वाज, षोडशकलो नाम कश्चित्पुरुषोऽस्तीति सामान्यतो मया श्रुतम् । तं षोडशकलं पुरुषं त्वं वेत्थ विशेषतो जानासि किम्? कोऽसौ पुरुषः क चाऽस्ते ? का नाम षोडशकलाः? कथं च तस्य षोडशकलत्वमित्यादि । यदि च जानासि तर्हि मह्यं ब्रूहीति । एवं पृष्टवन्तं

तं कुमारं पूर्ववयसि वर्तमानं हिरण्यनाभमहमब्रुवम् । अहमिमं त्वया पृष्टं षोडशकलं पुरुषं न वेद न जानामि । कुतः? यद्यहमिमं पुरुषमवेदिष्यं विदितवानभविष्यं तर्हि कथं कस्माद् योग्याय ते तुभ्यं नावक्ष्यमिति । अतो नाहमिमं वेद । किं च यः पुरुषोऽनृतमभिवदति स एषः समूलः परिशुष्यति वै । सर्वात्मना गतसारो भवति । तेनाऽर्जितं समस्तमपि सुकृतं नश्यतीति यावत् । यत एवं तस्माज्ज्ञात्वाऽपि न जानामीत्यनृतं वक्तुं दोषज्ञोऽहं नार्हामि नार्हो भवामीत्येवमनेकप्रकारतः प्रत्यायितः स लज्जया तूष्णीं किमप्यवदन् रथमारुह्य प्रवव्राज । यथाऽऽगतं तथा गतवान् । एवं तदा प्रभृति ज्ञातव्यतया मम हृदि वर्तमानं तं पुरुषं त्वा त्वां पृच्छामि । किमिति ? असौ षोडशकलः पुरुषः क्वाऽऽस्ते ? कश्चासौ षोडशकलः ? काश्च ताः कलाः ? कथं चासौ षोडशकलः पुरुष इत्यादीति ॥ १ ॥

## (प्रकाशिका)

'षोडशकलं पुरुषं वेत्थ' इत्यत्र प्राणाद्याः षोडशसङ्ख्याकाः कलाः यस्मात् तं षोडकलमित्यर्थः ॥ १ ॥

## (मङ्गालीयम्)

**अथ हैनं सुकेशाः॥ शरीरिणश्चेति॥** शरीराभिमानिनो जीवस्येत्यर्थः । **परमेश्वराधीनत्वमभिहितमिति ॥** चतुर्थप्रश्न इति शेषः ॥ **सिंहावलोकनन्यायेनेति ॥** अनेनास्य प्रश्नस्य चतुर्थप्रश्नानन्तर्यमेव स्यादिति शङ्का निरस्ता वेदितव्या । ननु प्रश्नमात्रं विहाय पूर्ववृत्तान्तकथनस्य कोपयोग इत्यत आह– **प्रष्टव्यार्थ इति ॥** बुभुत्सां बोद्धुमिच्छाम् । कोसलायां तन्नामनगर्याम् । **अपृच्छत अपृच्छदिति ॥** प्रच्छधातोः परस्मैपदित्वात् श्रुतौ व्यत्ययेनाऽत्मनेपदप्रयोग इति भावः । **षोडशकलमिति ॥** परमात्मज्ञानोपयोगिषोडशकलासहितम् । नतु लिङ्गशरीरान्तर्भूतषोडशकलामात्रसहित-

मित्याशयः । मन्त्राणां लिङ्गशरीरानन्तर्भावात् ।। **कोऽसौ पुरुष इ-त्यादि ।।** यद्यपि सामान्यत एव प्रश्नः कृतः । तथाऽपि प्रतिवचनानुसारेणेदं प्रश्नविवरणम् । प्रत्यायितः विश्वासं प्रापितः ।। **पुरुषमिति ।।** परमात्मान-मित्यर्थः ।। १ ।।

### (उपनिषत्)

**तस्मै स होवाच । इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति स ईक्षाञ्चक्रे । कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजत । प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ।। २ ।।**

### (भाष्यम्)

*(षोडशकलाभिमानिनां विवरणम्)*

'कर्मेति पुष्करः प्रोक्त उषा नामाभिमानिनी ।
लोकाभिमानी पर्जन्यः स्वाहा वै मन्त्रदेवता ।।

तपोऽभिमानी वह्निश्च वरुणो वीर्यदेवता ।
अन्नस्य देवता सोमो मनोनामाऽनिरुद्धकः ।।

इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः ।
रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः ।।

श्रद्धेति वायोः पत्नी स्यात् सर्वेषां प्रभवाप्यया ।
तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः ।।

**तस्यापीशः कारणं च वासुदेवः परोऽव्ययः ।**
**न तस्य सदृशः कश्चित् कुत एवोत्तमो भवेत् ।**
**तं ज्ञात्वा मुच्यते जन्तुर्विदित्वैवं 'परात्परम्'[१] इति तत्वविवेके ।**

*(कलोत्पत्तिक्रमविचारः)*

**एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।**
**'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'**

**इति मन्त्रोक्त एव क्रमः । नहीन्द्रियेभ्यो मनः पश्चात् । 'तत्प्राक्छ्रुतेश्च' [२]इति भगवद्वचनम् ।**

**(टीका)**

एवं पृष्टवते तस्मै स होवाच । वक्ष्यमाणलक्षणैर्विष्णुरेवासौ पुरुष इति सेत्स्यतीत्यभिप्रायेण शिष्टस्य परिहार उच्यते – **इहैवेति** ।। हे सोम्य यस्मिन् पुरुषे एताः वक्ष्यमाणाः प्राणाद्याः षोडशसङ्ख्याकाः कलाः सजीवस्य शरीरस्य भागाः प्रभवन्ति । यस्मादुत्पद्यन्ते यस्मिंश्च प्रविष्टा भवन्ति मुक्ताः सत्यो यमाश्रित्य वर्तन्ते, अनेन षोडशकलत्वं तस्य कथमिति परिहृतं भवति । स पुरुष इहैव शरीरे शरीरस्यान्तरास्ते । नावश्यं तद्दर्शनाय दूरं गन्तव्यमित्यभिप्रायः । 'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इत्युक्तं प्रपञ्च्यते– **स इत्यादि** ।। स पुरुषः कल्पादौ कलाः सृजानीतीक्षाञ्चक्रे चिन्तितवान् । पुनश्च कस्मिन् पुरुषे शरीरादुत्क्रान्तेऽहमुत्क्रान्तो भविष्यामि, कस्मिन् वा तत्र प्रतिष्ठितेऽहमपि प्रतिष्ठास्यामि प्रतिष्ठो(ष्ठितो) भविष्यामि, को नु मद्वशीकरणक्षमभक्तिज्ञानादिसम्पन्नो यं निमित्तीकृत्याहं कलाः सृजानीत्येवमीक्षित्वा तादृशः प्राण एवेति निश्चित्य स पुरुषः प्राणं जीवकलाभिमानिनमसृजत् । प्राणात् तं प्राणं निमित्तीकृत्य श्रद्धां जीवस्याऽस्तिक्यनिष्ठामसृजत् । ततः

---

१. 'परावरम्' ह. २. 'इति च' ह.

खं वायुर्ज्योतिरापः पृथिवीत्येतानि शरीरोपादानभूतानि भूतानि, इन्द्रियं चक्षुरादि, प्रवृत्तावुपकरणं मनः, प्रधानकारणम् अन्नं तत्स्थितिकारणं, तस्माच्चान्नादन्नं निमित्तीकृत्य वीर्यं शरीरहेतुभूतं, तपो जीवस्य ज्ञानादिहेतुतया सुखसाधनं, मन्त्राः ऋगादिवेदाः सम्यक् ज्ञानादिहेतवः, कर्म पुण्यापुण्यलक्षणं सुखादिनिमित्तं, लोकाः गोलकाः इन्द्रियाश्रयभूताः, नाम च देवदत्तादिकमित्येताः कलाः पुरुषेण सृष्टा इति । अत्र 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' इत्यादौ, अन्नाद्वीर्यमिति मध्ये, लोकेषु सृष्टेषु सत्सु नाम चेत्यन्तेऽपि कथनेन पूर्व-पूर्वोत्पन्नां कलां निमित्तीकृत्योत्तरोत्तरकला परमेश्वरेण सृष्टेति सूचयति । एतासां च कलानां यथेत्यादिना जीवेन सह मोक्षे पुरुषप्राप्तिरुच्यते । न चासावुपपद्यते । कलानां जडत्वेन मोक्षासम्भवादित्यतोऽत्र कलाशब्देन तदभिमानिदेवता विवक्षिता इति भावेन व्याख्यानरूपां स्मृतिमुदाहरति- **कर्मेति** ॥ 'इन्द्रियेशाश्च सूर्याद्याः' इत्यस्यैव विवरणम्- **चक्षुराद्यभिमानिन इति** ॥ चक्षुषः सूर्यः, श्रोत्रस्य दिश इत्येवं सूर्याद्या यथा (सम्भवं) सङ्ख्यं चक्षुराद्यभिमानिनो न तु सर्वे सर्वेषामिति । ननु रुद्रादयो मनोदेवताः क्वचित् श्रूयन्ते । सत्यं तेऽपि भवन्तीत्याह- **रुद्र इति** ॥ 'सर्वेषां प्रभवाप्यया' इत्यनेन पूर्वोत्पन्नानां पश्चादुत्पन्नान् सर्वान् प्रति स्वाम्यमस्तीति सूचितम् । तं ज्ञात्वेत्यनेन अरा इति मन्त्रो व्याख्यातो भवति । अत्र 'स प्राणमसृजत । प्राणाच्छ्रद्धाम्, इत्याद्युक्त्या कलानामुत्पत्तावयं यथोक्त एव क्रम इत्यन्यथा-प्रतीतिः स्यात् । तां निवारयति- **एतस्मादिति** ॥ न कलानामुत्पत्तावयमेव क्रमो ज्ञातव्यः । तथा सत्येतस्मादिति मन्त्रविरोधात् । तत्र मनसोऽनन्तर-मिन्द्रियाणां ततो भूतानां च जन्मश्रवणादित्यर्थः । एतद्वाक्यविरोधान्मन्त्र एव किं नान्यथा व्याख्यायत इत्यत आह- **न हीति** ॥ कुतो नेत्यत आह- **तदिति** ॥ प्रबलविशेषवचनसहकारिणा मन्त्रेण सामान्यवचनस्य बाधो युक्त एवेति भावः ॥ २ ॥

## (प्रकाशिका)

'सजीवस्य शरीरस्य' इत्यत्र जीवेन सहितं सजीवं, तस्य शरीरस्येत्यर्थः । 'षोडशकलाः पुरुषायणाः' इति समुद्रदृष्टान्तेन मुक्तावपि पुरुषाश्रितत्वस्य वक्ष्यमाणत्वादत्रापि प्रकृष्टाः मुक्ताः सन्तो भवन्ति । 'भू सत्तायाम्' इति धातोः । पुरुषे भवन्तीति सप्तम्यर्थो ग्राह्य इति भावेन प्रविष्टा भवन्तीत्युक्तम् । 'कलानां जडत्वेन' इत्यत्र प्रकरणबाधात् प्राणस्य देवतात्वसिद्धावपि श्रद्धादिपञ्चदशकलानां जडत्वादिति भावः । 'श्रद्धां खं वायुः' इत्यादिश्रुत्युक्तक्रमस्य तारतम्याननुकूलत्वात् 'यथोक्त एव क्रमः इत्यन्यथाप्रतीतिः स्यात्' इत्युक्तम् । 'इति भगवद्वचनम्' इत्यत्र भगवद्वचनं 'तत्प्राक् श्रुतेश्च' (ब्र.सू.२.४.४) इति सूत्रमित्यर्थः । तस्यार्थः– तन्मनः इन्द्रियेभ्यः प्रथममुत्पद्यते । प्राक् प्रागुत्पत्तौ श्रुतिसद्भावात् । 'ततः श्रद्धा' इत्यत्र श्रद्धा श्रद्धाभिमानिनी सरस्वती ॥

## (मङ्गालीयम्)

**शिष्टस्येति ॥** उर्वरितस्य कश्चासाविति प्रश्नेतरप्रश्नस्येत्यर्थः । षोडशकला इत्यस्य व्याख्या– **सजीवस्य शरीरस्य भागा इति ॥** कलाशब्दस्य भागार्थत्वादिति भावः । अत्र भागशब्देनोपकारकं विवक्षितम् । तेन पृथिव्यादीनां पञ्चानामपि भूतानां ब्रह्माण्डान्तर्विद्यमानानां संसृष्टशब्दशब्दितानाम् असंसृष्टशब्दशब्दितमहदादिव्यतिरिक्तानां कलात्वम् । तथाहि । भूतानां तावच्छरीरोपादानत्वमस्ति ॥

'यत्किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशाम्पते । सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः' इति शरीरस्य पाञ्चभौतिकत्वोक्तेः । अतस्तेषां शरीरोपकारकत्वमवश्यं वाच्यम् । उपादानानामुपादेयोपकारकत्वस्य तन्त्वादौ सुप्रसिद्धत्वात् । ततश्च पृथिव्यादीनां भूतानां कलात्वसिद्धिः । एवं जीवस्य शरीरप्रेरकतया श्रद्धापदोक्तास्तिक्यनिष्ठायाः यागादिविहितप्रवृत्तिहेतुत्वेन

चक्षुरादीन्द्रियस्य प्रवृत्तावुपकरणत्वेन, मनसः प्रवृत्तौ प्रधानकारणत्वेन, अन्नस्य शरीरस्थितिकारणत्वेन, वीर्यस्य शरीरहेतुत्वेन, तपसो जीवज्ञानादिहेतुतया सुखसाधनत्वेन, ऋगादिवेदरूपाणां मन्त्राणां सम्यग्ज्ञानादिहेतुत्वेन, कर्मणः पुण्यापुण्यरूपस्य सुखादिनिमित्तत्वेन, लोकशब्दोक्तेन्द्रियाश्रयगोलकानां शरीरावयवत्वेन, देवदत्तादिनाम्नो व्यवहारहेतुत्वेन सजीवशरीरोपकारकतया कलात्वं बोध्यम् । अत्र किञ्चिज्जीवोपकारकं किञ्चिच्च शरीरोपकारकम् । सर्वथाऽपि सजीवशरीररूपविशिष्टोपकारकत्वं सर्वेषां समानमिति । कल्पादावीक्षाञ्चक्र इत्यन्वयः । जीवस्य मोक्षोपयोगिज्ञानार्थं प्रवृत्त्याद्यर्थं च शरीराणि तावदुत्पादनीयानि । अतः शरीरोपयुक्ताः प्राणादिषोडशकलाः सृजानीति ईक्षाञ्चक्र इत्यर्थः । इदं प्राणादिषोडशकलासर्जनं जीवानां शरीरेषु तत्तत्काले पृथक् पृथगेव । नतु महत्तत्वादिसृष्टिवदादिसृष्टावेकवारमिति ज्ञेयम् । प्रतिष्ठः प्रतिष्ठितः ॥ **यं निमित्तीकृत्येति ॥** द्वारीकृत्येत्यर्थः ॥ **प्राणं जीवकलाभिमानिनमिति ॥** श्वासनिश्वासरूपप्राणनामिकायाः कलाया अभिमानिनं मुख्यप्राणमित्यर्थः ॥ **तं प्राणं निमित्तीकृत्येति ॥** प्राणादिति पञ्चमी कर्मणि ल्यब्लोपे, 'कर्मण्यधिकरणे पञ्चमी वाच्या' इति वार्तिकोक्तेः । निमित्तीकृत्येत्यनेनाप्रधानकारणत्वोक्तिः । **अन्नं निमित्तीकृत्येति ॥** अन्नं स्थूलभागरूपं निमित्तीकृत्य अपादानीकृत्य सूक्ष्मभागोपादानकं वीर्यमित्यर्थः ॥ **सुखसाधनमिति ॥** कृच्छ्रचान्द्रायणादिकमिति शेषः ॥ **सूचयन्तीति ॥** पञ्चम्याः ल्यब्लोपनिमित्तत्वस्य विवक्षितत्वात् । सामान्यकारणार्थत्वप्रतीतेर्लोकेष्वित्यत्र निमित्तसप्तमीविवक्षणाच्चेति भावः । 'कर्मेति पुष्करः प्रोक्तः' इति भाष्ये उषा इति सान्तः शब्दः, तदर्थस्त्वश्विनोर्भार्येति । पर्जन्यः द्वादशादित्येष्वेकः । स्वाहा अग्नेर्भार्या । अनिरुद्ध एवानिरुद्धकः, कामपुत्र इत्यर्थो द्रष्टव्यः ॥ **इत्यस्यैव विवरणमिति ॥** अतो न पुनरुक्तिरिति भावः ॥ **यथासम्भवमिति ॥** त्वचः प्राणः, जिह्वाया वरुणः, घ्राणस्याश्विनौ तथा वाचोऽग्निः, पाण्योर्दक्षः, पादयोर्जयन्तः पायोर्मित्रः, गुह्येन्द्रियस्य मनुरित्येवमित्यर्थः । ननु श्रद्धाया

वक्ष्यमाणक्रमानुरोधेन मनोमात्रकारणत्वोक्तेः सर्वोत्पत्तिलयकारणत्वं कथमुच्यते भाष्ये इत्यत आह– **पूर्वोत्पन्नानामिति** ॥ ननु 'तं ज्ञात्वा' इत्येतत् कस्य व्याख्यानमित्यप्रतीतेराह– **तं ज्ञात्वेत्यनेनेति** ॥ उत्तरत्रोदाहरिष्यमाणो मन्त्र इत्यर्थः । **तत्र मनसोऽ-नन्तरमिति** ॥ उत्तरत्र एतस्मादित्यनुवृत्तेः प्राणात् मन उत्पन्नम् । मनसः इन्द्रियाण्युत्पन्नानि । तेभ्यः पञ्चमहाभूतानीत्यर्थप्रतीतेरित्यर्थः ॥ **प्रबलविशेषेति** ॥ निर्णायकत्वेन सूत्रस्य प्राबल्याद् इन्द्रियापेक्षया मनसः पूर्वोत्पत्तिकथनेन विशेषवचनत्वाच्च तत्सहकृतैतस्मादिति मन्त्रेणेत्यर्थः । 'तत्प्राक् श्रुतेश्च' (ब्र.सू.२.४.४) इति सूत्रार्थस्तु मन इन्द्रियेभ्यः पूर्वमुत्पद्यते 'मनः सर्वेन्द्रियाणि च' इति श्रुतेः । 'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः' इति स्मृतिवचनाच्चेति ॥

## (भाष्यम्)

**'विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।**
**तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ॥**

**ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।**
**आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ॥**

**तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।**
**ततः पर्जन्य उद्भूतः स्वाहाऽतो मन्त्रदेवता ॥**

**[१]उदात्मको बुधस्तस्या उषा [२]नामात्मिका ततः ।**
**ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ॥**

**क्रमात् [३]प्रत्यवरा ह्येते मुक्ताः सर्वगुणैरपि ।**
**[४]नित्यमुक्तस्ततो विष्णुः प्राणादप्युत्तमोत्तमः' इति च ।**

---

१. 'उदकात्मकः' ह.
२. 'नामात्मका:' ह.
३. 'प्रत्यवरा एते' ह.
४. 'नित्यमुक्तस्तथा' ह.

## (टीका)

अस्तु तर्हि इन्द्रियमनोजन्मविषये मन्त्रस्यैतद्वाक्यबाधकत्वम् । अन्यत्र तु, यथाश्रुत एव क्रम इत्याशङ्कां परिहर्तुमशेषक्रमं विशेषवाक्यान्तरेण दर्शयति– **विष्णोरिति** ॥ प्राणो जातोऽवरश्चेत्यादि योज्यम् । रुद्र इत्युपलक्षणम् । पूर्ववाक्योक्ताश्च ग्राह्याः । एवमिन्द्र इत्यपि । तेषु च यथायोग्यमुत्पत्त्यादि । तस्य सकाशात् । वरुणो वीर्यदेवता । ततः सृष्टस्तत उत्पन्नः । अग्निस्तपोभिमानी । मरुद्भूतवायुदेवता । पावकाख्यस्तेजोदेवता । ततो मरुदुत्पत्त्यनन्तरम् । तस्मान्मरुतो जातः, पर्जन्यो लोकाभिमानी । न केवलमेते संसारे क्रमवन्तः । किं तर्हि मोक्षेऽपीत्याह– **क्रमादिति** ॥ यथा प्राणादीनां श्रद्धादिभ्य उत्तमत्वमात्रं न तथा प्राणाद्विष्णोरित्याह – **नित्यमुक्त इति** ॥ ततस्तेभ्यः सर्वेभ्यः प्राणादपि । अत्रोक्ता एव भूतदेवताः पूर्ववाक्येऽपि ग्राह्याः ॥

## (प्रकाशिका)

'पूर्ववाक्योक्ता' इत्यत्र कामव्यतिरिक्ताः रुद्राद्यास्त्रयो ग्राह्या इत्यर्थः । एवमिन्द्र इत्यपि । इन्द्र इति पदं कामस्योपलक्षणमित्यर्थः । तेजोऽभिमानिमूलाग्नेर्ग्रहणे तस्य विनायकादिभ्योऽवरत्वायोगात् 'पावकाख्यः तेजसो देवता' इत्युक्तम् । एवमबभिमानिवरुणस्यैव ग्रहणे पृथिव्यभिमानिधारायाश्च ग्रहणे तारतम्यविरोधात् 'उदात्मा बुधः', 'शनिः पृथिव्यात्मा' इत्युक्तम् । तत्त्वन्यासे मुख्यतत्त्वदेवतानामेव ग्राह्यत्वाद् अग्नेर्वरुणस्य धरायाश्च ग्रहणं कृतमित्यपि द्रष्टव्यम् । लोकाभिमानी लोकपदवाच्यगोलकाभिमानीत्यर्थः ॥ २ ॥

## (मङ्गालीयम्)

**योज्यमिति** ॥ वरुणः सृष्ट इत्यत्र विद्यमानः जात-शब्दपर्यायः सृष्टशब्दः 'तस्मादग्निस्ततोऽवरः' इत्यत्र विद्यमानोऽवरशब्दश्च पञ्चम्यन्तात् परो योज्य इति भावः ॥ **उपलक्षणमिति** ॥ उपलक्षणस्याजहत्स्वार्थत्वेन कामस्य

ततोऽवरत्वेनात्र ग्रहणासम्भवेऽपि पूर्वोक्ता इति बहुवचनोपपत्तिः । मनोभिमानित्वेन परम्परया अवरत्वेन कामस्यापि ग्रहणाद्वा ।। **इन्द्र इत्यपीति ।।** उपलक्षणमित्यनुवर्तते । कामाहङ्कारिकप्राणादयोऽपि केचिदिन्द्रियाभिमानिनो ग्राह्या इत्यर्थः । ननु प्रकृतजडचेतनात्मक-कलासु मध्ये चेतनानां मन्त्रादेश्चानादित्वेन कथमुत्पत्तिः ? कथं च साक्षाद-वरत्वमित्यत आह– **यथायोग्यमुत्पत्त्यादीति ।।** चेतनेषूत्पत्तिर्देहतः जडेषु स्वरूपतः क्वचिदभिमानव्यक्तिः । आदिशब्दात् क्वचित् साक्षात्क्वचित् परम्परयाऽवरत्वं ग्राह्यम् । सकाशादित्यनुक्तौ तस्येत्यस्यानन्वयात् सकाशादि-त्युक्तम् । वरुणस्याभिमन्यमानानुक्तेराह– **वीर्यदेवतेति ।।** सृष्ट इत्यस्योत्पादित इत्यर्थत्वे तत इति पञ्चम्यनन्वयादाह– **तत उत्पन्न इति ।।** भूतवाय्वभिमान्याहङ्कारिकप्राणस्य गणेशादुत्तमत्वेन तज्जन्यत्वतदवरत्वयोरसम्भवान्निमित्तात् ततो वायोः सुतो मरुदित्युक्तम् । भाष्ये तदप्रतीतेर्व्याचष्टे– **मरुद् भूतवायुदेवतेति ।।** वायोः प्रवहवायोः सुतो मरुत् मरुन्नामकः भूतवायुदेवताऽत्र विवक्षित इति भावः । मरुत्पदेनैवाभिमन्यमानं लब्धमित्याशयेन वाऽऽह– **मरुद्भूतवायुदेवतेति ।।** अस्मिन् पक्षे वायोः प्रवहस्य सुतो भूतवायुदेवतेत्यर्थो ज्ञेयः । 'तस्मादग्निः पावकाख्यः' इत्यत्र तत इत्यधिकमित्याशङ्क्य तदर्थमाह– **ततो मरुदुत्पत्त्यनन्तरमिति ।। उत्तमत्वमात्रमिति ।।** शतगुणादिपरिमितोत्तमत्वमित्यर्थः ।। **पूर्ववाक्येऽपीति ।।** 'एतस्माज्जायते प्राणः' इति पूर्वोदाहृतवाक्येऽपीत्यर्थः । अतो न तारतम्यविरोध इति भावः ।।

### (उपनिषत्)

*(मुक्तौ कलानामवस्थाविचारः)*

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति । भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं**

**गच्छन्ति । भिद्येते चाऽसां नामरूपे । पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति ॥ ३ ॥**

## (भाष्यम्)

**समुद्रे इत्येवं प्रोच्यते । पुरुषे इत्येवं प्रोच्यते । 'भिद्येते तासां नामरूपे','भिद्येते चाऽसां नामरूपे' इत्युक्तत्वात् । अज्ञैरनवगतान्यपि समुद्रे स्थितानां नदीनां, विष्णौ स्थितानां मुक्तानां च भिन्नान्येव नामरूपाणि सन्त्येवेत्यर्थः ।**

## (टीका)

'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इति कलानां मुक्तौ परम-पुरुषाश्रयत्वमभिधाय यथेत्यादितद्विवरणवाक्ये सदृष्टान्तं पुरुषैक्यमुच्यते । यथा लोके इमाः नद्यः स्यन्दमानाः स्रवन्त्यो गच्छन्त्य इति यावत्, समुद्रा-यणाः समुद्रगमनस्वभावाः समुद्रं प्राप्यास्तं स्वरूपतिरस्कारं गच्छन्ति । तासां च भिद्येते विनश्यतः नामरूपे गङ्गा यमुना इत्यादिलक्षणे । तद्भेदे समुद्र इत्येवं प्रोच्यते तदुदकलक्षणं वस्तु । एवमेवास्य परिद्रष्टुर्जीवस्येमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । तासां च नामरूपे प्राण इत्यादिनामरूपे भिद्येते । नाशे च नामरूपयोर्यदनष्टं चैतन्यं तत् पुरुष एवेत्युच्यते विद्वद्भिः । ततः स एष जीवोऽकलोऽमृतो भवतीति । तदेतत् कथमित्यतो मुक्तेश्वरभेदस्यात्रानुपलभ्यमानत्वाद् यस्मिन्निति तदुक्तिरयुक्तेति शङ्कापरिहाराय भेद एव समर्थ्यत इति भावेनाऽह– **समुद्र इति** ॥ समुद्रे पुरुषे इति सप्तमी। न प्रथमेत्यर्थः । तत्कुत इत्यत आह–**भिद्येते इति** ॥ समुद्रं प्राप्तानां नदीनां, पुरुषं प्राप्तानां कलानां च परस्परं समुद्रादेश्च विविक्तनामरूपवत्त्वस्योक्तत्वात् । प्रथमान्तत्वाङ्गीकारे तद्विरोधः स्यात् । न हि नद्यादीनां समुद्रादिभिरैक्यं विविक्तनामरूपवत्त्वं चेति युज्यते । अतः सप्तम्यन्तत्वमेवेत्यर्थः । तर्हि भिद्येते तासामित्यादिवाक्यस्य कथं योजनेत्यत

आह– **अङ्गैरिति** ॥ अस्तं गच्छन्तीत्यस्यानुवादः–**अङ्गैरिति** ॥ तथा हि वक्ष्यति ॥

**तथा चेयमक्षरयोजना**– नद्यः समुद्रं प्राप्यस्तमदर्शनं गच्छन्ति । अज्ञाना-मदर्शनं गतानामपि तासां समुद्रे स्थितानां नामरूपे भिद्येते विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते । एवं कला अपि जीवमोक्षकाले मुक्ताः परमपुरुषं प्राप्यादर्शनं गच्छन्ति । तथाऽपि पुरुषे स्थितानां तासां नामरूपे विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते । ततश्च कलादेवतासु मुक्तिं गतासु स एष जीवो नष्टाचेतनकलो भवति । तत एवामृतो भवति । कलानिमित्तं हि मरणमस्येति ॥ ३ ॥

## (प्रकाशिका)

'अनुपलभ्यमानत्वाद्यस्मिन्निति तदुक्तिः' इत्यत्र यस्मिन्निति वाक्ये तदुक्तिः भवद्भिः कथितजीवेश्वरभेदोक्तिरयुक्तेति शङ्कितुरभिप्रायः । अदर्शनं गच्छन्तीत्य-त्रामुक्तानामदर्शनं गच्छन्तीत्यर्थः ॥ ३ ॥

## (मङ्गालीयम्)

**स्रवन्त्यो गच्छन्त्य इति** ॥ 'स्यन्दू प्रस्रवणे' इति धातोर्गच्छन्त्य इति तात्पर्यकथनम् । 'समुद्रायणाः' इत्यत्राय पय गताविति धातोर्भावे ल्युटि समुद्रं प्रति अयनं गमनमासामस्तीति नित्ययोगेऽर्शआद्यजिति भावेनाऽह– **समुद्र-गमनस्वभावा इति** ॥ **अस्तमिति** ॥ 'असु क्षेपे' इत्यतः 'नपुंसके भावे क्तः' (पा.सू.३.३. ११४) इति क्तप्रत्यय इति भावः ॥ **नामरूपे गङ्गा यमुना इत्यादिलक्षणे इति** ॥ नाम शब्दात्मकं रूपं तद्वाच्यार्थात्मकमित्यर्थः । नतु रूपशब्देन शुक्लादिकं गृह्यत इति ज्ञेयम् । **तद्भेद इति** ॥ तन्नाश इत्यर्थः । पुरुष इत्येवं प्रोच्यत इत्यत्र विशेष्यादर्शनात् तदध्याहरति–**यद-नष्टं चैतन्यमिति** ॥ एवं दृष्टान्तेऽपि तदुदकलक्षणं वस्त्वित्यत्रापि सङ्गतिर्द्रष्टव्या । अकलोऽमृतो भवतीति शब्दस्य पुरुषैक्यमुच्यत इति

पूर्वेणान्वयः ॥ **तदेतत् कथमिति** ॥ 'यस्मिन्नेताः' इति वाक्येन भेदसापेक्षं कलानां मुक्तौ पुरुषाश्रयत्वमभिधाय यथेत्यादितद्विवरणपरे वाक्ये तद्विरोध्य-भेदवचनं कथमित्यर्थः । इत्यत इत्यस्य भेद एव समर्थ्यत इति भावेनाऽ-हेत्यनेनान्वयः । यथेत्यादिवाक्यस्य भेद-समर्थनपरत्ववचनेनोत्तरवाक्ये तद्विरोध्य-भेदः कथमुच्यते इति शङ्कानिरासेऽपि तत्र भेदसमर्थनस्य किं फलमित्याशङ्क्य यस्मिन्नित्यादिवाक्ये मुक्तकलानां पुरुषाश्रितत्वोपयुक्ततयाऽभिमत-भेदस्यानुपलभ्यमानतया यस्मिन्नित्यनेन भेदसापेक्षाश्रयाश्रयिभावोक्तिरयुक्तेत्या-शङ्कानिरासफलकत्वाद् यथेत्यादिवाक्यकृतभेदसमर्थनस्य न वैयर्थ्यमित्य-भिप्रेत्याऽह– **मुक्तेश्वरभेदस्येति** ॥ अनुपलभ्यमानत्वात् प्रमाणेनेति शेषः ॥ **यस्मिन्निति तदुक्तिरिति** ॥ भेदसापेक्षाश्रयाश्रयिभावोक्तिरित्यर्थः ॥ **इति शङ्कापरिहारायेति** ॥ इत्याशङ्क्य प्रतिवचनकर्त्रा पिप्पलादेन भेद एव समर्थ्यत इत्यर्थः । नत्वभेद उच्यत इत्येवकारार्थः । केचित्तु, **तदेतत् कथ-मितीति** ॥ तत्तस्मात् 'स प्राणमसृजत' इत्यादिवाक्यस्य प्राणादिदेवानां विष्णोश्च मुक्तौ तारतम्यकथनपरत्वेन कथं व्याख्यानमित्यत इत्यस्य भेद एव समर्थ्यत इति भावेनाऽहेत्यनेनान्वयः । मुक्तेश्वरभेदस्यात्रानुपलभ्यमान-त्वादिति समुद्र इत्येवं प्रोच्यत इति मूलस्य सङ्गत्यन्तरम् । अस्यार्थः । यस्मिन्निति भेदप्रयुक्ताश्रयत्वोक्तिः कथम् ? अस्मिन् प्रकरणे भेदस्याप्रतीतेरित्याशङ्कापरिहाराय चेति । अस्यापि भेद एव समर्थ्यत इति भावेनाऽहेत्यनेनान्वयः इति व्याचक्षते । **तथाहि वक्ष्यतीति** ॥ अस्तगमनं त्वादित्यवदज्ञानामविज्ञेयत्वमेवेत्यनेनेत्यर्थः ॥

## (भाष्यम्)

**नच भेदशब्दो नाशे प्रयुज्यमानः [१]क्वापि दृष्टः । घटादावपि बहुभाव एव भेदशब्दः प्रयुज्यते । नाशस्त्वर्थत एवावगम्यते । नचात्रार्थतोऽपि नाशोऽवगम्यते ।**

---

१. 'क्वचिद् दृष्टः' ।

**नहि नामानि रूपाणि च कपालवद् बहुधा भूतानि तिष्ठन्ति। अतो 'भिद्येते' इति पृथक्त्वमेवोच्यते। 'अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः' इति वाक्यशेषाच्च। अतः पुरुषे [1]भिन्नानि नामरूपाणि प्रतिष्ठितानीत्येवार्थः**

*(नामरूपाणामविनाशित्वोक्तिः)*

**अस्तगमनं त्वादित्यवदज्ञानामविज्ञेयत्वमेव।**

**'प्राणादयः कला यस्मिन् मुक्ता नित्यं प्रतिष्ठिताः।**
**'पृथक्पृथङ् नामरूपैर्नमस्तस्मै पराय ते' [2]इति सत्तत्वे।**

## (टीका)

ननु भिद्येते इत्यस्य नाशोऽर्थो मयाऽङ्गीक्रियते। तत्कथं प्रथमान्तत्वे एतद्विरोध इत्यत आह– **न चेति** ॥ दृष्ट एव घटो भिन्न इत्यादौ नाशे च प्रयुज्यमानो भेदशब्द इत्यत आह– **घटादावपीति** ॥ बहुभावे अवयवविभागे। कथं तर्हि भिन्नो घट इति प्रयोगे नष्ट इति प्रत्ययः श्रोतॄणामित्यत आह– **नाशस्त्विति** ॥ भिन्नशब्दाज्ज्ञातावयवविभागेन श्रोत्रा यस्यावयवविभागस्तस्य नाशमन्तरेणासावनुपपन्न इत्यनुमानेनैव नाशोऽवगम्यते, न शब्दशक्त्येत्यर्थः। अस्तु तर्हि प्रकृतेऽप्यर्थत एव नाशावगमः। न हि शब्दशक्त्यैवेति प्रतिज्ञातमस्माभिरित्यत आह– **न चेति** ॥ कुतो नेत्यत आह– **न हीति** ॥ न हि घटादाविव नामरूपयोरवयवविभागो भेदशब्देनोच्यते इति वक्तुं शक्यते। येन तदनुपपत्त्या नाशं निश्चिनुमः। अद्रव्यत्वात्। न ह्यनुपपद्यमानादर्शनेऽप्युपपादके बुद्धिर्भवतीत्यर्थः। यत एवं भेदशब्दः शक्तितोऽर्थतश्च न नाशवाचकोऽत उक्तरीत्या पृथक्त्वपर एव। ततश्चैतद्विरोधात् समुद्रादिपदं सप्तम्यन्तमेवेति। उपसंहरति– **अत इति** ॥ किञ्च 'तदेष श्लोकः। अरा इव, इत्युक्तार्थसम्मतित्वेनोदाहृतमन्त्रे कलानां परमपुरुषा-

---

१. 'भिन्नानि प्रतिष्ठितानि' २. इति च सत्तत्वे।

श्रयत्वस्योक्तत्वात् । अत्रापि पुरुषपदं सप्तम्यन्तमेवेत्याह **अरा इति ।** पुरुषशब्दस्य सप्तम्यन्तत्वोपपादनमुपसंहरति– **अत इति** ॥

अरा रथानाभाविव कलाः प्राणाद्याः यस्मिन् प्रतिष्ठिताः तं वेद्यं पुरुषार्थकामैर्ज्ञातव्यं पुरुषं वासुदेवं वेदयथाः जानीध्वं हे शिष्याः न इति कस्यचिद्वाक्यम् । ततश्च मृत्युस्संसारो वो युष्मान् मा परिव्यथाः मा परिव्यथयतु । परमपुरुषाज्ञाने संसारव्यथा भवेत् । सा भवतां मा भवत्विति । एवं चेत् 'समुद्रं प्राप्यास्तं गच्छन्ति' इति 'पुरुषं प्राप्यास्तं गच्छन्ति' इति स्वरूपतिरस्कारोक्तिः कथमित्यतः प्राक् सूचितमेवार्थं विवृणोति – **अस्तगमनं त्विति ॥** एवं समर्थितं वाक्यार्थं वाक्यान्तरसमाख्ययाऽपि समर्थयते– **प्राणादय इति ॥**

## (प्रकाशिका)

'बहुभाव एव भेदशब्दः प्रयुज्यते' इत्यत्र अत एवाऽमघटे स्वरूपत एव जलेन द्रवीभूते सति, अग्निना पटे स्वरूपत एव दग्धे सति च भिन्नो घटः, भिन्नः पट इति च प्रयोगो न दृश्यते, किन्तु नष्ट इत्येवं प्रयोगः । शकलीभूतघटपटयोरेव भिन्नो घटः, भिन्नः पट इत्यादिव्यवहारो जायत इति । भिदॢ विदारण इति हि धातुः, न तु विनाश इति युक्तिरनुसन्धेया । 'अरा इव रथनाभौ' इत्यत्रारशब्देनान्योन्यसन्धायकतया निर्मिताऽयश्शलाका उच्यते । अत्र चारा इति रथनाभाविति च नामभेदस्य रूपभेदस्य च स्फुटतयोक्तत्वात् पूर्ववाक्येऽपि भेदोऽन्योन्यभाव एव, न तु नाशः ॥

## (मङ्गालीयम्)

**नाशोऽर्थ इति ॥** मुद्गरेण घटो भिद्यत इत्यादौ तथा प्रतीतेरिति भावः ॥ **अनुमानेनेति ॥** मूले अर्थत इत्यनेनार्थापत्तिरूपानुमानं गृह्यते । अर्थापत्तिरित्यत्रार्थादापत्तिः । अर्थात् लिङ्गदर्शनाद् आपत्तिः प्रमारूपं

ज्ञानम् । यथा पीनत्वदर्शनेन रात्रिभोजनज्ञानम् । तथा घटो भिद्यत इत्यत्रा-नुपपद्यमानदर्शनाद् घटावयवविभागदर्शनाद् घटस्य नाशोऽवगम्यत इत्यर्थाप-त्तिरूपानुमानेन नाशोऽवगम्यत इत्युक्तं भवति ॥ **अद्रव्यत्वादिति** ॥ घटादिवत् प्रत्यक्षेण प्रतीयमानावयवविभागशून्यद्रव्यत्वादित्यर्थः । यद्वाऽवयवा-नारब्धद्रव्यत्वादित्यर्थः । एतच्च दार्ष्टान्तिकाभिप्रायेणोक्तमिति मन्तव्यम् । **तद्विरोधादिति** ॥ पृथक्त्ववाचकभेदशब्दविरोधादित्यर्थः । अत्र वाक्ये समुद्रपुरुषपदयोरुभयोरपि सप्तम्यन्तत्वोपपादनोपसंहारः । उपपादकस्य भेदशब्द-विरोधस्य प्रथमान्तत्वाङ्गीकारे शब्दद्वयसाधारण्यादिति भावः । अत एव समुद्रादिपदमित्युक्तम् । उत्तरवाक्ये तु केवलपुरुषपदस्यैव सप्तम्यन्तत्वोप-पादनोपसंहारः । उपपादकवाक्यशेषयुक्तेः तन्मात्रनिष्ठत्वात् । अत एव पुरुषपदस्येत्येव वक्ष्यति । अतः पुरुष इति भाष्ये भिन्नानि भिन्नानीति नपुंसकलिङ्गपदयोः नामानि रूपाणीति पूर्वोक्तपदाभ्यामावृत्ताभ्यामन्वयो बोध्यः । श्लोकार्थमाह– **अरा इति** ॥ **वेदयथाः जानीध्वमिति** ॥ उत्तरत्र मा व इति बहुवचनप्रयोगाद् वेदयथा इत्येकवचनं व्यत्ययेन बहुवचनं कृतम् । तेषां मोक्षफलोक्तेः तत्साधनज्ञानस्यापेक्षितत्वात् णिजपि स्वार्थे कृतः । मध्यमपुरुषबलात् हे शिष्या इत्यध्याहृतम् । सम्मतित्वेनोदाहृतस्य पिप्पलादवाक्यत्वाभावात् कस्यचिद् वाक्यमित्युक्तम्– **मा परिव्यथय-त्विति** ॥ न भयं प्रापयतु । न सञ्चालयतु तत्वज्ञानादिति शेषः । 'व्यथ भयसञ्चलनयोः' इति धातोः अन्तर्णीतण्यर्थस्य लेटि परिव्यथा इति रूपम् । अत्र निषेधार्थको माशब्दः । तेन माङ्योगाभावात् 'माङि लुङ्' (पा.सू.३.३.१७५) इति न लुङ् । अनेनैवाऽशयेन टीकायां निषेधार्थकमाशब्दं प्रयुज्य परिव्यथा इत्यस्य प्रतिपदं परिव्यथयत्विति लोडन्तं प्रयुक्तम् ॥ **एवं चेदिति** ॥ उक्तरीत्या भेदपरं चेदित्यर्थः ॥ **प्राक् सूचितमिति** ॥ समुद्रं प्राप्यास्तं गच्छन्तीत्यस्य पूर्वभाष्ये अज्ञैरनवगतानीत्यर्थानुवादेनास्तं

गच्छन्तीत्यस्याज्ञैरनवगतत्वमेवार्थ इति सूचितमिति भावः । आदित्यवदिति भाष्ये 'तत्र तस्येव' (पा.सू.५.१.११६) इति षष्ठ्यन्ताद् वतिः । यथा मेरोरुत्तरभागे विद्यमानस्याप्यादित्यस्यास्तगमनं नाम दक्षिणदिक्स्थैरविज्ञेयत्वमेव । तथा मुक्तकलानां परमपुरुषेऽस्तगमनं संसार्यविज्ञेयत्वमित्यर्थः । समाख्ययाऽपीत्यपिशब्दः प्रागुक्तोपपत्तिसमुच्चायकः ॥

## (भाष्यम्)

**'नामरूपाद् विमुक्तः' इत्यनेनापि नामरूपामुक्तत्वमुच्यते। विप्रिय इत्यादिवत् । 'नामरूपे अविहाय' इति च पूर्वत्र । 'अनन्तं वै नामानन्ता वै विश्वे देवाः' इति नामरूपयोरनन्तत्वं हि श्रुतिर्वक्ति । 'यत्र पूर्वे साध्याः सन्ति देवाः', 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु' इत्यादेश्च । अतः सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धम् ॥**

## (टीका)

ननु मदुक्तार्थेऽपि 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति मन्त्रसमाख्याऽस्ति । अत्र हि मुक्तस्य नामरूपाद्विमुक्तत्वमुच्यत इत्यत आह– **नामरूपादिति** ॥ वीत्युपसर्गस्य वर्जनार्थतायाः विप्रियादिशब्दे दर्शनादत्रापि तथात्वेन विमुक्त इत्यमुक्तत्वमुच्यत इत्यर्थः । न च समासानुपपत्तिः । मुक्तशब्दस्य भावप्रधानत्वोपपत्तेः । भावे वाऽयं क्तप्रत्ययः ततश्च विगतं मुक्तं मुक्तिरस्मादित्यतिचतुरस्रम् । एवं सति पूर्वार्धोक्तदृष्टान्तविरोधः स्यात् । तत्र 'नामरूपे विहाय' इति तद्धानस्योक्तत्वादित्यत आह– **नामरूपे इति** ॥ पूर्वत्र पूर्वार्धेऽपि अविहायेत्येव

योज्यम् । न तु विहायेतीत्यर्थः । कुत एवं पूर्वोत्तरार्धयोजनेत्यत आह– **अनन्तमिति ॥** विश्वेदेवा इति रूपस्यानन्तत्वमुच्यते । मोक्षेऽपि भेदश्रुति-बाहुल्याच्चैवमेवार्थ इत्याह– **यत्रेति ॥** श्रुतिविरोधादेव मणीवादिवदत्राप्यप्रगृह्यत्वं वक्तव्यम् । एतत्प्रश्नप्रतिवचनार्थं प्रसङ्गादुपसंहरति– **अत इति ॥**

## (प्रकाशिका)

'विप्रियादिशब्दे दर्शनात्' इत्युपलक्षणम् । 'वि निषेधे पृथग्भावे' इत्य-नुशासनादित्यपि द्रष्टव्यम् । 'न च समासानुपपत्तिः' इत्यत्र वीत्युपसर्गस्य विगत इत्यर्थग्रहणे समासानुपपत्तिरित्यर्थः । अनुशासनबलेन विशब्दस्य निषेधार्थकत्वे विमुक्तः अमुक्त इत्येवार्थकथनान्न काचिदनुपपत्तिरित्य-नुसन्धेयम् ॥

## (मङ्गालीयम्)

**मदुक्तार्थेऽपीति ॥** समुद्रप्रविष्टनदीनां ब्रह्मप्रविष्टमुक्तानां नामरूपाभाव इत्यर्थः ॥ **वर्जनार्थताया इति ॥** 'विलये च विशेषे च वैपरीत्यादिषु स्मृतः' इति एकाक्षररत्नमालायां विशब्दस्य वैपरीत्यार्थत्वोक्तेः । मुक्तवैपरीत्यस्य मुक्त्यभावरूपत्वात् नामरूपसाहित्यस्यैव प्रतीतेरित्यर्थः ॥ **नच समासानुप-पत्तिरिति ॥** विशब्दस्य वर्जनार्थत्वे मुक्तशब्दस्य पुरुषवाचित्वात् समा-सान्तरानुपपत्तेर्बहुव्रीहेरपि नामरूपादिति पञ्चम्यन्तेनानन्वयेनानुपपत्तिरिति भावः ॥ **भावे वेति ॥** 'नपुंसके भावे क्तः' (पा.सू.३.३.११४) इत्युक्तेरिति भावः । तदेव स्पष्टयति– **ततश्चेति ॥** भावप्रधानपक्षे तु विगतं मुक्तं मुक्तत्वं तस्मादिति विग्रहो ज्ञेयः ॥ **अतिचतुरस्रमिति ॥** सर्वथाऽनुपपत्तिशून्यमि-त्यर्थः ॥ **अविहायेति योज्यमिति ॥** नञ्प्रश्लेषं कृत्वेत्यर्थः ॥ **अनन्तत्वमुच्यत इति ॥** नाशराहित्यमुच्यत इत्यर्थः ॥ **एवमेवार्थ इति ॥** 'भिद्येते चाऽसां नामरूपे' इति दार्ष्टान्तिकवाक्यस्येति शेषः । भाष्ये यत्र पूर्व इति वाक्यस्य 'यज्ञेन यज्ञमयजन्त' इति पूर्वभागेनान्वयः ॥

गच्छन्तीत्यस्याज्ञैरनवगतत्वमेवार्थ इति सूचितमिति भावः । आदित्यवदिति भाष्ये 'तत्र तस्येव' (पा.सू.५.१.११६) इति षष्ठ्यन्ताद् वतिः । यथा मेरोरुत्तर-भागे विद्यमानस्याप्यादित्यस्यास्तगमनं नाम दक्षिणदिक्स्थैरविज्ञेयत्वमेव । तथा मुक्तकलानां परमपुरुषेऽस्तगमनं संसार्यविज्ञेयत्वमित्यर्थः । समाख्ययाऽ-पीत्यपिशब्दः प्रागुक्तोपपत्तिसमुच्चायकः ॥

## (भाष्यम्)

**'नामरूपाद् विमुक्तः' इत्यनेनापि नामरूपामुक्तत्वमुच्यते। विप्रिय इत्यादि-वत् । 'नामरूपे अविहाय' इति च पूर्वत्र । 'अनन्तं वै नामानन्ता वै विश्वे देवाः' इति नामरूपयोरनन्तत्वं हि श्रुतिर्वक्ति । 'यत्र पूर्वे साध्याः सन्ति देवाः', 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः', 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता', 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु' इत्यादेश्च । अतः सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धम् ॥**

## (टीका)

ननु मदुक्तार्थेऽपि 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति मन्त्रसमाख्याऽस्ति । अत्र हि मुक्तस्य नामरूपाद्विमुक्तत्वमुच्यत इत्यत आह– **नामरूपादिति** ॥ वीत्युपसर्गस्य वर्जनार्थतायाः विप्रियादिशब्दे दर्शनादत्रापि तथात्वेन विमुक्त इत्यमुक्तत्वमुच्यत इत्यर्थः । न च समासानुपपत्तिः । मुक्तशब्दस्य भावप्रधानत्वोपपत्तेः । भावे वाऽयं क्तप्रत्ययः ततश्च विगतं मुक्तं मुक्तिरस्मादित्यतिचतुरस्रम् । एवं सति पूर्वार्धोक्तदृष्टान्तविरोधः स्यात् । तत्र 'नामरूपे विहाय' इति तद्धान-स्योक्तत्वादित्यत आह– **नामरूपे इति** ॥ पूर्वत्र पूर्वार्धेऽपि अविहायेत्येव

योज्यम् । न तु विहायेतीत्यर्थः । कुत एवं पूर्वोत्तरार्धयोजनेत्यत आह– **अनन्तमिति ॥** विश्वेदेवा इति रूपस्यानन्तत्वमुच्यते । मोक्षेऽपि भेदश्रुति-बाहुल्याच्चैवमेवार्थ इत्याह– **यत्रेति ॥** श्रुतिविरोधादेव मणीवादिवदत्राप्यप्रगृह्यत्वं वक्तव्यम् । एतत्प्रश्नप्रतिवचनार्थं प्रसङ्गादुपसंहरति– **अत इति ॥**

## (प्रकाशिका)

'विप्रियादिशब्दे दर्शनात्' इत्युपलक्षणम् । 'वि निषेधे पृथग्भावे' इत्य-नुशासनादित्यपि द्रष्टव्यम् । 'न च समासानुपपत्तिः' इत्यत्र वीत्युपसर्गस्य विगत इत्यर्थग्रहणे समासानुपपत्तिरित्यर्थः । अनुशासनबलेन विशब्दस्य निषेधार्थकत्वे विमुक्तः अमुक्त इत्येवार्थकथनान्न काचिदनुपपत्तिरित्य-नुसन्धेयम् ॥

## (मङ्गालीयम्)

**मदुक्तार्थेऽपीति ॥** समुद्रप्रविष्टनदीनां ब्रह्मप्रविष्टमुक्तानां नामरूपाभाव इत्यर्थः ॥ **वर्जनार्थताया इति ॥** 'विर्लये च विशेषे च वैपरीत्यादिषु स्मृतः' इति एकाक्षररत्नमालायां विशब्दस्य वैपरीत्यार्थत्वोक्तेः । मुक्तवैपरीत्यस्य मुक्त्यभावरूपत्वात् नामरूपसाहित्यस्यैव प्रतीतेरित्यर्थः ॥ **नच समासानुप-पत्तिरिति ॥** विशब्दस्य वर्जनार्थत्वे मुक्तशब्दस्य पुरुषवाचित्वात् समा-सान्तरानुपपत्तेर्बहुव्रीहेरपि नामरूपादिति पञ्चम्यन्तेनानन्वयेनानुपपत्तिरिति भावः ॥ **भावे वेति ॥** 'नपुंसके भावे क्तः' (पा.सू.३.३.११४) इत्युक्तेरिति भावः । तदेव स्पष्टयति– **ततश्चेति ॥** भावप्रधानपक्षे तु विगतं मुक्तं मुक्तत्वं तस्मादिति विग्रहो ज्ञेयः ॥ **अतिचतुरस्रमिति ॥** सर्वथाऽनुपपत्तिशून्यमि-त्यर्थः ॥ **अविहायेति योज्यमिति ॥** नञ्प्रश्लेषं कृत्वेत्यर्थः ॥ **अनन्तत्वमुच्यत इति ॥** नाशराहित्यमुच्यत इत्यर्थः ॥ **एवमेवार्थ इति ॥** 'भिद्येते चाऽसां नामरूपे' इति दार्ष्टान्तिकवाक्यस्येति शेषः । भाष्ये यत्र पूर्व इति वाक्यस्य 'यज्ञेन यज्ञमयजन्त' इति पूर्वभागेनान्वयः ॥

**मन्त्रार्थस्तु–** देवाः यज्ञेन ज्ञानकर्मात्मकेन यज्ञं विष्णुं 'यज्ञो विष्णु-र्देवता' इति श्रुतेः अयजन्त पूजितवन्तः । 'यज देवपूजासङ्गतिकरणदानेषु' इति धातोः । तानि ते देवाः । प्रथमानि मुख्यानि धर्माणि धारका आसन् अभवन् । नपुंसकत्वं च्छान्दसम् । ते देवाः यत्र यस्मिन् लोके पूर्वे साध्या देवाः ब्रह्मादयः सन्ति । तत्र महिमानः स्वयोग्यमाहात्म्योपेताः नाकं, कं सुखं तद्विरुद्धमकं दुःखम् । तद्विरुद्धम् अतिसुखम् । सचन्ते प्राप्नुव-न्तीति । अत्र पूर्व इति बहुवचनप्रयोगात् मुक्तानां भेदसिद्धिः । 'स तत्र' इति वाक्ये स्त्रीभिर्वा यानैर्वा युक्तः स मुक्तः तत्र वैकुण्ठादौ पर्येति परितः एति इत्युक्तेर्भेदसिद्धिः । 'सोऽश्नुते' इति वाक्येऽपि हृदयगुहायां निहितं ब्रह्म यो वेद स विपश्चिता ब्रह्मणा सह सर्वान् कामानश्नुते भुङ्क्ते । अत्रापि सहेत्युक्तेर्भेदसिद्धिः ॥

**ऋचां त्व इति मन्त्रस्यायमर्थः ॥** त्वः कश्चिद् ब्रह्मा मुक्तः सन्निति शेषः । ऋचां पोषं पुपुष्वान् पुष्टिं कुर्वन्नास्ते त्वः कश्चिद् ब्रह्मा शक्करीषु शक्करीछन्दस्कासु गायत्रं साम गायति । त्वो ब्रह्मा जातविद्यां पौरुषेयविद्यां वदति । शिष्यान् प्रतीति शेषः । त्वो ब्रह्मा यज्ञस्य विष्णोः मात्रामंशं विमिमीते जानातीति । ननु 'नामरूपे अविहाय' इति अकारप्रश्लेषोऽनुप-पन्नः । 'नामरूपे' इत्यस्य द्विवचनत्वेन 'ईदूदेद् द्विवचनं प्रगृह्यम्' (पा.सू. १.१.११) इति प्रगृह्यसञ्ज्ञकत्वात् 'प्लुतप्रगृह्या अचि नित्यम्' (पा.सू.६.१. १२५) इति प्रकृतिभावे प्राप्ते 'नामरूपे अविहाय' इत्येव निर्देशः स्यादिति चेन्न । 'सञ्ज्ञापूर्वको विधिरनित्यः' इति समाधानस्य स्पष्टत्वात् तदनुक्त्वा समाधानान्तरमाह– **श्रुतिविरोधादेवेति** ॥ नन्वेतावता ग्रन्थेनाभेद-खण्डनेन भेदोपसंहारे कर्तव्ये सर्वोत्तमत्वोपसंहारः कुतः क्रियत इत्यत आह– **प्रसङ्गादिति ॥** एतत्प्रश्नप्रतिवचनस्य विष्णोर्मुक्तप्राणादिषोडशकलाधारकत्वेन सर्वोत्तमत्वप्रतिपादनार्थं प्रवृत्तत्वेन तत्प्रतिपादनस्यैव मुख्यत्वात्, अद्वैतखण्डन-

पूर्वकं भेदसमर्थनस्य सर्वोत्तमत्वसिद्ध्यर्थमेव कृतत्वात् । तेन तस्य स्मृतत्वादिति भावः ॥

(उपनिषत्)

तदेष श्लोकः–

अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः ।
तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥

*(उपनिषदः उपसंहारः)*

**तान् होवाच । एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति । ते हि तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ४ ॥**

**(इति षष्ठप्रश्नप्रतिवचनम्)**

**इति षट्प्रश्नोपनिषत् समाप्ता**

—०—

*(शान्तिमन्त्रः)*

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितँय्यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

—०—

(भाष्यम्)

नमोनमोऽस्तु हरये प्रेष्ठप्रेष्ठतमाय ते।
परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचितं
श्रीषट्प्रश्नोपनिषद्भाष्यं
समाप्तम् ॥

—०—

(टीका)

एवं स पिप्पलादस्तेभ्यस्तत्त्वमुपदिश्य तान् भरद्वाजादीन् प्रत्युवाच किल । एतद् उक्तलक्षणं परं ब्रह्म अहमेतावदुक्तमात्रमेव वेद । नातः परं मया विदितमस्तीति । अस्मदादयस्तदेकदेशविद एव न त्वपरिमितविद इति भावः । एवमुपदिष्टास्ते मुनयस्तमाचार्यमर्चयन्तः प्रणामादिना पूजयन्त इदमूचुः । भगवन् त्वं हि नः पिता निरुपाधिकोपकारकः । कथम्? यस्त्वमस्माकम् अस्मानविद्यायाः परं पारं तारयसि अतारयः । को हि नामैव-मुपकुर्यादिति । एवमाख्यायिकां समाप्य वेदपुरुषः शिष्यशिक्षार्थमाह– **नमः परमऋषिभ्यः पिप्पलादादिभ्यः इति** ॥ द्विर्वचनमादरार्थ इति । अत एव भाष्यकारोऽप्यन्ते च भगवत्प्रणामं निबध्नाति– **नम इति** ॥

वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता ।
ध्रियतां हृदये सदये कमलामहिलेन पुरुषेण ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य
षट्प्रश्नोपनिषद्भाष्यस्य विवरणं
जयतीर्थभिक्षुविरचितं सम्पूर्णम्**

—०—

१. 'प्रेष्ठप्रेष्ठतमाय मे'

(प्रकाशिका)

षट्प्रश्नोपनिषद्भाष्यटीकार्थकथनेन मे ।
प्रीतो हयमुखः श्रीमान् कामादीन् हन्तु षड्रिपून् ॥

**इति श्रीमत्कविकुलतिलकवादिराजपूज्यचरणविरचिता षट्प्रश्नोपनिषद्भाष्यटीकाटिप्पणी समाप्ता ॥**

**(मङ्गालीयम्)**

एतदित्यस्यैव विवरणम्–**उक्तलक्षणमिति** ॥ सृष्ट्यादिकर्तृत्वादिलक्षणमित्यर्थः । एतावदेवाहमित्यत्रोक्तैवकारव्यावर्त्यकथनम्– **नातः परं मया विदितमस्तीति** ॥ 'अहमेतावद् वेद' इत्युक्ते स्वस्य समग्रज्ञानाभावेऽपि अन्येषां समग्रज्ञानमस्तीति प्राप्तावाह– **अस्मदादय इति** ॥ आदिशब्देन रमाब्रह्मादयो गृह्यन्ते । जनकत्वाभावात् कथं पितृत्वमित्यत उपचारमाश्रित्याऽह– **निरुपाधिकोपकारक इति** ॥ **अस्माकमस्मानिति** ॥ कर्मणः शेषत्वविवक्षया 'षष्ठी शेषे' (पा.सू.२.३.५०) इति षष्ठीति भावः । शेषत्वं नाम सम्बन्धमात्रम् । ननु पूर्वमनेन ज्ञानोपदेशस्य कृतत्वात् तरणस्य वर्तमानत्वाभावात् तारयसीति वर्तमानार्थकलट्प्रयोगः कथमित्यत आह– **तारयस्यतारय इति** ॥ 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा.सू.३.३.१३१) इति श्रुतौ लट्प्रयोग इति भावः । अविद्यातारकस्य कथं निरुपाधिकोपकारकत्वमित्यत आह– **को हीति** ॥ अत्र द्रव्यादिनोपकारकाणां तात्कालिकदुःखोपशामकानां बहुलमुपलम्भेऽपि आत्यन्तिकदुःखनिवर्तकानां विरलत्वादिति भावः । 'नमः परमऋषिभ्यः' इत्युत्तरवाक्यं सुकेशादीनामिति भ्रान्तिं वारयितुमाह– **एवमिति** ॥ वेदद्रष्टुः पुरुषस्य रमाब्रह्मादिरूपत्वेन पिप्पलादीनां तन्नीचत्वेन तन्नमस्कारायोग्यत्वादाह– **शिष्यशिक्षार्थमिति** ॥ शिष्याणामध्ययनाद्यन्तयोर्गुरुनमस्कारः कर्तव्य इति शिक्षार्थमित्यर्थः । **अत एवेति** ॥ भाष्यकारस्य सर्वदा विष्णुनमस्कारशीलत्वाद् ग्रन्थान्ते निबन्धनस्य शिष्यशिक्षार्थत्वादेवेति भावः ॥

**भाष्यस्थपदानामयमर्थः–** अतिशयेन प्रियं प्रेष्ठं शरीरादि। तस्मादतिशयेन प्रियं रमादि। ततोऽप्यतिशयप्रियाय प्रेष्ठप्रेष्ठतमाय। परमाश्च ते निरवधिकाश्च ते आनन्दाश्च तेषां सन्दोहः समुदायः, तेन सान्द्रं शिरःकरचरणादिरूपेण स्थितं तच्च तद् आनन्दवपुश्च। आनन्दात्मकं शरीरं तदस्यास्तीति परमानन्दवपुष्मान् तस्मै। 'तस्य प्रियमेव शिरः' (तै.उप.२.५) इत्यादिश्रुतेरिति। अन्तेऽपि जयतीर्थश्रीमच्चरणः मङ्गलं निबध्नाति– **वचनेति** ॥ कमला लक्ष्मीः। 'कमला श्रीर्हरिप्रिया' इत्यमरोक्तेः महिला पत्नी यस्य स कमलामहिलः तेन कमलामहिलेन। अन्यपदार्थस्य कमलामहिलत्वं कुत इत्यत उक्तम्– पुरुषेण पूर्णषड्गुणत्वात् परमपुरुषेणेति। भिक्षोर्मालानिर्माणे नाधिकार इत्यत उक्तम्– **वचनेति** ॥ वचनानि प्रसूनानीव वचनान्येव प्रसूनानीति वा समासः। कमलापतेरेतादृशमाला-धारणेन किं प्रयोजनमित्यत उक्तम्–**सदय इति** ॥ भक्तानुकम्पयैव धारणमिति भावः ॥

षट्प्रश्नोपनिषद्भाष्यटीकाव्याख्यानमात्रतः।
इन्दिरारमणः प्रीतिं यातु मध्वार्यहृद्गतः ॥

**इति षष्ठप्रश्नप्रतिवचनम् ॥**

**॥ इति श्रीमङ्गालधर्माचार्येण रचितं**
**षट्प्रश्नभाष्यटीकाविवरणं समाप्तम् ॥**

—०—

श्रीराघवेन्द्रयतिविरचितः

# ईशावास्योपनिषत्खण्डार्थः

श्रीप्राणपतिमानम्य पूर्णबोधादिदेशिकान् ।
ईशावास्योपनिषदः करिष्याम्यर्थसङ्ग्रहम् ॥

अस्या उपनिषदः स्वायम्भुवो मुनुर्ऋषिः । यज्ञनामा हरिर्देवता । अनुष्टुबादि यथायोग्यं छन्दो ज्ञेयम् । 'अनेजत्' इत्यादिना तत्त्वं विवक्षुरुपदिष्टं तत्वमधिकारिण एव हृद्यवतिष्ठते नान्यस्येति, एतदुपनिषदधिकारसिद्ध्यर्थं विच्छिन्नविषयतृष्णत्वं तावदाद्येन मन्त्रेण सयुक्तिकं विधत्ते- **ईशेति** ॥

**ओ३म् ॥ ईशावास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ १ ॥**

यत् किञ्च जगदिदं तत्सर्वं प्रवृत्त्यर्थम् आत्मनि ईशावास्यम् आवासमर्हतीत्यावास्यम्, ईशस्याऽवास्यम् ईशावास्यम्, ईशानुप्रविष्टमित्यर्थः । **'तदेवानुप्राविशत्'** इत्यादेः । अतोऽस्वतन्त्रमिति भावः । किञ्च जगत्यां प्रकृताविदं सर्वमाश्रितम् । सा चेशायत्ता । अतोऽप्यस्वतन्त्रम् । ईश एव स्वतन्त्रः । तेन कारणेन तेन ईश्वरेण त्यक्तेन दत्तेन वित्तेन, यदृच्छालब्धेनेति यावत्, भुञ्जीथाः भोगं कुर्याः । कस्यस्वित् कस्यापि राजादेः सकाशाद् धनं मा गृधः नाऽकाङ्क्षेथाः । ईशादन्यस्यास्वातन्त्र्येण तस्य दाने सामर्थ्याभावादीशादत्तेनैव वर्तेतेति भावः ॥ १ ॥

तृष्णाविच्छेदवत् स्वोचितकर्मानुष्ठानमपि ज्ञानार्थिनामावश्यकमित्याह– **कुर्वन्नेवेति** ॥

**कुर्वन्नेवेह कर्मांणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥**

शतं समाः शतं वर्षाणि । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । इह मानुषादिजन्मनि यावज्जिजीविषेत् जीवितुमिच्छेत् तावत् कर्माणि कुर्वन्नेव । आमरणं भगवत्पूजात्मकानि असङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः? एवं कर्माणि कुर्वति नरे मनुष्य-मात्रेऽपि त्वयि कर्म पापं न लिप्यते । स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि न प्रागुत्तराणि पापानि बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणाद् अन्यथा अकरणे कर्म पापं न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ततश्चासौ ज्ञाने नाधिक्रियते । अतश्च कर्माणि कुर्यादिति । पुरुषार्थनये 'नियमाच्च' (ब्र.सू.३–४–७) इति सूत्रभाष्यादौ नरे ज्ञानिन्यपि त्वयि कर्म न लिप्यत इति नास्तीत्यपरोक्षज्ञानिनोऽपि कर्माकरणे मुक्तावानन्दह्रासरूप-पापकर्मलेपोऽस्त्येवेति ज्ञानिपरतया मन्त्रो व्याख्यातः ॥ २ ॥

एवं प्राप्ताधिकारं प्रति परमात्मतत्त्वबुभुत्साजननाय विपरीतज्ञानिनो निन्दामाह– **असुर्या इति** ॥

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥**

सुष्ठु रमणं सुर्यम्, सुपूर्वस्य रमतेड्यप्रत्ययः, तद्विरुद्धमसुर्यं महादुःखम्, असुर्यमेष्वस्तीत्यसुर्याः । अर्शआद्यच्प्रत्ययान्तोऽयम् । महादुःखवत्त्वा-दसुर्याः । असुरप्राप्यत्वाद्वाऽसुर्याः । अन्धेन तमसा अन्धयतीति व्युत्पत्त्या

निबिडान्धकारेणेत्यर्थः । आवृतास्ते प्रसिद्धाः, य इति शेषः । लोकास्तान् प्रेत्य मृत्वाऽभिगच्छन्ति । ते के ? इत्यत उक्तम्– **य इति** ।। आत्महनः यथावदात्मानमज्ञात्वा वैपरीत्येन जानन्ते ये केचन वर्तन्ते ते सर्वेऽपि अभिगच्छन्तीति, नाम निश्चितमेतदित्यर्थः ।। ३ ।।

इदानीं परमात्मतत्त्वमुपदिशति अनेजदित्यादिमन्त्रद्वयेन ।

**अनेजदेकं मनसो जवीयो**
**नैनद् देवा आप्नुवन् पूर्वमर्षत् ।**
**तद् धावतोऽन्यानत्येति तिष्ठत्**
**तस्मिन्नपो मातरिश्वा दधाति ।। ४ ।।**

**तदेजति तन्नेजति तद् दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ।। ५ ।।**

तत् परमात्मस्वरूपम् । अनेजत्, एजृ कम्पते, अकम्पमानं निर्भयत्वादिति भावः । एकं प्रधानम्, मनसोऽपि जवीयः वेगवत्तरम्, एतत् परब्रह्मस्वरूपं देवा नाऽप्नुवन् साकल्येन न व्यजानन् । ब्रह्म तु पूर्वम् अनादिकालं, स्वभावत इति यावत्, अर्षत्, ऋष ज्ञाने, सर्वं व्यजानात् । आडागमाभावश्छान्दसः । तद् ब्रह्म तिष्ठत् विद्यमानमेव सद् धावतो वेगेन गच्छतोऽन्यान् जनानत्येति अतिक्रम्य वर्तते । अचिन्त्यशक्तित्वात् सर्वगतत्वाच्चेति भावः । तस्मिन् हरौ मातरिश्वा मुख्यवायुः आ समन्तात् पालयन्तीति व्युत्पत्त्या अपः कर्माणि, स्वप्रेरणया प्राणिभिः क्रियमाणानि पुण्यकर्माणि दधाति समर्पयतीति ।। ४ ।।

तदिति पञ्चम्यर्थेऽव्ययम् । जगदिति शेषः । तत् तस्मात् प्रकृताद्धरेः जगदेजति बिभेति । तद्ब्रह्म नेजति न बिभेति, स्वतन्त्रत्वादिति भावः । तदु तदेव ब्रह्म दूरे, तदु तदेवान्तिके समीपे च, सर्वगतत्वादिति भावः ।

तृष्णाविच्छेदवत् स्वोचितकर्मानुष्ठानमपि ज्ञानार्थिनामावश्यकमित्याह– **कुर्वन्नेवेति** ॥

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥**

शतं समाः शतं वर्षाणि । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । इह मानुषादिजन्मनि यावज्जिजीविषेत् जीवितुमिच्छेत् तावत् कर्माणि कुर्वन्नेव । आमरणं भगवत्पूजात्मकानि असङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यादिति यावत् । कुतः? एवं कर्माणि कुर्वति नरे मनुष्यमात्रेऽपि त्वयि कर्म पापं न लिप्यते । स्वोचितेनासङ्कल्पितफलेन कर्मणा भगवत्पूजां कुर्वन्तमल्पाधिकारिणमपि न प्रागुत्तराणि पापानि बाधन्ते । ततश्च ज्ञानाधिकारी स भवतीति यावत् । इतः कर्मकरणाद् अन्यथा अकरणे कर्म पापं न लिप्यत इति नास्ति । भगवत्पूजामकुर्वन्तं पापानि बाधन्त एव । ततश्चासौ ज्ञाने नाधिक्रियते । अतश्च कर्माणि कुर्यादिति । पुरुषार्थनये 'नियमाच्च' (ब्र.सू.३–४–७) इति सूत्रभाष्यादौ नरे ज्ञानिन्यपि त्वयि कर्म न लिप्यत इति नास्तीत्यपरोक्षज्ञानिनोऽपि कर्माकरणे मुक्तावानन्दह्रासरूपपापकर्मलेपोऽस्त्येवेति ज्ञानिपरतया मन्त्रो व्याख्यातः ॥ २ ॥

एवं प्राप्ताधिकारं प्रति परमात्मतत्त्वबुभुत्साजननाय विपरीतज्ञानिनो निन्दामाह– **असुर्या इति** ॥

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चाऽत्महनो जनाः ॥ ३ ॥**

सुष्ठु रमणं सुर्यम्, सुपूर्वस्य रमतेर्ड्यप्रत्ययः, तद्विरुद्धमसुर्यं महादुःखम्, असुर्यमेष्वस्तीत्यसुर्याः । अर्शआद्यच्प्रत्ययान्तोऽयम् । महादुःखवत्त्वादसुर्याः । असुरप्राप्यत्वाद्वाऽसुर्याः । अन्धेन तमसा अन्धयतीति व्युत्पत्त्या

निबिडान्धकारेणेत्यर्थः । आवृतास्ते प्रसिद्धाः, य इति शेषः । लोकास्तान् प्रेत्य मृत्वाऽभिगच्छन्ति । ते के ? इत्यत उक्तम्– **य इति** ।। आत्महनः यथावदात्मानमज्ञात्वा वैपरीत्येन जानन्ते ये केचन वर्तन्ते ते सर्वेऽपि अभिगच्छन्तीति, नाम निश्चितमेतदित्यर्थः ।। ३ ।।

इदानीं परमात्मतत्त्वमुपदिशति अनेजदित्यादिमन्त्रद्वयेन ।

**अनेजदेकं मनसो जवीयो**
**नैनद् देवा आप्नुवन् पूर्वमर्षत् ।**
**तद् धावतोऽन्यानत्येति तिष्ठत्**
**तस्मिन्नपो मातरिश्वा दधाति** ।। ४ ।।

**तदेजति तन्नेजति तद् दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः** ।। ५ ।।

तत् परमात्मस्वरूपम् । अनेजत्, एजृ कम्पते, अकम्पमानं निर्भयत्वादिति भावः । एकं प्रधानम्, मनसोऽपि जवीयः वेगवत्तरम्, एतत् परब्रह्मस्वरूपं देवा नाऽप्नुवन् साकल्येन न व्यजानन् । ब्रह्म तु पूर्वम् अनादिकालं, स्वभावत इति यावत्, अर्षत्, ऋष ज्ञाने, सर्वं व्यजानात् । आडागमाभावश्छान्दसः । तद् ब्रह्म तिष्ठत् विद्यमानमेव सद् धावतो वेगेन गच्छतोऽन्यान् जनानत्येति अतिक्रम्य वर्तते। अचिन्त्यशक्तित्वात् सर्वगतत्वाच्चेति भावः । तस्मिन् हरौ मातरिश्वा मुख्यवायुः आ समन्तात् पालयन्तीति व्युत्पत्त्या अपः कर्माणि, स्वप्रेरणया प्राणिभिः क्रियमाणानि पुण्यकर्माणि दधाति समर्पयतीति ।। ४ ।।

तदिति पञ्चम्यर्थेऽव्ययम् । जगदिति शेषः । तत् तस्मात् प्रकृताद्धरेः जगदेजति बिभेति । तद्ब्रह्म नेजति न बिभेति, स्वतन्त्रत्वादिति भावः । तदु तदेव ब्रह्म दूरे, तदु तदेवान्तिके समीपे च, सर्वगतत्वादिति भावः ।

तद्ब्रह्म अस्य प्रमितस्य सर्वस्यान्तः, तदु तदेव सर्वस्य बाह्यतः बहिरपि, सर्वव्यापित्वादिति भावः ॥ ५ ॥

'तद् दूरे' इत्यादौ हरेः सर्वभूताश्रयतया सर्वभूतगतत्वमुक्तम् । तज्ज्ञानस्य फलमाह– **यस्त्विति ॥**

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।**
**सर्वभूतेषु चाऽत्मानं ततो न विजुगुप्सते ॥ ६ ॥**

सर्वाणि भूतानि चिदचिदात्मकं सर्वं जगद् आत्मन्येव परमात्माश्रयत्वेनैवास्तीति यस्त्वनु निःसन्देहं पश्यति जानाति । यद्वा आश्रितत्वक्रमानुरोधेनेत्यनुशब्दार्थः । सर्वभूतेषु चाऽत्मानं सर्वभूतेषु नियन्तृतया स्थितं हरिं योऽनुपश्यतीत्यन्वयः, ततः परमात्मस्वरूपज्ञानित्वाद्धेतोर्न विजुगुप्सते, स्वात्मानं गोप्तुं नेच्छति, भयाभावादिति भावः ॥ ६ ॥

एतमेवार्थं विवृणोति– **यस्मिन्निति ॥**

**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः ।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

यस्मिन्नात्मनि सर्वाणि भूतानि, तिष्ठन्तीति शेषः, स आत्मैव तत्र सर्वभूतेष्वभूद् अनादितो वर्तत इत्यर्थः । एवमिति शेषः । एवं विजानतः सर्वाधारतया सर्वेषु भूतेषु आत्मानं विशेषेण जानतः, सर्वत्र स्थितस्य हरेरेकत्वं चानुपश्यतः जानतः को मोहः? कः शोकः? न कोऽपीत्यर्थः ॥ ७ ॥

भगवज्ज्ञानमात्रेण कुतो मोहाद्यभाव इत्यत्र आह– **स इति ॥**

**स पर्यगाच्छुक्रमकायमव्रण-**
**मस्नाविरꣳ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयम्भू-**
**र्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

स ज्ञानी पर्यगात् प्राप्तोऽभूत्, ब्रह्मेति शेषः । तावता कथं शोकाद्यभाव इत्यतस्तद्विशिनष्टि– **शुक्रमित्यादिना** ॥ शुचं शोकं रहति त्यजतीति शुक्रं शोकरहितम् । अकायं लिङ्गदेहरहितम् । अव्रणं व्रण सञ्चूर्णन इत्यतः स्तोको व्रणः, कालेनास्तोकत्वादव्रणं नित्यं, गुणैरस्तोकत्वादव्रणं पूर्णमित्यर्थः । अस्नाविरं, स्नावोपलक्षितसप्तधातुमयस्थूलदेहरहितम् । शुद्धं पावित्र्यहेतुम् । शुद्धत्वादेवापापविद्धम् । तत एव हेतोः पापमूलस्थूलसूक्ष्मशरीरहीनम् । तत एव देहनिमित्तशोकादिशून्यमिति शुक्रमित्युच्यते । एवम्भूतं हरिं पर्यगाद् यतोऽतः कारणाच्छोकाद्यभावः । एवम्भूतहरिसारूप्यलक्षणां तद्गतिं गतस्य शोकाद्यभावो युक्त इति भावः । नन्वेवमशरीरश्चेज्जगत्स्रष्टा नेति प्राप्तम् । लोके सदेहस्यैव स्रष्टृतादर्शनादित्याशङ्कां निराह– **कविरिति** ॥ कविः सर्वज्ञः मनीषी प्रकृत्यादिसर्वमनसामीशितृत्वान्मनीषी । एतेन ज्ञानाविनाभूतदेह-वानिति लभ्यते । स चाप्राकृत एवेति प्रागुक्तः तन्निमित्तशोकाद्यभावो युक्तः । प्राकृतस्यैव तद्धेतुत्वात् । परिभवति सर्वं वशीकरोतीति परिभूः, सर्वतो वर इत्यर्थः । स्वयमेव परमनपेक्ष्य भवतीति स्वयम्भूः । सदाऽनन्याश्रयः, शाश्वतीभ्यः समाभ्य इति पञ्चमी सप्तम्यर्थे । अनाद्यनन्तसंवत्सरेषु याथातथ्यतो याथार्थ्येन वर्तमानानर्थान् व्यदधान्निर्ममे । याथातथ्यत इत्युक्त्या ब्रह्मविवर्तत्वादर्थानां न तत्सृष्टौ देहाद्यपेक्षेति चोद्यं निरस्तम् । 'शाश्वतीभ्यः समाभ्यः' इत्युक्त्या सदा देहहीनस्यापि सृष्टिसमये देहोपादानेनास्तु सृष्टिरिति चोद्यं निरस्तं ध्येयम् । सृष्ट्यादिप्रवाहस्यानाद्यनन्तकालीनत्वादिति ॥ ८ ॥

विजानतोऽनुपश्यत इत्यत्र यथावत्परमात्मज्ञानं मुक्तिहेतुरित्युक्तम् । तज्ज्ञानं मिथ्याज्ञाननिन्दासमुच्चितमेव मुक्तिहेतुर्न केवलमित्याह– **अन्धन्तम** इत्यादिमन्त्रत्रयेण–

**अन्धःतमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूयं इव ते तमो य उं विद्यायांꣳ रताः ॥ ९ ॥**

अन्यदेवाऽहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥ १० ॥

विद्यां चाविद्यां च यस्तद् वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥

तत्र तावद्यथावज्ज्ञानस्येवान्यथाज्ञाननिन्दनस्याऽवश्यकत्वोपपादनायान्यथाज्ञानस्य प्रागुक्तमसुर्यलोकसाधनत्वमनूद्यान्यथाज्ञानानिन्दनस्य ततोऽधिकानर्थहेतुत्वमाद्येन मन्त्रेणोच्यते । अत्राविद्याशब्देन विद्याविरोधिमिथ्याज्ञानवाचिना तद्विषयोऽन्यथाप्रकारो ग्राह्यः । तथा चाविद्यां यथावदाकारादन्यथाकारमुपासते ध्यायन्ति ये तेऽन्धन्तमः प्रविशन्तीत्युक्तानुवादः । ये विद्यायाम् उ तत्त्वज्ञान एव रताः, मिथ्याज्ञानानिन्दका इत्येवकारार्थः, ते ततो मिथ्याज्ञानिप्राप्यतमसो भूयः अधिकं तमः, इवशब्दस्य व्यक्तमित्यर्थः, असंशयमिति यावत्, प्रविशन्तीत्यन्वयः ॥ ९ ॥

न केवलं विपक्षेऽनर्थप्राप्तेरेव सम्यग्ज्ञानासम्यग्ज्ञाननिन्दनयोः कार्यत्वं, किन्तु मोक्षफलस्यांशतः उभयसाध्यत्वादपि द्वयोः कार्यत्वमित्याह– **अन्यदेवेति** ॥ विद्यया तत्त्वज्ञानेनान्यदेव मोक्षैकदेशरूपं फलं प्राप्यमाहुर्वृद्धाः । अविद्यया अन्यथाज्ञाननिन्दया चेति यावत्, अन्यदेव मोक्षैकदेशलक्षणं फलं प्राप्यमाहुर्वृद्धाः इति इत्येवं वृद्धवचनसम्मतियुक्तं वचनं धीराणां धीमतां सकाशात् शुश्रुम श्रुतवन्तः स्म । ये धीरा नोऽस्माकं मोक्षसाधनं विचचक्षिरे, व्याचचक्षिरे । अतो द्वयमप्यावश्यकमिति भावः ॥ १० ॥

एतन्मन्त्रार्थमेव व्यक्तमाह – **विद्यां चेति** ॥ विद्यां विष्णुयाथात्म्यज्ञानम् । अविद्यां मिथ्याज्ञाननिन्दनम् । चशब्दावितरेतरयोगे । सह एकपुरुषार्थहेतुत्वेन । तदुभयं यो वेद स इति शेषः । अविद्यया अन्यथाज्ञाननिन्दया मृत्युं दुःखाज्ञानाद्यनिष्टं तीर्त्वा, विद्यया विष्णुयाथात्म्यज्ञानेन अमृतम् आनन्दानुभवलक्षणं मोक्षैकदेशम् अश्नुते प्राप्नोति । अनिष्टनिवृत्तेर्मिथ्याज्ञान-

निन्दनसामर्थ्यलभ्यत्वादानन्दानुभवस्य च तत्त्वज्ञानसामर्थ्यलभ्यत्वाद् दलद्वययुक्तमोक्षप्राप्तये द्वयमप्यावश्यकमेवेत्युक्तं भवति ॥ ११ ॥

मिथ्याज्ञानमनर्थहेतुः तत्त्वज्ञानमेव मुक्तिहेतुरिति प्रागुक्तस्य विवरणम् **अन्धन्तम** इत्युत्तरमन्त्रत्रयेण क्रियते–

**अन्धं तमः प्र विशन्ति येऽसंम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः ॥ १२ ॥**

**अन्यदेवाऽहुः सम्भवादन्यदाहुरसम्भवात् ।**
**इति शुश्रुम धीराणां येनस्तद् विचचक्षिरे ॥ १३ ॥**

**सम्भूतिं च विनाशं च यस्तद् वेदोभयꣳ सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥१४ ॥**

तत्राऽद्यस्यायमर्थः । असम्भूतिं जगत्सृष्टेरकर्तारं, सृष्टिकर्ता नेत्युपासत इत्यर्थः । सम्भूत्याम्, उशब्द एवार्थोऽनेनान्वेति सम्भूत्याम् उ सृष्टिकर्तृत्व एव रताः । भगवान् सृष्टिकर्तैव न संहारकर्तेत्युपासत इत्यर्थः । प्राग्वदेवावशिष्टस्यार्थो ध्येयः ॥ १२ ॥

न केवलं विपक्षेऽनर्थसत्त्वादेव सृष्टिसंहारयोः कर्तृत्वं हरेर्ज्ञेयं, किन्तु दलद्वययुक्तमोक्षोपयोगित्वादपीत्याह– **अन्यदेवेति** ॥ सम्भवात् हरेः सृष्टिकर्तृत्वज्ञानात्, असम्भवात् संहारकर्तृत्वज्ञानादित्यर्थः । शिष्टं प्राग्वज्ज्ञेयम् ॥ १३ ॥

एतन्मन्त्रार्थमेव व्यक्तमाह– **सम्भूतिं चेति** ॥ सम्भूतिं सृष्टिकर्तृत्वं, विनाशं जगत्संहारकर्तृत्वम् । शिष्टं प्राग्वत् । सृष्ट्युपलक्षितानन्तगुणात्मकत्वज्ञानादानन्दानुभवः, विनाशकर्तृत्वज्ञानादखिलक्लेशनिवृत्तिरित्युभयरूपमोक्षायोभयज्ञानमावश्यकमिति भावः ॥ १४ ॥

एवमाद्यमन्त्रद्वयेनोक्तदिशा प्राप्ताधिकारं शिष्यं प्रति 'अनेजदेकम्' इत्यादिना भगवत्स्वरूपं निरूप्य 'यस्तु सर्वाणि' इत्यादिसार्धमन्त्रद्वयेन तत्साक्षात्कारो मोक्षहेतुरित्युक्तम् । स च साक्षात्कारो न श्रवणादिमात्रेण, किन्त्वीश्वरप्रसादेन भवतीत्यतोऽनुष्ठितश्रवणादिकेनापि तत्साक्षात्कारार्थं भगवत्प्रार्थनं कार्यमिति भावेन प्रार्थनाप्रकारमाह– **हिरण्मयेत्यादिना स्मरेत्यन्तेन** ग्रन्थेन ॥

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत् त्वं पूषन्नपा वृणु सत्यधर्माय दृष्टये ॥ १५ ॥**

हिरण्मयमिव हिरण्मयं ज्योतिर्मयं, पिबति रसान् त्रायते जगदिति च पात्रं, तेन हिरण्मयेन पात्रेण सूर्यमण्डलेन सत्यस्य सद्गुणपूर्णस्य सूर्यमण्डलस्थस्य तव मुखं, उपलक्षणं चैतत्, वपुः सर्वदाऽपिहितमस्ति । हे पूषन् पूर्ण, पुष पुष्टाविति धातोः, तद्वपुः त्वं सत्यधर्माय सत्यं भगवन्तं हृदये धारयतीति व्युत्पत्त्या त्वद्ध्यानादिमते भक्ताय मह्यं दृष्टये मम त्वद्दर्शनार्थम् अपावृणु अपगतावरणं कुरु ॥ १५ ॥

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजो यत् ते रूपं कल्याणतमं तत् ते पश्यामि ॥ १६ ॥**

हे पूषन् पूर्ण, एकर्षे सर्वविषयकत्वादिना प्रधानज्ञानवत्त्वहेतुना एकर्षिशब्दवाच्यः सन् एकर्ष्याख्यमुनिस्थ, यम सर्वनियामकतया यमशब्दवाच्यः सन् यमान्तर्गत, सूरिभिः प्राप्यत्वहेतुना सूर्यशब्दवाच्यः सन् सूर्यान्तर्गत, प्राजापत्य प्रजापतेर्हिरण्यगर्भस्य विशेषेण प्राप्यतया प्राजापत्यशब्दवाच्य, रश्मीन् मदीयं स्वरूपज्ञानं व्यूह विस्तारय । तेजो बाह्यज्ञानं च समूह विस्तारयेत्यर्थः । तेज इति स्वरूपज्ञानं रश्मीनिति बाह्यज्ञानं वा । तथा च यत् ते रूपं कल्याणतमं तद्रूपं ते प्रसादादहं पश्यामीति । आदित्य-

रश्म्यादीनाम् अपगमनादिना तदन्तर्गतप्रतीत्यसम्भवादादित्यरश्म्यादिविषयं व्याख्यानमयुक्तम् ॥ १६ ॥

सर्वजीवोत्तममुख्यवायुरूपप्रतीकस्थित्यादिज्ञानमावश्यकमिति भावेन तत्स्थित्यादिकमाह– **य इति** ॥

**योऽसावसौ पुरुषः सोऽहमस्मि ॥ १७ ॥**

योऽसौ प्रसिद्धः, असौ मुख्यप्राणे, स्थित इति शेषः, सोऽहेयत्त्वादहमित्युक्तः। सदाऽस्तित्वेन मेयत्वहेतुना अस्मीति तिङ्प्रतिरूपकाव्ययपदवाच्यः, तं पश्यामीत्यर्थः। यद्वा, असावसाविति द्वयमपि प्रथमान्तमेव। वीप्सायां द्विरुक्तिः। पूर्वं पूषादिशब्दैरुपलक्षणतया प्राणाद्यनेकप्रतीकस्थत्वं विष्णोरुक्तम्। तत्र भेदशङ्कायां योऽसाविति वाक्यमुच्यते। योऽसावसौ पुरुषः प्राणाद्य(पूषाद्य)नेकप्रतीकेषु स्थितः सोऽहमस्मि, मदन्तर्यामितयाऽस्तीत्यर्थः। सर्वप्रतीकेषु मयि च स्थित एक एवेति फलितोऽर्थः। अहम्पदस्य प्रत्यगात्मजीवान्तर्यामिणि मुख्यतया तत्समभिव्याहारादस्मीत्युत्तमपुरुषप्रयोगोऽपि साधुरेवेति ज्ञेयम् ॥ १७ ॥

ननु परमेश्वरस्य यत्कल्याणरूपत्वमुक्तं, यच्च सोऽहमस्मीति जीवान्तर्गतस्य नित्यास्तित्वमुक्तं तन्न युक्तम्। देहनाशस्य प्रत्यक्षादिसिद्धतया तदन्तर्गतस्य जीवस्येव मरणाद्यवश्यम्भावादित्याशङ्कां कैमुत्येन निराह – **वायुरिति** ॥

**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥ १८ ॥**

**ओ३म् क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १९ ॥**

यद्यपीदं शरीरं भस्मान्तं तथाऽपि तदन्तर्गतस्य हरेर्न मरणादिदोषप्रसक्तिः। कुतः ? अनिलं अः ब्रह्मैव निलं निलयनम् आश्रयो यस्य सोऽनिलः परमेश्वराश्रितो वायुरपि यदाऽमृतः नित्यः अथ तदा परमेश्वरोऽमृत इति

किमु वक्तव्यमित्यर्थः । अनिलामृतपदयोः लिङ्गव्यत्ययो ज्ञेयः । वायोरमृतत्वं नित्यज्ञानत्वेन ज्ञेयम् । 'अतिरोहितविज्ञानाद् वायुरप्यमृतः स्मृतः' इत्युक्तेः । 'एतेन मातरिश्वा व्याख्यातः' (ब्र.सू.२–३–८) इत्यत्र भाष्यादौ तथा निर्णयाच्चेति ॥ १८ ॥

अथ प्रणवप्रतीकं प्रार्थयते– **ओमिति** ॥ ओतत्वादिगुणयुक्ततया ओमित्युच्यमान, क्रतो ज्ञानरूप हरे, मामिति शेषः, स्मर अनुगृहाण । कृतं मदीयं ध्यानादिकं कर्म स्मर । ध्यानादिना मया कृतेन मय्यनुग्रहोन्मुखो भवेत्यर्थः । नित्यज्ञप्तिस्वरूपस्य संस्कारजन्यस्मरणायोगात् । अभ्यासस्तात्पर्यार्थः ॥ १९ ॥

कृतश्रवणादिना पुरुषेण साक्षात्कारार्थं हरेः प्रार्थनं कार्यमित्यतस्तत्-प्रकारं हिरण्मयेनेत्यादिनोक्त्वाऽधुना प्राप्तसाक्षात्कारेणापि पुंसा मोक्षार्थं भगवदुपासनं कार्यमिति भावेन अग्निप्रतीकस्थभगवत्प्रार्थनाप्रकारमाह– **अग्न इति** ॥

**अग्ने नय सुपथा राये अस्मान्**
**विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो**
**भूयिष्ठां ते नम उक्तिं विधेम** ॥ २० ॥

अङ्गं देहं, गुणभूतं जगद्वा नयति प्रेरयतीति व्युत्पत्त्या अग्निपदमुख्यार्थः सन्नग्नौ विद्यमान हरे, अस्मान् सुपथा पुनरावृत्तिहीनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय । कुतः? हे देव अस्मदनुष्ठितानि विश्वानि सम्पूर्णानि, मोक्षाय पर्याप्तानीति यावत्, वयुनानि ज्ञानानि भवान् विद्वान् वेद । प्रारब्ध-कर्मयुक्तस्य कथं मोक्ष इत्यत उक्तम्– **युयोधीति** ॥ अस्मानित्यत्राप्य-नुषज्यते । अस्मान् जुहुराणम् अल्पान् कुर्वत्, संसारे परिवर्तयदिति यावत्,

एनः पापम्, अनिष्टं कर्मेति यावत्, अस्मत् अस्मत्तः युयोधि वियोजय । युयु वियोग इति धातोर्लुग्विकरणम् । वयं तु ते तुभ्यं भूयिष्ठां भक्तिज्ञानोपेतां नमउक्तिं नम इत्युक्तिं विधेम कुर्मः, न तु तत्प्रतिकर्तुं शक्नुम इति ॥ २० ॥

**समस्तगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥**
**ईशावस्योपनिषदो भाष्याद्युक्तार्थसङ्ग्रहः ।**
**राघवेन्द्रेण यतिना कृतोऽयं शिष्ययाञ्चया ॥**

**इति श्रीराघवेन्द्रयतिविरचितः**
**श्रीमदीशावास्योपनिषत्खण्डार्थः**
**सम्पूर्णः ॥**

—०—

(शान्तिमन्त्रः)

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदम्। माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत्। अनिराकरणमस्त्वनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिश्शान्तिश्शान्तिः ॥

### श्रीराघवेन्द्रयतिविरचितः

# तलवकारोपनिषत्खण्डार्थः

अनन्तगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय [१]भक्ताभीष्टप्रदायिने ॥

अस्या उपनिषदो विरिञ्चिशिवसंवादरूपत्वात्तावत्र ऋषी ज्ञेयौ । देवता तु ब्रह्मशब्दोदितो विष्णुः । छन्दस्त्वक्षरपरिगणनया त्रिष्टुबादि यथायोग्यं ज्ञेयम् । जानन्नप्युमापतिर्विशेषज्ञानार्थं वा, ज्ञातस्य दार्ढ्यार्थं वा, लोकानुग्रहार्थं वा सर्वेन्द्रियप्रेरकं पृच्छति ब्रह्माणं– **केनेत्यादिना** ॥

॥ हरिः ओ३म् ॥

**केनेषितं पतति प्रेषितं मनः**
**केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषितां वाचमिमां वदन्ति**
**चक्षुः श्रोत्रं क उ देवो युनक्ति** ॥ १ ॥

इषितम् इष्टं साध्वसाधु वा प्रति मनः केन देवेन प्रेषितं प्रेरितं सत् पतति गच्छति । करणत्वादवश्यं केनचित् प्रेरितमिति वाच्यम् । न तावज्जीवेन, निगृह्णतोऽपि विषयान् प्रति पतनात् । अतो बलवता देवेनैव प्रेरितमिति वाच्यम् । स क इति प्रश्नाभिप्रायः । एवमग्रेऽपि । इषित-मितीडागमः छान्दसः । मुख्यवायुरस्तु मनःप्रेरक इत्यत आह– **केनेति** ॥

---

१. '**भक्तेभ्योऽभीष्टदायिने**' इति मुद्रितपुस्तकस्थः पाठः ।

प्रथमः सर्वजीवोत्तमः, प्राणो मुख्यवायुरपि केन युक्तः नियुक्तः प्रेरितस्सन् प्रैति याति, स्वं व्यापारं करोतीत्यर्थः । तस्यापि पारतन्त्र्यात् न मनःप्रेरको [१]वायुरपीति भावः । इमां लौकिकीं वैदिकीं वा वाचं केन इषितां प्रेरितां वदन्ति जना इत्यर्थः । चक्षुःश्रोत्रमिति प्राण्यङ्गत्वादेकवद्भावः । उ सम्बुद्धिः । भो ब्रह्मन् को देवो युनक्ति नियुङ्क्ते कः प्रेरयतीत्यर्थः ॥ १ ॥

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्**
**वाचो ह वाचं स उ प्राणस्य प्राणः ।**
**चक्षुषश्चक्षुरतिमुच्य धीराः**
**प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥**

इति शिवेन पृष्टो ब्रह्मोवाचेति योज्यम् । यत् यः श्रोत्रस्य श्रोत्रं श्रवणशक्तिप्रदः, मनसो मनः मननशक्तिप्रदः वाचो वागिन्द्रियस्य वाचं वागुच्चारणशक्तिप्रदः, प्राणस्य मुख्यवायोः प्राणः प्रणेता, चक्षुषः चक्षुः दर्शनशक्तिप्रदः, श्रोत्रादेर्नियन्ता यस्त्वया पृष्टः स इत्यन्वेति । स उ स एव, प्रसिद्धो विष्णुरेवेत्यर्थः । स इत्यस्याऽवृत्तिर्वा । तदाह भाष्ये 'यः प्राणस्य चक्षुरादेश्च प्रणेता स विष्णुरिति धार्यताम्' इति । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इत्यादिकाण्वश्रुतेः, 'प्राणादयो वाक्यशेषात्' (ब्र.सू.१–४–१३) इति सूत्रात् तत्र प्राणादिनियन्तुर्विष्णुत्वनिर्णयादिति भावः । श्रोत्रादिप्रेरकज्ञानिनः फलमुच्यते– **अतिमुच्येति** ॥ धीरा धीमन्तः, श्रोत्रादिप्रेरकत्वं विजानन्तः अस्माल्लोकाद्भौतिकदेहात् प्रेत्य निर्गत्य, मृत्वेति यावत्, अतिमुच्य लिङ्गबन्धं हित्वा अमृता मुक्ता भवन्तीति ॥ २ ॥

कीदृशं हरेः प्रेरकत्वादिमाहात्म्यं यज्ज्ञानादमृतत्वं स्यादित्यतोऽपरिमितत्वात्तन्महिम्नो न साकल्येन ज्ञानं सम्भवतीति भावेनाऽह– **न तत्रेति** ॥

---

१. **'वायुरिति'** मुद्रितपुस्तकस्थः पाठः ।

**न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः ।**
**न विद्म न विजानीमो यथैतदनुशिष्यात् ॥ ३ ॥**

तत्र हरेर्विश्वशासनादिमाहात्म्ये चक्षुरादीन्द्रियं न गच्छति अभिमानिन-यन्यायेन चक्षुराद्यभिमान्युपलक्षिताः सर्वे देवा अपि न जानन्ति (सामान्याकारेणापि) कार्त्स्न्येन । अतो यथा येन प्रकारेण एतत् प्राणादिजगद् अनुशिष्यात् प्रेरयेत् तं प्रकारं वयं न विद्म न विद्मः । विसर्गलोपश्छान्दसः । अडागमाभावेन [१]लङि वा रूपम् । सामान्याकारज्ञानमेव नास्ति । कुतो विशेषज्ञानमिति भावेनाऽह– **न विजानीम इति ॥** तदाह भाष्ये 'अगम्यः सर्वदेवैश्च परिपूर्णत्वहेतुतः' इति ॥ ३ ॥

कुतोऽस्य परिपूर्णत्वमित्यतो लोकविलक्षणवस्तुत्वादिति हेतोरित्याह– **अन्यदेवेति ॥**

**अन्यदेव तद् विदितादथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥ ४ ॥**

तत् चक्षुराद्यगम्यं वस्तु विदितात् प्रमिताज्जगतः, अथोऽविदितादप्रमिताच्छशशृङ्गादेश्चान्यदेव विलक्षणमेवेत्यर्थः । विदितादन्यदित्युक्तौ निःस्वरूपताशङ्काव्युदासायाथोऽविदितादन्यदित्युक्तिः । केचिद् व्यक्ताव्यक्तजगतोऽन्यदित्यर्थमाहुः । अधि सर्वोत्तम इत्यर्थः । तथा च भाष्यं– **'सर्वोत्तमश्च सर्वत्र'** इति । इति एवं प्रकारेण पूर्वेषां व्यासप्रभृतीनां सकाशात् शुश्रुम श्रुतवन्तः स्मः । श्रवणस्य चिरकालीनत्वद्योतनाय परोक्षार्थकलिट्प्रयोगः । लिङर्थे लिड् वा । नोऽस्मान् प्रति ये पूर्वे तद् ब्रह्म व्याचचक्षिरे व्याख्यातवन्तः तेषां पूर्वेषामित्यन्वयः ॥ ४ ॥

ननु मनोवागगोचरजीवरूपत्वाद् ब्रह्मणः वाङ्मनसागोचरत्वोक्तिरयुक्तेत्यतो 'न तत्र चक्षुर्गच्छति' इत्यादेस्तात्पर्योक्तिपूर्वकं पञ्चभिर्मन्त्रैर्भेदमाह– **यद्वाचेति ॥**

---

१. 'लङि रूपं वा' इति मुद्रितपुस्तकस्थः पाठः ।

यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ५ ॥

यन्मनसा न मनुते येनाऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ६ ॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ७ ॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ८ ॥

यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास ते ॥ ९ ॥

**॥ इति प्रथमः खण्डः ॥**

—०—

यद् ब्रह्म वाचाऽनभ्युदितं साकल्येन नोक्तं, येन प्रेरिता सती वाग् अभ्युद्यते पुरुषैरुच्चार्यते तदेव त्वं ब्रह्म विद्धि जानीहि । नेदं जीवस्वरूपं ब्रह्म । ते तव उप समीपे आस, तिङन्तप्रतिरूपकमव्ययम्, आस्ते नियामकतया वर्तते। इदमेव ब्रह्मेति तदेव विद्धीत्यर्थः । एवमग्रेऽप्यर्थो ध्येयः । पुरुषो न मनुते । मतं विज्ञातम् । चक्षूंषि पश्यति दृश्यन्त इत्यर्थः । न मनुत इत्यादौ साकल्येनेति ज्ञेयम् । प्राणेन मुख्यवायुना न प्राणिति न चेष्टते । प्रणीयते प्रेर्यते । तदाह भाष्ये–

'प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः ।
यं सम्यङ् नैव जानाति कश्चिन्निरवशेषतः ॥

नेदं जीवस्वरूपं तद्ब्रह्म विष्ण्वाख्यमव्ययम् ।
किन्तु यत्ते समीपस्थमास ते विनियामकम् ।
तदेव ब्रह्म विद्धि त्वम् ॥' इति ॥

'तथाऽन्यत् प्रतिषेधात्' (ब्र.सू.३–२–३२) इति सूत्रभाष्ये तु यदिदं वासनामयमुपासते ध्यायन्ति नेदं वासनामयं ब्रह्म । किन्तु तदेव वाङ्मनोऽगोचरं वासनामयस्थं ब्रह्म विद्धीत्यर्थोऽभिहितः ॥ ५–९ ॥

**॥ इति प्रथमखण्डार्थः ॥**

—०—

## ॥ अथ द्वितीयः खण्डः ॥

ब्रह्म साकल्येन न ज्ञेयमित्युक्तमर्थं व्यनक्ति– **यदि मन्यस** इत्यादिना ।

**यदि मन्यसे सुवेदेति दहरमेवापि नूनं**
**त्वं वेत्थ ब्रह्मणो रूपम् ।**
**यदस्य त्वं यदस्य देवेष्वथ नु**
**मीमांस्यमेव ते मन्ये(ऽ) विदितम्** ॥ १ ॥

**नाहमन्ये सुवेदेति नो न वेदेति वेद च ।**
**यो नस्तद् वेद तद् वेद नो न वेदेति वेद च ।**
**यस्यामतं तस्य मतं मतं यस्य न वेद सः** ॥ २ ॥

हे महेश्वर, अहं सुवेद ब्रह्म सम्यग्जानामीति यदि मन्यसे तर्हि त्वमपि नूनं दहरमेव अल्पमेव ब्रह्मणो रूपं वेत्थ, तस्यानन्तत्वादिति भावः । यत् यस्मात् दहरमेव वेत्थ अथ तस्मात् त्वं त्वयि, व्यत्ययात्, देवेषु वाऽस्य ब्रह्मणो यद्रूपं, तदिति शेषः, मीमांस्यमेव विचार्यमेव, नु इदानीं ते त्वयेति । अन्येषां कात्स्न्र्येन ब्रह्माज्ञानित्वेऽपि[1] तव तु अस्ति सम्यग्ज्ञानित्वमिति पृष्टो ब्रह्मा वक्ति– **मन्य इति** ॥ अन्ये सम्यग्वेद ब्रह्माऽयमिति मां प्रवदन्ति । अहं तु ब्रह्म विदितं न मन्य इति योजना । तर्हि त्वमपि [2]ब्रह्म सर्वथा न वेत्थ किमित्यत आह– **नो नेति** ॥ न वेदेति नो न जानामीति न, किन्तु वेद चेति । ब्रह्मणः साकल्येनाज्ञेयत्वमुपपाद्योपसंहरति– **यो न इत्यादिना** ॥ नोऽस्माकं मध्ये यस्तु ब्रह्माहं वेदेति वदति स तन्नो वेद ।

१. '**न भवत्वन्येषां कात्स्न्र्येन ब्रह्मज्ञानित्वम्**' इति मुद्रितपुस्तकस्थः पाठः ।

२. '**ब्रह्म**' इति पदं मुद्रितपुस्तके न दृश्यते ।

कुतः? परिच्छिन्नत्वज्ञानात्[१] । अहं न वेदेति यो (वदति) वेद असौ वेद च । कुतः? ब्रह्मणोऽ-परिच्छिन्नत्वज्ञानात् । यो न इत्यादिना साकल्येन श्रवणागोचरत्वमुक्त्वा मननागोचरत्वं चाऽह– **यस्येति** ॥ यस्य ब्रह्मामतम् अविचारितमिति मतं बुद्धिः तस्य पुंसो ब्रह्म मतं विचारितम्, अनन्तत्व-ज्ञानात् । यस्य ब्रह्म (मया) मतं विचारितमिति मतं बुद्धिः स न वेद, अनन्तत्वाज्ञानात् ॥ १–२ ॥

साक्षात्कारोऽपि साकल्येन नेत्याह– **अविज्ञातमिति** ॥

**अविज्ञातं विजानतां विज्ञातमविजानताम् ।**
**प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ३ ॥**

वयं ब्रह्म साक्षात्कृतवन्त इति [२]विजानताम् अविज्ञातम्, ब्रह्मानन्त्या-विज्ञानात् । अविजानताम् उक्तरीत्या ज्ञानहीनानां, नास्माभिः ब्रह्म सम्यक् साक्षात्कृतमित्येवं जानतामिति यावत्, विज्ञातं ब्रह्म साक्षात्कृतमित्यर्थः, अनन्तत्ववेदनादित्यर्थः । तदाह भाष्ये–

'सर्वात्मना विजानामीति तु यस्य मतं भवेत् ।
[३]तस्याज्ञातस्स भगवान् यो नैवं मन्यते सदा ॥

ज्ञातस्तस्य तथाऽस्यैव निश्शेषं मननं कृतम् ।
इति यो मन्यते नास्य मतस्स पुरुषोत्तमः ।
नातिवेद्यो न चावेद्यस्तस्मात् स पुरुषोत्तमः ॥'

इति ब्रह्मणः साकल्येनाज्ञेयत्वे कथं तेनेष्टसिद्धिरित्यतः स्वस्वयोग्यैकदेश-ज्ञानादेवेष्टसिद्धिरित्याह– **प्रतिबोधविदितमिति** ॥ श्रुतमिति शेषः । स्वस्व-

१. **'परिच्छिन्नत्ववेदनात्'** इति मुद्रितपुस्तकस्थः पाठः । २. **'विजानता'** इति मुद्रितपुस्तके ।
३. **'यस्याज्ञातः'** इति मुद्रितपुस्तके ।

योग्यतानुसारेण पुम्भिः श्रुतं मतं [१]ब्रह्म प्रतिबोधेन प्रतिनियतबोधेन स्वस्व-योग्यापरोक्षज्ञानेन विदितं चेदमृतत्वं मुक्तिं विन्दते लभते पुमान् इति वा विदितं ब्रह्म विन्दते लभते पुमान् इति वा। विदितं ब्रह्म विन्दते [२]प्रापयतीति ण्यर्थतया वा योज्यम्। हि प्रसिद्धम्। 'न कश्चिद् ब्रह्मवित् सृतिमनु-भवति। मुक्तो ह्येव भवति' इत्यादावित्यर्थः। तथा च सूत्रम्– 'अनियमः सर्वेषाम्' (ब्र.सू.३–३–३५) इति। ज्ञानेनामृतत्वं विन्दते चेत्तेनैव किं स्व-योग्यसर्वानन्दप्राप्तिरित्यतो न, किन्तु ज्ञानोत्तरकर्मणाऽपीत्यह–**आत्मनेति**॥ आत्मशब्दोऽत्र ज्ञानोत्तरकालीनयज्ञादिप्रयत्नपरः। आत्मना आत्मीययज्ञादि-प्रयत्नेन वीर्यम् आनन्दातिशयं विन्दते लभते। विद्यया अपरोक्षज्ञानेन अमृतम् अविद्यापरिहाररूपां मुक्तिं प्राप्नोति। इति विद्धीत्यनुषङ्गेण योज्यम्॥३॥

अस्तु स्वयोग्यब्रह्मज्ञानमभीष्टदं, तत् कदा सम्पादनीयमित्यत आह–**इहेति**॥

**इह चेदवेदीदथ सत्यमस्ति नचेदिहावेदीन्महती विनष्टिः।**
**भूतेषुभूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति॥ ५॥**

**इति द्वितीयः खण्डः**

—०—

ज्ञानयोग्ये ब्राह्मणादिदेहे अवेदीच्चेद् व्यजानाच्चेद् ब्रह्म अथ तर्हि सत्यमस्ति। सत्यशब्दस्य सच्छब्दपर्यायत्वात्सच्छब्दस्य च 'सद्भावे साधु-भावे च' इति वचनात्साध्वस्ति भद्रमस्तीत्यर्थः। इह चेन्नावेदीत्तदा महती विनष्टिः हानिर्भवति। अतो ज्ञानाज्ञानाभ्यां साध्वनिष्टयोः भावाद् धीरा भूतेषु भूतेषु सर्वभूतेषु ब्रह्म विचिन्त्य ज्ञात्वा अस्माल्लोकात् प्रेत्य अमृता भवन्तीति ॥ ४ ॥

**॥ इति द्वितीयखण्डार्थः ॥**

---

१. **'ब्रह्म'** इत्यारभ्य **'पुमान् इति वा'** इत्यन्तः पाठः मुद्रितपुस्तके न दृश्यते।

२. **'प्रापयतीत्यर्थतया'** इति मुद्रितपुस्तकस्थः पाठः।

## ॥ अथ तृतीयः खण्डः ॥

अत्यद्भुतत्वाद् ब्रह्म साकल्येनाज्ञेयमित्युक्तेऽर्थे काञ्चनाऽऽख्यायिकामाह– **ब्रह्मेति** ॥

**ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति तद्धैषां विजज्ञौ ॥ १ ॥**

देवानां दैत्यदानवैर्युद्धे प्रस्तुते सति ब्रह्म देवानाविश्य देवेभ्यो देवानामर्थे दैत्यादीन् विजिग्ये व्यजयत् । हेति । निश्चितमेतदित्यर्थः । अथ विजयानन्तरं तस्य देवेष्वाविष्टस्य ब्रह्मणो विजये सति देवा अमहीयन्त अपूज्यन्त । महीङ् पूजायामित्यस्मात् 'कण्ड्वादिभ्यो यक्'(पा.सू.३.१.२७) इति यक्-प्रत्ययः । गर्विणो अभवन्निति यावत् । [१]हेत्याश्चर्ये । ब्रह्मणो विजये कुतो देवानां गर्व इति तदेव व्यनक्ति– **त इति** ॥ ते देवा अस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यैक्षन्त व्यजानन् । एषां देवानां तद् असुरावेशकृतेश्वराज्ञाननिमित्तमहङ्कारादिकं विजज्ञौ व्यजानात्, ब्रह्मेत्यनुषङ्गः ॥ १ ॥

**तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत । किमिदं यक्षमिति । तेऽग्निमब्रुवन् । जातवेद एतद् विजानीहि किमेतद् यक्षमिति । तथेति । तदभ्यद्रवत् । तमभ्यवदत् कोऽसीति । अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति । तस्मिंस्त्वयि किं वीर्यमित्यपि । इदं सर्वं दहेयं यदिदं पृथिव्या-**

---

१. 'हेत्याश्चर्यम्' इति मुद्रितपुस्तकस्थः पाठः ।

**मिति । तस्मै तृणं निदधावेतद् दहेति। तदुपप्रेयाय सर्व-जवेन । तन्न शशाक दग्धुम् । स तत एव निववृते। नैतद-शकं विज्ञातुं यदेतद् यक्षमिति॥ २॥**

तेभ्यो देवेभ्योऽर्थे देवानां स्वात्मतत्त्वबोधाय यक्षरूपतया प्रादुर्बभूव ब्रह्मेत्यर्थः । उमाशिवचतुर्मुखसहितं सदिति योज्यम् । तद् यक्षरूपं ब्रह्म इदं यक्षं किमिति न [१]व्यजानत न व्यजानन् । तदा ते देवा अग्निमब्रुवन् । हे जातवेद एतद्यक्षं किमिति विजानीहीति । तथेत्युक्त्वा सोऽग्निस्तद् यक्षम् अभि आभिमुख्येन अद्रवद् अगमत् । तद्यक्षम् अभिमुखगतम् अग्निं कोऽसीत्यवदत् । 'अग्निरहमस्मि जातवेदा अहमस्मि' इति अग्निरब्रवीत् । वै प्रसिद्धमेतन्नाम ममेत्यर्थः । 'तस्मिंस्त्वयि तादृशे त्वयि किं वीर्यम्' इति यक्षमब्रवीत् । यदिदं पृथिव्यामस्ति सर्वमपीदं दहेयम्' इत्यग्निरब्रवीत् । तस्मै अग्नये एतद् दहेत्युक्त्वा किञ्चित् तृणं तत्पुरतो निदधौ यक्षमित्यर्थः । तत् तृणं दग्धुं सर्वजवेन सर्ववेगेनोपप्रेयाय समीपमगमत् । गत्वा तन्न शशाक दग्धुम् । सोऽग्निस्तत एव तावन्मात्रत एव, यक्षरूपमनिर्धार्य, निववृते निवृत्तवान् । निवृत्य च देवानब्रवीत् 'यदेतद्यक्षमिति एतद्विज्ञातुं नाशकम्' इति ॥ २ ॥

**अथ वायुमब्रुवन् । वायवेतद् विजानीहि किमेतद् यक्ष-मिति । तथेति । तदभ्यद्रवत् । तमभ्यवदत् कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति । तस्मिंस्त्वयि किं वीर्यमित्यपि । इदं सर्वमाददीयं यदिदं पृथिव्यामिति। तस्मै तृणं निदधावेतदादत्स्वेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाकाऽदातुम्। स तत एव निववृते नैतदशकं**

---

१. 'व्यजानन्त' इति मुद्रितपुस्तकस्थः पाठः ।

**विज्ञातुं यदेतद् यक्षमिति। अथेन्द्रमब्रुवन्। मघवन्नेतद् विजानीहि किमेतद् यक्षमिति। तथेति तदभ्यद्रवत्। तस्मात् तिरोदधे। स तस्मिन्नेवाऽऽकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्। तां होवाच किमेतद् यक्षमिति॥ ३॥**

**इति तृतीयः खण्डः**

अथानन्तरं वायुं नासिक्यवायुम्। प्राग्वद्व्याख्या। [१]आददीयमाददानीत्यर्थः। तस्मात् तिरोदधे। तस्मात् प्रदेशादन्तर्हितमभूदिति वा, इन्द्रस्याधिकबुद्धित्वान्मां प्रति कोऽसीति प्रश्ने कृते असुरावेशदूषितत्वेनेदानीं मया ब्रह्मणा शिवेन च साक्षादुपदेशानर्हत्वात् तिरोदध इति वाऽर्थस्तस्मादित्यस्य। ब्रह्मादिभिः सहेति योज्यम्। स इन्द्रस्तस्मिन्नेव यक्षतिरोधानाकाशप्रदेश एव यक्षेणोपदेशार्थं स्थापितां स्त्रियं दृष्ट्वाऽऽजगाम तत्समीपं प्राप्तवान्। सा केत्यत उक्तं– **बह्विति**॥ हैमवतीं हिमवत्पुत्रीम्। एतद्यक्षं किमिति तां देवीमुवाच पप्रच्छेत्यर्थः॥ ३॥

**॥ इति तृतीयखण्डार्थः॥**

१. 'आददीयमादद्यामिति' इति मातृकायाम्।

## ॥ अथ चतुर्थः खण्डः ॥

**ब्रह्मेति होवाच। ब्रह्मणो वा एतद्विजयेऽमहीयध्वमिति। ततो हैव विदाञ्चकार ब्रह्मेति । तस्माद् वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुः ॥ १ ॥**

इन्द्रेण पृष्टा सा तद्यक्षं ब्रह्मेति होवाच । हेति निश्चयमाह । एतद् एतस्य देवेष्वनुप्रविष्टस्य ब्रह्मणो विजये तद्विजयनिमित्तममहीयध्वं महिमवन्तोऽभवत, न त्वात्मनो विजयनिमित्तं गर्विणो भवत । वै निश्चयमेतत् । [१]इति चोवाच देवी इत्यन्वयः । एवमुमयोपदिष्ट इन्द्रः किं चकारेत्यत आह ब्रह्मा शिवं प्रति– **तत इति** ॥ ततो हैव देव्युपदेशादेव, तद्यक्षम् इन्द्रः ब्रह्मेति दैत्यविजयोऽस्मदनुप्रविष्टब्रह्मकृत इत्यादि विदाञ्चकार ज्ञातवान् । तस्माद् वै तस्मादेव गर्वशून्यत्वादेव एते देवाः ब्रह्मवायुशेषवीन्द्रशिवाः सभार्या अन्यान् देवानतितराम्, अन्यदेवेभ्योऽधिका इत्येकोऽर्थः । इवशब्दस्तु गर्वाभावादाधिक्यम् अविद्यमानं देवानां नेदानीमेव प्राप्तं, किन्त्वनादिसिद्धमेव, तदिदानीं व्यक्तमभूदित्यभिप्रायः । अन्योऽर्थस्तु– तस्माद् वै यक्षतया प्रादुर्भूतस्य स्वरूपं विचार्यमिति प्रथममुक्तत्वादेव, एते देवाः कामदक्षबृहस्पतिस्वायम्भुवमन्वनिरुद्धसूर्यचन्द्रधर्मवरुणा अन्यान् देवानतितरामिवेति । प्रागिवास्यार्थः । तत्रापि दक्षादिभ्यः प्राग् विचार्यं यक्षमित्युक्तत्वात् कामस्तेभ्योऽधिक इति ज्ञेयम् । तृतीयोऽर्थस्तु– तस्माद् वै यक्षात्मब्रह्मणः पूर्वदृष्टत्वादेव एते देवा अन्यान् देवानतितरामिवेति । एते देवाः के इत्यतस्तानाह– **यदग्निर्वायुरिन्द्र इति** ॥ योऽग्निर्यो वायुर्य इन्द्र इति एते

---

१. **'इति चोवाच ह वै'** इति मुद्रितपुस्तकस्थः पाठः ।

देवाः । वायुरत्र नासिक्यो ग्राह्यः । कुत एत अधिका इत्यतस्तस्मादित्युक्तहेतुं व्यनक्ति– **ते हीति** ।। ते हि यस्मादेतद् यक्षरूपं ब्रह्म नेदिष्ठं समीपस्थं, कालतः सामीप्यमत्र ध्येयं, इतरेभ्यः पूर्वकाल एव पस्पृशुः, स्पृश आमर्शने, परामर्शं कृतवन्त इत्यर्थः । परामर्शश्चाग्निवाय्वोर्यक्षदर्शनमात्रम्, इन्द्रस्य तु यक्षस्य ब्रह्मत्वादिना ज्ञानं ध्येयम् ।। १ ।।

**ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति । तस्माद्वा इन्द्रोऽति-तरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ।। २ ।।**

तद्व्यनक्ति– **ते हीति** ।। ते[1] अग्निवाय्विन्द्राः प्रथमः प्रथमं विदाञ्चकार विदाञ्चक्रुः । वेदनं चेन्द्रस्य देव्युपदेशात्, अन्ययोस्तु इन्द्रोपदेशादिति भावेनेन्द्रस्य[2] ज्ञानोदयप्रकारमाह– **तस्माद् वा इति** ।। तस्मादित्युक्तं हेतुं व्यनक्ति– **स ह्येनदिति** ।। एनत् देवम् । तद्वाक्यार्थमेव व्यक्तमाह– **स ह्येनत् प्रथम इति** ।। प्रथममित्यर्थः ।।

**तस्यैष आदेशो यदेतद् विद्युतो अभिव्यद्युतदा३ इति । न्यमी-मिषदा३ इत्यधिदैवतम् । अथाध्यात्मम् । यदेतद् गच्छतीव च मनोऽनेन वै तदुपस्मरत्यभीक्ष्णं सङ्कल्पस्तद्ध । तद्वनं नाम । तद्वनमित्युपासितव्यम् ।। ३ ।।**

अधिदैवतमध्यात्मं चोपास्यरूपमुपदिशति– **तस्यैष इत्यादिना** ।। तस्य ब्रह्मणः एष आदेशः उपदेशः । यदेतत् कपिलाख्यं रूपं विद्युतः, बहुवचन-माद्यर्थे, उपलक्षणं वा, विद्युदादीन् तेजोरूपानर्थान् आ समन्ताद्व्यद्युतत् व्यद्योतयद् [3]अदीपयदिति । आ न्यमीमिषत् सम्यक् न्यमीलयत् । आः पूर्णं ब्रह्माक्षिणी निमील्य क्षीरसागरे शेत इति यावत् । 'आ प्रगृह्यं स्मृतौ

१. 'ते' इति पदं मुद्रितपुस्तके नास्ति। २. 'इन्द्रज्ञानोदयप्रकारम्' इति मुद्रितपुस्तके।
३. 'आदीपयदिति' इति मुद्रितपुस्तके।

वाक्येऽप्यास्तु स्यात्कोपपीडयोः' इत्यव्ययवर्गे अमरोक्त्या प्रगृह्यसञ्ज्ञकस्य आ इति निपातस्य [१]आस्त्विति निपातस्य च सत्त्वेन भाष्ये न्यमीमिषदा इत्यत्र [२]प्रगृह्यसञ्ज्ञकाकारस्य सन्ध्यभावेन आ समन्तादित्येकमर्थमुक्त्वा आः इति पदविभागमाश्रित्य आः पूर्णमित्यर्थ उक्तः । इत्येष आदेशः अधिदैवे स्थितस्य तस्येति इतिशब्दद्वयस्य पूर्वेणान्वयः । अथेत्यर्थान्तरे । अध्यात्मं देहे, तस्योपदेश उच्यत इत्यर्थः । यदेतन्मनोऽनेनैव प्रेरितं सद् गच्छतीव च । सम्यङ् न गच्छति साकल्येन वस्तु न विषयीकरोति । अनेनैवानिरुद्धाख्येन हरिणा तद् विषयजातम् उपस्मरति । कीदृशं मन इत्यत उक्तम्– **अभीक्ष्णं सङ्कल्प इति** ॥ भृशमनेकार्थान् सङ्कल्पयतीति सङ्कल्पः, सङ्कल्पकमित्यर्थः । लिङ्गव्यत्ययश्छान्दसः, शब्दस्वभावाद्वा । अभीक्ष्णं नित्यं भृशं सङ्कल्पश्च भवति । [३]तस्यानिरुद्धाख्यस्य हरेरेष उपदेश इत्यर्थः । [४]तस्योपास्यमन्वर्थं नामाऽह– **तद्वेति** ॥ तद्ब्रह्म तद्वनं नाम ततत्वाद्व्याप्तत्वाद्वननीयत्वाद्भज-नीयत्वात् तद्वनमिति नामवत्, तनोतेस्त्यजियजितनिभ्यो डतिरिति डतिप्रत्ययः, वनतेरकारः । तच्च तद्वनं चेति तद्वनमिति, हेति प्रसिद्धम् ॥ ३ ॥

**स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति । उपनिषदं भो ब्रूहीति । उक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिषदम-ब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ४ ॥**

**इति चतुर्थः खण्डः**

**॥ इति तलवकारोपनिषत् ॥**

१. **'आस्त्विति निपातस्य'** इति मुद्रितपुस्तके नास्ति । २. **'प्रगृह्याकारस्य'** इति मुद्रितपुस्तके । ३. **'तस्यानिरुद्धस्य'** इति मुद्रितपुस्तके । ४. **'तस्योपास्त्यर्थमन्वर्थम्'** इति मुद्रितपुस्तके ।

तद्वनमित्युपासकस्य फलमाह–**स य इति** ॥ सः प्रसिद्धोऽधिकारी । एतद् ब्रह्म एवं [1]'तद्वनंनामेत्येवं रूपेण वेद । एनं तद्वनत्वज्ञानिनं सर्वाणि भूतान्यभिवाञ्छन्ति, सर्वापेक्षितो भवतीत्यर्थः । एव श्रुत्वा पुनर्ब्रह्माणं पृच्छत्युमापतिः– **उपनिषदं भो ब्रूहीति** ॥ भो ब्रह्मन् उपनिषदं सप्रतिष्ठां सायतनां ब्रूहीति, अपृच्छदिति शेषः । किमुपनिषत्प्रतिपाद्यं पृच्छसि, उत उपनिषदुत्पन्नविद्यायाः अवस्थानकारणं, किं वा विद्यायाः कारणमिति हृदि विकल्प्य क्रमेणोत्तरमाह– **उक्ता त इति** ॥ ते तुभ्यं ब्राह्मीं ब्रह्मविषयां वावेत्यसंशयं, त उपनिषदमुपनिषत्स्वरूपम् अब्रूम अवोचाम, इति ब्रह्मोवाचेति योज्यम् । 'ब्रह्मेति होवाच' इत्यादिना ब्रह्मस्वरूपोक्तेः । तत्र वक्तव्यं किमपि नेति भावः । तस्यै तस्याः ब्रह्मविद्यायाः तपो दमः कर्म च प्रतिष्ठा । तपः कृच्छ्रचान्द्रायणादि शास्त्रपर्यालोचनं वा, दम इन्द्रियनिग्रहः, कर्म तु वर्णाश्रमोचितं क्रियानुष्ठानम्, प्रतिष्ठा प्रतिष्ठाहेतुः । तपआदिमत्सु विद्या प्रतितिष्ठतीत्यर्थः । वेदाः ऋगाद्याः तदनुकूलप्रतिष्ठाग्रन्थाश्च, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षडङ्गरूपसर्वाङ्गानि । सत्यं मीमांसा, आयतनमुत्पत्तिस्थानम्, तस्या इत्यनुषङ्गः, विद्याया इत्यर्थः । एतदुपनिषज्ज्ञानिनः फलमाह– **य इति** ॥ योऽधिकारी एतामुपनिषदं वेद स पाप्मानमपहत्यानन्ते देशकालगुणापरिच्छिन्ने स्वर्गे स्वरूपभूतसुखज्ञानात्मके लोके प्रकाशरूपे ज्येये श्रेष्ठे, ब्रह्मणीति योज्यं, प्रतितिष्ठति प्रतितिष्ठति । द्विरुक्तिः सर्वावधारणार्था ॥ इति चतुर्थः खण्डः ॥ ४ ॥

**[2]समस्तगुणपूर्णाय दोषदूराय विष्णवे ।**
**नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥**

**[3]श्रीमत्तलवकारार्थसङ्ग्रहोऽयं मया कृतः ।**
**राघवेन्द्रेण यतिना प्रियतां तेन केशवः ॥**

**इति श्रीराघवेन्द्रयतिकृततलवकारोपनिषत्खण्डार्थः समाप्तः ॥**

---

१.'तद्वनमित्येवंरूपेण' इति (मु.पु.) । २. 'अनन्तगुणपूर्णाय' (मु.पु.) ।
३. श्लोकोऽयं मुद्रितपुस्तके नास्ति ।

(शान्तिमन्त्रः)

हरिः ओ३म् ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं कर-
वावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

श्रीराघवेन्द्रयतिविरचितः

# काठकोपनिषत्खण्डार्थः

समस्तगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय वामनायेष्टदायिने ॥

अस्याः [१]काठकोपनिषदो [२]यमनचिकेतस्संवादरूपत्वाद् [३]यमदेवो ऋषिः । वाक्येतरेषु 'पीतोदकाः' इत्यादिषु छन्दोनिबद्धेष्वक्षरगणनयाऽनुष्टुबादिश्छन्दः । देवता तु वामनाख्यो [४]हरिर्ध्येयः ॥

'अनन्तलोकाप्तिम्' इत्यादिना ब्रह्मविद्यां वक्तुं श्रोतुः श्रद्धाजननायाऽख्यायिकामाह वेदपुरुषः— **उशन्नित्यादिना** ॥

॥ हरिः ओ३म् ॥

**उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस । त१ँ ह कुमार१ँ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश ॥ १ ॥**

वाजश्रवसो नप्तृरूपगोत्रापत्यं वाजश्रवसः, 'तस्यापत्यम्' इत्यणप्रत्ययः, स उद्दालकनामा । उशन् वश कान्तौ, 'ग्रहिज्यावयि' (पा.सू.६.१.१६) इत्यादिना सम्प्रसारणम्, शत्रन्तम् । स्वर्गलोकमिच्छन्नित्यर्थः । सर्ववेदसं सर्वस्वम्, ददौ ब्राह्मणेभ्यो दत्तवान् । हवै प्रसिद्धमेतत् । तस्य ह प्रसिद्धस्य वाजश्रवसस्य नचिकेताः नचिकेतोनामकः पुत्र आस बभूव । नाम प्रसिद्धम् ।

---

१. 'उपनिषदः' श.पाठ.
२. 'यमनचिकेतसोः संवादरूपत्वात्' श.
३. 'यमदेवोऽस्या ऋषिः' इति (मु.पु.)
४ 'हरिरिति ध्येयम्' श.पाठः

'अस्तेर्भूः' इत्येष विधिश्छान्दसत्वान्न भवति । तिङन्तप्रतिरूपकमव्ययं वा ।
तं कुमारं सन्तं बाल्ये वयसि स्थितं श्रद्धा आस्तिक्यबुद्धिः आविवेश
प्रविवेश । श्रद्धावान् बभूवेत्यर्थः । कदेत्यत उक्तम्– **दक्षिणास्विति** ॥
पित्रा ब्राह्मणेभ्यो दक्षिणासु दीयमानास्वित्यर्थः । नानाविधजरठनिर्वीर्यगवा-
द्यनुपयुक्तवस्तुदानसमये अनुपयुक्तगवादिकमस्वर्ग्यं किमर्थं ददाति पिता ?
न देयमिति वदामीति पुत्रस्य बुद्धिरासीदिति भावः ॥ १ ॥

श्रद्धाविष्टत्वमेव व्यनक्ति– **पीतोदका इत्यादिना** ॥

**पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।**
**अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥ २ ॥**

पीतमेव उदकं याभिः न तु पातव्यमस्ति ताः पीतोदकाः । जग्धमेव भक्षितमेव तृणं न तु जग्धव्यमस्ति याभिस्ता जग्धतृणाः । दुह्यत इति दोहः, कर्मणि घञ्, क्षीरम् । दुग्ध एव दोहो यासां न तु दोग्धव्यमस्ति ता दुग्ध-दोहाः । निरिन्द्रियाः निर्वीर्याः, दुर्बला इति यावत् । ता उक्तरूपा गाः ददत् प्रयच्छन् स पुमान् तान् लोकान् गच्छति । ते प्रसिद्धाः । अनन्दाः अविद्यमानसुखाः । य इति शेषः । ये लोकास्तानित्येवं श्रद्धाऽऽविवेशेत्यर्थः[1] ॥ २ ॥

**स होवाच पितरं तात कस्मै मां दास्यसीति द्वितीयं तृतीयम् ।**
**तꣳ होवाच मृत्यवे त्वा ददानीति ॥ ३ ॥**

एवं श्रद्धाविष्टः स पुत्रः पितरमुवाच । ह किलेत्यर्थः । [2]उक्ति-प्रकारमेवाऽह– **तातेति** । हे तात मां कस्मै दास्यसीति । मां दत्त्वाऽपि सर्वस्वदक्षिणाप्रतिज्ञा पूरयितव्या, नैतादृशीर्गा देहीति तद्वचनाभिप्रायो

१. **'श्रद्धाऽऽविवेशेति पूर्वेणान्वयः'** । श्रा.
२. एतद्वाक्यं मुद्रितपुस्तके **'एवं श्रद्धाविष्टः स पुत्रः पितरमुवाच । ह किलेत्यर्थः'** इत्यतः प्राग् दृश्यते ।

ज्ञेयः । द्वितीयं तृतीयमिति । एवं प्रकारेण द्वितीयवारं तृतीयवारं चोवाचेत्यर्थः । मां कस्मै दास्यसीति पुत्रेण त्रिवारमुक्ते सति कुपितः पिता तं पुत्रमुवाच । हेत्याश्चर्ये । त्वा त्वां मृत्यवे यमाय ददानीत्युवाच, म्रियस्वेति [१]शशापेत्यर्थः ॥ ३ ॥

पित्रा [२]शप्तः पुत्रः शापमङ्गीकृतवानित्याह– **बहूनामिति** ॥

**बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।**
**कि॰ स्विद् यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति ॥ ४ ॥**

बहूनां मरिष्यमाणानां मध्ये अहं प्रथमः सन् यममेमि यामि । बहूनां मृतानां मध्ये मध्यमस्सन् वा यममेमि । तदा यमस्य मया किंस्वित् किं वा कर्तव्यं स्यात्? यन्मयाऽद्य करिष्यति तत् किमस्ति? न किमपि ॥ ४ ॥

तथाऽपि चेद्गच्छेति ब्रूषे गच्छाम्येव । सिद्धस्य मरणस्य त्वया दत्तत्वात् न तेन मम क्लेश इत्याह– **अनुपश्येति** ॥

**अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे ।**
**सस्यमिव मर्त्यः पच्यते सस्यमिव जायते पुनः ॥ ५ ॥**

पूर्वे यथा मृताःताननुपश्य दृष्ट्वा तथाऽपरे च मरिष्यन्तीति प्रतिपश्य क्लेशं हित्वैव यममेमीति पूर्वेणान्वयः । देहिनो [३]मृतिर्नियतेत्येतद् दृष्टान्तेन व्यनक्ति– **सस्यमिवेति** ॥ सस्यं यथा कालेन पच्यते तथा मर्त्यः मनुष्योऽपि पच्यते । पक्वसस्यमिव म्रियते । यमशासनानुभवानन्तरं सस्यमिव पुनर्जायते । मर्त्य इत्यनुषङ्गः । यतो जन्तोर्जन्ममृती नियते ततो नियतमृतेरेव त्वया दत्तत्वान्न मम ततः क्लेश इति भावः ॥ ५ ॥

अथ यमलोकं गतो नचिकेताः । तदा यमोऽन्यलोकं गत्वा स्थितोऽभूत् । यमभार्यया कृतामतिथिपूजां यजमानाभावान्न गृह्णामीत्युक्त्वा [४]दिनत्रय-

१. 'शशापेति यावत्' श.
२. 'शप्तश्च पुत्रः' इति (मु.पु.)
३. 'मृतिर्नियतेति दृष्टान्तेन' श.
४. 'दिनत्रयपर्यन्तमुवास' श.

पर्यन्तमुपवासेन तद्गृह एव स्थितवान् । ततो यमे चाऽगते यमं प्रति भार्योक्तिप्रकारमाह– **वैश्वानर इति** ॥

**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।**
**तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ६ ॥**

अतिथिः ब्राह्मणो वैश्वानरस्सन् गृहान् प्रविशति । गृहेष्वग्निप्रवेशो यथा तथा ब्राह्मणो ब्रह्मज्ञानी अतिथिरूपो गृहमागतोऽसत्कृतश्चेद् दहत्येवेत्यर्थः । तथा चोक्तं षष्ठस्कन्धे– **'अग्नेरभ्यागतो मूर्तिः'** इति । तस्याग्नेरिव प्रविष्टस्यातिथेरेतां 'स इन्द्रोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय' इत्यादिषूक्तां शान्तिं कुर्वन्ति महान्तो गृहिणः । अतो हेतोः वैवस्वत विवस्वतः पुत्र सूर्यपुत्र, उदकम् उदकाद्यतिथिपूजाम् अस्मै ब्राह्मणाय हर [१]उपाहर कुर्विति भार्योवाच यमं प्रतीत्यर्थः ॥ ६ ॥

अतिथिपूजाया अकृतावनिष्टमाह– **आशेति** ॥

**आशाप्रतीक्षे सङ्गतꣳ सूनृतां**
**चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान् ।**
**एतद् वृङ्क्ते पुरुषस्याल्पमेधसो**
**यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ७ ॥**

आशा च प्रतीक्षा च आशाप्रतीक्षे । प्राप्तवस्तुविषयेच्छा ह्याशा, अप्राप्तवस्तुविषयेच्छा प्रतीक्षेति भावः । सङ्गतं सुहृत्सङ्गतिम् । सूनृतां जनकर्तृकसाधुवार्तां च । इष्टं च पूर्तं चेष्टापूर्ते । 'अन्येभ्योऽपि दृश्यते' (पा.सू. ३.२.१७८) इति दीर्घः । इष्टं यजनं, पूर्तं तटाकादि । **पुत्रेति** । पुत्रान् पशूंश्चेत्यर्थः । यस्य गृहे ब्राह्मणोऽनश्नन् वसति, तस्येति शेषः । अल्पमेधसोऽल्पबुद्धेस्तस्य पुरुषस्य आशाप्रतीक्षादिकं पूर्वार्धोक्तं सर्वमेतद् अनशनेन ब्राह्मणस्य गृहेऽ-

१. **'उपाहर'** इति पदं मुद्रितपुस्तके नास्ति ।

वस्थानं [1]कर्तृ वृङ्क्ते वृजी वर्जने श्नम्विकरणं, वर्जयति सर्वं नाशयतीत्यर्थः ॥ ७ ॥

एवं भार्योक्तेन यमेन तस्मै अर्घ्यादिपूजां कृत्वा नचिकेतसं प्रति उक्तवचनप्रकारमाह– **तिस्र इति ॥**

**तिस्रो रात्रीर्यदवात्सीर्गृहे मे-**
**ऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः ।**
**नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु**
**तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥ ८ ॥**

हे ब्रह्मन्, नमस्यो नमनयोग्योऽतिथिः भवाननश्नन् अभुञ्जानः सन् मे गृहे तिस्रो रात्रीः दिनत्रयं यदवात्सीत् वासमकार्षीदिति यत् तस्मात् प्रति तस्य प्रतीकाराय त्रीन् वरान् वृणीष्व, वृञ् सम्भक्तौ, सम्भजस्व स्वीकुरु । ते तुभ्यं नमोऽस्तु । ब्रह्मन् मे मह्यं स्वस्ति, अव्ययमेतत्, मङ्गलमस्तु । 'नमः स्वस्ति' (पा.सू.२.३.१६)इत्यादिना चतुर्थी ॥ ८ ॥

एवं यमेनोक्तो नचिकेताः प्रथममेकं वरं तावद् वृणुत इत्याह वेदपुरुषः– **शान्तेति ॥**

**शान्तसङ्कल्पः सुमना यथा स्याद्**
**वीतमन्युर्गौतमो माऽभि मृत्यो ।**
**त्वत्प्रसृष्टं माऽभि वदेत् प्रतीत**
**एतत् त्रयाणां प्रथमं वरं वृणे ॥ ९ ॥**

हे मृत्यो गौतमो मम पिता शान्तसङ्कल्पः मदनिष्टे शान्तः सङ्कल्पो यस्य स तथा, सुमनाः शोभनमनस्कः यथा स्यात्, माऽभि मां प्रति वीतमन्युः

१. 'कर्ता' (शा.)

अपगतकोपः, यथा स्यादिति प्रत्येकमन्वेति, त्वत्प्रसृष्टं त्वया प्रेषितं माऽभि मां प्रति प्रतीतः प्रत्यभिज्ञानवान् यथा वदेत्, एतत् एतं वराणां प्रथमं वरं वृणे इत्याह नचिकेता यमं प्रतीत्यर्थः ॥ ९ ॥

इत्युक्तो यमो वरं तथैव दत्तवानित्याह– **यथेति** ॥

**यथा पुरस्ताद् भविता प्रतीत**
**औद्दालकिरारुणिर्मत्प्रसृष्टः ।**
**सुखं रात्रीः शयिता वीतमन्यु-**
**स्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम्** ॥ १० ॥

औद्दालकिः उद्दालकस्यापत्यम् औद्दालकिः, अरुणाया अपत्यम् आरुणिः, 'स्त्रीभ्यो ढक्' इति नाऽश्रितम्, भवान् मत्प्रसृष्टः मत्प्रेषितस्सन् पुरस्ताद् ग्रामान्तरादागतो यथा तथा प्रतीतः पित्रा प्रत्यभिज्ञातो भविता भविष्यति । रात्रीः सुखं शयिता शयानो भविता । तव पिता वीतमन्युस्सन् मृत्युमुखाद् यममुखात् प्रमुक्तं त्वां ददृशिवान् दृष्टवान् भवेदिति यमः प्रथमं वरं दत्तवानित्यर्थः ॥ १० ॥

स्वर्ग्याग्निस्वरूपज्ञानलक्षणं द्वितीयं वरं [१]याचितुं तद्याच्ञायां हेतुतया [२]स्वर्ग्याग्निज्ञानफलस्वर्गशब्दितविष्णुलोकस्वरूपमाह– **स्वर्ग इति** ॥

**स्वर्गे लोके न भयं किञ्चनास्ति**
**न तत्र त्वं न जरया बिभेति ।**
**उभे तीर्त्वा अशनायापिपासे**
**शोकातिगो मोदते स्वर्गलोके** ॥ ११ ॥

स्वर्गे लोके स्वर्गशब्दिते [३]विष्णुलोके भगवल्लोके किञ्चन किमपि भयं नास्ति । तत्र लोके त्वं च नासि, शिक्षकः सन्निति भावः । न जरया

---

१. **'याचयितुं'** (श.) २. **'स्वर्ग्याग्निज्ञानफलस्वर्गस्वरूपं निरूपयति'** (श.)

३. **'विष्णुलोके'** इति मुद्रितपुस्तके नास्ति ।

बिभेति, तल्लोकं गत इति योज्यम् । अशनायापिपासे उभे तीर्त्वा शोकातिगः शोकानतिक्रान्तस्सन् मोदते सुखमनुभवति । स्वर्गलोक इति पुनरुक्तिराद-रार्था । यद्वा, नायं लोकः विष्णुलोकः, किन्तु प्रसिद्धस्वर्गलोक एवेति [१]ज्ञापनार्थं पुनरुक्तिः । 'प्राप्य स्वर्गं तत्र भयातिगः । उष्य मन्वन्तरं कालम्' इत्यादिभाष्योक्तेः ॥ ११ ॥

एवं स्वर्ग्याग्निज्ञानफलं निरूप्य स्वर्ग्याग्निं पृच्छति– **स त्वमिति** ॥

**स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो**
**प्र ब्रूहि तꣳ श्रद्दधानाय मह्यम् ।**
**स्वर्गलोका अमृतत्वं भजन्त**
**एतद् द्वितीयेन वृणे वरेण ॥ १२ ॥**

हे मृत्यो स त्वं स्वर्ग्यम् उक्तरूपस्वर्गसाधनम् अग्निम् अग्निशब्दितेष्टका-चितिस्थमग्र्यत्वादिगुणयुक्ततयाऽग्निनामकं हरिम् अध्येषि जानासि । तं चितिस्थमग्निनामकं हरिं श्रद्दधानाय मह्यं ब्रूहि । कुतः? न हि स्वर्ग्यत्व-मात्रेण [२]तद्वचनमावश्यकं किमित्यत आह– **स्वर्गेति** ॥ स्वर्गो लोको येषां ते तथोक्ताः मन्वन्तरं स्वर्गलोके स्थास्यन्तः पश्चादमृतत्वं मुक्तिं भजन्ते प्राप्नुवन्ति । एतद् एतं द्वितीयेन वरेण द्वितीयं वरं वृण इत्यर्थः॥ १२॥

इति याचितो यमः प्रत्युवाचेत्याह– **प्र त इति** ॥

**प्र ते ब्रवीमि तदु मे निबोध**
**स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।**
**अनन्तलोकाप्तिमथो प्रतिष्ठां**
**विद्धि त्वमेतं निहितं गुहायाम् ॥ १३ ॥**

---

१. 'ज्ञापनाय' इति मुद्रितपुस्तके । २. 'तद्वचनमावश्यकमित्यत आह' इति मुद्रितपुस्तके ।

**लोकादिमग्निं तमुवाच तस्मै**
**या इष्टका यावतीर्वा यथा वा ।**
**स चापि तत् प्रत्यवदद् यथोक्त-**
**मथास्य मृत्युः पुनराह तुष्टः** ॥ १४ ॥

हे नचिकेतः, स्वर्ग्यं स्वर्गसाधनम् अग्निं चितिस्थम् अग्निनामकं हरिं प्रजानन् अहं ते तुभ्यं प्रब्रवीमि प्रवच्मि । तदु तदेव त्वया पृष्टं मयोच्यमानम् अग्निनामकं चितिस्थहरिस्वरूपमेव मे मत्सकाशात् निबोध निबुध्यस्व जानीहि । प्रतिज्ञातं स्वर्ग्याग्निस्वरूपमुक्तवानित्याह– **अनन्तेति** ॥ अनन्त-लोकाप्तिमनन्तस्य[१] विष्णोः लोकस्याऽप्तिमाप्तिसाधनम्, अथो किञ्च, प्रतिष्ठां सर्वलोकप्रतिष्ठाहेतुम्, गुहायां सर्वप्राणिहृदयगुहायां निहितं नितरां स्थितम् सर्वलोकानामादिं कारणभूतं तमेतमग्निं चितिस्थमग्निनामकं हरिं त्वं विद्धि जानीहि इत्युवाच यमः । तस्मै नचिकेतसे अन्यदप्युक्तवानित्याह– **या इष्टका इति** ॥ या इष्टकादेवताः, यावतीर्वा यावत्सङ्ख्याकाः, षष्ट्युत्तरशतत्रयसङ्ख्याकाः, यथा वा यादृशपरिमाणा वा ता उवाचेत्यन्वयः । षष्ट्युत्तरशतत्रयसङ्ख्याकेष्टका-देवतां विष्णुम्, इष्टकासङ्ख्यां परिमाणं चोवाचेत्यर्थः । इष्टकादेवतायाः विष्णो-रेकत्वेऽपि, इष्टकानां बहुत्वाद्वा, रूपबाहुल्येन वा बहुवचनं 'या इष्टकाः' इति ज्ञेयम् । स चापि नचिकेता अपि यथोक्तं यमेन तत् प्रत्यवदद् अनूदित-वान् । अथ, अनुवादानन्तरम् अनूदितत्वाद्धेतोर्वा अस्य नचिकेतसः तुष्टः सन्तुष्टो मृत्युर्यमः पुनराह ॥ १३–१४ ॥

किमाहेत्यत आह– **तमिति** ॥

**तमब्रवीत् प्रीयमाणो महात्मा**
**वरं तवेहाद्य ददानि भूयः ।**

१. 'अनन्तस्य विष्णुलोकस्याऽप्तिमाप्तिसाधनम्' इति मुद्रितपुस्तके

**तवैव नाम्ना भविताऽयमग्निः**
**श्रृङ्कां चेमामनेकरूपां गृहाण ॥ १५ ॥**

तं नचिकेतसं [१]प्रीतः प्रीतिमान् सन् महात्मा महामनाः यमोऽब्रवी-दित्युक्तानुवाद आदरार्थः । अद्य इदानीं भूयः पुनः, वरत्रयादन्यमिति यावत्, वरम् इह चितिविषये तव ददामीत्यब्रवीदित्यर्थः । तं वरमाह—**तवैवेति ॥** अयमग्निः इष्टकाचितिरूपोऽग्निः तव नाम्नैव नाचिकेताग्निरित्येवंरूपेण भविता भविष्यति, भवत्विति व्यत्ययो वा । अनेकरूपां बहुरूपां, स्वर्णमयीमिति यावत्, 'बहुरूपं च पुरटं कार्तस्वरमितीर्यते' इत्युक्तेः । शृङ्कां कण्ठमालां चेमां गृहाणेत्यब्रवीदित्यन्वयः ॥ १५ ॥

तवैव नाम्ना भविताऽयमग्निरित्युक्तम् । तथैव व्यवहरन् [२]तदनुष्ठातुः फलमाह— **त्रिनाचिकेत इति ॥**

**त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं**
**त्रिकर्मकृत् तरति जन्ममृत्यू ।**
**ब्रह्मजज्ञं देवमीड्यं विदित्वा**
**निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥ १६ ॥**

नचिकेतसोऽयं नाचिकेतः । नाचिकेतस इति वक्तव्ये छान्दसः स-लोपः । त्रयो नाचिकेता यस्यासौ त्रिनाचिकेतः, त्रिवारानुष्ठितनाचिकेत-नामकाग्निचयनः पुमानित्यर्थः । त्रिभिर्वेदैः सन्धिं सन्धानम् एत्य प्राप्य यो वर्तते वेदत्रयाविरुद्धो वर्तते वेदत्रयोक्तमार्गेण भगवत्तत्त्वादिकं जानन् वर्तत इति यावत् । त्रिभिरेत्य सन्धिमित्यस्य पूर्वत्रोत्तरत्र चान्वयः । त्रिकर्मकृत् यज्ञदानतपःकर्ता, जन्ममृत्यू तरति मुक्तो भवतीत्यर्थः । किमेतावतैव त्रिनाचिकेतत्वत्रिकर्मकृत्त्वमात्रेण मुक्तो भवतीत्यतः त्रिभिरेत्य सन्धिमित्यु-

१. **'प्रीतिमान्'** इति मुद्रितपुस्तके ।     २. **'तदनुष्ठातृफलमाह'** इति मुद्रितपुस्तके ।

क्तम् । भगवत्तत्त्वादिज्ञानमप्यावश्यकमिति भावेन तद्व्यनक्ति– **ब्रह्मजज्ञमिति ॥** ब्रह्म वेदः तत्र व्यक्तत्वाद् ब्रह्मजो विष्णुः, 'सप्तम्यां जनेर्डः' (पा.सू.३.१.९७) जानातीति ज्ञः सर्वज्ञः । 'इगुपधज्ञाप्रीकिरः कः' (पा.सू.३.१.१३५)। ब्रह्मजश्चासौ ज्ञश्च ब्रह्मजज्ञः तम् । देवं क्रीडादिगुणविशिष्टम्, ईड्यं ब्रह्मादिभिः स्तुत्यम्, निचाय्य विचार्य, विदित्वा साक्षात्कृत्य, इमां वेदाद्युक्तां पूर्वोत्तरजन्ममृत्यूत्तरणरूपां वक्ष्यमाणरूपां वा शान्तिम् अत्यन्तं यथा भवति तथा एति प्राप्नोतीति ॥ १६ ॥

उक्तमेवार्थं पुनर्विशदमाह– **त्रिनाचिकेत इति ॥**

**त्रिनाचिकेतस्त्रयमेतद् विदित्वा**
**य एवं विद्वाँश्चिनुते नाचिकेतम् ।**
**स मृत्युपाशान् पुरतः प्रणोद्य**
**शोकातिगो मोदते स्वर्गलोके ॥ १७ ॥**

यो विद्वान् त्रिनाचिकेतः त्रिवारं नाचिकेताग्निमनुतिष्ठन् एतत् त्रयं 'या इष्टकाः' इत्यादिनोक्तं विष्णुरूपेष्टकादेवतेष्टकासङ्ख्येष्टकापरिमाणरूपं त्रयं विदित्वा एवं ज्ञातप्रकारेण नाचिकेताग्निं चिनुते श्येनकूर्माद्याकारेणेष्टकादिभिः वेदिं करोति स पुमान् पुरतः पुरःस्थितान् मृत्युपाशान् यमपाशान् प्रणोद्य निरस्य शोकातिगः शोकानतिक्रान्तः स्वर्गलोके हरिलोके मोदते सुखमनुभवति ॥ १७ ॥

उपसंहरति– **एष इति ॥**

**एष तेऽग्निर्नाचिकेतः स्वर्ग्यो**
**यमवृणीथा द्वितीयेन वरेण ।**
**एतमग्निं तवैव प्रवक्ष्यन्ति जनास-**
**स्तृतीयं वरं नचिकेतो वृणीष्व ॥ १८ ॥**

द्वितीयेन वरेण द्वितीयं वरं यमवृणीथा वृतवानसि एष स्वर्ग्यः स्वर्ग-साधनः नाचिकेतनामकोऽग्निः ते कथित इति योज्यम् । प्रीत्या स्वदत्तं वरं निर्धारयति । एतमग्निं तवैव त्वत्सम्बन्धिनमेव, त्वन्नाम्नैवेति यावत्, जनासो जनाः, 'आज्जसेरसुक्', प्रवक्ष्यन्ति प्रवदिष्यन्तीति यमो वक्ति । **तृतीयं वर-मिति ॥** वृणीष्वेत्युवाच यम इत्यर्थः ॥ १८ ॥

तृतीयवरवरणप्रकारमाह– **येयमिति ॥**

**येयं प्रेते विचिकित्सा मनुष्ये**
**अस्तीत्येके नायमस्तीति चैके ।**
**एतद् विद्यामनुशिष्टस्त्वयाऽहं**
**वराणामेष वरस्तृतीयः ॥ १९ ॥**

प्रेते [१]मृते मुक्ते च मनुष्ये नियामकत्वेन भगवानस्तीति एके ज्ञानिनो वदन्ति । नास्तीत्यज्ञाः । अतो विप्रतिपत्तेः मम जाता येयं विचिकित्सा सन्देहः एतद्विचिकित्साविषयं मृतमुक्तजीवयोः प्रेरकस्वरूपमहं त्वयाऽनुशिष्टः सन् उपदिष्टस्सन् विद्यां जानीयाम् । वराणां मध्ये एष वरः विचिकित्सा-विषयमृतमुक्तप्रेरकस्वरूपोपदेशप्रार्थनारूपः[२] तृतीयो मया वृत इति नचिकेता यममुवाचेति योज्यम् ॥ १९ ॥

एवं नचिकेतसा प्रार्थितो यमः, **'अणोरणीयान्'** इत्यादिना द्वितीयाध्याये मुक्तजीवनियामकस्वरूपं, 'यथा च मरणं प्राप्य' इत्यादिना पञ्चमे मृतजीव-नियामकं च वक्ष्यन् तृतीयप्रश्नविषयप्रेतस्थेश्वरस्वरूपस्यातिदुर्ज्ञेयत्वादि-माहात्म्यमाह– **देवैरिति ॥**

**देवैरत्रापि विचिकित्सितं पुरा**
**न हि सुज्ञेयो अणुरेष धर्मः ।**

---

१. **'मृतपुरुषे'** इति मुद्रितपुस्तके २. **'–प्रेरकस्वरूपोपदेशनप्रार्थनरूपः'** इति मुद्रितपुस्तके.

**अन्यं वरं नचिकेतो वृणीष्व**
**मा मोपरोत्सीरति मा सृजैनम्** ॥ २० ॥

यद्यपि प्र ते ब्रवीमीत्यादिनोक्तद्वितीयवरोक्तिरपि इष्टकाचिताग्निस्थभगवद्विषयैव, अथापि तज्ज्ञानेन मुक्तौ सुखातिशयो न तु मुक्तिः । सा तु प्रेतप्रेरकतद्गुणादिमाहात्म्यज्ञानादेवेति अस्य दुर्ज्ञेयत्वोक्तिः । देवैरप्यत्र त्वत्कृतप्रश्नविषये पुरा पूर्वं विचिकित्सितं सन्दिग्धमासीत्, तेऽपि सन्देहवन्तोऽभवन् । कुतः? न हि सुज्ञेयः । हि यतः सुखेन ज्ञेयो न भवति । तत्किमित्यत आह– **अणुरेष धर्म इति ॥** अणुः सूक्ष्मः अव्यक्तस्वभावः, धारकत्वाद्धर्मो भगवान् 'धृ धारणे' मप्रत्ययः, अतः कारणात्, हे नचिकेतः, अन्यं वरं प्रेतनियामकोपदेशवरादन्यं वरं वृणीष्व । मा मां मोपरोत्सीः, उपरोधम् एतत्प्रश्नविषयं ब्रूहीति निर्बन्धं न कुर्विति यम उवाचेत्यर्थः । एवं यमेनोक्तो नचिकेता वक्ति माऽतिसृजैवमिति । एवमुक्तप्रकारेण माऽतिसृज अतिसर्जनं परित्यागं मा कार्षीः ॥ २० ॥

**देवैरत्रापि विचिकित्सितं किल**
**त्वं च मृत्यो यन्न सुज्ञेयमात्थ ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यो**
**नान्यो वरस्तुल्य एतस्य कश्चित्** ॥ २१ ॥

कुतः? हे मृत्यो त्वं च त्वमपि यद् यस्माद्देवैरप्यत्र विचिकित्सितं सुज्ञेयं च नेति आत्थ वदसि । वक्ता च त्वादृगन्यः अस्य मत्प्रश्नविषयस्य न लभ्यः । एतस्य कश्चित् तुल्यो वरोऽन्यो नास्ति । तस्मादेतदेव ब्रूहीत्यर्थः ॥ २१ ॥

नानाप्रलोभैरलुब्ध एवास्यां वक्ष्यमाणविद्यायामधिकारीति भावेन यमो गुह्यं वरं याचमानं प्रलोभयति– **शतायुष इत्यादिना ॥**

**शतायुषः पुत्रपौत्रान् वृणीष्व**
**बहून् पशून् हस्तिहिरण्यमश्वान् ।**
**भूमेर्महदायतनं वृणीष्व**
**स्वयं च जीव शरदो यावदिच्छसि ॥ २२ ॥**

शतमायूंषीत्यर्थः । शतायुष इति बहुव्रीहिर्वा । पुत्रपौत्रानित्यस्य विशेषणम् । हस्तिहिरण्यं हस्तिनो हिरण्यं च, द्वन्द्वैकवद्भावः । भूमेर्महदायतनम् अतिविस्तीर्णभूखण्डम् । यावदिच्छसि यावत्कालं जीवितुमिच्छसि तावतीः शरदश्च शरदोऽपि स्वयं जीव ॥ २२ ॥

**एतत्तुल्यं यदि मन्यसे वरं**
**वृणीष्व वित्तं चिरजीविकां च ।**
**महाभूमौ नचिकेतस्त्वमेधि**
**कामानां त्वा कामभाजं करोमि ॥ २३ ॥**

एतत्तुल्यं त्वत्प्रार्थितवरतुल्यं वरं कञ्चन यदि मन्यसे तद्वा वृणीष्व । वित्तं चिरजीविकां जीवनहेतुं च वृणीष्वेत्यादरात् प्रागुक्तस्य पुनरुक्तिः । हे नचिकेतः महाभूमौ पुण्यभूमौ एधि भव । 'घ्वसोरेद्धावभ्यासलोपश्च' (पा.सू. ६.४.११९) इत्यस्ते रूपम् । पुण्यभूमिजननं वा वृणीष्व । एध वृद्धावित्यस्य वा रूपमेतत् । वर्धस्वेत्यर्थः । महान् भूमाविति क्वचित्पाठः । तदा तु एधि भवेत्यर्थः । कामानां काम्यमानानां मध्ये त्वा त्वां कामभाजं कामितभाजं करोमि ॥ २३ ॥

तदेव विशदमाह– **ये य इति** ॥

**ये ये कामा दुर्लभा मर्त्यलोके**
**सर्वान् कामाꣳश्छन्दतः प्रार्थयस्व ।**

**इमा रामाः सरथाः सतूर्या**
**न हीदृशा लम्भनीया मनुष्यैः ।**
**आभिर्मत्प्रत्ताभिः परिचारयस्व**
**नचिकेतो मरणं माऽनु प्राक्षीः** ॥ २४ ॥

मर्त्यलोके भूलोके मानुषदेहे वा । छन्दतः स्वेच्छानुसारेणेत्यर्थः । इमाः रूपशीलादिगुणवतीः । मल्लोकस्था इति वा । रामाः स्त्रियः । रामाणां विशेषणान्तरं सरथाः सतूर्याः । सोपस्करा इत्यर्थः । ईदृशी सम्पत् मनुष्यैः लम्भनीया प्राप्या न हि भवति । तस्मादुक्त-सम्पदमेव प्रार्थयस्वेत्यर्थः । किं कार्यं रामाभिरित्यत आह– आभी रथाद्युपेताभिः स्त्रीभिः मत्प्रत्ताभिः, मद्दत्ताभिः हे नचिकेतः परिचारयस्व परिचर्यस्व, सेव्यो भवेति यावत् । मरणं मरणवन्तं मृतस्थभगवन्तं माऽनुप्राक्षीः नैव पृच्छेत्यर्थः । तस्यातिगोप्यत्वादिति भावः ॥ २४ ॥

एवं प्रलोभितो नचिकेताः शतायुष इत्यादेरुत्तरमाह–**श्व इत्यादिना** ॥

**श्वोभावा मर्त्यस्य यदन्तकैतत्**
**सर्वेन्द्रियाणां जरयन्ति तेजः ।**
**अपि सर्वं जीवितमल्पमेव**
**तवैव वाहास्तव नृत्तगीतम्** ॥ २५ ॥

हे अन्तक मृत्यो, मर्त्यस्य मनुष्यस्य यदेतत् य एते पुत्रादयः, व्यत्ययात्, तत् ते श्वः परेद्युः अभावाः भवन्तीति [१]भावाः, न भावाः अभावा असन्तः अस्थिरा इति यावत्, तद्रक्षणार्थायासेन सर्वेन्द्रियाणां तेजो वीर्यं जरयन्ति अपगमयन्ति च । अतः किं पुत्रपौत्रादिभिरिति भावः । यदपि स्वयं च जीवेत्याद्युक्तं तस्योत्तरमाह– **अपीति** ॥ सर्वमपि जीवितमल्पमेव उत्तरा-

---

१. **'भावाः'** इति पदं मुद्रितपुस्तके नास्ति ।

वध्युपेतमेव । न हि मुक्ताविव उत्तरावधिशून्यमायुरस्तीति भावः । इमा रामा इत्यस्योत्तरं– **तवैवेति** ॥ वाहाः रथादिवाहनानि तवैव सन्तु । नृत्तगीतं, द्वन्द्वैकवद्भावः, रामाभिः क्रियमाणं तवास्तु ॥ २५ ॥

वृणीष्व वित्तमित्यादेरुत्तरं– **न वित्तेनेति** ॥

**न वित्तेन तर्पणीयो मनुष्यो**
**लप्स्यामहे वित्तमद्राक्ष्म चेत् त्वाम् ।**
**जीविष्यामो यावदीशिष्यसि त्वं**
**वरस्तु मे वरणीयः स एव ॥ २६ ॥**

वित्तेन मनुष्यः न तर्पणीयो [१]नाऽप्यायनीयः । कुत इत्यतः त्वादृशे देवे दृष्टे वित्तायुषोरनुषङ्गसिद्धत्वान्न ते पृथक् प्रार्थनीये इत्याह– **लप्स्यामह इति** ॥ त्वां चेदद्राक्ष्म दृष्टवन्तः स्मः तर्हि वित्तं लप्स्यामहे । त्वं यावदीशिष्यसि, ईश ऐश्वर्ये, मम यावदायुषः ईश्वरो भविष्यसि तावत्कालं जीविष्यामो वयम् । तवाऽयुषः कर्तृत्वादिति भावः । परस्मैपदं छान्दसम् । तर्हि कं कामं याचस इत्यत आह–**वरस्त्विति** ॥ स एव प्राग् याचित एवेत्यर्थः । तुशब्दः अस्य वरस्य सर्वातिशयद्योतकः ॥ २६ ॥

लप्स्यामह इत्यादिनोक्तमेव विवृणोति– **अजीर्यतामिति** ॥

**अजीर्यताममृतानामुपेत्य**
**जीर्यन्मर्त्यः क्वाधस्थः प्रजानन् ।**
**अभिद्ध्यायन् वर्णरतिप्रमोदा-**
**नतिदीर्घे जीविते को रमेत ॥ २७ ॥**

हे प्रजानन् विद्वन्, अजीर्यतां, जूष् वयोहानौ, उपलक्षणं, वयःप्रभृतिसम्पत्तिमताममृतानां देवानां, सकाशमिति शेषः, उपेत्य प्राप्य जीर्यन् मर्त्यः

१. 'आप्यायितव्यः' (शा.)

क अधस्थोऽप्रकृष्टश्च क कुत्र? न कुत्रापि । किन्तु महानेव अजीर्यन्नेवाऽस्त इत्यर्थः । दीर्घजीवनस्य दुःखहेतुत्वाच्च न तत् प्रार्थ्यमित्याह– **अभिध्यायन्निति ॥** वर्णरतिप्रमोदान् वर्णो ब्राह्मणादिः, देहगतशोभाविशेषो वा, रतिः विषयानुभवजं सुखम् । प्रमोदः प्रकृष्टविषयानुभवजं सुखम् । एतान् पूर्वानुभूतान् विषयान् इदानीं निवृत्तान् अभिध्यायन् स्मरन् अतिदीर्घे जीविते को रमेत न कोऽपीत्यर्थः । वयोऽधिकत्वे जराद्यापत्त्या भोगशक्तेरभावात् । प्रत्युत क्लेश एव भवेदिति भावः ॥ २७ ॥

तर्हि किमाकूतं तवेत्यत आह– **यस्मिन्निति ॥**

**यस्मिन्निदं विचिकित्सन्ति मृत्यो**
**साम्पराये महति ब्रूहि नस्तत् ।**
**योऽयं वरो गूढमनुप्रविष्टो**
**नान्यं तस्मान्नचिकेता वृणीते ॥ २८ ॥**

**इति श्रीकाठकोपनिषदि प्रथमाध्याये प्रथमा वल्ली समाप्ता ॥**

यस्मिन् विषये इदम् इत्थं प्रेतप्रेरकतया अस्ति न वेति विचिकित्सन्ति सन्दिहते जनाः, तत् तु तदेव प्रेतप्रेरकस्वरूपं, हे मृत्यो महति साम्पराये मुक्तौ, निमित्तसप्तमी, मोक्षार्थं नोऽस्मभ्यं ब्रूहि उपदिश । साम्परायपदस्य श्रेयोमात्रसाधारण्यात् मुक्त्यर्थत्वलाभाय [१]महतीत्युक्तम् । योऽयं वरः प्रेतप्रेरकस्वरूपोक्तिप्रार्थनरूपः गूढं गूढत्वं गोप्यतामनुप्रविष्टः प्राप्तः तस्माद् वरादन्यं वरं नचिकेता न वृणीत इति स्वात्मानमेव नामनिर्देशेनाऽह ॥ २८ ॥

**॥ इति काठकार्थसङ्ग्रहे प्रथमाध्यायस्य प्रथमा वल्ली ॥**

—०—

१. 'महतीत्युक्तिः' (श.)

## अथ प्रथमे द्वितीया वल्ली

दीयमानमपि पुत्रादिकामं हित्वा ब्रह्मविद्यां याचमानः त्वं [1]प्रशस्तोऽसीति तं **'स त्वं प्रियान्'** इत्यादिना प्रशंसितुं ब्रह्मविद्याया मोचकत्वं, पुत्रादिकामस्य बन्धकत्वं, तद्भाजोः स्तुतिनिन्दे, ज्ञाज्ञयोः स्थिती च सार्धमन्त्रद्वयेनाऽह यमः– **अन्यदित्यादिना** ॥

**अन्यच्छ्रेयोऽन्यदुतेव प्रेय-**
**स्ते उभे नानार्थे पुरुषꣳ सिनीतः ।**
**तयोः श्रेय आददानस्य साधु भवति**
**हीयतेऽर्थाद् य उ प्रेयो वृणीते ॥ १ ॥**

श्रेयः प्रशस्ततमं ब्रह्मज्ञानम् अन्यत्, प्रेयः उत प्रियतमं दारापत्यादि काम्यमानं वस्त्वपि [2]अन्यदिव जानतां दारापत्यादिरूपप्रेयसोऽपि सद्धर्मद्वारा श्रेयस्त्वमेवेति सूचनाय इवशब्दः । द्वयोरन्योन्यत्वं नाम किमित्यतः ऐहिकामुष्मिकसुखहेतुत्वं तदित्याह– **ते उभे इति** ॥ ते उभे नानार्थे [3]भिन्नप्रयोजनके पुरुषं देहिनं सिनीतः बध्नीतः, षिञ् बन्धन इति धातोः । पुरुषस्य द्वे प्रसक्ते इत्यर्थः । ततः किमित्यत आह– **तयोरिति** ॥ श्रेयःप्रेयसोर्मध्ये श्रेयो ब्रह्मविद्याम् आददानस्य उपासीनस्य साधु भद्रं भवमोचनं भवति । य उ य एव प्रेयः दारापत्यादिकामं वृणीते सोऽर्थात् परमपुरुषार्थाद् हीयते हीनो भवति । भवपाश एव बद्धो भवतीत्यर्थः ॥ १ ॥

---

१. **'प्रशस्तोऽसीत्याह- 'स त्वं प्रियान्'** इत्यादिना ॥ (श.)

२. **'अन्यदिव इति च जानतां'** इति मुद्रितपुस्तके ।

३. **'भिन्नप्रयोजने'** (श.)

उक्तानुवादपूर्वकं ज्ञानिनः स्थितिमाह– **श्रेयश्चेति** ॥

**श्रेयश्च प्रेयश्च मनुष्यमेत-**
**स्तौ सम्परीत्य विविनक्ति धीरः ।**
**श्रेयो धीरोऽभि प्रेयसो वृणीते**
**प्रेयो मन्दो योगक्षेमान् वृणीते ॥ २ ॥**

एत इत्यत्र आ इत इति पदच्छेदः । आङ्पूर्वस्य इण् गतावित्यस्य रूपम् । प्रागुक्तरूपं श्रेयश्च द्वे मनुष्यम् एतः प्राप्य तिष्ठतः । धीरो ज्ञानी तौ श्रेयःप्रेयःशब्दितौ ब्रह्मविद्याकामौ सम्परीत्य सम्यग् ज्ञात्वा विवेकी प्रेयसः प्रियतमान् दारापत्यादिकामान् अभि, निपातानामनेकार्थत्वादवज्ञायेत्यर्थः, श्रेयो ब्रह्मविद्यां वृणीते । मन्दो विवेकहीनः योगक्षेमान्, अप्राप्तकामप्राप्तिर्योगः, तस्यानपगमेन स्थिरत्वं क्षेमः, तद्रूपान् प्रेयसो वृणीते ॥ २ ॥

यत्प्रशंसार्थम् उपोद्धात उक्तस्तामाह– **स त्वमिति** ॥

**स त्वं प्रियान् प्रियरूपांश्च**
**कामानभिध्यायन्नचिकेतोऽ(न्यत्प्राक्षीः)त्यस्राक्षीः ।**
**नैतां शृङ्कां वित्तमयीमवाप्तो**
**यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥**

हे नचिकेतः, स त्वं मया प्रलोभितोऽपि त्वं प्रियान् दारापत्यादीन् प्रियरूपांश्च गृहारामक्षेत्रादींश्च कामान् काम्यमानान् अभिध्यायन् अस्थिरतया मन्वानः अन्यद् ब्रह्मस्वरूपं प्राक्षीः अप्राक्षीः, अडभावः छान्दसः, [1]पृष्टवानसि । अत्यस्राक्षीरिति पाठे त्यक्तवानभूरित्यर्थः । वित्तमयीं सुवर्णमयीमेतां कण्ठधारणयोग्यां शृङ्कां शृङ्खलां नावाप्तः न स्वीकृतवान् । शृङ्केयमतिश्लाघ्येत्याह– **यस्यां मज्जन्ति** आसक्ताः भवन्ति बहवो मनुष्याः, तादृशीमपि मया दीयमानां न गृहीतवान् । अतस्त्वं प्रशस्त इति भावः ॥ ३ ॥

---

१. **'पृष्टवानभूः'** (शा.)

पूर्वं योगक्षेमानिति प्रियान् प्रियरूपांश्चेति प्रेयस्स्वरूपं किञ्चित् स्पष्टीकृतम् । श्रेयस्स्वरूपं तु न स्पष्टम् । श्रेय आददानस्येति सामान्यत उक्तेः । अतस्तदुभयं स्पष्टयन् नचिकेतसं स्तौति– **दूरमिति** ॥

**दूरमेते विपरीते विषूची**
**अविद्या या च विद्येति ज्ञाता ।**
**विद्याभीप्सितं नचिकेतसं मन्ये**
**न त्वा कामा बहवो लोलुपन्तः ॥ ४ ॥**

या अविद्या विद्याभिन्ना [१]ऐहिकसुखसाधनत्वेन ज्ञाता या च विद्येति ज्ञाता, एते दूरम् अन्योन्यं विदूरतो वर्तमाने । तदेवाऽह–**विपरीते इति** ॥ परस्परं विरुद्धे, तद्व्यनक्ति– **विषूची** विषूचीने विरुद्धफलहेतू । नचिकेतसं त्वा त्वां विद्याभीप्सितं विद्याभिकाङ्क्षिणं मन्ये जानामि । बहवः कामाः त्वा त्वां लोलुपन्तः लोलुपयन्तः अपेक्षां जनयन्तः न वर्तन्त इत्यर्थः । कामैः प्रलुब्धस्त्वं न भवसीति यावत् ॥ ४ ॥

श्रेयश्शब्दितविद्याकामः श्रेयानिति भावेनाविद्याशब्दितप्रेयस्कामान् निन्दति यमः– **अविद्यायामिति** ॥

**अविद्यायामन्तरे वर्तमानाः**
**स्वयन्धीराः पण्डितम्मन्यमानाः ।**
**दन्द्रम्यमाणाः परियन्ति मूढा**
**अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥**

ब्रह्मविद्येतरस्मिन् अन्तरेऽविद्याया मध्ये वर्तमानाः केवलं तन्मात्रोपासकाः स्वयन्धीराः स्वयमेव धीमन्त इति वदन्तः, आत्मानं पण्डितं मन्यमानाः जानन्तः दन्द्रम्यमाणाः वक्रगतयः, द्रमेः कुटिलगत्यर्थत्वात्, मूढाः कामभोगेन

१. 'ऐहिकसुखसाधनभूता' (श.)

मोहिताः, परियन्ति परितः स्वर्गनरकादीन् गच्छन्ति ! तत्र दृष्टान्तः– **अन्धेनैवेति** ॥ ५ ॥

कुत एवं फल्गुकामेष्वासक्तिरित्यतः [१]श्रेयस्साधनादर्शनादित्याह– **न साम्पराय इति** ॥

**न साम्परायः प्रतिभाति बालं**
**प्रमाद्यन्तं वित्तमोहेन मूढम् ।**
**अयं लोको नास्ति पर इति मानी**
**पुनःपुनर्वशमापद्यते मे ॥ ६ ॥**

साम्परायः श्रेयस्साधनीभूतो भगवान् न भाति न तज्ज्ञानविषयो भवति । कुतो न भातीत्यत उक्तम्– **बालमिति** ॥ बालसदृशं, वित्तमोहेन मूढम् अत एव प्रमाद्यन्तं प्रमादोपेतं प्रति न भातीत्यन्वयः । वित्तमोहेन मूढत्वादेव तं प्रति न भातीत्यर्थः । वित्तमूढत्वं व्यनक्ति– **अयं लोक इति** ॥ अयं लोको भूलोकः अस्ति, परो लोकः आमुष्मिकस्तु नास्ति, ऐश्वर्यं स्थिरमिति मानी अभिमानीति यावत्, पुनः पुनः मे यमस्य मम वशमापद्यते । वित्तमूढो वित्तादिकं नित्यं मन्वानो मृत्वा मृत्वा यमयातना-मेवानुभवतीत्यर्थः ॥ ६ ॥

भगवतोऽभाने हेत्वन्तरमाह– **श्रवणायेति** ॥

**श्रवणायापि बहुभिर्यो न लभ्यः**
**शृण्वन्तोऽपि बहवो यं न विद्युः ।**
**आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धाऽऽ-**
**श्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥**

---

१. 'मोक्षसाधनादर्शनात्' (श)

यः साम्परायशब्दितो भगवान् बहुभिः श्रवणाय न लभ्यः । बहूनां श्रवणजन्यज्ञानविषयो न भवति । तर्हि किं शब्दावेद्य एव, नेत्याह । शृण्वन्तोऽपि शब्दात् तं जानन्तोऽपि बहवः यं न विद्युः न जानन्ति । कार्त्स्न्येनेति वा यथावत्त्वेनेति वाऽभिप्रायः । अतो न वित्तमूढं प्रति भातीत्यन्वयः । कुतो न विद्युरित्यतो यथावत्तया तत्स्वरूपवक्ता श्रोता च दुर्लभ इत्याह– **आश्चर्य इति ॥** अस्य साम्परायशब्दितस्य श्रेयस्साधनीभूत-भगवतः कुशलो वक्ता यथावत्तत्स्वरूपोपदेष्टा आश्चर्यो दुर्लभः । कुशलानुशिष्टः यथावदनुशिक्षितः अस्य वक्तुः लब्धा प्राप्ता यथावद्ब्रह्मस्वरूपवक्तृभूता-चार्यप्राप्तिमान् ज्ञाता श्रोता च आश्चर्यो दुर्लभ इत्यर्थः ॥ ७ ॥

निरीश्वरवादिनां तदज्ञानेऽपि सेश्वरास्तु जानन्त्येवेत्यतः कथं वक्तृश्रोत्रोर्दुर्लभत्वमित्यतः सम्यग्ज्ञानिनस्ते न भवन्तीत्याह–**न नरेणेति ॥**

**न नरेणावरः प्रोक्त एष**
**सुज्ञेयो बहुधा चिन्त्यमानः ।**
**अनन्यप्रोक्ते गतिरत्र ना-**
**स्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥**

नरेणाज्ञानिमनुष्येण प्रोक्तोऽवरोऽप्रकृष्टः । कुतः? बहुधा प्रकृत्युपसर्जन-त्वाल्पगुणत्वप्राकृतदेहत्वादिनानाप्रकारेण चिन्त्यमानस्सन् तैरेषः सु सम्यक् यथावत्तया ज्ञेयो न भवतीति । अद्वैतिना प्रोक्ते भगवज्ज्ञानमेव न जायत इत्याह– **अनन्येति ॥** अहं ब्रह्मणोऽनन्य इति जानन् स्वात्मब्रह्मणोः भेद-मजानन् ऐक्यमेव जानन् अनन्य उच्यते । तेन प्रोक्ते अत्र ब्रह्मविषये गति-र्ज्ञानं नास्ति । यत्किञ्चिन्निर्विकल्पकज्ञानमेव[1] न भवतीति भावः । व्याख्यातृ-वचनेन ब्रह्मज्ञानाभावेऽपि प्रत्यक्षानुमानाभ्यां स्यात् तज्ज्ञानमित्यत आह– **अणीयानिति ॥** अणुप्रमाणात्, अणुपरिमाणतोऽणीयान् अतिसूक्ष्मं हि यतो

१. 'ज्ञानमेव भवतीति' (श)

अतो न प्रत्यक्षम् । अतर्क्यं च अनुमानागोचरश्च । केवलानुमानस्य प्रतिपक्षादिग्रस्तत्वादिति भावः ॥ ८ ॥

अतर्क्यमित्युक्तं विवृण्वन् ब्रह्मज्ञानोपायमाह– **नैषेति ॥**

**नैषा तर्केण मतिरापनेया**
**प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।**
**यां त्वमापः सत्यधृतिर्बतासि**
**त्वादृङ् नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥**

एषा ब्रह्मगोचरा मतिः तर्केण, आ अपेति पदच्छेदः, आनेया अपनेया च न भवति । किन्त्वन्येन ब्रह्मणोऽन्योऽहमिति जानता प्रोक्ता मतिः तदुपदेशजन्या बुद्धिः सुज्ञानाय सम्यग्ज्ञानाय भवति । हे प्रेष्ठ प्रियतमेति सम्बोधनं, हे नचिकेतः यां मतिं त्वमापः, आप्लृ व्याप्तौ लुङ्, प्राप्तवानसि, एषा मतिरिति पूर्वेणान्वयः । त्वं सत्यधृतिः अचाल्यधैर्यवानसि । बतेत्याश्चर्ये । नानाप्रकारेण प्रलोभितोऽपि ब्रह्मस्वरूपमतिविषये धैर्यं न मुक्तवानसि इत्येतदाश्चर्यमिति भावः । नः अस्मान् प्रष्टा पृच्छकः त्वादृक् नो भूयात् [१]न भवेदेव । न स्यादेवेति ॥ ९ ॥

त्वया पृष्टं ब्रह्मस्वरूपमहं जानामीत्याह यमः– **जानामीति ॥**

**जानाम्यहꣳ शेवधिरित्यनित्यं**
**नह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।**
**ततो मया नचिकेतश्चितोऽग्नि-**
**रनित्यद्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥**

अनित्यम् 'अः इति ब्रह्म' इति श्रुतेः 'अकारस्सर्ववागात्मा परब्रह्माभिधायकः' इति स्मृतेश्च अकारो ब्रह्मवाची । अकारवाच्यं च तत्

१. **'न भवेन्न स्यादेवेति'** मुद्रितपुस्तके ।

नित्यं चेति अनित्यम् । अकारवाच्यं ब्रह्म नित्यं शेवधिः निधिरिति जानाम्यहम् । अनित्यमित्यत्र अ इति भिन्नं पदं वा नपुंसकम् । अकारनामकं ब्रह्म नित्यं शेवधिः निधिसदृशं परमपुरुषार्थहेतुरिति जानाम्यहम् । ध्रुवं शाश्वतं ब्रह्म अध्रुवैः न विद्यते ध्रुवं ब्रह्म येषां तैः अध्रुवैः, ब्रह्मज्ञानभक्त्यादिहीनैः न प्राप्यते हि यस्मात् तस्मात् कारणात् मया अनित्यद्रव्यैः अः ब्रह्म नित्यं सदा येषां विषयतयाऽस्तीति वा, अकारवाच्यं ब्रह्मरूपं नित्यं वस्तु विषयतया येषामस्तीति वा, तानि अनित्यानि च तानि द्रव्याणि च मनःप्रभृतीति तैः अग्निः इष्टकाचितिस्थोऽग्निः चितः । तेन च नित्यं शाश्वतं ब्रह्म आप्तवानस्मि, हे नचिकेत इति ॥ १० ॥

न केवलमहमेव जानामि मत्प्रासादात् त्वमपि जानासीति भावेन प्रागुक्तमनुवदति– **कामस्येति** ॥

**कामस्याऽऽप्तिं जगतः प्रतिष्ठां**
**क्रतोरानन्त्यमभयस्य पारम् ।**
**स्तोममहदुरुगायं प्रतिष्ठां**
**दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥**

हे नचिकेतः, धीरस्त्वं धृत्या धैर्येण मनोदार्ढ्येन कामस्याऽऽप्तिं वित्तादेः प्राप्तिम् अत्यस्राक्षीः अत्यन्तं त्यक्तवानभूः । कथम्? जगतः प्रतिष्ठां प्रतिष्ठापकं, क्रतोः भगवदीयकर्मणः भगवदीयज्ञानस्य वा आनन्त्यम् आनन्त्यहेतुम् अक्षय्यफलदम्, अभयस्य पारं तीरम् [1]अभयप्रदं, स्तोममहत् स्तोमाः स्तोत्रसाधनभूता मन्त्राः तेभ्यो महत् महान्तं, स्तोमैः साकल्येन प्रतिपादयितुमशक्यमिति यावत्, उरुभिः ब्रह्मादिभिः मुमुक्षुभिर्वा गीयत इति उरुगायं प्रतिष्ठां मुक्ताश्रयं दृष्ट्वा ज्ञात्वेति, उक्तगुणविशिष्टं विष्णुं ज्ञात्वा क्षुद्रकामावाप्तिं न याचितवानिति भावः । 'अनन्तलोकाप्तिमथो प्रतिष्ठाम्' इति

१. **'अभयदं'** इति मुद्रितपुस्तके ।

प्रागुक्तद्वयस्य जगतः प्रतिष्ठां, क्रतोरानन्त्यमिति विशेषणद्वयेनानुवादः[१]। ब्रह्मजज्ञं देवमीड्यमित्यादिनोक्तं स्तोममहदुरुगायमित्यनेनानूदितमिति ज्ञेयम् ।। ११ ।।

न केवलं त्वमेव त्वदन्योऽपि तं दृष्ट्वा तृप्तो भवतीत्याह–**तमिति** ।।

**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ।। १२ ।।**

दुर्दर्शम् अतिप्रयत्नेन ज्ञेयं गूढम् अनभिव्यक्तम्, अनुप्रविष्टं प्रेरकतया सर्वजगदन्तःप्रविष्टं, गुहाहितं सर्वप्राणिहृदयगुहायामाहितं स्थितं,[२] गह्वरेष्ठं मुक्तजीवे स्थितं, संसार्यगम्यत्वात् मुक्तो गह्वरो ज्ञेयः, पुराणं पुरातनम्, अध्यात्मयोगेन ध्यानयोगेन जातोऽधिगमः, तेन देवं क्रीडादिगुणविशिष्टं मत्वा ज्ञात्वा धीरो हर्षशोकौ जहाति । यस्तु उक्तगुणविशिष्टं भगवन्तं ध्यानोपायेन ज्ञात्वा आस्ते स धीरः कामप्राप्त्यप्राप्तिभ्यां हर्षशोकयुक्तो न भवति । भगवज्ज्ञानेन तृप्तस्सन् परमानन्दभरित एवाऽस्त इति भावः ।। १२ ।।

एतज्ज्ञानं केन भवतीत्यतो महतामुपदेशेनेत्याह– **एतदिति** ।।

**एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः**
**प्रवृह्य धर्म्यमणुमेनमाप्य ।**
**स मोदते मोदनीयꣳ हि लब्ध्वा**
**विवृतꣳ सद्म नचिकेतसं मन्ये ।। १३ ।।**

यो मर्त्यः, एतद् ब्रह्म महद्भ्यः श्रुत्वा धर्म्यं जगद्धारकम् अणुं सूक्ष्मं भगवन्तं प्रवृह्य जीवात् पृथक्कृत्य सम्परिगृह्य सम्यग् ज्ञात्वा जीवाद् भेदेन मुक्तजीवे स्थितं [३]ज्ञात्वा एनं भगवन्तम् आप्य मोदते । हि यतो मोदनीयं

१. **'स्वर्गलोका अमृतत्वं भजन्ते'** इत्युक्तस्य **'अभयस्य पारम्'** इत्यनेनानुवादः ।' इति अधिकः पाठः ञमातृकायाम् ।

२. **'गुहायां हितं संस्थितं'** इति मुद्रितपुस्तके । ३. **'ज्ञात्वाऽऽस्ते स एनं'** इति मुद्रितपुस्तके ।

लब्ध्वाऽऽस्ते अत इति योजना । यद्वा, मोदनीयम् एनं प्राप्य मोदते हि यतः अतो लब्ध्वा एनमित्यनुषङ्गः । एनं भगवन्तं लब्ध्वा ज्ञात्वा स्थितं नचिकेतसं प्रति सद्म वैकुण्ठद्वारं विवृतं प्रकटितं मन्ये जानामि । ब्रह्मज्ञानिना त्वया सर्वकामत्यागेन विशेषतो ब्रह्मज्ञानस्यार्थ्यमानत्वात् प्रशस्तस्त्वमिति भावः ॥ १३ ॥

अलं मत्प्रशंसया, तत्त्वं ब्रूहीत्याह नचिकेताः– **अन्यत्रेति ॥**

**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद् वद ॥ १४ ॥**

धर्मादन्यत्र अधर्मादन्यत्र धर्माधर्महीनमिति यावत् । अस्मात् प्रमितात् कृताकृतात्, द्वन्द्वैकवद्भावः, कार्यात् कारणाच्चान्यत्र अन्यत् तदुभयविलक्षणमिति यावत् । भूताच्चातीताद् भव्याच्चाऽगामिनश्च अन्यत्र तदुभयविलक्षणमिति यावत् । कृताकृतादित्यस्य विवरणं वा भूताच्चेत्यादि । तत् लोकविलक्षणतया प्रसिद्धं यत् यद्वस्तु पश्यसि जानासि तद्वद मह्यमित्यर्थः ॥ १४ ॥

पृष्टं ब्रह्मस्वरूपं वक्तुं तन्महिमोक्तिपूर्वकं प्रतिजानीते–**सर्व इति ॥**

**सर्वे वेदा यत्पदमामनन्ति**
**तपाꣳसि सर्वाणि च यद् वदन्ति ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति**
**तत्ते पदꣳ सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥**

आमनन्ति मुख्यवृत्त्या बोधयन्ति । यत्पदं यस्य स्वरूपम् । यत् प्रति यदुद्दिश्य यत्प्रीत्यर्थं सर्वाणि तपांसि कर्माणि वेदाः वदन्ति, यदिच्छन्तो यत्प्रीतिमिच्छन्तो महान्तः ब्रह्मचर्यं ब्रह्मगोचरश्रवणादिकम् ऊर्ध्वरेतस्त्वादि-व्रतं वा चरन्ति अनुतिष्ठन्ति तत्पदं ते तुभ्यं सङ्ग्रहेण सङ्क्षेपेण ब्रवीमि[१]

---

१. **'ब्रवीमीति'** इत्येव पाठः मुद्रितपुस्तके ।

ब्रवाणीति । एवमुक्तो नचिकेता आह– **ओमित्येतदिति** ॥ एतत् त्वया ब्रवीमीति प्रतिज्ञातं ब्रह्म-स्वरूपम् इति 'सर्वे वेदाः' इति त्वदुक्तप्रकारेण ॐ भक्त्येवेत्यङ्गीकारार्थ ओङ्कारः । यद्वा तत्पदमित्युक्तं पदं किमित्यत उक्तम्– **ओमिति** ॥ एतत्पदम् ओमित्युच्यत इत्यर्थः ॥ १५ ॥

ब्रह्मस्वरूपं विवक्षुः तज्ज्ञानिनः फलं महिमोक्तिपूर्वकमाह–**एतद्ध्येवेति** ॥

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥**

एतत् त्वया पृष्टमक्षरम् अविनाशि ब्रह्मैव । एतदेव परम् अक्षरं परमाक्षरनामकम् । हिशब्दौ उभयत्र प्रसिद्धिद्योतकौ । योऽधिकारी ज्ञात्वा यदिष्टमिच्छति कामयते । तस्य तदिष्टं भवत्येवेत्यर्थः ॥ १६ ॥

**एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम् ।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥**

एतत् त्वया पृष्टं श्रेष्ठमालम्बनं सर्वेषां मुख्याश्रयं, परमालम्बनं विलक्षणाश्रयम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके भगवल्लोके पूज्यत इति ॥१७॥

ब्रह्मलोकस्थः पुनः कथम्भूत इत्यतो जन्मादिहीनश्चेत्याह– **न जायत इति** ॥

**न जायते म्रियते वा विपश्चि-**
**न्नायं कुतश्चिन्न बभूव कश्चित् ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमानेऽपि देहे ॥ १८ ॥**

नेत्यग्रेऽप्यन्वेति । विपश्चित् ज्ञानी देहयोगवियोगलक्षणजनिमृतियुक्तो न भवति । कुत इत्यतो हेतुद्वयमाह– **नायमिति न बभूवेति च** ॥ अयं

भगवान् कुतश्चिदपि न जायते न म्रियत इत्यनुकर्षः । भगवतो जन्ममृतिहीन-त्वात् तादृशभगवद्विपश्चितोऽपि देहयोगवियोगरूपजन्ममृती न स्त इति । स्वरूपतो जन्माद्यभावाच्च नोक्तरूपजन्ममृती ज्ञानिन इति भावेन हेतोरसिद्धिनिरासाय तत्साधयितुं स्वरूपेण जननं बन्धवेलायामपि नास्ति किमुत मुक्तावित्याह– **न बभूव कश्चिदित्यादि** ।। अयं जीवः पुराणः पुरं देहमणति गच्छतीति पुराणः [1]देहबन्धयुक्तः सन्नपि अजो नित्यः स्वरूपेण जन्ममृतिहीनः । शाश्वतः अविकारश्च । किमु मुक्तौ । कश्चिदपि न बभूव स्वरूपेण न जायत इति । न नश्यतीत्युपलक्ष्यते । जीवस्य कदाऽपि स्वरूपेण जन्ममृत्योरभावाद् देहयोगादिनैव [2]जन्मादेर्वाच्यत्वात् सर्वथा [3]देहबन्धान्मुक्ति-दशायां कथं देहयोगादिरूपजन्ममृती विपश्चितः स्याताम् इति 'न बभूव कश्चित्' इत्यनेनोक्तस्य स्वरूपतो जन्माद्यभावस्य, न जायते न म्रियते इत्युक्तार्थे हेतुत्वं बोध्यम् । यद्वा, 'न बभूव कश्चित्' इत्यनेनैव कदाऽपि स्वरूपेण न बभूव न नश्यतीति 'न जायते' इत्यादौ उक्तेऽर्थे स्वरूपाजननादि-हेतुमुक्त्वोपसंहरति स्वरूपस्यानादिनित्यत्वमजो **नित्य इत्यादिना** ।। प्राग्वदेवार्थः । ननु पुराणत्वे देहहानिरस्ति किमित्यतो नेत्याह– **न हन्यत इति** ।। १८ ।।

नन्वेवं हन्ता हतश्चाहमिति प्रतीतिः कथमित्यतो भ्रान्तिरित्याह– **हन्तेति** ।।

**हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ।। १९ ।।**

जीवस्वभावं हन्तुमिति योज्यम् । **न विजानीत इति** ।। जीवस्व-रूपस्य नित्यत्वादिति भावः ।। १९ ।।

एवमुपदिश्यमानब्रह्मज्ञानिनः फलमुक्त्वा प्रेतजीवनियन्तृब्रह्मोपदिशति– **अणोरणीयानिति** ।।

---

१. देहसम्बन्धयुक्तः (शा)  २. जननादेः (शा.)  ३. देहसम्बन्धात् (शा.)

**अणोरणीयान् महतो महीया-**
**नात्माऽस्य जन्तोर्निहितो गुहायाम् ।**
**तमक्रतुः पश्यति वीतशोको**
**धातुः प्रसादान्महिमानमात्मनः ॥ २० ॥**

अस्य 'न बभूव' इत्यादिनोक्तदिशा अनादिनित्यस्य जन्तोर्जीवस्य गुहायां हृदि प्रेरकतया निहितो नितरां स्थित इति । 'एतदालम्बनं ज्ञात्वा' इत्युक्तैतज्ज्ञानस्य प्रथमभाविसाधनमाह– **तमिति** ।। तम् अणीयस्त्वाद्युक्त-गुणयुक्तम् आत्मनः स्वस्मात् महिमानं महान्तं महागुणपरिमाणम् अक्रतुः अकारवाच्यविष्णुविषयकक्रतुशब्दितनिश्चयवान् धातुः हरेः प्रसादात् पश्यति ध्यानद्वारा साक्षात्करोति । ततश्च वीतशोको भवति ॥ २० ॥

पुनश्च भगवतो महिमानमेवाऽऽह– **आसीन इति** ॥

**आसीनो दूरं व्रजति शयानो याति सर्वतः ।**
**कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥**

सामर्थ्यातिशयादेवाऽसीन इत्यादिविरुद्धधर्मवत्त्वं तस्य ज्ञेयम् । मदामदं मदश्चामदश्च सुखमसुखं ततो भवतीति मदामदं सुखासुखहेतुं तं देवं मदन्यः कः ज्ञातुमर्हति ॥ २१ ॥

पुनस्तन्महिमोक्तिपूर्वकं तज्ज्ञानिनः फलमाह– **अशरीरमिति** ॥

**अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥**

अनवस्थेषु नश्वरेषु शरीरेषु प्राणिदेहेषु अशरीरं तत् शरीरनिमित्तक-विकाररहिततयाऽवस्थितं महान्तं देशकालगुणतो महान्तं विभुं समर्थमात्मानं स्वामिनं मत्वा धीरो न शोचति मुक्तो भवति ॥ २२ ॥

ननु श्रवणाद्युपायेनापि तज्ज्ञानसम्भवाद् धातुः प्रसादात् तं [1]पश्यतीत्यनुपपन्नमित्यत आह– **नायमिति ॥**

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥ २३ ॥**

प्रवचनेन व्याख्यानेन लभ्यो दर्शनीयो न भवति । न मेधया स्वकीय-प्रज्ञाबलेन न लभ्यः । बहुना श्रुतेन श्रवणेन न लभ्यः । किन्तु यम् एषः भगवान् वृणुते स्वीकरोति, यस्मै प्रसीदतीति यावत्, तेनैव लभ्यो दर्शनीयः । कथम्? तस्य प्रसादविषयस्य एष आत्मा स्वां तनूं विवृणुते प्रदर्शयतीति । कथमन्यथा [2]अव्यक्तैकस्वरूपस्य तत्प्रसादेन विना अपरोक्षतेति भावः । तथा च सूत्रं 'अतोऽनन्तेन तथा हि लिङ्गम्' (ब्र.सू.३.२.२२७) इति ॥ २३ ॥

तद्दृष्टेः प्रसादैकलभ्यत्वे किं वैराग्यादिसाधनैरित्यतः ज्ञानद्वारा प्रसादहेतुतया तदप्यावश्यकमिति भावेनाऽह– **नाविरत इति ॥**

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥**

दुश्चरितात् दुराचाराद् अविरतः अनिवृत्तः, दुराचारीति यावत्, प्रज्ञानेन प्रज्ञानद्वारा एनं भगवन्तं तत्प्रसादं नाऽप्नुयादित्यन्वयः । एवमग्रेऽपि । अशान्तः श्रवणमननध्यानैर्भगवन्निष्ठारहितः । असमाहितः यथा वस्तु तथा ज्ञानहीनः । अशान्तमानसः विषयभोगे अलम्बुद्धिहीनः विषयलम्पट इति यावत् ॥ २४ ॥

---

१. 'पश्यतीति प्रागुक्तमयुक्तमित्यतः' (श.) २. 'अव्यक्तैकस्वभावस्य' (श.)

पुनस्तन्महिमोक्तिपूर्वकं तज्ज्ञानं दुर्लभमित्याह– **यस्येति** ।।

**यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।। २५ ।।**

**इति प्रथमाध्याये द्वितीया वल्ली**

—०—

यस्य भगवतः ब्रह्म ब्राह्मणत्वजात्याक्रान्तं वस्तु, क्षत्रं क्षत्रियत्वजात्याक्रान्तं च, इतरेतरसमुच्चये चशब्दौ, उभे ब्रह्मक्षत्रे ओदनः अन्नं भवतः, यस्य ब्रह्मक्षत्राख्योदनवतः मृत्युः प्राणिनां मारकः उपसेचनम् अद्यमानत्वे सत्यन्नादनसाधनं, व्यञ्जनरूपमित्यर्थः, स एवं जगत्संहर्तृत्वगुणको महाबलः यत्र तिष्ठति इत्था इत्थम् एवं प्रकारेण, तदिति शेषः, तस्यावस्थानं को वेद न कोऽपीति ।। २५ ।।

**।। इति काठकार्थसङ्ग्रहे प्रथमाध्याये द्वितीया वल्ली ।।**

—०—

## अथ प्रथमे तृतीया वल्ली

'अध्यात्मयोगाधिगमेन' इति भगवतो ध्यानमुक्तम् । स कुत्र ध्येय इत्यतोऽधिष्ठानमाह– ऋतमिति ॥

**ऋतं पिबन्तौ सुकृतस्य लोके**
**गुहां प्रविष्टौ परमे परार्द्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति**
**पञ्चाग्नयो ये च त्रिनाचिकेताः ॥ १ ॥**

यौ सुकृतस्य लोके पुण्यसम्बन्धिनि लोके पुण्यनिर्मितशरीरे हृदयगुहायां प्रविष्टौ तत्रापि परमे सर्वजीवोत्तमे परार्द्धे परमत्यन्तं, परेभ्य इति वा, आ समन्ताद् ऋद्धे अभिवृद्धे ज्ञानादिपूर्णे मुख्यवायौ प्रविष्टौ ऋतं सुकृतफलं पिबन्तौ भुञ्जानौ आत्मान्तरात्माख्यविष्णुरूपविशेषौ ब्रह्मविदः ब्रह्मज्ञानिनः पञ्चाग्नयः देवयज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञब्रह्मयज्ञरूपपञ्चमहायज्ञवन्तः [1]द्युपर्जन्यपृथिवीपुंस्त्रीरूपपञ्चाग्निविद्यानिष्ठा वा त्रिनाचिकेताः त्रिवारकृतनाचिकेताग्नयः ये ते छायातपौ साध्वसाध्वोः छायातपाविव सुखदुःखदौ वदन्तीति । तथा च सूत्रं– 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' (ब्र.सू.१–२–१२) इति । [2]हृदयगुहास्थौ ध्येयाविति भावः ॥ १ ॥

ध्यानस्याभ्यर्हितं प्रत्याहाररूपं साधनं 'विज्ञानसारथिः' इत्यादिना विवक्षुः भगवन्तं स्तुवन् प्रतिजानीते– **यः सेतुरिति** ॥

**यः सेतुरीजानानामक्षरं ब्रह्म तत् परम् ।**
**अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमसि ॥ २ ॥**

---

१. 'द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्निनिष्ठविधाः' (श.)

२. 'हृदयगुहास्थवायौ' इति मुद्रितपुस्तके ।

ईजानानां, यजतेः कानच् सम्प्रसारणं, विष्णुयाजिनां यः सेतुः मर्यादा तदक्षरं ब्रह्म परम् उत्तमं तितीर्षतां संसारार्णवं तर्तुमिच्छताम् अभयं पारम् अभयप्रदं तीरम्, ध्यातुं नाचिकेतं नचिकेतसं प्रति साधनं वक्तुं शकेमसि शक्नुम इति योज्यम् । शक्लृ शक्तौ, शब्विकरणं छान्दसम् । इदन्तो मसीति मसिः ॥ २ ॥

उपोद्घातं श्लोकद्वयेनाऽऽह– **आत्मानमिति** ॥

**आत्मान९ँ रथिनं विद्धि शरीर९ँ रथमेव च ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥**

**इन्द्रियाणि हयानाहुर्विषया९ँस्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥**

आत्मानं शरीरान्तर्व्यापिनं जीवमेव रथिनं विद्धि । शरीरं च रथं विद्धि जानीहि । प्रग्रहं रज्जुं मनस्त्वित्यन्वयः ॥ ३ ॥

इन्द्रियाणि श्रोत्रादीनि हयानश्वानाहुः प्राज्ञाः । तेषु तेषां, व्यत्ययात्, हयरूपेन्द्रियाणां गोचरान् विषयभूतान् शब्दादीन् विषयान् अश्वसञ्चारानुकूलदेशानाहुरित्यर्थः । आत्मा आत्मानम् इन्द्रियमनोभिः युक्तं भोक्तेति सुखदुःखानुभवकृतोच्चत्वनीचत्वभाजमाहुः मनीषिणो [१]ज्ञानिनः ॥ ४ ॥

अश्वभूतेन्द्रियाणां प्रत्याहारः कस्य भवति, कस्य नेत्यतो रथित्वाद्युक्तेरुपयोगोक्तिपूर्वमाह– **यस्त्विति** ॥

**यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।**
**तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥**

यस्सदाऽयुक्तेन अनिगृहीतेन मनसा अविज्ञानवान् विवेकहीनो भवति तस्येत्यादि व्यक्तम् ॥ ५ ॥

---

१. **'ज्ञानिन इत्यर्थः'** इति मुद्रितपुस्तके ।

**यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।**
**तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥**

युक्तेन निगृहीतेन । विज्ञानवान् सारथिस्थानीयबुद्धिमान् । सारासार-विवेकवान् तस्येत्यादि व्यक्तम् ॥ ६ ॥

वशीकृतेन्द्रियत्वरूपप्रत्याहाराभावभावयोः को विशेषः? येन स आवश्यक इत्यतः तदभावे तद्भावे च विशेषमाह– **यस्त्वित्यादिना मन्त्रद्वयेन** ॥

**यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।**
**न स तत् पदमाप्नोति सꣳसारं चाधिगच्छति ॥ ७ ॥**

**यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।**
**स तु तत् पदमाप्नोति यस्माद् भूयो न जायते ॥ ८ ॥**

अविज्ञानवान् विवेकाख्यबुद्धिरूपसारथिहीनो भवति । अमनस्कः अवशीकृतमनस्कः ॥ **अशुचिरिति** ॥ विषयलम्पटत्वादिति भावः । इष्टाप्राप्त्यनिष्टप्राप्ती च आह– **न स इति** ॥ तत्पदं 'सर्वे वेदाः' इत्युक्तं ब्रह्मस्वरूपम् ॥ ७ ॥

विज्ञानवान् बुद्धिरूपसारथियुक्तः । समनस्कः वशीकृतमनस्कः ॥ **शुचिरिति** ॥ विषयालम्पटत्वादिति भावः । भूयः पुनरित्यर्थः ॥ ८ ॥

एवं प्रत्याहाराभावभावयोः अनर्थप्राप्तीष्टप्राप्ती निरूप्य प्रत्याहाररूपं साधनं फलोक्त्या निर्धारयति– **विज्ञानेति** ॥

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।**
**सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पदम् ॥ ९ ॥**

वशीकृतेन्द्रियवानित्यपि ज्ञेयम् । सारथिप्रग्रहवत्त्वोक्त्यैव वशीकृतेन्द्रियत्वं लब्धमिति तदनुक्तिः । अध्वनः संसारपदव्याः पारं तीरभूतं तद्विष्णोः परमं पदं स्वरूपमाप्नोतीति ॥ ९ ॥

[१]भगवद्ध्यानं तारतम्यान्तगत्वेन कार्यमिति भावेन देवतातारतम्यमाह– **इन्द्रियेभ्य इति** ॥

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥**

इन्द्रियेभ्यः श्रोत्रत्वक्चक्षूरसनघ्राणवाक्पाणिपादपायूपस्थेभ्यः ज्ञानेन्द्रिय-कर्मेन्द्रियनियन्तृतया तत्तन्नामभ्यः क्रमात् तत्तदभिमानिदेवेभ्यः सोमकुबेर-सूर्यवरुणाश्व्यग्नीन्द्रजयन्तयमदक्षेभ्यः अर्थाः शब्दस्पर्शरूपरसगन्धरूपाः श्रोत्रादि-विषयाः तदभिमानिन्यः सौपर्णीवारुणीपार्वतीति तिस्रो देव्यः परा उत्तमा इत्यर्थः । अमिमानिनयन्यायेन इन्द्रियादिशब्दानाम् अभिमानिषु मुख्यत्वात् । शब्दादीनां पञ्चत्वेऽपि सौपर्णीवारुण्यौ द्वयोर्द्वयोर्देवते, पार्वती त्वेकस्येति [२]विवेकः । अर्थेभ्यः अर्थाभिमानिनीभ्यः तिसृभ्यो देवीभ्यः मनः मनोभिमानिनो रुद्रवीन्द्रशेषाः पराः । तेभ्यः बुद्धिः [३]बुद्धितत्त्वाभिमानिनी सरस्वती परा । तस्याः महान् महत्तत्वाभिमानी आत्मा विरिञ्चः परः ॥ १० ॥

**महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ ११ ॥**

महतः चतुर्मुखाद् अव्यक्तं प्रकृत्यभिमानिनी श्रीः परा । अव्यक्तात् श्रीतत्त्वात् पुरुषः पूर्णत्वहेतुना पुरुषनामा विष्णुः परः । पुरुषात् परं किञ्चिन्नास्ति । सा पुरुषः काष्ठा अवधिः देवतातारतम्यविश्रान्तिभूमिः[४] । सेति विधेयापेक्षया स्त्रीलिङ्गोक्तिः । परा गतिः परमप्राप्यः ॥ ११ ॥

एवंविधः कश्चिदस्ति चेत् कुतो नोपलभ्यत इत्यत आह–**एष इति** ॥

**एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥**

---

१. 'भगवद्ध्यानं च' इति मुद्रितपुस्तके । २. 'विवेक्तव्यम्' (श.)
३ 'बुद्ध्यभिमानिनी' ४. '–विश्रान्तिमूर्तिः'

गूढोत्मा अन्तर्हितस्वरूपः सन् न प्रकाशते । तर्हि किं दर्शनार्थं प्रयत्नेनेत्यत उक्तम्– **दृश्यत इति** ॥ [१]तुर्भगवत्प्रसादरूपहेतुद्योतकः । अग्र्यया [२]श्रवणादिजनितया भगवत्प्रसादसध्रीचीनया सूक्ष्मया बुद्ध्या सूक्ष्मदर्शिभिर्दृश्यत इत्यर्थः ॥ १२ ॥

पूर्वत्र भगवतस्सर्वोत्तमत्वेन पूर्वपूर्वस्मादुत्तरोत्तरेषाम् [३]उत्तमत्वेन ध्यानं कार्यमिति भावेन तारतम्यमुक्तम् । न केवलं तावदेव, किन्तु पूर्वपूर्वेषाम् उत्तरोत्तरनियतत्वं च ध्येयमिति भावेनाऽऽह– **यच्छेदिति** ॥

**यच्छेद् वाङ्मनसी प्राज्ञस्तद् यच्छेद् ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति तद् यच्छेच्छान्त आत्मनि ॥ १३ ॥**

प्राज्ञः ज्ञानी इन्द्रियाभिमानिनः प्रागुक्तान् सोमादीन् वाचि वागभिमानिनीषु पार्वतीवारुणीसौपर्णीषु यच्छेदिति आदौ योज्यम् । नियमनं नाम तदधीनत्वचिन्तनम् । तन्नियतान् चिन्तयेदित्यर्थः । एवमग्रेऽपि । वाङ्मनसीत्यत्र वाचं वागभिमानिनीः उमाद्यास्तिस्रो देवीः मनसि मनोभिमानिषु शिवशेषसुपर्णेषु यच्छेत् तन्नियतत्वेन ध्यायेत् । तत् मनो मनोभिमानिनः शिवशेषसुपर्णान् त्रीन् ज्ञाने आत्मनि ज्ञानाभिमानिन्योः सरस्वतीभारत्योः यच्छेत् । ज्ञानं ज्ञानाभिमानिन्यौ सरस्वतीभारत्यौ महति महत्तत्त्वाभिमानिनोः आत्मनि आत्मशब्दोदितयोः विरिञ्चवाय्वोः यच्छेत् । तत् महत्तत्त्वाभिमानिद्वयं शान्ते सुखरूपे आत्मनि परमात्मनि यच्छेत् । प्राज्ञ इति सर्वत्रानुषङ्गः । अत्र तद्यच्छेदव्यक्ते, तच्च शान्त आत्मनीति वक्तव्येऽपि अव्यक्ततत्त्वाभिमानिनः श्रीतत्त्वस्य स्वभर्तृनियतत्वं च सिद्धमेवेति नोक्तम् । अध्याहारो वा [४]बोध्यः। तथा हि भाष्यम्– 'तौ रमायां परानन्दे तां विष्णौ परमात्मनि' इति ॥ १३ ॥

---

१. **'भगवत्प्रसादरूपविशेषहेतुसूचकः'** (श) २. **'श्रवणमननध्यानजनितया'** (श)
३. **'उत्तमत्वेन च'** इति मुद्रितपुस्तके । ४. **'ध्येयः'** (श)

एवं यमनचिकेतसोः संवादमियता ग्रन्थेनानूद्य वेदपुरुषः स्वयं साधूनां हितमुपदिशति– **उत्तिष्ठतेति** ॥

**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति ॥ १४ ॥**

हे साधवः, उत्तिष्ठत [1]नानाविधविषयचिन्तनान्निवृत्ता भवत । जाग्रत जागृत आलस्यं मुञ्चत । प्राप्य वरान् महद्भ्यो वरान् प्राप्य, परानिति पाठे महतः प्राप्य, भगवन्तं निबोधत नितरां बुद्ध्यध्वम्, शब्विकरणं परस्मैपदं छान्दसम् । कुतोऽयं भगवद्बोधः सम्पाद्यः? बन्धनिवृत्तेः भगवद्बोधादन्येनापि सम्भवादित्यत आह– **क्षुरस्येति** ॥ संसृतिरिति शेषः । संसृतिः क्षुरस्य केशनिकृन्तनसाधनस्य धारा धारेव निशिताऽतितीक्ष्णा बहुशः दुःखकारिणी दुरत्यया दुःखेन अत्येतव्या तर्तव्या, भगवद्बोधादन्येन अत्येतुमशक्येति यावत् । अस्त्वेवं संसृतिर्भगवद्बोधनिवर्त्या । भगवज्ज्ञानार्थम् उत्थानादिकं कुतः? तत्सुलभोपायान्तरेणापि स्यादित्यत आह– **दुर्गमिति** ॥ तत् संसृतिनिवर्तकं ब्रह्म पथः श्रवणमननध्यानरूपाद् वैराग्यभक्त्याद्यङ्गसहितान्मार्गाद् दुर्गम् अतिक्लेशेन ज्ञेयम् । तथा अर्चिरादिरूपादत्यायाससम्पाद्यान्मार्गाद् दुर्गम् अतियत्नेन गम्यं प्राप्यं चेति कवयो ज्ञानिनो वदन्ति । न च तस्य ज्ञानप्राप्ती सुलभोपायसाध्ये । न च तज्ज्ञानप्राप्ती विना निश्शेषबन्धनिवृत्तिर्भवति । अत उत्तिष्ठत जाग्रतेत्याद्युक्तिर्युक्तेति ॥ १४ ॥

कुतो ब्रह्मणो दुर्गमत्वमित्यतः तस्य श्रोत्राद्यविषयत्वादित्याह– **अशब्दमिति** ॥

**अशब्दमस्पर्शमरूपमव्ययं**
**तथाऽरसं नित्यमगन्धवच्च यत् ।**

---

१. 'नानाविधविषयध्यानात्' (श.)

**अनाद्यनन्तं महतः परं ध्रुवं**
**निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १५ ॥**

तद् ब्रह्म अशब्दं शब्दगुणहीनम्, इत्थमिति शब्दावेद्यं च । अत्याश्चर्यवस्तुत्वात् । अस्पर्शं स्पर्शगुणहीनम् । अत एव त्वग्विषयत्वहीनम् । अरूपमत एव चक्षुर्गोचरत्वहीनम् । भौतिकरूपराहित्यादेवाव्ययं नाशहीनम् । 'रूपादिमत्त्वाच्च विपर्ययो दर्शनात्' (ब्र.सू.२–२–१५) इति सूत्रे भौतिकरूपादिमत एवानित्यत्वोक्तेः । तथाऽरसं रसगुणवर्जितं च । अत एव [१]रसनेन्द्रियाविषयम् । अगन्धवत् नित्यं गन्धवन्न । अत एव घ्राणाविषयश्च । बन्धनिवर्तकं तज्ज्ञानं केन मार्गेण भवतीत्यतो दुर्गं पथ इत्युक्तमाह– **अनादीति** ॥ अनाद्यनन्तम् आद्यन्तवर्जितम् । महतो महत्तत्वाभिमानिचतुर्मुखात् परम् । ध्रुवं शश्वदेकप्रकारं तं तारतम्यान्तगत्वेन प्रागुक्तं पुरुषं निचाय्य विचार्य श्रवणादिभिर्निश्चित्य तदपरोक्षजप्रसादद्वारा मृत्युमुखात् संसृतिबन्धात् प्रकर्षेण मुच्यते । शब्दाद्यवेद्योऽपि भगवान् सदाचार्यसहायलब्धश्रवणमननध्यानावृत्त्या प्रसन्नः स्वापरोक्षं दत्त्वा बन्धान्मोचयतीति भावः । तदाह सूत्रकारः–'प्रकाशश्च कर्मण्यभ्यासात्' (ब्र.सू.३-२-२६) इति । अत्र महतः परादव्यक्तात् परमिति वक्तव्येऽप्यव्यक्ताभिमानिन्याः स्वभार्यायाः श्रियः परत्वं सिद्धमिति महत परमित्येवोक्तम् । तेन महत्परत्वलिङ्गादव्यक्तक्तमेवात्र निचाय्यवाक्येन कथ्यत इति प्रत्युक्तम् । तदाह सूत्रे– 'वदतीति चेन्न प्राज्ञो हि' (ब्र.सू.२–४–५) इति ॥ १५ ॥

एवं वेदपुरुषः यमनचिकेतस्संवादमनूद्य साधुशिक्षां च कृत्वा एतद्विद्याप्रवचनश्रवणयोः फलोक्तिपूर्वकमुपसंहरति– **नाचिकेतमिति** ॥

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम् ।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥**

---

१. 'रसनेन्द्रियाविषयः' इति मुद्रितपुस्तके ।

एवं यमनचिकेतसोः संवादमियता ग्रन्थेनानूद्य वेदपुरुषः स्वयं साधूनां हितमुपदिशति– **उत्तिष्ठतेति** ॥

**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति ॥ १४ ॥**

हे साधवः, उत्तिष्ठत [१]नानाविधविषयचिन्तनान्निवृत्ता भवत । जाग्रत जागृत आलस्यं मुञ्चत । प्राप्य वरान् महद्भ्यो वरान् प्राप्य, परानिति पाठे महतः प्राप्य, भगवन्तं निबोधत नितरां बुद्ध्यध्वम्, शब्विकरणं परस्मैपदं छान्दसम् । कुतोऽयं भगवद्बोधः सम्पाद्यः? बन्धनिवृत्तेः भगवद्बोधादन्येनापि सम्भवादित्यत आह– **क्षुरस्येति** ॥ संसृतिरिति शेषः । संसृतिः क्षुरस्य केशनिकृन्तनसाधनस्य धारा धारेव निशिताऽतितीक्ष्णा बहुशः दुःखकारिणी दुरत्यया दुःखेन अत्येतव्या तर्तव्या, भगवद्बोधादन्येन अत्येतुमशक्येति यावत् । अस्त्वेवं संसृतिर्भगवद्बोधनिवर्त्या । भगवज्ज्ञानार्थम् उत्थानादिकं कुतः? तत्सुलभोपायान्तरेणापि स्यादित्यत आह– **दुर्गमिति** ॥ तत् संसृतिनिवर्तकं ब्रह्म पथः श्रवणमननध्यानरूपाद् वैराग्यभक्त्याद्यङ्गसहितान्मार्गाद् दुर्गम् अतिक्लेशेन ज्ञेयम् । तथा अर्चिरादिरूपादत्यायाससम्पाद्यान्मार्गाद् दुर्गम् अतियत्नेन गम्यं प्राप्यं चेति कवयो ज्ञानिनो वदन्ति । न च तस्य ज्ञानप्राप्ती सुलभोपायसाध्ये । न च तज्ज्ञानप्राप्ती विना निश्शेषबन्धनिवृत्तिर्भवति । अत उत्तिष्ठत जाग्रतेत्याद्युक्तिर्युक्तेति ॥ १४ ॥

कुतो ब्रह्मणो दुर्गमत्वमित्यतः तस्य श्रोत्राद्यविषयत्वादित्याह– **अशब्दमिति** ॥

**अशब्दमस्पर्शमरूपमव्ययं**
**तथाऽरसं नित्यमगन्धवच्च यत् ।**

१. 'नानाविधविषयध्यानात्' (श.)

**अनाद्यनन्तं महतः परं ध्रुवं**
**निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १५ ॥**

तद् ब्रह्म अशब्दं शब्दगुणहीनम्, इत्थमिति शब्दावेद्यं च । अत्याश्चर्यवस्तुत्वात् । अस्पर्शं स्पर्शगुणहीनम् । अत एव त्वग्विषयत्वहीनम् । अरूपमत एव चक्षुर्गोचरत्वहीनम् । भौतिकरूपराहित्यादेवाव्ययं नाशहीनम् । 'रूपादिमत्त्वाच्च विपर्ययो दर्शनात्' (ब्र.सू.२–२–१५) इति सूत्रे भौतिकरूपादिमत एवानित्यत्वोक्तेः । तथाऽरसं रसगुणवर्जितं च । अत एव [१]रसनेन्द्रियाविषयम् । अगन्धवत् नित्यं गन्धवन्न । अत एव घ्राणाविषयश्च । बन्धनिवर्तकं तज्ज्ञानं केन मार्गेण भवतीत्यतो दुर्गं पथ इत्युक्तमाह– **अनादीति** ॥ अनाद्यनन्तम् आद्यन्तवर्जितम् । महतो महत्तत्त्वाभिमानिचतुर्मुखात् परम् । ध्रुवं शश्वदेकप्रकारं तं तारतम्यान्तगत्वेन प्रागुक्तं पुरुषं निचाय्य विचार्य श्रवणादिभिर्निश्चित्य तदपरोक्षजप्रसादद्वारा मृत्युमुखात् संसृतिबन्धात् प्रकर्षेण मुच्यते । शब्दाद्यवेद्योऽपि भगवान् सदाचार्यसहायलब्धश्रवणमननध्यानावृत्त्या प्रसन्नः स्वापरोक्षं दत्त्वा बन्धान्मोचयतीति भावः । तदाह सूत्रकारः–'प्रकाशश्च कर्मण्यभ्यासात्' (ब्र.सू.३-२-२६) इति । अत्र महतः परादव्यक्तात् परमिति वक्तव्येऽप्यव्यक्ताभिमानिन्याः स्वभार्यायाः श्रियः परत्वं सिद्धमिति महत परमित्येवोक्तम् । तेन महत्परत्वलिङ्गादव्यक्तक्तमेवात्र निचाय्यवाक्येन कथ्यत इति प्रत्युक्तम् । तदाह सूत्रे– 'वदतीति चेन्न प्राज्ञो हि' (ब्र.सू.२–४–५) इति ॥ १५ ॥

एवं वेदपुरुषः यमनचिकेतस्संवादमनूद्य साधुशिक्षां च कृत्वा एतद्विद्याप्रवचनश्रवणयोः फलोक्तिपूर्वकमुपसंहरति– **नाचिकेतमिति** ॥

**नाचिकेतमुपाख्यानं मृत्युप्रोक्त॰ सनातनम् ।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥**

---

१. **'रसनेन्द्रियाविषयः'** इति मुद्रितपुस्तके ।

य इमं परमं गुह्यं श्रावयेद् ब्रह्मसꣳसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते
तदानन्त्याय कल्पत इति ॥ १७ ॥

**॥ इति प्रथमाध्याये तृतीयावल्ली ॥**

**॥ इति प्रथमोऽध्यायः ॥**

नचिकेतसः सम्बन्ध्युपाख्यानं तच्चरितप्रतिपादकग्रन्थसन्दर्भम् । सलोपः छान्दसः । व्यक्तो मन्त्रद्वयार्थः । द्विरुक्तिरादरार्था, प्रोक्तसर्वावधारणार्था वा ॥ १६ ॥

**॥ इति श्रीकाठकार्थसङ्ग्रहे प्रथमाध्याये तृतीया वल्ली ॥**

**॥ इति प्रथमोऽध्यायः ॥**

—०—

### अथ द्वितीयोऽध्यायः

पुनरपि ब्रह्मविद्यां वक्तुं तदङ्गतया वैराग्यं दुःसम्पादमपि यत्नेन सम्पाद्यमिति भावेनाऽह– **पराञ्चीति** ॥

**पराञ्चि खानि व्यतृणात् स्वयम्भू-**
**स्तस्मात् पराक् पश्यति नान्तरात्मन् ।**
**कश्चिद् धीरः प्रत्यगात्मानमैक्ष-**
**दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥**

स्वयमेव भवतीति स्वयम्भूः स्वतन्त्रो भगवान्, तत्पुत्रो ब्रह्मा वा । खानि इन्द्रियाणि पराञ्चि पराङ्मुखानि, अत एव व्यतृणात् कुत्सितान्यकरोत्, 'तृणु कात्करणे' इति धातोः । तस्मात् कारणात् पराक् बाह्यान् विषयान् पश्यति जीवः । आत्मन् आत्मनः स्वस्य अन्तः न पश्यति । सदा बहिर्दृष्टिरेवाऽस्त इत्यर्थः । कश्चिद्धीरो ज्ञानी अमृतत्वं मुक्तिमिच्छन् आवृत्तचक्षुः, उपलक्षणमेतत्, विषयेभ्यः परावृत्तचक्षुरादिकरणः सन् प्रत्यगन्तः आत्मानं स्वान्तस्थं भगवन्तम् ऐक्षत् ईक्षत इत्यर्थः । लडर्थे लङ्, परस्मैपदं छान्दसम् ॥ १ ॥

मुमुक्षुः सर्वथा न विषयप्रमादी स्यादिति भावेनाऽह–**पराच इति** ॥

**पराचः कामाननुयन्ति बाला-**
**स्ते मृत्योर्यन्ति विततस्य पाशम् ।**
**अथ धीरा अमृतत्वं विदित्वा**
**ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥**

ये बालाः बाला इवाविवेकिनः पराचः बाह्यान् कामान् स्रक्चन्दनवनितादिविषयान् अनुयन्ति अनुसृत्य तिष्ठन्ति ते विततस्य बहुकालीनस्य मृत्योः अविद्याकामकर्मादेः पाशं बन्धं तत्कृतक्लेशं यन्ति प्राप्नुवन्ति । अथ तस्मादिह लोके धीरा विवेकिनः ध्रुवममृतत्वं मोक्षं विदित्वा ज्ञात्वा अध्रुवेषु वित्तादिषु विषये न प्रार्थयन्ते । तेन नचिकेतसः स्तुतिरर्थाद् गम्यते ॥ २ ॥

नचिकेता अर्थात् प्राप्तामात्मनः स्तुतिं मत्वा अलं स्तुत्या, क्षिप्रं तत्त्वं वदेति भावेन पृच्छति– **येनेति** ॥

**येन रूपꣳ रसं गन्धं शब्दान् स्पर्शाꣳश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यते । एतद् वै तत् ॥ ३ ॥**

येन एतेनैव ब्रह्मणा प्रेरितो रूपादीन् विजानाति तदेतत् जीवप्रेरकं ब्रह्मात्र मोक्षे परिशिष्यते मुक्तजीवप्रेरकत्वेन आस्ते किमिति प्रश्नार्थः । इति पृष्टो यमः प्रत्युत्तरमाह– **एतद्वै तदिति** ॥ तत् त्वया परिशिष्यते किमिति पृष्टम् एतद्वै एतद्गुणकं सत् परिशिष्यते वै असंशयमित्यर्थे वैनिपातः । परिशिष्यत इत्येतदत्राप्यन्वेति ॥ ३ ॥

मुक्तौ नियामकं ब्रह्मस्वरूपं विस्तरेण ब्रूहीति पृष्टो यमो विस्तरेणाऽऽह– **स्वप्नान्तमिति** ॥

**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥**

'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा मरणं प्राप्याऽत्मा भवति गौतम' इति उत्तराध्यायगतं प्रतिज्ञावाक्यम् अत्राऽऽदौ योज्यमिति वदन्ति । भाष्ये अत्रैव व्याख्यानात् । पूर्वार्धः स्पष्टार्थः । उत्तरार्धस्य तु आत्मा जीवः मरणं प्राप्य यथा भवति तच्च प्रवक्ष्यामि । जीवेशभेदज्ञापनायेत्यर्थः । स्वप्नान्तं सुषुप्तिं, जागरितान्तं स्वप्नं चोभौ सुषुप्तिस्वप्नौ येन प्रेरितो जीवः पश्यति तं महान्तमित्यन्वयः ॥ ४ ॥

**य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद् वै तत् ॥ ५ ॥**

योऽधिकारी इदम् इमं मध्वदं मधु सुखमत्तीति मध्वदः तम्, अत्तेरच्-प्रत्ययः, देहे स्थित्वा सारभोक्तारमिति यावत्, जीवमन्तिकात् जीवसमीपे तन्नियामकया स्थितम् आत्मानं भूतभव्यस्य, द्वन्द्वैकवद्भावः, भूतभाविनोरीशानं प्रेरकं वेद जानाति स ततः आत्मनो नियामकतया ज्ञातत्वात् न विजुगुप्सते, गुपू रक्षणे, आत्मानं गोप्तुं रक्षितुं नेच्छति । भगवानेव सदा सर्वत्र रक्षकतयाऽऽस्त इति ज्ञात्वा स्वात्मरक्षणार्थं न प्रयतत इत्यर्थः । एतद्वै तत् यत् त्वया पृष्टं तत् एतद्वै प्रागुक्तगुणकं वै ॥ ५ ॥

पुनर्भगवतो महिमोक्तिपूर्वकं त्वत्पृष्टमेवंरूपमिति बहुभिर्मन्त्रैराह– **य** **इति** ॥

**यः पूर्वं तपसोऽजातमद्भ्यः पूर्वमजायत ।**
**गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद् वै तत् ॥ ६ ॥**

यो भगवान् अजातं पूर्वमजातं चतुर्मुखं तपसः तपोनामकाच्छिवात् पूर्वम् अद्भ्यः अम्नामकेभ्यो भूतेभ्यश्च पूर्वमजायत अजनयत्, अन्तर्णीतणिच्, यो भगवान् गुहां हृदयगुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतेभिः भूतैस्सह व्यपश्यति विशेषेण पश्यति, अडागमः छान्दसः, एतद्वै तत् । यत् त्वया पृष्टं तत् एतद्वै उक्तगुणकं वै । अजातमिति विशेषणं तु भगवन्मुखाद्यवयवतो जाता एवेन्द्रादयः कश्यपात् पुनर्जायन्ते, न तथा भगवतो ब्रह्मा, किन्तु पूर्वमजात एव भगवतो जात इति वक्तुम् ॥ ६ ॥

**या प्राणेन संविशत्यदितिर्देवतामयी ।**
**गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद् वै तत् ॥ ७ ॥**

**या प्राणेनेति ॥** अदनात् सर्वजगद्भक्षणाद् अदितिनाम्नी देवतामयी सर्वदेवोत्तमा, मयट् प्राधान्यार्थे, या भगवत्तनुः प्राणेन मुख्यवायुना सह संविशति तिष्ठति, या च भगवत्तनुः गुहां प्रविश्य तिष्ठन्तीं स्वकीयामेव तनुं भूतेभिः भूतैः प्राणिभिस्सह व्यजायत विविधतया जनयामास, अन्तर्णीतणिच्, मत्स्यादिनानारूपतया स्वात्मानं प्रादुर्भावयामास, प्राणिनश्च देहयोगेन नानाविधानुत्पादयामासेति यावत् । एतद्वै तत् । त्वया पृष्टं यत् तत् एतद्वै इति ॥ ७ ॥

**अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।**
**दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निरेतद् वै तत् ॥ ८ ॥**

**अरण्योरिति** । ऋ गताविति कर्मण्यकारे गुणे च अरेति रूपम् । अरः ज्ञायमानः णः सुखरूपो हरिः याभ्यां गुरुशिष्याभ्यां तौ अरणी । समासान्त इकारः । अरण्योः गुरुशिष्ययोः, जातवेदाः जातं सर्वं वेत्तीति जातवेदाः, [१]जातमित्युपलक्षणं, सर्वज्ञो हरिः निहितः नितरां स्थितः । क इव ? गर्भिणीभिः स्त्रीभिः सुभृतः सम्यक् धृतः गर्भ इव, अग्निः अरण्योः गुरुशिष्ययोः निहितः । अदनादग्निनामा हरिः जागृवद्भिः भगवज्ज्ञानवद्भिः, न हि ज्ञानादितोऽन्यज्जागरणमस्ति, 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इत्यादेः, हविष्मद्भिः यज्ञसाधनवद्भिः मनुष्येभिः मनुष्यैः दिवेदिवे प्रतिदिनम् ईड्यः स्तुत्यो वर्तते ॥ ८ ॥

पुनश्च महिमोक्तिपूर्वकं त्वत्पृष्टम् एतादृगित्याह– **यतश्चोदेतीति ॥**

**यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।**
**तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद् वै तत् ॥ ९ ॥**

सूर्यः सृष्टिकाले यतो यस्मादुदेति, यत्र च यस्मिंश्च हरौ प्रलयकाले अस्तमदर्शनं गच्छति तं सर्वे देवा अर्पिताः । तमाश्रित्य स्थिता इत्यर्थः ।

---

१ 'एतदुपलक्षणम्' (ग्र.)

[1]तत् सर्वदेवाश्रयं गुणतः स्वरूपतो वा कश्चन कोऽपि न उ नैवात्येति नातिक्रामति । एतद्वै तत् त्वया पृष्टमेतद्वै अरण्योरित्यादिनोक्तगुणकं वै ॥ ९ ॥

पूर्वं 'गुहां प्रविश्य तिष्ठन्तीम्' इत्यत्र उक्तमत्स्याद्यवताराणां ब्रह्मादिभूतप्रेरकाणां मूलरूपेण गुणकर्मादिना वा भेदो भेदाभेदो वा नेति महिमान्तरमाह– **यदेवेति** ॥

**यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥**

इह देहादिषु यदेवावतारजातमस्ति तदेवामुत्र वैकुण्ठादिलोकेषु मूलरूपतयाऽऽस्ते । [2]तयोः कश्चिदपि भेदो नास्ति । [3]इन्द्रार्जुनादाविवावान्तरविशेषोऽपि नेति भावेनाऽह– **यदमुत्रेति** ॥ यदमुत्र मूलरूपमस्ति तदनु तदेवेह देहादिषु स्थितमवतारजातम् । गुणतः स्वरूपतो वा नाणुमात्रं विशेषोऽस्तीति भावः । एतच्चोपलक्षणम् । इहस्थानामपि रूपाणां नियम्याख्यस्थानभेदेऽपि न भेद इत्यपि [4]बोध्यम् । तथा च सूत्रम्– 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (ब्र.सू.३-२-११) इति । कुत [5]एवमित्यतस्तथा पश्यतोऽनर्थस्य सद्भावादित्याह– **मृत्योरिति** ॥ यः इह भगवन्मूलरूपावताररूपेषु नाना, भावप्रधानं, नानात्वं भेदम्, इवशब्दाद् भेदाभेदं वा पश्यति जानाति स मृत्योः मारकात् मृत्युं मरणं तमोलक्षणं प्राप्नोति ॥ १० ॥

भगवद्रूपाणां भेदादिर्नेत्युक्त्वा स्वावयवगुणकर्मभिः भेदादिर्नेत्याह– **मनसैवेति** ॥

**मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।**
**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥**

---

१. **'तत् तं सर्वदेवाश्रयं'** इति मुद्रितपुस्तके । २. **अनयोः** (श) ३. **इन्द्रार्जुनादेरिव** (श) ।
४. **'ध्येयम्'** इति मुद्रितपुस्तके । ५. **'एतदित्यतः'** इति मुद्रितपुस्तके ।

इह मूलरूपे अवताररूपेषु वा किञ्चन गुणकर्मादिकं नाना भिन्नं नास्ति । तदाह [1]'उभयव्यपदेशात्' इति नये 'प्रतिषेधाच्च (ब्र.सू.३-२-३१) इति सूत्रकारः । इदं रूपादिषु भेदादिकं नेत्येतत् प्रमेयं मनसैव मननसमर्थेनैव अन्तःकरणेनैवाऽप्तव्यं ज्ञातव्यम् । न तु भेदकार्यव्यवहारादिहेतुबलेनापलपनीयम् । कुत एवमित्यतोऽन्यथा पश्यतोऽनर्थसत्त्वादित्याह– **मृत्योरिति** ॥ **नानेवेति–** भिन्नं भिन्नाभिन्नं वा ॥ इह गुणकर्मादिषु । अतो न पूर्वेण पौनरुक्त्यं, तस्य [2]स्वरूपविषयत्वादस्य च गुणकर्मावयवविषयत्वात् ॥११॥

'गुहां प्रविश्य तिष्ठन्तीम्' इत्यत्रोक्तनियामकरूपाणां नियम्यभूतस्थानभेदप्रसक्तं भेदं निरस्य इदानीं गुहास्थस्योपासनार्थं परिमाणविशेषमाह– **अङ्गुष्ठमात्र इति** ॥

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद् वै तत् ॥ १२ ॥**

कथमपरिच्छिन्नस्य तन्मात्रत्वमित्यत आह– **मध्य आत्मनीति** ॥ आत्मनो देहस्य जीवस्य वा मध्ये हृदये तिष्ठतीत्युक्त्या हृदयस्य तत्तदङ्गुष्ठपरिमितत्वात् तत्रस्थोऽपि तथोपचर्यते । स्थानैक्येन गोष्ठे गावः एकीभूता इतिवदिति वा, तन्मात्रपरिमाणाभिव्यक्त्या वा तथोच्यत इति भावः । तदुक्तं सूत्रे– 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' (ब्र.सू.१–३–२५) इति । पुरुषो जीव इति भ्रमनिरासाय गुणान्तरमाह– **ईशान इति** ॥ भूतभव्यस्येत्यत्र द्वन्द्वैकवद्भावः । भूतभाविनोः प्रेरकः । ततः हृदयस्थस्य प्रेरकत्वादेव तज्ज्ञानी न विजुगुप्सते आत्मानं गोप्तुं नेच्छति । आत्मरक्षार्थं न प्रयतते । एतद्वै तत् त्वया पृष्टं वस्तु एतद्वै । यदेवेहेत्यादिनोक्तगुणकं वै इति ॥ १२ ॥

उक्तानुवादेन गुणान्तरमाह– **अङ्गुष्ठेति** ॥

---

१. उभयव्यपदेशादिति तथा प्रतिषेधाच्चेति सूत्रकारः' (श)  २. 'रूपविषयत्वात्' (श)

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद् वै तत् ॥ १३ ॥**

अधूमकः निर्मलः । स एवाद्य, स उ श्वः स एव श्वः । अनादिनित्य इत्यर्थः । एतद्वै तदिति प्राग्वत् ॥ १३ ॥

किञ्चनेति वाक्यशेषे नानेति नानाशब्देन भेदस्य, इवशब्देन तद्विरुद्धस्याभेदस्य प्रतीत्या भेदाभेददर्शिन एवानर्थोक्तेर्भेददर्शिनस्तदनुक्तेः भेद एवास्तु धर्माणामित्यतो धर्माणां भेदज्ञाने अनर्थं स्पष्टयति–**यथेति** ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान् पृथक् पश्यꣳस्तानेवानु विधावति ॥ १४ ॥**

पर्वतेषु दुर्गे ऊर्ध्वभागे शिखरे वृष्टमुदकं यथा अधो विविधतया धावति गच्छति एवं विष्णोर्धर्मान् पृथग् आश्रयादन्योन्यं वा भेदेन पश्यन् जानन् तानेव भेदेन दृष्टाननु तद्दर्शनानन्तरमेव विधावति तमः प्राप्नोति ॥ १४ ॥

ननु ईश्वरस्य कथं प्रेरकत्वम्? मुक्तस्य तदनुप्रवेशेन तेनैक्यादित्यतो नैवमित्याह– **यथेति** ॥

**यथोदकꣳ शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥**

**इति द्वितीये प्रथमा वल्ली**

यथा शुद्धमुदकं शुद्धोदके सिक्तं स्थापितं सत् तादृगेव भवति, न तु तदेव, वृद्धिदर्शनात् । विजानतो मुनेः विजानतां मुनीनामात्मा स्वामी मुक्तश्चतुर्मुखः एवं भवति भगवत्सदृश एव भवति । न तु तदैक्यमाप्नोति । जीवास्तु नाऽप्नुवन्तीति किमु वक्तव्यमित्यर्थः । अत उक्तं युक्तमिति भावः । गौतमेति नचिकेतसः सम्बोधनम् ॥ १५ ॥

**॥ इति श्रीकाठकार्थसङ्ग्रहे द्वितीयाध्याये प्रथमा वल्ली ॥**

इह मूलरूपे अवताररूपेषु वा किञ्चन गुणकर्मादिकं नाना भिन्नं नास्ति । तदाह [1]'उभयव्यपदेशात्' इति नये 'प्रतिषेधाच्च (ब्र.सू.३-२-३१) इति सूत्रकारः । इदं रूपादिषु भेदादिकं नेत्येतत् प्रमेयं मनसैव मननसमर्थेनैव अन्तःकरणेनैवाऽऽप्तव्यं ज्ञातव्यम् । न तु भेदकार्यव्यवहारादिहेतुबलेनापलपनीयम् । कुत एवमित्यतोऽन्यथा पश्यतोऽनर्थसत्त्वादित्याह– **मृत्योरिति** ॥ **नानेवेति–** भिन्नं भिन्नाभिन्नं वा ॥ इह गुणकर्मादिषु । अतो न पूर्वेण पौनरुक्त्यं, तस्य [2]स्वरूपविषयत्वादस्य च गुणकर्मावयवविषयत्वात् ॥११॥

'गुहां प्रविश्य तिष्ठन्तीम्' इत्यत्रोक्तनियामकरूपाणां नियम्यभूतस्थानभेदप्रसक्तं भेदं निरस्य इदानीं गुहास्थस्योपासनार्थं परिमाणविशेषमाह– **अङ्गुष्ठमात्र इति** ॥

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद् वै तत् ॥ १२ ॥**

कथमपरिच्छिन्नस्य तन्मात्रत्वमित्यत आह– **मध्य आत्मनीति** ॥ आत्मनो देहस्य जीवस्य वा मध्ये हृदये तिष्ठतीत्युक्त्या हृदयस्य तत्तदङ्गुष्ठपरिमितत्वात् तत्रस्थोऽपि तथोपचर्यते । स्थानैक्येन गोष्ठे गावः एकीभूता इतिवदिति वा, तन्मात्रपरिमाणाभिव्यक्त्या वा तथोच्यत इति भावः । तदुक्तं सूत्रे– 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' (ब्र.सू.१–३–२५) इति । पुरुषो जीव इति भ्रमनिरासाय गुणान्तरमाह– **ईशान इति** ॥ भूतभव्यस्येत्यत्र द्वन्द्वैकवद्भावः । भूतभाविनोः प्रेरकः । ततः हृदयस्थस्य प्रेरकत्वादेव तज्ज्ञानी न विजुगुप्सते आत्मानं गोप्तुं नेच्छति । आत्मरक्षार्थं न प्रयतते । एतद्वै तत् त्वया पृष्टं वस्तु एतद्वै । यदेवेहेत्यादिनोक्तगुणकं वै इति ॥ १२ ॥

उक्तानुवादेन गुणान्तरमाह– **अङ्गुष्ठेति** ॥

---

१. उभयव्यपदेशादिति तथा प्रतिषेधाच्चेति सूत्रकारः' (श) २. 'रूपविषयत्वात्' (श)

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद् वै तत् ॥ १३ ॥**

अधूमकः निर्मलः । स एवाद्य, स उ श्वः स एव श्वः । अनादिनित्य इत्यर्थः । एतद्वै तदिति प्राग्वत् ॥ १३ ॥

किञ्चनेति वाक्यशेषे नानेति नानाशब्देन भेदस्य, इवशब्देन तद्विरुद्धस्याभेदस्य प्रतीत्या भेदाभेददर्शिन एवानर्थोक्तेर्भेददर्शिनस्तदनुक्तेः भेद एवास्तु धर्माणामित्यतो धर्माणां भेदज्ञाने अनर्थं स्पष्टयति–**यथेति** ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान् पृथक् पश्यꣳस्तानेवानु विधावति ॥ १४ ॥**

पर्वतेषु दुर्गे ऊर्ध्वभागे शिखरे वृष्टमुदकं यथा अधो विविधतया धावति गच्छति एवं विष्णोर्धर्मान् पृथग् आश्रयादन्योन्यं वा भेदेन पश्यन् जानन् तानेव भेदेन दृष्टाननु तद्दर्शनानन्तरमेव विधावति तमः प्राप्नोति ॥ १४ ॥

ननु ईश्वरस्य कथं प्रेरकत्वम्? मुक्तस्य तदनुप्रवेशेन तेनैक्यादित्यतो नैवमित्याह– **यथेति** ॥

**यथोदकꣳ शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥**

**इति द्वितीये प्रथमा वल्ली**

यथा शुद्धमुदकं शुद्धोदके सिक्तं स्थापितं सत् तादृगेव भवति, न तु तदेव, वृद्धिदर्शनात् । विजानतो मुनेः विजानतां मुनीनामात्मा स्वामी मुक्तश्चतुर्मुखः एवं भवति भगवत्सदृश एव भवति । न तु तदैक्यमाप्नोति । जीवास्तु नाऽऽप्नुवन्तीति किमु वक्तव्यमित्यर्थः । अत उक्तं युक्तमिति भावः । गौतमेति नचिकेतसः सम्बोधनम् ॥ १५ ॥

**॥ इति श्रीकाठकार्थसङ्ग्रहे द्वितीयाध्याये प्रथमा वल्ली ॥**

## द्वितीयाध्यायस्य द्वितीया वल्ली

देहादेः भगवदधीनत्वं ज्ञात्वा ममतां जह्यादिति भावेन तत्त्यागिनः सौख्यमाह– **पुरमिति** ॥

**पुरमेकादशद्वारमजस्यावक्रचेतसः ।**
**अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद् वै तत् ॥ १ ॥**

एकादशद्वारं श्रोत्रद्वयं चक्षुर्द्वयं नासाद्वयं मुखं पायूपस्थे मनोबुद्धी चेत्येकादशद्वारं पुरं देहम् अवक्रचेतसोऽजस्य भगवतः सम्बन्धिनं तदधीनमनुष्ठाय भगवदधीनतया निश्चित्य ममतात्यागी न शोचति । एवं निश्चयेऽपि कथं शोकाभाव इत्यत उक्तं– **विमुक्तश्चेति** ॥ देहाभिमानाभावेन पामरवत् तत्कृतक्लेशशून्यतया प्रागेव विमुक्तोऽपरोक्षज्ञानी दग्धपटायमानदेहादिमान् प्रारब्धावसाने निश्शेषतो विमुच्यते । [1]मुख्यविमुक्तिमान् भवति । एतद्वै तत् त्वया पृष्टं तत् एतद्वै देहेन्द्रियादिनेतृत्वमुक्तिप्रदत्वगुणकं वै इति ॥ १ ॥

हरेर्महिमान्तरमाह– **हंस इति** ॥

**हꣳसः शुचिषद् वसुरन्तरिक्षस-**
**द्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद् वरसदृतसद् व्योमस-**
**दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥**

---

१. 'मुख्यमुक्तिभाग् भवति ।' (श)

ओ हाक् त्याग इत्यस्माड्डुप्रत्यये टिलोपे हमिति रूपम् । सारपदस्यान्तलोपे विसर्गे ह्रस्वे च स इति रूपम् । हश्चासौ दोषहीनश्चासौ सश्च साररूपश्चेति हंसः । 'नित्यं हीनोऽखिलैर्दोषैः' इत्यादिस्मृत्या निरुक्तत्वेन यथायोगं प्रकृतिप्रत्यया ऊह्याः । शुचौ वायावस्तीति शुचिषद् वायुस्थः । शुचिशब्दोपपदादस्तेः शतृप्रत्यये श्नसोरल्लोप इत्यकारलोपे षत्वे च शुचिषदिति रूपम् । एवमग्रेऽपि बोध्यम् । वं वरं सु सुखं यस्य सः वसुः । पूर्वपदे रशब्दलोपः । अन्तरिक्षसत् अन्तरिक्षगः । होता हु दानादानयोरित्यतः कर्तरि तृच् । जुहोति शब्दादिविषयानत्ति अनुभवतीति इन्द्रियादिस्थः । वेद्यां पूज्यतयाऽस्तीति वेदिषत् । अति अतिशयितं थमन्नं यस्य सोऽतिथः स एवातिथिः । सोमरसपात्रे द्रोणकलशे तिष्ठतीति दुरोणसत् । नृष्वस्तीति नृषत् । वरेषु ब्रह्मादिदेवेषु अस्तीति वरसत् । ऋते यथार्थरूपे वेदे अस्तीति ऋतसत् । व्योमसत् प्रकृतिस्थः । व्योतमस्यां जगदिति जगदाधारभूता श्रीः व्योमेत्युच्यते । विपूर्वादूयी तन्तुसन्तान इति धातोरधिकरणे मन्प्रत्यये गुणेऽन्तलोपे व्योमेति सिद्धेः । अप्सु जायन्त इत्यब्जानि [1]उदकजातानि तेष्वास्त इत्यब्जाः । अब्जशब्दोपपदादास्तेः क्विप्प्रत्यये सकारस्य रुत्वे विसर्गे सवर्णदीर्घे च अब्जा इति भवति । एवमग्रेऽपि । गोजाः गोषु जातेष्वास्त इति गोजाः । ऋतेषु भगवन्तं प्राप्तेषु, मुक्तेष्विति यावत्, तेषु जातानि ज्ञानादीनि तत्राऽस्त इति ऋतजाः । अद्रिषु जातेषु आस्त इत्यद्रिजाः । ऋतं मुख्यतो वेदप्रतिपाद्यम् । पूर्णगुणत्वाद् बृहत् । एतद्वै तदिति अत्र उत्तरत्र चानुषञ्जनीयम् ॥ २ ॥

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इत्युक्तो जीव इति चोद्यम् ईशान इत्युत्तरार्धे निरङ्कुशभूतभव्यसर्वप्रेरकत्वभगवल्लिङ्गेन निरस्तं प्राक् । अधुना अङ्गुष्ठमात्रतया मध्ये स्थितस्य व्यापारविशेषं वदन्नेव निरवकाशवामनश्रुत्यादिना च जीव इति चोद्यं निराह– **ऊर्ध्वमिति ॥**

१. एतत्पदं मुद्रितपुस्तके नास्ति ।

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।**
**मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥**

यत्तच्छब्दावत्र ग्राह्यौ । योऽङ्गुष्ठमात्रत्वादिना प्रागुक्तः प्राणं प्राणवायुम् ऊर्ध्वमुन्नयति ऊर्ध्वगतिमत्तया प्रेरयति । अपानं च वायुं प्रत्यगधः विण्मूत्रादिनिष्कासनहेतुतया अस्यति प्रेरयति । तं मध्ये हृदि आसीनं वामनं विश्वे सर्वे देवा उपासत इति । एतेन प्राणापानप्रेरकत्वलिङ्गेन प्रागुक्तेशानो मुख्यप्राण इत्यपि चोद्यं निरस्तम् । निरवकाशवामनश्रुत्यादेः, सर्वप्रेरके हरौ, शते पञ्चाशन्न्यायेन प्राणापानप्रेरकत्वस्यापि सम्भवात् । तथा च सूत्रम्– 'शब्दादेव प्रमितः' (ब्र.सू.१-३-२४) इति ॥ ३ ॥

कांश्चिद्भगवद्गुणानुक्त्वा तूष्णीं स्थितं यमं पुनस्तद्गुणान् वक्तुं पृच्छति नचिकेताः– **अस्येति** ॥

**अस्य विस्रꣳसमानस्य शरीरस्थस्य देहिनः ।**
**देहाद् विमुच्यमानस्य किमत्र परिशिष्यते । एतद् वै तत् ॥ ४ ॥**

शरीरस्थस्य अस्य देहिनो जीवस्य विस्रंसमानस्य स्थूलं देहं त्यजतः, देहात् सूक्ष्मदेहाद् विमुच्यमानस्य तदपि त्यजतः, अत्र मुक्तौ नियामकं किं कीदृशं परिशिष्यत इति प्रश्नः । उत्तरमाह– **एतद्वै तदिति** ॥ त्वया पृष्टं तद्वस्तु एतद्वै वक्ष्यमाणगुणकतया परिशिष्यमाणं वै इत्यर्थः ॥ ४ ॥

सर्वजीवनहेत्वोः मुख्यवायुरूपयोरपि प्रेरकत्वगुणं परिशिष्यमाणस्याऽह– **नेति** ॥

**न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।**
**इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥**

मुख्यप्राणरूपाभ्यां प्राणापानाभ्यां न जीवति चेतनराशिः, किन्त्वितरेण । स कः? यस्मिन्नेतौ प्राणापानौ उपाश्रितौ तेनेतरेणेति भगवत्प्रेरिताभ्याम्

एताभ्यां जीवति । न स्वतन्त्राभ्यामिति यावत् । एतद्वै तदिति पूर्वेणान्वयः । सर्वजीवनदमुख्यप्राणप्रेरकत्वगुणयुक्तं वै तदिति ॥ ५ ॥

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।**
**यथा मरणं प्राप्याऽत्मा भवति गौतम ॥ ६ ॥**

हन्त त इति प्रतिज्ञावाक्यद्वयं स्वप्रान्तमिति मन्त्रात् प्रागेवाऽकृष्य व्याख्यातम् ॥ ६ ॥

तत्र ब्रह्मगुणान् इयता निरूप्योत्तरत्रापि जीवभेदकगुणान् ब्रह्मणो विवक्षुरितरेणेति पूर्वमन्त्रे भेदस्य प्रस्तुतत्वात् तत्प्रकटनाय मरणं प्राप्य आत्मा जीवो यथा भवति तच्च वक्ष्यामीत्युक्तम् । ब्रह्मण्ययुक्तं धर्मं जीवस्याऽह– **योनिमिति** ॥

**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।**
**स्थाणुमन्येऽनुसँय्यन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥**

देहिनो देहधारणयोग्याः अन्ये केचन जीवाः शरीरत्वाय, अर्शआद्यच्-प्रत्ययान्तात् त्वप्रत्ययः, शरीरवत्त्वाय योनिं प्रपद्यन्ते प्राप्नुवन्ति । कथम्? यथाकर्म यथाश्रुतम्, स्वस्वविकर्मानतिक्रमेण । अन्ये देहिनः स्थाणुं स्थावरं देहं संयन्ति स्वकीयकर्माद्यनुसारेणेति ॥ ७ ॥

जीवभेदकगुणयुक्तत्वेन भगवतो महिमानमाह– **य एष इति** ॥

**य एष सुप्तेषु जागर्ति कामङ्कामं पुरुषो निर्ममाणः ।**
**तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद् वै तत् ॥८॥**

य एष पुरुषो भगवान् सुप्तेषु जीवेषु कामं कामं स्वेच्छानुसारेणेति वा काम्यमानं स्वाप्नपदार्थजातमिति वाऽर्थः, निर्ममाणः उत्पादयन् जागर्ति ।

तदाह सूत्रे– 'निर्मातारं चैके पुत्रादयश्च' (ब्र.सू.३–२–२) इति । तदेवेति विधेयापेक्षया नपुंसकत्वम् । शुक्रं शोकरहितं तद्ब्रह्म तदेवामृतमनश्वर-मुच्यते । वेदादिषु प्राज्ञैरिति वा । तस्मिन्निति महिमान्तरम् । एतद्वै तत् त्वया पृष्टं तत् य एष इत्यादिनोक्तगुणकं वै ॥ ८ ॥

न प्राणेनेत्युक्तं सर्वजीवनियन्तृत्वं दृष्टान्ताभ्यां व्यनक्ति– **अग्निर्यथेत्यादिना** मन्त्रद्वयेन ॥

**अग्निर्यथैको भुवनं प्रविष्टो रूपꣳरूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपꣳरूपं प्रतिरूपो बहिश्च ॥ ९ ॥**

**वायुर्यथैको भुवनं प्रविष्टो रूपꣳरूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपꣳरूपं प्रतिरूपो बहिश्च॥ १० ॥**

भुवनं प्रविष्टः चेतनोऽग्निः यथैकः पाकादिकर्ता नान्यः तथाऽप्यस्य चेतनाग्नेः, रूपं रूपं प्रतीति शेषः, प्रतीत्यस्याऽवृत्तिर्वा, रूपं रूपं प्रति प्रति-रूपः प्रतिबिम्बो बभूव जीवः । द्वयोरपि योनिमित्यादिना प्रकृतत्वात् । तदाह सूत्रे– 'आभास एव च' (ब्र.सू.२–३–४९) इति । प्रतिबिम्बत्वं च तदधीनत्वे सति किञ्चित्तत्सदृशत्वं ज्ञेयम् । किं तयोरभेदः? नेत्याह– **बहिश्चेति** ॥ बिम्बस्वरूपाद् बहिर्भूतश्च, न तत्स्वरूपात्मेत्यर्थः ॥ ९ ॥

**वायुर्यथेति** । यथा चेतनवायुरित्यादिरूपेण प्राग्वद्योजना ॥ १० ॥

क्लिश्यमानजगदन्तःप्रविष्टस्यापि क्लेशः स्यादिति चोद्यं सदृष्टान्तं निराह– **सूर्यो यथेति** ॥

**सूर्यो यथा सर्वलोकस्य चक्षु-**
**र्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा**
**न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥**

चक्षुर्द्विविधं बाह्यमान्तरं चेति । बाह्यं जडम् । आन्तरं तु तदभिमानिसूर्यचेतनरूपम् । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यादेः । तथा च यथा सूर्यः सर्वलोकस्य चक्षुः चक्षुर्नियन्तृतया चक्षुर्नामक; चक्षुरन्तस्थः सन्नपि चाक्षुषैः बाह्यदोषैः बाह्यचक्षुस्सम्बन्धिभिः दोषैर्न लिप्यते तथैकः स्वतन्त्रः, बाह्यो जीवस्वरूपानात्मकः बहिर्भूतस्सन्न लिप्यते स्वतन्त्रत्वादिति भावः । तदाह सूत्रे– 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' (ब्र.सू.१–२–८) इति ॥ ११ ॥

एकपदोक्तं स्वातन्त्र्यं व्यञ्जयन् एकस्य नानाजीवनियन्तृत्वं कथमिति चोद्यं बहुरूपत्वोक्त्या निराह– **एको वशीति** ॥

**एको वशी सर्वभूतान्तरात्मा**
**एकꣳ रूपं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरा-**
**स्तेषां सुखꣳ शाश्वतं नेतरेषाम् ॥ १२ ॥**

कैमुत्येनापि भगवतो दुःखास्पृष्टत्वमाह– **तमिति** ॥ ये आत्मस्थं पश्यन्ति तेषामपि सर्वदुःखप्रहाणेन शाश्वतं सुखं किल । तस्य हरेः कथं दुःखस्पर्श इति भावः ॥ १२ ॥

एको वशीत्युक्तं स्वातन्त्र्यं समर्थयते– **नित्य इति** ॥

**नित्यो नित्यानां चेतनश्चेतनाना-**
**मेको बहूनां यो विदधाति कामान् ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरा-**
**स्तेषाꣳ शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥**

नित्यानां वस्तूनां नित्योऽतिशयेन नित्यः । चेतनानां चेतनो मुख्यचेतनः । अन्ये चेतनाभासाः, तदधीना इति यावत् । परमचेतनत्वात् स्वतन्त्रः ।

स्वतन्त्रत्वाद् दुःखाश्लेष इति भावः । बहूनां चेतनानां शान्तिः सुखम् ॥ १३ ॥

भगवतो महिमान्तरमाह– तदेतदिति ॥

**तदेतदिति मन्यन्तेऽनिर्देश्यं परमꣳ सुखम् ।**
**कथं नु तद् विजानीयां किमु भाति न भाति वा ॥ १४ ॥**

तद् 'गुह्यं ब्रह्म' इत्युपक्रान्तं एतद् 'एकं रूपम्' इति मध्ये चोक्तं ब्रह्मणो रूपमनिर्देश्यमिदमित्थमिति निर्देष्टुमशक्यं परमं सुखम् अनिर्देश्य-परमसुखात्मकमिति (एनं ) ज्ञानिनो मन्यन्ते । तत्तादृक् सुखात्मकं भगवद्रूपं कथं नु जानीयां तत्प्रसादमृते? किमु भाति न भाति वेति । टीकायां तु यदनिर्देश्यं सुखं कथं नु तद्विजानीयामित्यानुकूल्येन गृह्णन्ति तदनिर्देश्यं सुखम् एतत्प्रकृतमात्मनो रूपमिति मन्यन्त इति योजनोक्ता । जानीयामिति प्रार्थनायां लिङ् । ज्ञानार्थं प्रार्थितत्वमानुकुल्येन ग्रहणम् ॥ १४ ॥

तस्य महिमान्तमाह– न तत्रेति ॥

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति ॥ १५ ॥**

**इति द्वितीये द्वितीया वल्ली**

तत्र कथं नु तद्विजानीयामित्यत्र तत्पदोक्ते ज्ञानार्थं प्रार्थिते वस्तुनि सूर्यादिर्न भाति न भासयते । चन्द्रतारकमिति द्वन्द्वैकवद्भावः । तमेव भान्तमनु तद्भानमनुसृत्य सर्वं सूर्यादितेजोजातं भाति । तस्य भासा सर्वमिदं जगत् विभातीति । तथा च सूत्रम्– 'अनुकृतेस्तस्य च' (ब्र.सू.१–३–२२) इति ॥ १५ ॥

**॥ इति श्रीकाठकार्थसङ्ग्रहे द्वितीयाध्याये द्वितीया वल्ली ॥**

## अथ द्वितीये तृतीया वल्ली

साधूनां भगवन्महिम्नो बुद्ध्यारोहाय लोकप्रसिद्धार्थसाम्येन तन्महिमानमाह– **ऊर्ध्वेति** ॥

**ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।**
**तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद् वै तत् ॥१॥**

ऊर्ध्वः सर्वोच्चो भगवान् मूलं वृक्षमूलं भूतलमिव मूलं यस्य जगदाख्यवृक्षस्य स ऊर्ध्वमूलः । अवाक् अर्वाञ्चः अधमाः देवाः शाखाः यस्यासौ अवाक्शाखः । भूमिगतवृक्षमूलं तु श्रीतत्त्वं ज्ञेयम् । एषः प्रमाण-प्रमितो जगदाख्योऽश्वत्थः अश्वत्थतरुरिव स्थितः । आशु गतिमत्त्वादश्वो हरिः । आशूपपदाद् वाधातोः कप्रत्यये उपपदान्तलोपे ह्रस्वत्वे च अश्व इति सिद्धेः, अश्वः अस्मिंस्तिष्ठतीति वा, अश्वस्य थमन्नमिति वाऽश्वत्थः । सनातनः प्रवाहतोऽनादिः । तदेव ऊर्ध्वाख्यं मूलमेव शुक्रम् । व्याख्यातानि पदानि । एतद्वै तत् त्वया पृष्टम् एतादृशगुणकं वै इति ॥ १ ॥

**यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम् ।**
**महद्भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति ॥ २ ॥**

**यदिदमिति** । यदिदं किञ्च सर्वं जगत् प्राणाख्ये हरौ स्थितं प्राणान्निस्सृतं तदिदं जगत् यस्मादेजति यत्प्रेरणया चेष्टते तत् वज्रं वज्रवत् महद्भयं महद्भयदम्, उद्यतम् उत्कृष्टयत्नवन्तम् एतत् एतं ये विदुः ते अमृताः मुक्ता भवन्ति । भाष्यटीकयोस्तु, प्राणः सर्वमिदं, किञ्च जगच्च यस्मान्निस्सृतम्

एजति चेष्टते च, सर्वं जगद्यस्मान्निस्सृतं स प्राणो यस्माच्चेष्टत इति वाऽर्थः । वज्रपदस्य तु 'वर्जनाद् वज्रमुच्यते' इति स्मृत्या योगरूढिभ्यां च वज्रशब्दार्थो भगवानित्युक्तम् । तदाह सूत्रकारः–'कम्पनात्' (ब्र.सू.२-३-३९) इति ॥२॥

वज्रवद् भयदत्वं कुत इत्यत आह– **भयादिति ॥**

**भयादस्याग्निस्तपति भयात् तपति सूर्यः ।**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥**

इन्द्रो, वायुः, पञ्चमो मृत्युः वर्षणादिस्वकार्येषु व्याप्रियते । धावू गतिशुद्ध्योः ॥ ३ ॥

बाल्य एव सम्पादितज्ञानं नचिकेतसं दृष्ट्वा विस्मितोऽन्योऽप्येवं कुर्यादित्याशयवान् तथा फलमाह– **इह चेदिति ॥**

**इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः ।**
**ततः स्वर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥**

इह मनुष्यदेहे शरीरस्य भौतिकदेहस्य विस्रसः विस्रंसनात् पतनात् प्राक् बोद्धुमशकत् शक्तश्चेत् सः स्वर्गेषु लोकेषु वैकुण्ठादिषु शरीरत्वाय अप्राकृतचिदानन्दात्मकदेहवत्त्वाय कल्पते, मुक्तो भवतीति यावत् ॥ ४ ॥

उक्तोपायैर्जायमानोऽपि भगवद्बोधो नैकविध इत्याह– **यथेति ॥**

**यथाऽऽदर्शे तथाऽऽत्मनि**
**यथा स्वप्ने तथा पितृलोके ।**
**यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके**
**छायातपयोरिव ब्रह्मलोके ॥ ५ ॥**

आत्मनि जीवेऽवस्थितो भगवान्, आदर्शे दर्पणे मुखं यथा दृश्यते सम्यक् तथा ज्ञानदृष्टिभिः दृश्यते । यथा स्वप्ने पदार्थो दृश्यते तथा पितृलोके

दृश्यते न सम्यगित्यर्थः । यथाऽप्सु परीव सम्यगिव, प्रतिमुखादिकं दृश्यते तथा गन्धर्वलोके किञ्चित्स्पष्टतया दृश्यते । ब्रह्मलोके तु छायातपयोः छायातपमिलितप्रदेशे वस्तु यथाऽहनि दृश्यते तथा हरिर्दृश्यत इत्यर्थः ॥ ५ ॥

'इह चेदशकद्बोद्धुम्' इत्युक्तम् । तत्र कस्य बोधात् स्वर्गलोको भवतीत्यतो बोद्धव्यमाह– **इन्द्रियाणामिति** ॥

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।**
**पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥**

पृथग्भावं तारतम्यं, यच्च जगदुदयास्तमयौ भवतः, पृथक् नानाप्रकारेणोत्पद्यमानानाम् इन्द्रियाणां सत्ताप्रतीत्यादिकमिति शेषः, मत्वा भगवदधीनं ज्ञात्वा, न शोचति ॥ ६ ॥

नैतावदेव, किन्तु तारतम्यान्तर्गत्वेन भगवज्ज्ञानमावश्यकमित्याह– **इन्द्रियेभ्य** इत्यादिना ॥

**इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।**
**सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥**

**अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।**
**तं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥**

इन्द्रियादिदेवताः प्राक् तृतीये प्रदर्शिताः । सत्त्वं बुद्धिः । अधि अधिकः । व्यापकोऽपरिच्छिन्नः । अलिङ्गः प्राकृतभौतिकदेहरहितः । विशेषणसमुच्चये चशब्दः । तं तारतम्यान्तगं ज्ञात्वा मुच्यते भवपाशात् । अमृतत्वं च पुनर्जननमरणाभावरूपममृतत्वं च गच्छतीत्यर्थः । प्रागुक्तस्यैव तारतम्यस्य पुनरिह वचनं तारतम्यज्ञानपूर्वके भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम् ॥ ७–८ ॥

तं ज्ञात्वा मुच्यते इत्युक्तं मुक्तिहेतुज्ञानं न चक्षुरादिनाऽनायाससाध्यम्, किन्तु भक्तिश्रवणाद्युपोद्बलितेन मनसैवेत्याह– **न सन्दृश इति** ॥

**न सन्दृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चिदेनम् ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो**
**य एनं विदुरमृतास्ते भवन्ति ॥ ९ ॥**

सन्दृशे सम्यग्ज्ञानाय अस्य नानावतारनिदानभूतस्य मूलरूपस्य प्रकृतभगवतो रूपं न तिष्ठति । अव्यक्तैकस्वभावत्वात्, अचिन्त्यमहित्वाच्च । वस्तुस्वभावो दुर्दर्श इत्युक्त्वात् करणान्यपि न तत्र शक्तिमन्तीत्याह– **न चक्षुषेति** ॥ उपलक्षणम् । चक्षुरादिकरणैः कश्चिदप्येनं न पश्यति । एतेन मत्स्यकूर्मादिश्चक्षुषा दर्शनान्न चक्षुषा पश्यतीति कथमिति परास्तम् । मूलरूपस्यैवम्भावोक्तेः । तर्हि केनेत्यत आह– **हृदेति** ॥ हृच्छब्दोऽत्र श्रवण-मननध्यानभक्त्यादिसाधनपरः । तद्युक्तेन मनसा मनीषा ज्ञानरूपो भगवान-भिक्लृप्तो विषयीकृतो भवति । मुच्यते मुक्तो भवतीति प्रागेकवचनोक्त्या ज्ञानिष्वेक एव मुच्यत इति प्राप्तशङ्कां वारयितुमाह– **य एनमिति** ॥ एनं पुरुषम् । तथा च सूत्रम्–'अनियमः सर्वेषाम्' (ब्र.सू.३-३-३५) इति ॥९॥

हृदा मनसेत्यत्र हृदेत्युक्तसाधनेषु अभ्यर्हितं ज्ञानसाधनं किमित्यतः प्रत्याहारसिद्धधारणादिरूपं ध्यानमित्याह– **यदेति** ॥

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥**

ज्ञानानि, करणे ल्युट्, ज्ञानसाधनानि चक्षुरादिपञ्चेन्द्रियाणि मनसा सह यदाऽवतिष्ठन्ते विषयेभ्यः व्यावृत्ततया तिष्ठन्ति, बुद्धिश्च न विचेष्टते विषयान् प्रति न प्रवर्तते, तं सप्तानामिन्द्रियाणां विषयेभ्यः प्रत्याहारं परमां गतिं

परमसाधनं ज्ञानस्याऽहुरित्यर्थः । तामिति पाठे गत्यपेक्षया स्त्रीलिङ्गत्वम् ॥ १० ॥

ननु कथं प्रत्याहारस्य परमसाधनता? ध्यानसमाधिलक्षणयोगस्यैव तथात्वादित्यत आह– **तां योगमितीति** ॥

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥**

तामित्यस्य विवरणं–**स्थिरामिन्द्रियधारणामिति** । इन्द्रियाणां विषयेभ्यो व्यावर्तनेन भगवद्विषये अचञ्चलां धारणामेव ध्यानसमाधिलक्षणयोगमिति मन्यन्ते प्राज्ञा इति । तयोरनतिभेदं व्यनक्ति– **अप्रमत्त इति** ॥ तथा सत्यप्रमत्तो भवति, भगवज्ज्ञान्येव भवतीत्यर्थः । योगं मन्यन्त इत्युक्तं तस्य विषयमाह– **योगो हीति** ॥ प्रभवाप्ययौ उत्पत्तिविनाशौ जगतो भगवत्-सकाशाद् भवत इत्येतद्योगो हि ध्यानरूपभगवद्योगविषयो हीति ॥ ११ ॥

न चक्षुषा पश्यतीत्युपलक्षणत्वेनोक्तं विशदयति– **नैव वाचेति** ॥

**नैव वाचा न मनसा प्राप्तुꣳ शक्यो न चक्षुषा ।**
**अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥**

प्राप्तुं ज्ञातुं न शक्यः । पुरुष इत्यनुकर्षः । केन तर्हि ज्ञेय इत्यतो हृदेत्यादिना श्रवणादिकं परमसाधनमुक्तम्, तस्य गुरुप्रसादरूपेतिकर्तव्यतां व्यतिरेकमुखेनाऽह– **अस्तीति** ॥ अपराधीनतया सर्वोत्तमत्वेन अस्ति प्रकृतपुरुषनामा भगवानिति ब्रुवतः उपदिशतो गुरोः अन्यत्र, तथोपदेष्टृगुरुं विनेति यावत्, तद् भगवतो रूपं कथमुपलभ्यते? न कथमपि । गुरुणा प्रीतिपूर्वमुपदेशे कृते श्रवणमननादिस्वप्रयत्नेन गुरुप्रदानसहितेनोपलभ्यते भगवानिति । तदाह सूत्रकारः– 'प्रदानवदेव हि तदुक्तम्' (ब्र.सू.३-३-४४) इति ॥ १२ ॥

सेतिकर्तव्यताकश्रवणादिस्वप्रयत्नमात्रादेव नोपलभ्यते, किन्तु तज्जन्यभगवत्प्रसादादेवेति भावेन तद्धेतूक्तिपूर्वकमाह– **अस्तीत्येवेति** ॥

**अस्तीत्येवोपलब्धव्यस्तत्वभावेन चोभयोः ।**
**अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदति ॥ १३ ॥**

उभयोः प्रकृतिपुरुषयोः तत्त्वं प्रामाणिकत्वं प्रकृतिपुरुषभावं वा भावयति सम्पादयतीति तत्त्वभावो भगवान् तेन, तत्प्रसादेनेति यावत्, सर्वस्मादधिकतया अस्तीत्येव ज्ञातव्यः पुरुष इत्यनुषङ्गः । न तु तत्प्रसादेन विना । मुक्तिहेतुर्भगवत्प्रसादश्च तत्प्रसादजन्येश्वरविषयोपलम्भादित्याह– **अस्तीत्येवेति** ॥ सर्वाधिकतयाऽस्तित्वादस्तीतिनामा भगवान् इत्युपलब्धस्य, कर्तरि निष्ठा, एवमुपलभमानस्य तत्त्वभावः प्रागुक्तव्युत्पत्त्या भगवान् प्रसीदति परमप्रसादवान् भवति ॥ १३ ॥

तादृशप्रसादसाध्यं फलमाह– **यदेति** ॥

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥**

परमप्रसादे सति पश्चाद् ये हृदि स्थिताः अन्तःकरणगताः सर्वे कामाः ते यदा प्रमुच्यन्ते, कर्मकर्तरिप्रयोगः, मुक्ता भवन्ति, अपगच्छन्तीति यावत्, अथ अनन्तरं मर्त्योऽमृतो भवति मृतिं नैव प्रपद्यते । कुतः? अत्र श्वेतद्वीपादिस्थानविशेषे ब्रह्म समश्नुते प्राप्नोति, तस्मादिति योज्यम् ॥ १४ ॥

हृदयगतसर्वकामत्यागः कदेत्यतः तत्कारणाविद्याहङ्कारकर्मणां हृदयग्रन्थीनां यदा त्यागः तदेत्याह– **यदेति** ॥

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥**

इह मानुषदेहे हृदयस्य सर्वे ग्रन्थयो हृदयस्थाविद्यादिग्रन्थयो यदा प्रभिद्यन्ते अपयन्ति अथ तदा सर्वकामप्रहाणेन मर्त्यः अमृतो मुक्तो भवति । एतावदनुशासनं निष्कामकर्मश्रवणमननध्यानकर्तव्योक्तिपरं शास्त्र-मेतावत् ॥ १५ ॥

एवं मोक्षहेतुब्रह्मविद्यामुक्त्वा ज्ञानिनः चरमदेहान्निष्क्रमणेऽवश्यं पूर्वं ध्येयमार्गमाह– **शतमित्यादिना** ॥

**शतं चैका च हृदयस्य नाड्य-**
**स्तासां मूर्धानमभिनिःसृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति**
**विष्वगन्या उत्क्रमणे भवन्ति ॥ १६ ॥**

हृदयस्य हृदयसम्बन्धिन्यो नाड्यः शतं चैका च एकोत्तरशतं नाड्यो भवन्ति । तासां मध्ये एका नाडी मूर्धानमभि प्रति निस्सृता तावत्पर्यन्तं गता । तया शतोत्तरया सुषुम्नाख्यया ऊर्ध्वं गच्छन् अमृतत्वमेति । अन्याश्च शतं नाड्यः विष्वगुत्क्रमणे लोकान्तरगमनार्थं भवन्ति । सुषुम्नामार्गो ज्ञानिनां ध्येय इति भावः । तदाह सूत्रकारः– 'गत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया' (ब्र.सू.४-२-१७) इति ॥ १६ ॥

'अनन्यप्रोक्ते गतिरत्र नास्ति' इत्यादिनोक्तं भेदज्ञानमेव मुक्तिहेतुरित्युपसंहरति– **अङ्गुष्ठमात्र इति** ॥

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानाꣳ हृदये सन्निविष्टः ।**
**तꣳ स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।**
**तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥**

अन्तरात्मा अन्तर्व्याप्त इति वा, अन्तःप्रेरक इति वाऽर्थः । जनानां मानुषादिचेतनानां हृदये सदा सम्यक् सुखेनैव निविष्टः स्थितः । तं स्वात्

स्वात्मरूपात् शरीराद् उपलक्षणं जीवादिति यावत्, यद्वा स्वात् स्वकीयाज्जीवरूपाच्छरीरादित्यर्थः । जीवो हि हरिवशत्वाद् हरिणाऽधिष्ठितत्वाद्धरेः शरीरम् । धैर्येण धीरभावेन सूक्ष्मदृष्ट्येति यावत् । प्रवृहेद् विवेचयेद् भेदेन जानीयादिति यावत् । कथम्? मुञ्जादिवेषीकां मुञ्जापदेन मौञ्जीधारणार्थं क्रियमाणरज्जुसाधनतृणविशेषः । मुञ्जात् मुञ्जपुञ्जमध्याद् इषीकाख्यविजातीयतृणविशेषमिवेति । यत्तु सुधायां 'देहात्मत्वं यदि न तत्' इति भक्तिपादीयानुव्याख्यानगमनिकायां देहजीवपरतया व्याख्यातं, तत्परीत्यैवेत्यविरोधः । मुमुक्षोः शोकराहित्यस्य अमृतत्वस्य चावश्यापेक्षितत्वात् तस्य तादृक्त्वेन भगवज्ज्ञानेनैव भाव्यत्वाज्ज्ञानमावश्यकमिति भावेनाऽह–**तमिति ॥** तं जीवाद्भिन्नं शुक्रं शोकादिदोषवर्जितम्, अमृतं नित्यमुक्तम्, अनाद्यनन्तकालं सम्पूर्णस्वरूपानन्दानुभववन्तमिति यावत्, तादृशानुभवस्यैव मुक्तिशब्दार्थत्वात्, विद्याज्जानीयादिति । अभ्यासस्तात्पर्यार्थः । इतिशब्दो वेदनप्रकारवाची वा, समाप्तिवाची वा ध्येयः ॥ १७ ॥

एवं ब्रह्मविद्यां प्राप्य नाचिकेतः किमभूदित्यतो वेदपुरुषो वक्ति–**मृत्युप्रोक्तामिति ॥**

**मृत्युप्रोक्तां नाचिकेतोऽथ लब्ध्वा**
**विद्यामेतां योगविधिं च कृत्स्नम् ।**
**ब्रह्म प्राप्तो विरजोऽभूद् विमृत्यु-**
**रन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥**

**इति द्वितीये तृतीया वल्ली**

**इति श्रीकाठकोपनिषत् समाप्ता**

—०—

कृत्स्नं योगविधिं च प्रत्याहारादिभगवज्ज्ञानोपायविधिं च लब्ध्वा अनुष्ठाय विरजो निष्पापस्सन् ब्रह्म प्राप्तो भवति प्राप्नोति । विमृत्युरपगत-मृत्युः अमृतोऽभूत् । अन्योऽपि योऽध्यात्मं वित् सोऽप्येवमेव भवत्येवेति ॥ १८ ॥

निर्दोषगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥

इति श्रीकाठकार्थानां सङ्ग्रहोऽकारि यन्मया ।
राघवेन्द्रेण यतिना प्रीयतां तेन केशवः ॥

**इति श्रीराघवेन्द्रयतिकृतकाठकोपनिषत्खण्डार्थः सम्पूर्णः ॥**

# श्रीराघवेन्द्रयतिविरचितषट्प्रश्नोपनिषत्खण्डार्थः

श्रीरङ्गविठ्ठलं नत्वा सर्वज्ञादिगुरूनपि ।
षट्प्रश्नाख्योपनिषदष्टीकोक्तार्थो निगद्यते ॥

(अथ प्रथमः प्रश्नः)

**ओ३म् ॥ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाऽश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः एष ह वै तत् सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥**

इह खलु संसारपारावारे निपतितमधिकारिणं जनं जननी तनयमिव परमात्मतत्त्वज्ञानप्लवेनोद्धर्तुं प्रवृत्तेयमाथर्वणी ब्राह्मणोपनिषत् । अस्या उपनिषदो वासुदेवो मुख्यतया प्रतिपाद्यो देवता । प्राणादयस्तु तच्छेषतया तथेति ज्ञेयम् । पिप्पलादादय ऋषयः । छन्दस्तु क्वचिदक्षरपरिगणनया ज्ञेयम् । अत्र सुकेशा इत्यादिकाऽऽख्यायिका विद्याप्रशंसया श्रोतॄणां श्रद्धाजननार्था । एवं किल महद्भिर्भारद्वाजप्रभृतिभिरपीयं विद्या संवत्सरब्रह्मचर्यादिना लब्धा । अतोऽतिप्रशस्ततरा । अतोऽस्माभिरप्येवंविधैर्भाव्यमिति । स्मर्यते हि श्रद्धादीनां तत्त्वज्ञानहेतुत्वं 'श्रद्धावाँल्लभते ज्ञानम्' इत्यादिना ॥

अत्रेयमक्षरयोजना–सुकेशा नामतः भरद्वाजस्यापत्यं भारद्वाजः ॥ १ ॥ शिबेरपत्यं शैब्यः सत्यकामो नामतः ॥ २ ॥ सूर्यस्यापत्यं सौर्यः, तदपत्यं सौर्यायणिः, दीर्घः सुलोपश्च छान्दस इति स एव सौर्यायणी, गर्गस्य गोत्रो गार्ग्यः ॥ ३ ॥ कौसल्यो नामतः, कोसलायां भवो वा, अश्वलस्यापत्यमाश्वलायनः

॥ ४ ॥ भृगोरपत्यं भार्गवः, विदर्भेषु भवो वैदर्भिः ॥ ५ ॥ कबन्धी नामतः, कत्यस्यापत्यं कात्यायनः ॥ ६ ॥ इतरेतरयोगे चशब्दाः । त एते ह किल ब्रह्मपराः वेदाभ्यासे तात्पर्यवन्तः, ब्रह्मनिष्ठाः तदुक्तानुष्ठानशीलाश्च मुनयः कदाचित् क्वचित् समवेताः परं ब्रह्म वासुदेवम् अन्वेषमाणा जिज्ञासवो बभूवुरिति शेषः । ब्रह्मपरा इत्यादि ब्रह्मजिज्ञासाधिकारसम्पत्तिकथनम् । ततस्ते किलैष पिप्पलादः यद् वयं पृच्छामः तत्सर्वं वक्ष्यति तस्मादेनं गच्छाम इति निश्चित्य समित्पाणयो भूत्वा भगवन्तं पूज्यं पिप्पलादमुपसन्नाः तत्समीपं प्राप्ताः । वैशब्दः पिप्पलादस्य प्रश्नप्रतिवचनसामर्थ्यद्योतकः ॥ १ ॥

**तान् ह स ऋषिरुवाच । भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान् पृच्छत । यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥**

तानागतान् ह किल स ऋषिः पिप्पलाद उवाच । किमिति ? यद्यपि यूयं प्रागेव तपआदिसम्पन्नाः, तथाऽपि भूयः पुनरेव तपसा सर्वेन्द्रियनिग्रहलक्षणेन विशेषतोऽपि ब्रह्मचर्येण श्रद्धयाऽऽस्तिक्यनिष्ठया युक्ताः संवत्सरमेकमस्मान् परिचरन्तः संवत्स्यथ सम्यग् वसत । ततो यथेष्टं प्रश्नान् प्रष्टव्यार्थान् पृच्छत । ततो युष्माभिः पृष्टं प्रतिवक्तुं यदि वयं विज्ञास्यामः तर्हि सर्वं वो युष्मभ्यं वक्ष्याम इति । न ह्येवं सति अवचने कारणमस्तीति हशब्दः ॥ २ ॥

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति । तस्मै स होवाच प्रजाकामो हवै प्रजापतिः । स तपोऽतप्यत ॥ ३ ॥**

अथोक्तनियमसमनुष्ठानानन्तरं तेषां मध्ये कबन्धी कात्यायन उपेत्योपसदनं कृत्वा पिप्पलादं पप्रच्छ । 'पाठक्रमादर्थक्रमो बलीयान्' इति पश्चादुक्तस्यापि कात्यायनस्य प्रश्नप्रतिवचनं प्रथममुक्तम् । एवमन्यत्रापि द्रष्टव्यम् । तं च

क्रमं तत्रैव दर्शयिष्यामः । किमिति? भगवन् कुतो निमित्तकारणात् पुरुषादिमा देवाद्याः सर्वाः प्रजाः प्रजायन्त उत्पद्यन्त इति । ह वा इति प्रजानां प्रजननस्य सुप्रसिद्धताद्योतकौ निपातौ । सुप्रसिद्धं तावत् प्रजानां प्रजननम् । न चैतदन्तरेण कारणमुपपन्नम् । सर्वदाऽपि प्रसङ्गात् । न चाचेतनैरेव कारणैः । चेतनानधिष्ठितानां तेषां कार्यकर्तृत्वादर्शनात् । न च जीवोऽधिष्ठाता, अस्वतन्त्रत्वात् । नापीश्वरः, तदनुपलम्भादिति प्रश्नाभिप्रायः । यद्यपि भगवान् सर्वेषां न प्रत्यक्षगोचरो वर्तमानः कुलालादयो घटादिकमिव प्रजाः प्रजनयति । तथाऽपि जगत्कारणीभूतान् प्राणादीनुत्पाद्य तेष्वाविश्य तान् निमित्तीकृत्य निखिलाः प्रजाः जनयन्तीति न कश्चिद् विरोध इत्याशयवान् तस्मै पृष्टवते कात्यायनाय स पिप्पलादः किलोत्तरमुवाच । किमिति? प्रजानां ब्रह्मादीनां पतिः पालकः परमेश्वरः कल्पादौ किलाऽत्मनः प्रजाकामो देवादिप्रजावत्त्वमात्मन इच्छन्नवर्तत । अथ सर्वज्ञोऽपि लोकविडम्बनाय तपोऽतप्यत । कर्तव्यमन्वालोचयत् ॥ ३ ॥

**स मिथुनमुत्पादयते रयिं च प्राणं चेति । एतौ मे बहुधा प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः ॥ ४ ॥**

आलोचितकार्यः स प्रजापतिः मिथुनं स्त्रीपुरुषद्वन्द्वमुत्पादयते उदपादयत् । न च प्राणादिजननेनास्य प्रयोजनं शङ्कनीयम् । तत्स्वाभाव्यादित्युत्पादयत इति वर्तमानापदेशेनाऽह । किं तन्मिथुनम्? रयिं वित्ताभिमानिनीं भारतीं प्राणं मुख्यं चेत्येतत् । सर्वाः प्रजाः सिसृक्षुः परमेश्वरः कथं तावुदपादयदिति चेत्, एवं मन्यते स्म प्रजापतिः । एतौ रयिप्राणौ मे मम बहुविधाः प्रजाः करिष्यत इति । एतावाविश्याहं प्रजाः स्रक्ष्यामि । इमौ मे प्रजासर्जने निमित्तीभविष्यत इति । अभूतां च तौ प्रजापतेः प्रजासर्जने निमित्तमित्युच्येते --**आदित्य इत्यादिना** ॥ ततोऽसौ प्राणः प्रजापतिनाऽऽदित्यादिषु सृष्टेष्वादित्यः आदित्यनामा आदित्यं प्रविष्टो बभूव । रयिरेव रयिरपि चन्द्रमाः चन्द्रमानाम्नी

चन्द्रमस्याविष्टा बभूव । एवं चन्द्रसूर्यगतौ तावाविश्य तौ निमित्तीकृत्य प्रजापतिः प्रजाः ससर्जेति वाक्यशेषः ॥ ४ ॥

**रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं च । तस्मान्मूर्तिरेव रयिः । अथाऽदित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते । यद् दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥ ५ ॥**

प्रकारान्तरेण प्रजोत्पत्तिनिमित्तत्वमुच्यते– **रयिर्वा इत्यादिना** ॥ एतत्सर्वं रयिर्वै प्रमाणसिद्धमेतत् । किं तत्सर्वम् ? तेजोबन्नलक्षणमूर्तममूर्तं च प्रकृत्यादिकमिति यदुपादानकारणराशिद्वयं तस्माद् राशिद्वयात् प्रविभक्ता या मूर्तिः यन्मूर्तं सैव रयिः । सप्तम्यर्थे चेयं पञ्चमी । अमूर्तं प्राण इति शेषः । रयिप्राणौ जगदुपादानेषु पञ्चभूतेषु प्रकृत्यादिषु च स्थित्वा तेषामुपादानत्वशक्तिं प्रेरयन्तौ प्रजापतेः प्रजोत्पत्तौ निमित्तं भवत इति यावत् । आदित्ये स्थित्वा प्राणः प्रजोत्पत्तिनिमित्तं भवतीत्युक्तं तत् कथमित्यत उच्यते– **अथेत्यादिना** ॥ अथशब्दः प्रकृतमूर्तादिप्रकारादर्थान्तरद्योतकः । आदित्यः आदित्यस्थः प्राणः उदयन् उद्गच्छन् प्राचीं दिशं प्रकाशेन प्रविशतीति यत्तेन प्राच्यान् प्राचीदिक्पालान् तद्दिग्गतप्राणिप्रणयनात् प्राणशब्दोदितान् सभार्येन्द्राग्निरूपांश्चतुरो देवान् रश्मिषु सन्निधत्त इत्यादि योज्यम् । यद् दक्षिणां प्रविशति तेन दक्षिणदिक्पालान् प्राणान् सभार्ययमनिर्ऋतिरूपांश्चतुरो देवान् रश्मिषु सन्निधत्ते । यत् प्रतीचीं प्रविशति तेन प्रतीच्यान् प्राणान् सभार्यवरुणवायुरूपचतुरो देवान् रश्मिषु सन्निधत्ते । यदुदीचीं प्रविशति तेनोदीच्यान् सभार्यसोमेशानरूपचतुरो देवान् रश्मिषु सन्निधत्ते । यदधः प्रविशति तेनाधस्तनान् सभार्यशेषमित्ररूपान् रश्मिषु सन्निधत्ते । यदूर्ध्वं प्रविशति तेनोर्ध्वान् प्राणान् सभार्यवीन्द्रकामरूपांश्चतुरो

देवान् रश्मिषु सन्निधत्ते । यदन्तरा दिशः दशदिशां मध्यं यत्प्रविशति तेन तत्रत्यान् प्राणान् रश्मिषु सन्निधत्ते । यदन्तरा दिश इति नावान्तरदिगुक्तिः, अग्न्यादिकोणपालानां प्राच्यादिग्रहणेनैव गृहीतत्वात् । तथोक्तं भाष्ये - 'प्राच्याः प्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः । प्रतीच्या वरुणाद्यास्तु सोमाद्याश्चोत्तराः स्मृताः । शेषमित्रावग्राचीनौ वीन्द्रकामावुदक्तनौ । सभार्याः कोणपैः सार्धं चत्वारो दिशि दिश्यपि ॥' इति । 'दिङ्मध्यस्था अपि केचिज्ज्ञातव्याः' इति टीकाकृतः । यत्सर्वमिति निगमनम् । अनेनाशेष-जगत्प्रकाशकतया प्रजोत्पत्तिनिमित्तत्वमुक्तम् ॥ ५ ॥

**स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतद् ऋचाऽभ्युक्तम् ॥**

**विश्वरूपं करिणं जातवेदसं**
**परायणं ज्योतिरेकं तपन्तम् ।**
**सहस्ररश्मिः शतधा वर्तमानः**
**प्राणः प्रजानामुदयत्येष सूर्यः ॥ ६ ॥**

न केवलमेतावत् । किं नाम ? स एष आदित्ये स्थितो विश्वरूपः पूर्णरूप अदनादग्निः, प्राणो वैश्वानरो विश्वनरसम्बन्धी तापनपाचनशोषणादिना सर्वप्रजोत्पत्तिहेतुस्सन्नुदयते । 'आदित्यो ह वै प्राणः' इति या प्रसिद्धिः सूचिता सोच्यते– **तदेतदिति ॥** यदुक्तं तदेतद् ऋचा 'विश्वरूपं' इति मन्त्रेणाभ्युक्तं स्पष्टमुक्तम् । अतो दृढतरं प्रतिपत्तव्यमिति । विश्वरूपं, करा रश्मयोऽस्य सन्तीति करी, तं करिणं जातवेदसं जातस्य सर्वस्य वेदितारं परायणं सर्वप्राणिनां परमाश्रयम् एकं प्रधानं ज्योतिः प्रकाशकं तपन्तं तपनक्रियां कुर्वन्तम्, उपलक्षणमेतत्, शोषणादिकं च कुर्वाणमादित्यमण्डलस्थं पुरुषं जानीयात् । किमिति ? सहस्ररश्मिरनन्ततेजाः शतधाऽनन्तरूपैः सर्वप्राणिषु

वर्तमानो यः प्राण एष एव प्रजानामुत्पत्तये सूर्ये स्थित्वोदयतीति । एवं चन्द्रमसि स्थिताया देव्या अप्योषधिजननादिद्वारेण प्रजोत्पत्तिनिमित्तत्वमुपपादनीयमिति ॥ ६ ॥

**संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तद् ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष वै रयिर्यः पितृयाणः ॥ ७ ॥**

अथ सर्वोत्पत्तिनिमित्तकारणं संवत्सरादिलक्षणं कालं तदवान्तरभेदोत्तरायणाद्यधिष्ठातारौ रयिप्राणौ चाधिष्ठाय प्रजापतेः प्रजाकारणत्वमुच्यते– **संवत्सर इत्यादि** ॥ प्रजापतिः संवत्सरो वै संवत्सरस्थः सन् प्रजा जनयतीति प्रसिद्धम् । तस्य संवत्सरस्यायने सूर्यगतिविशेषोपलक्षितौ देवयानपितृयाणलक्षणदेवताविशेषाभिमतौ भागविशेषौ नामतो दक्षिणं चोत्तरं च । तयोः रयिप्राणावधिष्ठाताराविति शेषः । कुत एतदित्यत उच्यते– **तद् ये ह वै तदित्यादि** ॥ तत् तत्र साधकेषु य ऋषयः प्रजाकामाः, मोक्षेतरफलकामाः सन्त इति यावत्, इष्टं यजनं पूर्तमन्नदानादिकं कृतमन्यच्च कर्म इत्येतदुपासते अनुतिष्ठन्ति त एते दक्षिणं पितृयाणं प्रतिपद्यन्ते । प्रतिपन्नाश्च ते चान्द्रमसं लोकमभिजयन्ते प्राप्नुवन्ति । त एव पुनः स्वकर्मावसाने तस्माच्चन्द्रलोकाद् आवर्तन्ते ह वै । यत एवं पितृयाणेन गतानां पुनरावृत्तिमच्चन्द्रलोकप्राप्तिलक्षणं फलं प्रसिद्धं, तस्माच्चन्द्राधिष्ठात्री रयिरेवैषो यः पितृयाणो वै पितृयाणाधिष्ठात्रीति गम्यते ॥ ७ ॥

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽदित्यमभिजयन्ते । एतद् वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः ।**

**तदेष श्लोकः –**

**पञ्चपादं पितरं द्वादशाकृतिं**
**दिव आहुः परे अर्धे पुरीषिणम्।**
**अथेमे अन्य उ परे विचक्षणं**
**सप्तचक्रे षळर आहुरर्पितमिति ॥ ८ ॥**

**अथ ये** मुमुक्षवस्तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा **चोत्तरायणेन** गताः त आदित्यमभिजयन्ते । ततश्च परमं ब्रह्म यस्मादेतद्वै **देवयानेन** प्राप्यं ब्रह्मैव प्राणानामिन्द्रादीनाम् आयतनम् आधारः । एतदेवामृतमभयं च । एतदेव परायणं मुक्तानामप्याश्रयः । अत एतस्मान्न पुनरावर्तन्त इति तस्माद् अपुनरावृत्त्ययोग्यानां मार्गनिरोधकत्वादेव 'एष आदित्यो निरोधो विदुषाम्' इत्युच्यते श्रुत्यन्तर इति । यत एवमुत्तरायणेन गतानामपुनरावृत्तिमदादित्यलोकप्राप्तिलक्षणं फलं प्रसिद्धं, तस्मादादित्याधिष्ठाता प्राण एवोत्तरायणाधिष्ठातेति ज्ञायत इति वाक्यशेषः ॥

**आदित्यं** प्राप्तानामपुनरावृत्तिरित्यत्र श्रुत्यन्तरसम्मतिरुच्यते । यदत्रोक्तं केचित् पितृयाणेन यान्ति केचिद्देवयानेनेति तत्रैष वक्ष्यमाणः श्लोको मन्त्रः **सम्मतित्वेन** भवति । हेमन्तशिशिरयोरैक्येन पञ्च ऋतवः तदभिमानिनः पादाः अंशा **यस्य** तं पञ्चपादम्, पितरं प्रजानां पालकं, द्वादशमासाभिमानिदेवा आकृतयो रूपाणि यस्य तं द्वादशाकृतिं, विचक्षणं विवेकिनम्, सप्तचक्राणि चङ्क्रम्यते रथ एभिरित्यश्वा यस्यासौ सप्तचक्रः, षट्सङ्ख्याकाः अराः यस्यासौ षळरः, **तस्मिन्नर्पितं** वर्तमानम्, आदित्यं दिवोऽन्तरिक्षस्य परेऽन्यतरस्मिन् किञ्चिद्दक्षिणाश्रितभागे गच्छन्तं, पुरीषमुदकं तदस्यास्तीति पुरीषिणं वर्षणहेतुं तदुपलक्षितकालाभिमानिदेवतामार्गमिति यावत्, केचित् काम्यकर्मिणः स्वप्राप्यमाहुः । अथ तेभ्योऽन्ये इमे ज्ञानिनो दिव उ परे परस्मिन् किञ्चिदुत्तराश्रिते भागे गच्छन्तमादित्यं तदुपलक्षितकालाभिमानिदेवतामार्गं स्वप्राप्यमाहुरिति यावत् ॥ ८ ॥

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः । शुक्लः प्राणः । तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् । अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते ॥ ९ ॥**

किं च मासो वै प्रजापतिः मासलक्षणकालमधिष्ठाय प्रजाः सृजतीति यावत् । तस्य मासस्यावयवभूतः कृष्णपक्ष एव रयिः, शक्लपक्षः प्राणः । पक्षद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावत् । कुत एतत् ? यस्मात् स्वल्वादित्योत्तरायणाधिष्ठाता प्राणः शुक्लपक्षे स्थितस्तस्मादेव ह्येते उत्तरायणेनाऽदित्यं जिगमिषन्तः शुक्लपक्ष इष्टिं यजनं निष्कामं प्राण-पूजात्मकं कुर्वन्ति । यस्माच्चन्द्रदक्षिणायनाधिष्ठात्री रयिः कृष्णपक्षे स्थिता तस्मादेव हीतरे दक्षिणायनेन चन्द्रमसं प्रेप्सन्त ऋषयः । इतर इतरस्मिन् कृष्णपक्षे काम्यां रयिपूजारूपामिष्टिं कुर्वन्तीति । किञ्च 'अहोरात्रे' इत्यादि पूर्ववद्व्याख्येयम् । एकवद्भावस्य वैकल्पिकत्वेन श्रुतावहोरात्र इति प्रथमा । मासो वा इत्यादिप्रायपाठात् । प्राणं वेत्यादिवाक्यं न साक्षादहरेव प्राण इत्यनेन सम्बद्ध्यते । अतो मध्ये 'दम्पती वै प्रजापतिः । पतिरेव प्राणो जायैव रयिः' इत्यध्याहार्यम् । एवं सति तदुपपादकत्वेनास्य सम्बन्धः । ये दिवा रत्या रतिहेतुभूतया स्त्रिया संयुज्यन्ते संयोगमाचरन्ति त एते प्राणं प्रस्कन्दन्ति निर्गमयन्ति । यत्र क्वचन परित्यजन्ति । यद् रात्रौ रत्या संयुज्यन्ते तदिदं ब्रह्मचर्यसममेवेति प्रसिद्धम् । तेन ज्ञायते रात्र्यधिष्ठात्री रयिः स्त्रियां वर्ततेऽहरधिष्ठाता प्राणः पुंसीति । तथा हि – दिवा पुरुषरेतसि प्राणस्याधिकं सन्निधानं, न तदा देव्यास्स्त्रियां तावत् सन्निधानम् । तथा च दिवा पुरुषरेतसि स्थिते प्राणे स्त्रियं प्राप्ते यत्र क्वचना-सावनेन त्यक्तो भवति । रात्रौ तु स्त्रियां देव्या अधिकं सन्निधानमिति तदा प्राणः स्वभार्यामेव प्राप्तो भवति इत्युपपद्यत इति ॥ ९ ॥

**तदेष श्लोकः –**

**पञ्चपादं पितरं द्वादशाकृतिं**
**दिव आहुः परे अर्धे पुरीषिणम् ।**
**अथेमे अन्य उ परे विचक्षणं**
**सप्तचक्रे षळर आहुरर्पितमिति ॥ ८ ॥**

अथ ये मुमुक्षवस्तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा चोत्तरायणेन गताः त आदित्यमभिजयन्ते । ततश्च परमं ब्रह्म यस्मादेतद्वै देवयानेन प्राप्यं ब्रह्मैव प्राणानामिन्द्रादीनाम् आयतनम् आधारः । एतदेवामृतमभयं च । एतदेव परायणं मुक्तानामप्याश्रयः । अत एतस्मान्न पुनरावर्तन्त इति तस्माद् अपुनरावृत्त्ययोग्यानां मार्गनिरोधकत्वादेव 'एष आदित्यो निरोधो विदुषाम्' इत्युच्यते श्रुत्यन्तर इति । यत एवमुत्तरायणेन गतानामपुनरावृत्तिमदादित्यलोकप्राप्तिलक्षणं फलं प्रसिद्धं, तस्मादादित्याधिष्ठाता प्राण एवोत्तरायणाधिष्ठातेति ज्ञायत इति वाक्यशेषः ॥

आदित्यं प्राप्तानामपुनरावृत्तिरित्यत्र श्रुत्यन्तरसम्मतिरुच्यते । यदत्रोक्तं केचित् पितृयाणेन यान्ति केचिद्देवयानेनेति तत्रैष वक्ष्यमाणः श्लोको मन्त्रः सम्मतित्वेन भवति । हेमन्तशिशिरयोरैक्येन पञ्च ऋतवः तदभिमानिनः पादाः अंशा यस्य तं पञ्चपादम्, पितरं प्रजानां पालकं, द्वादशमासाभिमानिदेवा आकृतयो रूपाणि यस्य तं द्वादशाकृतिं, विचक्षणं विवेकिनम्, सप्तचक्राणि चङ्क्रम्यते रथ एभिरित्यश्वा यस्यासौ सप्तचक्रः, षट्सङ्ख्याकाः अराः यस्यासौ षळरः, तस्मिन्नर्पितं वर्तमानम्, आदित्यं दिवोऽन्तरिक्षस्य परेऽन्यतरस्मिन् किञ्चिद्दक्षिणाश्रितभागे गच्छन्तं, पुरीषमुदकं तदस्यास्तीति पुरीषिणं वर्षणहेतुं तदुपलक्षितकालाभिमानिदेवतामार्गमिति यावत्, केचित् काम्यकर्मिणः स्वप्राप्यमाहुः । अथ तेभ्योऽन्ये इमे ज्ञानिनो दिव उ परे परस्मिन् किञ्चिदुत्तराश्रिते भागे गच्छन्तमादित्यं तदुपलक्षितकालाभिमानिदेवतामार्गं स्वप्राप्यमाहुरिति यावत् ॥ ८ ॥

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः । शुक्लः प्राणः । तस्मादेत ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् । अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते ॥ ९ ॥**

किं च मासो वै प्रजापतिः मासलक्षणकालमधिष्ठाय प्रजाः सृजतीति यावत् । तस्य मासस्यावयवभूतः कृष्णपक्ष एव रयिः, शक्लपक्षः प्राणः । पक्षद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावत् । कुत एतत् ? यस्मात् स्वल्वादित्योत्तरायणाधिष्ठाता प्राणः शुक्लपक्षे स्थितस्तस्मादेव ह्येते उत्तरायणेनाऽदित्यं जिगमिषन्तः शुक्लपक्ष इष्टिं यजनं निष्कामं प्राण-पूजात्मकं कुर्वन्ति । यस्माच्चन्द्रदक्षिणायनाधिष्ठात्री रयिः कृष्णपक्षे स्थिता तस्मादेव हीतरे दक्षिणायनेन चन्द्रमसं प्रेप्सन्त ऋषयः । इतर इतरस्मिन् कृष्णपक्षे काम्यां रयिपूजारूपामिष्टिं कुर्वन्तीति । किञ्च 'अहोरात्रे' इत्यादि पूर्ववद्व्याख्येयम् । एकवद्भावस्य वैकल्पिकत्वेन श्रुतावहोरात्र इति प्रथमा । मासो वा इत्यादिप्रायपाठात् । प्राणं वेत्यादिवाक्यं न साक्षादहरेव प्राण इत्यनेन सम्बद्ध्यते । अतो मध्ये 'दम्पती वै प्रजापतिः । पतिरेव प्राणो जायैव रयिः' इत्यध्याहार्यम् । एवं सति तदुपपादकत्वेनास्य सम्बन्धः । ये दिवा रत्या रतिहेतुभूतया स्त्रिया संयुज्यन्ते संयोगमाचरन्ति त एते प्राणं प्रस्कन्दन्ति निर्गमयन्ति । यत्र क्वचन परित्यजन्ति । यद् रात्रौ रत्या संयुज्यन्ते तदिदं ब्रह्मचर्यसममेवेति प्रसिद्धम् । तेन ज्ञायते रात्र्यधिष्ठात्री रयिः स्त्रियां वर्ततेऽहरधिष्ठाता प्राणः पुंसीति । तथा हि – दिवा पुरुषरेतसि प्राणस्याधिकं सन्निधानं, न तदा देव्यास्स्त्रियां तावत् सन्निधानम् । तथा च दिवा पुरुषरेतसि स्थिते प्राणे स्त्रियं प्राप्ते यत्र क्वचना-सावनेन त्यक्तो भवति । रात्रौ तु स्त्रियां देव्याः अधिकं सन्निधानमिति तदा प्राणः स्वभार्यामेव प्राप्तो भवति इत्युपपद्यत इति ॥ ९ ॥

**अन्नं वै प्रजापतिस्ततो हैतद् रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति। तद् ये हैतत् प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्। तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १० ॥**

**इति प्रथमप्रश्नप्रतिवचनम्**

—०—

किं चान्नं वै प्रजापतिः। कथमन्नेऽवस्थितस्य प्रजापतेः प्रजाजनकत्वमित्यत उच्यते - ततोऽन्नात् खल्वेतद्रेतोऽभिजायते । किं ततः? तस्माद्रेतसो हीमा मनुष्यादिप्रजाः प्रजायन्त इति । अन्ने स्थित्वा तद्रेतोरूपेण परिणाम्यैत-दुपादानीकृत्यापि प्रजापतिः प्रजाः सृजतीति यावत् । एवं परमेश्वरो निमित्तोपादानभूतान् पदार्थान् द्वारीकृत्य प्रजाः सृजतीति विदुषः फलमुच्यते –**तदित्यादि** ॥ तत् तत्र प्रजासु ये खलु पुरुषाः तदेतद् यथोक्तं प्रजापतेः व्रतं कर्म चरन्ति जानन्ति ते मिथुनमुत्पादयन्ते साध्वपत्या भवन्ति । तेषामेवैष सत्याख्यो ब्रह्मलोकः प्राप्यो भवति येषां तपः ब्रह्मचर्यं चास्ति, येषु सत्यं सत्यवचनं च प्रतिष्ठितं नियमेन स्थितम्। न केवलमेतावत् किन्तु यावद् ब्रह्मलयं तत्र स्थितानां तेषामेवासौ विरजोऽप्राकृतो ब्रह्मलोको वैकुण्ठादिः प्राप्यो भवति । येषु जिह्मं कौटिल्यमनृतमसत्यवचनं माया विप्रलिप्सा इत्येवमादिदोषाः न सन्ति तेषामिति सम्बन्धः। सत्यवचनादि-गुणाभिधानेन सिद्धस्याप्यनृतादिदोषाभावस्योक्तिरादरार्थेति ॥ १० ॥

**॥ इति प्रथमप्रश्नप्रतिवचनम् ॥**

—०—

## (अथ द्वितीयः प्रश्नः)

**ॐ ।। अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजा विधारयन्ते । कतर एतत् प्रकाशयन्ते । कः पुनरेषां वरिष्ठ इति ।। १ ।।**

**अथ हैनं भार्गवः** ।। प्रश्नार्थस्य उक्तानन्तर्यसूचकोऽथशब्दः । उक्तं परमेश्वरस्य सकलप्रजाजनकत्वम् । लब्धजन्मन एव स्थित्यादीति स्थितिज्ञानहेतुत्वं वक्तव्यम् । प्राक् प्राणस्य वरिष्ठत्वमभिप्रेतं तच्चोपपादनीयमिति तदर्थमुत्तरग्रन्थः । भगवन् कत्येव कियत्सङ्ख्याका देवाः प्रजा विधारयन्ते? कतरे देवाः एतद्विषयजालं प्रकाशयन्ते? कान् निमित्तीकृत्य परमेश्वरः प्रजानां स्थितिं विषयप्रकाशं च करोतीति यावत् । एषां धारणप्रकाशहेतूनां देवानां मध्ये को वरिष्ठोऽतिशयेन वरः? पूर्वोक्तरीत्या प्राणेन भाव्यम् ।। १ ।।

**तस्मै स होवाच । आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ् मनश्चक्षुः श्रोत्रं च । ते प्राकाश्या अभिवदन्ति । वयमेतद् बाणमवष्टभ्य विधारयाम इति ।। २ ।।**

तत् कथमित्येवं पृष्टवते तस्मै स होवाच । एष आकाशाभिमानी देवः ह वै यस्त्वया धारकः पृष्टः एवं वायुः भूतवायुर्देवतेत्यादि । अत्रोपलक्षणत्वेन पृथिवी च पृथिवीमात्रेत्यादिवक्ष्यमाणाः सर्वे मुख्यप्राणसहितास्तत्त्वदेवा ग्राह्याः । तेषु चक्षुरादयः प्रकाशहेतवः, अन्ये स्थितिहेतव इति ज्ञातव्यम् । उक्तमात्रग्रहणे कः पुनरेषां वरिष्ठ इति प्रश्नाननुगुणः परिहारः स्यात् । एतेषां प्राणस्य वरिष्ठत्वावधारणायाऽऽख्यायिकोच्यते– **ते प्राकाश्या इत्यादि** । त एते धारकाः प्रकाशकाश्च देवाः प्राकाश्याः प्रकाशवन्तः उच्चैरिति यावत्, अभिवदन्ति कदाचिदन्योन्यं स्पर्धयैवाभ्यवदन् । किमिति? वयमेतद् बाणं

शरीरमवष्टभ्याऽश्रित्य विधारयामः प्रकाशयामश्चेति । अहमेव स्वातन्त्र्येण देहधारको न त्वमिति धारकः, अहमेव स्वातन्त्र्येण विषयप्रकाशको न त्वमिति प्रकाशक इति यावत् ॥ २ ॥

**तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथ । अहमेवैतत् पञ्चधाऽत्मानं विभज्यैतद् बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः । सोऽभिमानादूर्ध्वमुत्क्रमत इव । तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते। तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते ॥ ३ ॥**

तानेवमभिमन्यमानान् वरिष्ठः प्राण उवाच । किमिति? वयमेव धारकाः प्रकाशकाश्चेत्येवंविधं मोहं मिथ्याज्ञानं माऽऽपद्यथ न प्राप्नुत । कुतोऽयं मोहः? यस्मादहमेवैतदेतस्मिन् शरीरे पञ्चधा प्राणादिरूपैरात्मानं प्रविभज्य प्रविभक्तं कृत्वा एतद् बाणमवष्टभ्य विधारयामि प्रकाशयामि चेति । तत् श्रुत्वा ते देवा अश्रद्दधाना अप्रत्ययवन्तो बभूवुः, कुत एतदित्थमिति । स मुख्यप्राणः तेषां प्रत्यायनाय, अभिमन्यत इत्यभिमानो देहः, तस्मादूर्ध्वमुत्क्रमत इव, किञ्चिदूर्ध्वमुदक्रामत् । अथ तस्मिन् प्राण उत्क्रामति सति, इतरे सर्व एवाऽकाशादिदेवाः शरीरधारणादौ स्वस्थितौ चासामर्थ्यादुत्क्रमन्ते, उद-क्रमन्त । अस्य च याद्दच्छिकत्वपरिहाराय पुनस्तस्मिन् प्राणे प्रतिष्ठमाने शरीर एव प्रतितिष्ठति सति सर्वे देवाः प्रतिष्ठन्ते शरीरे प्रत्यतिष्ठन् ॥ ३ ॥

**तद्यथा मधुमक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्र-मन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते । एवं वाङ् मनश्चक्षुः श्रोत्रं च । ते प्रीताः प्राणं स्तुवन्ति ॥**

**एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष**
**पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ४ ॥**

तत् तत्र लोके यथा मधुमक्षिका मधुकरराजानं मधुकरप्रधानं मधुस्थानादुत्क्रामन्तमनु सर्वा एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठिते सर्वा एव प्रतिष्ठन्ते । एवं वागादयो देवा इति । इत्थमन्वयव्यतिरेकाभ्यां प्राणस्य वरिष्ठत्वेऽवधारिते प्रीतास्ते देवाः त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तद्गुणक्रियादिप्रवर्तक इति प्राणं स्तुन्वन्ति, अस्तुवन् । तदुच्यते– **एषोऽग्निरित्यादि** ॥ एष प्राण एवाग्निस्सन् तपति । एष एव सूर्योऽपि सन् तपति मघवानेष एवेति शेषः । पृथिवी रयिश्च यत् सदसन्मूर्तममूर्तममृतं मुक्तजातं तदप्येष एव ॥ ४ ॥

**अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।**
**ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च ॥**

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।**
**तुभ्यं प्राण प्रजास्त्विमा यत् प्राणैः प्रतितिष्ठसि ॥**

**देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।**
**ऋषीणां चरितं सत्यमथर्वाऽङ्गिरसामपि ॥ ५ ॥**

कथमेतत् सर्वं प्राण एवेत्यत उक्तं वक्ष्यमाणं च विव्रियते–**अरा इति** ॥ तस्मात् सर्वं प्राण उच्यत इति शेषः । परोक्षतया स्तुतोऽपरोक्षतया स्तूयते – **प्रजापतिश्चरसीत्यादि** ॥ प्रजापतिः दक्षादिः । त्वमेव गर्भे चरसि गर्भस्थप्रेरकतया त्वमेव चरसि । प्रतिजायसे जनिक्रियां च त्वमेव करोषि । हे प्राण इमा देवाद्याः प्रजाः तुभ्यं त्वदीयाः । कुतः? यद्यस्मात् त्वं प्राणैश्चक्षुरादिभिः सह धारणादि कुर्वन् शरीरे प्रतितिष्ठसि तस्मात् । न केवलं तपनक्रियावानग्निः प्राणः । किं तु, उच्यते– **देवानामिति** ॥ त्वं देवानां वह्नितमो यज्ञभागवाहकतमोऽसि । पितॄणां प्रथमा स्वधा मुख्यस्वधावाहकोऽपि त्वमेवासि । त्वमेवाथर्वाङ्गिरसाम् ऋषीणां चरितमाचारः सत्यवचनं चासि ॥ ५ ॥

**इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता ।**
**त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥**

**यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः ।**
**आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥**

**व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः ।**
**वयमद्यस्य दातारः पिता त्वं मातरिश्व नः ॥ ६ ॥**

इन्द्रस्त्वमिति मघवानित्युक्तविवरणम् । तेजसा युक्त इति शेषः । वायुरित्यस्य त्वमन्तरिक्षे चरसीति विवरणम् । न केवलं सूर्यस्य तापकत्वं प्राणाधीनं, किं तु ज्योतिषां ग्रहाणां पतित्वं च । पर्जन्यत्वविवरणम् – **यदेति** ॥ हे प्राण यदा त्वं पर्जन्यरूपोऽभिवर्षसि अथ तदा ते त्वदीया इमा मानुषादिप्रजाः कामाय यथेष्टमन्नं भविष्यतीति निश्चित्याऽनन्दरूपा आनन्दवत्यस्तिष्ठन्ति । हे प्राण वायो व्रात्यः व्रतनिष्ठरेकर्षिरथर्ववेदद्रष्टाऽसि । विश्वस्यात्ता यमादिश्च त्वमसि । सतां पतिः, संश्चासौ पतिश्चेति वा सत्पतिः त्वमेव । वयं तवाद्यस्य भोज्यस्य दातारः त्वत्पूजका इति यावत् । कुतः? हे मातरिश्व मातरिश्वन् त्वं नोऽस्माकं पिताऽसि । मातरिश्वनो भूतवायोः पितेति वा ॥ ६ ॥

**या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।**
**या मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥**

**प्राणस्यैतद्वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम् ।**
**मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ ७ ॥**

**इति द्वितीयः प्रश्नः**

—०—

एवं स्तुत्वा प्रकृतं तूच्यते– **या त इत्यादि** ।। या ते त्वदीया तनूर्मूर्तिः वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि या मनसि सन्तता सम्यग् व्याप्य वर्तमाना एवमन्येषु तत्त्वेषु या प्रतिष्ठिता तां शिवां शान्तां कुरु । मोत्क्रमीः वागादिभ्यस्तथोत्क्रमणं मा कुरु । वागादिषु प्राणस्य प्रतिष्ठितत्वं कुतः? यत एतत् सर्वं वागादिकं प्राणस्य तव वशे वर्तते न त्वां विना प्रवर्तितुं क्षमम् । न केवलमध्यात्मं, किं तु त्रिदिवे स्वर्गे यत् प्रतिष्ठितमधिदैवादिकं चेति यावत्, वागादिषु स्थित्वा त्वमस्मान् माता पुत्रानिव रक्षस्व पालय । श्रीः श्रियं प्रजाधारणशोभामिति यावत्, प्रज्ञां प्रज्ञानं प्रकाशकत्वशक्तिं नोऽस्माकं विधेहि कुरु, इति स्तुन्वन्तीति सम्बन्धः ।। ७ ।।

**।। इति द्वितीयप्रश्नप्रतिवचनम् ।।**

## अथ तृतीयः प्रश्नः

**ॐ ॥ अथ हैनं कौसल्यश्चाऽश्वलायनः पप्रच्छ । भगवन् कुत एष प्राणो जायते । कथमायात्यस्मिञ्छरीरे । आत्मानं वा प्रविभज्य कथं प्रतिष्ठते । केनोत्क्रमते । कथं बाह्यमभिधत्ते । कथमध्यात्ममिति ॥ १ ॥**

**अथ हैनं कौसल्यः** । प्रागुक्तं परमेश्वरोऽखिलजगज्जन्मादिकर्तेत्यादि । तद्विवरणार्थोऽयमुत्तरो ग्रन्थः । भगवन्, कुतः कस्मात् पुरुषादेवमुक्तलक्षणः प्राणो जायते । स मिथुनमुत्पादयते रयिं च प्राणं पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीत्युक्तम् । तत्र कथं कस्मात् कारणात् अस्मिन् शरीरे प्राण आयाति प्रवर्तते । आत्मानं प्रविभज्य कथं प्रतिष्ठते प्रतितिष्ठति । के ते विभागाः ? तैश्च किं कुर्वन् कुत्र स्थानविशेषे तिष्ठतीति यावत् । तस्मिन्नुत्क्रान्ते सर्वेऽप्युत्क्रान्ता इत्युक्तम् । तत्र केन प्रविभागेन जीवादीनादायोत्क्रामति ? 'प्राणस्यैतद्वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम्' इत्युक्तम् । तत्र कथं केन रूपेण बाह्यमधिभूतादिकमभिधत्ते धारयति? कथं चाध्यात्ममभिधत्ते ? ॥ १ ॥

**तस्मै स होवाच । अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति । तस्मात् तेऽहं ब्रवीमि । आत्मत एष प्राणो जायते । यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् ॥ २ ॥**

इत्येवं पृष्टवते तस्मै स होवाच । यस्मादेवं त्वमतिप्रश्नानतिशयितान् प्रष्टव्यार्थान् पृच्छसि तस्मात् त्वं ब्रह्मिष्ठो वेदविचारादिमानसि । न ह्यन्यथैवंविधाः प्रश्नाः सम्भवन्तीति । यस्माद् ब्रह्मिष्ठोऽसि तस्मादहं ते तुभ्यम् उत्तरं ब्रवीमीति । तं प्रशस्याऽद्यप्रश्नोत्तरमुच्यते– **आत्मत** इति ॥ परमात्मत

इत्यर्थः । एष एवं महामहिमोऽपि प्राण आत्मतो जायते । तत्कथम् ? यथैषा छाया पुरुषे शरीरे आतताऽत्यन्तं शरीराधीना वर्तते एवमेवैतस्मिन् आत्मनि एतत् सर्वं प्राणादिकमाततम् । प्राणादप्याढ्यतमत्वात् परमात्मनः ततः प्राणस्य स्वजन्म सम्भवत्येवेत्यभिप्रायः ॥ २ ॥

**मनोकृतेनाऽयात्यस्मिञ्छरीरे । यथा सम्राडेवाधिकृतान् विनियुङ्क्त एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेति एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ॥ ३ ॥**

द्वितीयप्रश्नोत्तरं– **मन इति ॥** स चायं प्राणो मनोकृतेन मनःकृतेन मनः परं ब्रह्म तत्कृतेन तन्निमित्तेन तत्प्रेरणयेति यावत्, आत्मनः प्रकृतस्य मनोनिमित्तेनेच्छयेति वा आयात्यस्मिञ्छरीर इति । आत्मानं वेत्यादिप्रश्नोत्तरं –**यथा सम्राडित्यादि ॥** अस्यैवं योजना । यत् पृष्टं त्वयाऽऽत्मानं वा प्रविभज्येति तत्रास्ति विवेक्तव्यम् । द्विविधं तावत् प्राणादिपञ्चकम् । एकं मुख्यप्राणाज्जातं ततोऽतिरिक्तम्, अपरं तदात्मकमिति । तत्र यथा लोके सम्राट् सार्वभौमोऽधिकृतान् नियोगिनो विनियङ्क्ते कथम्? त्वमेतान् पाटलीपुत्रादीनधितिष्ठस्व तदाधिपत्येन तिष्ठेत्येकम्, अन्यं च त्वमेतान् कौशाम्बीप्रभृतीन् ग्रामानधितिष्ठस्वेति एवमेष मुख्यप्राण इतरान् भिन्नानात्मनो जातत्वादुपचारेणाऽत्मप्रविभागान् प्रणान् वायून् पृथक् पृथगेव स्थानेषु सन्निधत्ते संस्थापयति । स्वयं च तत्तत्क्रियाप्रवर्तकतया तत्र प्राणादि-पञ्चरूपोऽवतिष्ठत इत्याशयः ॥ ३ ॥

**पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति । तस्मादेताः सप्तार्चिषो भवन्ति । हृदि ह्येष आत्मा ॥ ४ ॥**

पृथक् पृथगित्युक्तं विव्रियते– **पायूपस्थ इत्यादि ॥** पायुश्चोपस्थश्च पायूपस्थम्, तत्र मलादेरपनयनादपानं वायुमात्मनो रूपेणापानेनाधिष्ठितं

सन्निधत्त इति सम्बन्धः । चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं तस्मिन्, मुखनासिकाभ्यां सह मुखे नासिकायां चेति यावत्, प्राणः स्वयं मुख्य एव श्वासादिप्रणयनात् प्राणनाम्ना स्वरूपेण वायुमधिष्ठाय प्रतिष्ठते प्रतितिष्ठति । समानस्तु समानवायुमधिष्ठाय मध्ये प्राणापानयोः नाभिदेश इति यावत्, प्रतितिष्ठति । स एष यस्मादेतद्धुतं भुक्तमन्नं समं यथाशरीरावयवं नयति तेन समान इति शेषः । किं तेन ? तस्मादन्नस्य समीकरणाद्धेतोः सप्तार्चिषः सप्तज्ञानेन्द्रियवृत्तयो भवन्ति । नन्वात्मैव विषयसंसर्गेणताननुभविष्यति किमिन्द्रियवृत्तिभिरिति ? मैवम् । हृदि ह्येष आत्मा जीवः स्वरूपेण वर्तते । अतः कथं तस्याणोः विषयसङ्गतिः स्यादिति ॥ ४ ॥

**अत्रैतदेकशतं नाडीनाम् । तासां शतंशतमेकैकस्यां द्वासप्ततिं प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति । अथैकयोर्ध्वं उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ५ ॥**

व्यानस्य प्रवृत्तिं वक्तुमुच्यत– **अत्रेत्यादि** ॥ अत्र शरीरे एतदेकशतम् एकोत्तरशतं नाडीनां शिराणां भवति । तासां नाडीनां मध्ये एकैकस्यां नाड्यां शतं शतं प्रतिशाखानाड्यो भवन्ति । पुनस्तासां प्रतिशाखनाड्यो भवन्तीति वक्तव्यम् । एवं च सम्भूय प्रतिशरीरं तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात् । प्रतिशाखानाडीसहस्राणां द्वासप्ततिमिति द्वितीया षष्ठ्यर्थे योजनीया । किं चातः आसु नाडीषु विविधं नयनाद् व्यानो व्यानवायुमधिष्ठाय चरति । अथोदानस्तु उदानवायुमधिष्ठाय एकया नाड्या सुषुम्नयोर्ध्वगतिश्चरति । स च तत्र चरन् पुण्येन जीवकृतं पुण्यं निमित्तीकृत्य पुण्यं स्वर्गादिलोकं नयति, एवं ज्ञानेन मोक्षमिति च द्रष्टव्यम् । अत एवोर्ध्वनयनादुदानः पापेन पापं नरकादिकं दुःखबहुलं लोकं नयति । उभाभ्यां समप्रधानाभ्यां पुण्यपापाभ्यां समदुःखसुखं मनुष्यलोकं नयतीति ॥

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः। पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः। तेजो ह वा उदानः। तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ॥ ६ ॥**

कथं बाह्यमित्यादि प्रश्नद्वयं परिह्रियते– **आदित्य इत्यादि ॥** मुख्यप्राण एव हि प्राणनामा बाह्यो बहिर्भवः, आदित्ये स्थितः तन्नामा, उदयते उद्गच्छति। एष आदित्यस्थः प्राण एवैनं चाक्षुषं चक्षुषि भवं प्राणवायुमनुगृह्णानो वर्तते। एतेन मुख्यप्राणः प्राणनाम्ना रूपेण बहिरादित्यमभिधत्ते। अध्यात्मं चाधिष्ठानभूतेनाऽदित्येन सहैव चक्षुषि स्थित्वा चक्षुस्तदभिमानिनं च प्राणवायुमभिधत्त इत्युक्तं भवति। एवमुत्तरत्रापि ज्ञातव्यम्। बहिः पृथिव्यां या धारिकाऽपानाख्या देवता सैषा पुरुषस्यापानं देहे वर्तमानमपानवायुमवष्टभ्य धृत्वा अन्तरा शरीरान्तर्वर्तते। अन्तरा द्यावापृथिव्योर्मध्ये यदाकाशो य आकाशः आकाशधारकः समानः सोऽध्यात्मं समानः समानवायुं धत्ते। यो बहिर्वायुधारको व्यानः स एवान्तर्व्यानो व्यानवायुधारकः। बहिस्तेजोधारको य उदानः स उदानः उदानवायुं धत्त इत्येतत् प्रसिद्धम्। कथमिति? यस्मात् तेजोऽधिष्ठातोदानस्तेनाधिष्ठानेन तेजसा सहैवान्तरुदानं दधत् प्राणिनां जीवनहेतुर्वर्तते तस्मादेव हि यः पुरुषः उपशान्ततेजा भवति स तेजसोपशमेनोदानस्याप्यपगमनमनुमाय मनसि सम्पद्यमानैः लीयमानैरिन्द्रियैः सह पुनर्भवं जन्मान्तरं, मरणमिति यावत्, प्राप्स्यतीत्यनुमीयते। लोक इति योज्यम् ॥

**यच्चित्तस्तेनैष प्राणमायाति। प्राणस्तेजसा युक्तः सहाऽत्मना यथासङ्कल्पितं लोकं नयति। य एवं विद्वान् प्राणं वेद न ह्यस्य प्रजा हीयतेऽमृतो भवति। तदेष श्लोकः–**

**उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा ।**
**अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते**
**विज्ञायामृतमश्नुत इति ॥ १२ ॥**

**इति तृतीयप्रश्नप्रतिवचनम्**

—०—

सङ्गतिविशेषलाभात् केनोत्क्रमत इति प्रश्नस्योत्तरमिदानीमुच्यते– **यच्चित्त इति** । एष पुरुषो यच्चित्तो मरणकाले यद्विषयचित्तो भवति तेन तद्विषय-चित्तेन सह प्राणं मुख्यमायाति तत्समीपं प्राप्नोति । प्राणस्तु तेजसौदानेन युक्तः परमात्मना सह जीवेन यथासङ्कल्पितं तेन जीवेन मरणकाले यादृशः सङ्कल्पितः स्मृतः तथाविधं लोकं शरीरं नयति प्रापयतीति । अत एव यच्चित्त इत्युक्तम् । स्वाभिप्रेतमिति वा। अनेनोदानरूपेणोत्क्रमणमित्युक्तं भवति । एवम्भूतप्राणविज्ञानस्य फलमुच्यते– **य एवमिति** ॥ यो विद्वानेवमुक्तलक्षणं प्राणं वेद विजानाति नास्य विदुषः प्रजा विहीयते, अविच्छिन्नसन्तानो भवतीत्यैहिकम्, परत्र चामृतो मुक्तो भवति । तदेष श्लोकः– प्राणस्योत्पत्तिं परमात्मना आयतिं प्रवर्तनं शरीरे तदिच्छया स्थानं पायूपस्थादि, पञ्चधा प्राणादिरूपेण विभुत्वं विविधभवनं स्वाम्यं च, तथाऽध्यात्मं धारकत्वं चशब्देन बाह्यधारकत्वमुत्क्रमणं चेत्येतद् विशेषेण ज्ञात्वाऽमृतं मोक्षमश्नुते प्राप्नोति ॥ ७ ॥

**॥ इति तृतीयप्रश्नप्रतिवचनम् ॥**

## (अथ चतुर्थः प्रश्नः)

**ॐ ॥ अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति । कान्यस्मिन् जाग्रति । कतर एष देवः स्वप्नान् पश्यति । कस्यैतत् सुखं भवति । कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥**

अथ हैनं सौर्यायणी ॥ उक्तं प्राणादेरखिलस्यापि जगतो भगवदधीनत्वम् । तत्र केवलं जाग्रदवस्थायां, किं नाम ? स्वप्नसुषुप्त्योरपीति दर्शयितुमुत्तरो ग्रन्थः । भगवन्नेतस्मिन् पुरुषे शरीरिणि स्वपति सति कानि दैवानि स्वपन्ति ? स्वव्यापारादुपरमन्ते । भाव्यं हि केषाञ्चिद् व्यापारोपरमेण । अन्यथा स्वापस्यैवासम्भवात् । कानि दैवान्यस्मिन् पुरुषे स्वपति सति जाग्रति, स्वव्यापारं कुर्वन्ति । सर्वेषामुपरमे शरीरावस्थानासम्भवात् । स्वापो द्विविधः स्वप्नसुषुप्तिभेदात् । तत्र स्वप्ने य एष देवः स्वप्नान् स्वप्नस्थान् पदार्थान् पश्यति स कतरः ? सर्वेन्द्रियाणामुपरतत्वात् केनेन्द्रियदेवेन जीवः स्वाप्नान् पदार्थाननुभवतीत्यभिप्रायः । सुषुप्तौ च यत् सुखं भवति तत् कस्य ? तदोपरतकरणस्य जीवस्य विषयसंसर्गाद्यभावेन कथं सुखानुभवो घटत इत्याशयः । एते च स्वपन्तो जाग्रतः स्वप्नाद्यवस्थावन्तश्च न तावत् स्वतन्त्राः । बहूनां स्वातन्त्र्यायोगात् । न च जीवाधीनाः, क्वचिदतद्वशत्वस्यापि दर्शनात् । न च मुख्यप्राणाधीनाः, तस्यापि जीवत्वेनानवस्थितेरसम्भवाच्च । अतः पराधीना एते सर्वे कस्मिन् सम्प्रतिष्ठिता भवन्ति ? परमेश्वरश्चेदाश्रयः तत् कुत इत्यभिप्रायः ॥ १ ॥

**तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति । ताः पुनरुदयतः प्रचरन्त्येवं पुनः हैतत् सर्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽदत्ते नाऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥**

एवं पृष्टवते स होवाच– **यथेत्यादि** ॥ हे गार्ग्य, यथाऽर्कस्यास्तमदर्शनं गच्छतः सर्वा एव मरीचयः सर्वेऽपि रश्मयः एतस्मिन् दृश्यमाने तेजोमण्डले एकीभवन्ति, तत्रैकीभूता इव दृश्यन्ते, प्रकाशादिव्यापारादुपरमन्त इति यावत्, ताः पुनस्ते तु रश्मयोऽर्कस्य पुनरुदयतः सतः प्रचरन्ति । तस्मात् मण्डलान्निर्गत्य लोके प्रचरन्तीव दृश्यन्ते । स्वव्यापारं कुर्वन्तीति यावत् । एवं खल्वेतत् सर्वं शरीरितदिन्द्रियदेवताजातं च परे देवे विष्णौ स्वप्नावस्थायां मनसि स्थिते, सुषुप्तौ हृदयाकाशस्थ एकीभवन्ति । जागरे तु प्रचरन्ति । अनेन स्वप्ने मनोव्यतिरिक्तानामेवोपरमः, सुषुप्तौ तु तस्यापीति सूचितम् । यत एवं तेन कारणेन तर्हि तदा स्वापे एष पुरुषो जीवो न शृणोतीत्यादि । नेयायते न गच्छति । स्वप्नविवक्षया चैतत् । सुषुप्तौ तु न मनुत इत्याद्यपि द्रष्टव्यम् । यत एवं जीवः स्वापे परं देवं प्राप्नोति, अत एव हि तदा स्वपितीत्याचक्षते विद्वांसः, स्वं स्वतन्त्रं देवमप्येतीति कृत्वेति ॥ २ ॥

**प्राणाग्नय एवैतस्मिन् पुरे जाग्रति गार्हपत्यो हवा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते प्रणयनादाहवनीयः प्राणो यदुच्छ्वासनिःश्वासावेतावाहुती समं नयति स समानो मनो ह वाव यजमान इष्टफलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ३ ॥**

कानि जाग्रतीत्यस्योत्तरम्– **प्राणाग्नय इति** ॥ स्वापकाले एतस्मिन् पुरे शरीरे प्राणाः प्राणादिमुख्यप्राणरूपाण्येवाग्नय एव जाग्रति शरीरधारणादिस्व-व्यापारं कुर्वन्ति । अग्नय इत्युपलक्षणम्, ऋत्विग्भावस्यापि वक्ष्यमाणत्वात् । कथं तेषामग्न्यादित्वमित्यत उच्यते– **गार्हपत्य इत्यादि** ॥ तेषां प्राणानामेषोऽ-पानो गार्हपत्यः । पश्चिमत्वसाम्यात् । व्यानोऽन्वाहार्यपचनः दक्षिणाग्निः, होमाङ्गत्वसाम्यात् । यद्यस्माद् गार्हपत्यादाहवनीयः प्रणीयते प्राणोऽप्यपानात्, तस्मात् प्रणयनात् प्रणयनसाम्यात् प्राण आहवनीयः । यद्यस्माद् द्वावेतावुच्छ्वासनिश्वासौ त एतावाहुती समं यथाकालं नयति तस्मादाहुत्योः समं नयनसाम्यात् समानः । सोऽध्वर्युरिति यावत् । तत्र मननान्मनो जीवो यजमानः । पराधीनफलत्वसाम्यादित्युत्तरार्थं वचनम् । अन्यथा पूर्वं प्राणादीनामेव प्रकृतत्वेन जीवस्य यजमानत्वोक्तिरयुक्ता स्यात् । अत उत्तरवाक्ये उदानस्य यजमानफलप्रतिपादकत्वेनोद्गातृत्वार्थं जीवस्य यजमान-त्वोक्तिरुपपन्नेति भावः । उदानरिष्टफलं यज्ञफलं प्रतिपादकः उद्गातेति यावत्, फलप्रतिपादकत्वसाम्यात् । कथमुदानस्य फलप्रतिपादकत्वम् ? स उदानो ह्येनं यजमानं जीवमहरहः प्रतिदिनं सुप्ताविति यावत्, ब्रह्म सुषुम्नागतं गमयति प्रापयतीति य एवं वेद तेनैवमिष्टं भवति । नित्यं ब्रह्मप्राप्तिफलं च तस्य भवतीति ज्ञापनायेदमुक्तम् ॥ ३ ॥

**अत्रैष देवः स्वप्ने महिमानमनुभवति । यद् दृष्टन्दृष्टमनुपश्यति श्रुतंश्रुतमेवार्थमनुशृणोति देशदिगन्तरे च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति । स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान् न पश्यति । अथ यदेतदस्मिन् शरीरे सुखं भवति ॥ ४ ॥**

यत एवं मनोव्यतिरिक्तानामेवोपरमस्स्वप्ने तस्माज्जीवस्य मनसा स्वप्न-दर्शनं युक्तमिति भावेन कतर एष देवः स्वप्नान् पश्यतीति तृतीयप्रश्नस्य परिहार – **अत्रेत्यादि ॥** अत्रैतस्यामवस्थायां मनोव्यतिरिक्तेन्द्रियोपरम इति यावत्, एष देवो मनोनामा तेनानुगृहीतो जीव इति यावत्, स्वप्ने महिमानमात्मनो महत्त्वमन्यच्चानुभवति । तत्र च यमर्थं पश्यति तं प्राग् दृष्टमेवानुपश्यति । यः प्राक् श्रुतः तं श्रुतमेवार्थं शब्दं स्वप्नेऽनुश्रृणोति । एवमन्यदप्यनुभूतमेवानुभवति । नाननुभूतम् । किमस्मिन्नेव देशेऽनुभूतम-नुभवति ? न । किं तु देशान्तरे दिगन्तरे च यत् प्रत्यनुभूतं पुनः पुनरनुभूतं तदेव स्वप्ने पुनःपुनः प्रत्यनुभवति ।भ्रान्त्या तदेवेदमिति प्रत्यभिजानाति । नाप्यस्मिन्नेव जन्मन्यनुभूतमनुभवतीति नियमः । किं त्वस्मिन् जन्मनि दृष्टमदृष्टं च जन्मान्तरे दृष्टम् । एवमुत्तरत्रापि अनुभूतम् अननुभूतम् इन्द्रिया-न्तरेण । सच्च तदानीम् असच्च निवृत्तं चेत्येवं सर्वं पश्यति जानाति । स्वयं च सर्वः नानाकर्मभिः नरवानराद्यनेकप्रकारः सन् तत् पश्यति । कस्यैतत्सुखं भवतीति चतुर्थप्रश्नं परिहर्तुमुच्यते– **स यदेत्यादि ॥** एवं स्वप्ने वर्तमानः स जीवो यदा तेजसा भगवदीयेनाभिभूतः आवृतो भवति भगवन्तं प्रविशतीति यावत्, अत्रैतस्यां सुषुप्तिसञ्ज्ञायामवस्थायाम् एष देवो मनः स्वप्नान्न पश्यति । मनसोऽप्युपरतत्वात् न जीवस्स्वप्नान् पश्यतीति यावत् । यस्मादेवं परमेश्वरतेजसाऽभिभूतो भवत्यथ तस्मात्तत्सन्निधानसामर्थ्योद्भूतं यत् सुखं तदेतस्मिन् भगवच्छरीरवद् ज्ञानात्मकत्वेन तत्सादृश्ययुक्ते जीवे भवतीति न काचिदनुपपत्तिरिति ॥ ४ ॥

**स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते । एवं हैतत् सर्वं पर आत्मनि सम्प्रतिष्ठते। पृथिवी च पृथिवीमात्रा चाऽपश्चा-ऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽ-काशश्चाऽकाशमात्रा च । चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च**

**घ्राणं च घ्रातव्यं च रसनं च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ च दातव्यं च पादौ च गन्तव्यं च पायुश्च विसर्जयितव्यं च उपस्थश्चाऽनन्दयितव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ५ ॥**

कस्मिन् सर्वे प्रतिष्ठिता भवन्तीत्यन्तिमप्रश्नपरिहारः सदृष्टान्त उच्यते– **स यथेत्यादि** ॥ सोम्य सोमार्ह, स दृष्टान्तो यथा वयांसि पक्षिणो वासो यत्राऽत्मनां तं वृक्षं सम्प्रतिष्ठन्ते, अभिगच्छन्ति तमाश्रित्य तिष्ठन्ति च । एवं खल्वेतत् सर्वं पृथिव्यादितत्त्वजातं परे आत्मनि विष्णौ सम्प्रतिष्ठते । तदाधारमेव वर्तत इति । अत्र पृथिवीत्यादिना पञ्च महाभूतान्युच्यन्ते । पृथिवीमात्रा चेत्यादिना गन्धादितन्मात्राः । चक्षुश्चेत्यादिना दशेन्द्रियाणि । द्रष्टव्यं चेत्यादिना रूपादितद्विषयाः । मन इत्यादिनाऽन्तःकरणपञ्चकम् । मन्तव्यं चेत्यादिना तद्विषयाः । तेजश्शब्देन चेतना गृह्यत इति सर्वस्यापि सङ्ग्रहः । प्राणो मुख्यप्राणो धारकः । तेन विधारयितव्यं च पृथिव्यादिकं सर्वम् ॥ ५ ॥

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स यो हैतमच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वं भवति । तदेष श्लोकः–**

**विज्ञानात्मा सह देवैश्च सर्वैः**
**प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र ।**

**तदेतदक्षरं वेदयते यस्तु सोम्य**
**स सर्वज्ञः सर्वमेवाऽविवेशेति ॥ ६ ॥**

**इति चतुर्थप्रश्नप्रतिवचनम्**

—०—

कथं सर्वस्य परात्मशब्दितविष्ण्वधीनत्वमित्यत उच्यते– **एष हीति** ॥ चक्षुरादीनामेतेषामेष हि दर्शनादिशक्तिप्रदः । स्वयं च विज्ञानात्मा विज्ञानस्वरूपः, सर्वज्ञ इति यावत् । पुरुषः पूर्णत्वात् । अतश्चोपपन्नं तस्य सर्वाश्रयत्वमिति । तस्य विज्ञानात्मनो वेदनस्य फलमुच्यते–**स य इति** ॥ स विज्ञानात्मा पुरुषो यो यादृशलक्षणः एतमेवंविधम् अच्छायमविद्यारहितम्, अत एवाशरीरं तस्मादेवालोहितं लोहितत्वादिरूपरहितं शुभ्रं शुद्धं प्राकृतरूपाद्यभावेऽपि अप्राकृतशुभ्रादिरूपयुक्तं वा, अत एवाक्षरं, हे सोम्य यो वेदयते विजानाति स सर्वज्ञः सर्वप्रधानस्य सर्वकारणस्य च परिज्ञानात् सर्वज्ञ इव, तत्सदृशत्वात् सर्वस्य सर्वज्ञ एव वा, सर्वस्यापि कर्मादेः ज्ञानस्य फलं परमात्मज्ञानं प्राप्तमनेनेति वा ज्ञानी स्तूयते । सर्वं भवति सर्वं परिपूर्णं परं ब्रह्म तद्भवति तद्भूत इव तत्प्रविशतीति यावत् । **तदेष श्लोकः** । विज्ञानात्मा विज्ञानस्वरूपो जीवः, शरीरे सुखं भवतीति ह्युक्तम् । प्राणाश्चक्षुरादयः तद्विषयाश्च रूपादयः भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैर्दैवैरभिमानिभिः सूर्याद्यैः सहैव यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ते तदेतदक्षरं वेदयते विजानाति यः पुरुषः सोम्येति कस्यचित् सम्बुद्धिः । स उक्तप्रकारेण सर्वज्ञः सर्वं परं ब्रह्म आविवेशैवाऽविष्ट एव ध्रुवमाविशत्येवेति ॥ ६ ॥

**॥ इति चतुर्थप्रश्नप्रतिवचनम् ॥**

—०—

## अथ पञ्चमः प्रश्नः

**अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो हैतद् भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति। तस्मै स होवाच। एतद् वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद् विद्वानेतेनैवायनेनैकतरमन्वेति ॥ १ ॥**

**अथ हैनं शैब्यः ॥** एवमुक्तलक्षणं परं ब्रह्म येन मन्त्रेणोपासितव्यम्, उपासितं च यत्फलं प्रयच्छति तदिदानीं वक्तुमयमुत्तरो ग्रन्थः। भगवन्नेतदेतेषु मनुष्येषु स यो यः कश्चित् प्रायणान्तं प्रयाणपर्यन्तं यावच्छरीरादुत्क्रमणं तावदिति यावत्, ओङ्कारम् ओमित्याक्रियमाणं परमात्मानम् अभिध्यायीत सर्वदा चिन्तयेत्, ओमित्यनेन मन्त्रेणेत्यभिप्रायः, स पुरुषः तेन कतमं लोकं जयति प्राप्नोतीति पृष्टवते तस्मै स होवाच। यदोङ्कारः ओमित्याक्रियमाणं वस्तु तदेतत् परं चापरं ब्रह्म। यस्मात् प्रणवो मुख्यतः परमात्मप्रतिपादकः तत्प्रतिमात्वेनामुख्यतः विरिञ्चप्रतिपादकश्च तस्माद्विद्वान् प्रणवेनोपासक एतेनैवोपासनाख्येनायनेन गमनसाधनेन परापरब्रह्मणोरेकतरमन्वेति प्राप्नोति ॥

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते। तमृचो मनुष्यलोकमुपनयन्ते। स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति। अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम्। स सोमलोके विभूतिमनुभूय पुनरावर्तते। यः**

**पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्। स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ॥ २ ॥**

किं प्रणवोपासनमात्रेणैकतरमन्वेति? न। किन्तु यथावज्ज्ञात्वोपासनेनैवेत्युच्यते –**स इत्यादि** ॥ अकारोकारमकाराख्यांशत्रययुक्तो हि प्रणवः। स उपासको यद्येकमात्रम् एकमात्रा वाचिका यस्य तं परमात्मानं प्रणवेनाभिध्यायीत, एकामेव मात्रां सम्यग् विदित्वा इतरे मात्रे अविज्ञायेति यावत्, तर्हि स उपासकः तेनैव ध्यानेन परमात्मना संवेदितः एहीति सम्बोधित इव देहपातानन्तरं क्षिप्रमेव जगत्यां पृथिव्याम् अभिसम्पद्यते प्राप्नोति जन्मेति शेषः। कथं कीदृशं जन्मेति? तमुपासकम् ऋचः ऋग्वेदाभिमानिन्यो देवताः पृथिव्यां मनुष्यलोकं मनुष्यशरीरं द्विजाग्र्यलक्षणम् उपनयन्ते प्रापयन्ति। स च तत्र जन्मनि तपआदिसम्पन्नः तत्फलरूपमहिमानमनुभवति। अथ यदि द्विमात्रेण द्वे मात्रे वाचिके यस्य तेन परमात्मना मनसि सम्पद्यते सङ्गतो भवति, तिसृषु प्रणवमात्रासु द्वे मात्रे सम्यग् ज्ञात्वा अन्यामविज्ञाय परमात्मानं चिन्तयतीति यावत्, तर्हि स उपासकः यजुर्भिः यजुर्वेदाभिमानिदेवताभिः, अन्तरिक्षम् अन्तरिक्षस्थं सोमलोकम् उन्नीयते। उन्नीतश्च तत्र सोमलोके विभूतिमैश्वर्यम् अनुभूय पुनरावर्तते। ततश्च्यवते। यत एवं तस्माद्यस्तु पुरुषः एतं परं पुरुषं त्रिमात्रेण तिस्रो मात्रा अपि सम्यग् विदित्वेति यावत्, ओमित्यनेनैवाक्षरेणाभिध्यायीत स ध्याता परमेश्वरमपरोक्षीकृत्य तेजोरूपे सूर्ये सम्पन्नः तं प्राप्नोति। सूर्यं प्राप्य चासौ यथा पादोदरः सर्पः त्वचा जीर्णया विनिर्मुच्यते एवं खलु स ध्यानी पाप्मना प्रारब्धेन विनिर्मुक्तो भवति। विधूतपापश्च स सामभिः सामवेदाभिमानिदेवताभिः ब्रह्मलोकं सत्याख्यम् उन्नीयते। तत्र च एतस्मात् सत्यलोकाधिपतेः जीवघनाद् जीव

सारात् सकलजीवोत्तमाद्विरिञ्चात्तदुपदेशेनेति यावत्, परात्परं उत्तमोत्तमं सकलशरीरेषु शयितं पुरुषं पूर्णं वासुदेवम् ईक्षते पुनरभिवृद्धज्ञानो भवतीति । अत्र पुरुषमीक्षित्वा च तं प्राप्नोतीत्यपि ग्राह्यम् । यथोक्तं भाष्ये ॥ २ ॥

**तदेतौ श्लोकौ भवतः ।**

**तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता**
**अन्योन्यसक्ता अनविप्रयुक्ताः ।**
**क्रियासु बाह्यान्तरमध्यमासु**
**सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥**

**ऋग्भिरेतं यजुभिरन्तरिक्षं**
**सामभिर्यत् तत् कवयो वेदयन्ते ।**
**तमोङ्कारेणैवायनेनान्वेति विद्वान्**
**यत् तच्छान्तमजरममृतमभयं परं चेति ॥ ३ ॥**

**इति पञ्चमप्रश्नप्रतिवचनम्**

—०—

तत्रोक्तेऽर्थे एतौ वक्ष्यमाणौ श्लोकौ सम्मतित्वेन भवतः । तिस्रोऽकाराद्याः प्रणवमात्राः अनविप्रयुक्ता अन्योन्यमसम्बद्धाः एकैकशो येन ज्ञाताः, विप्रयुक्ता न भवन्तीत्यविप्रयुक्ताः न अविप्रयुक्ताः अनविप्रयुक्ताः विप्रयुक्ता एवेत्यर्थः, अन्योन्यसक्ताः परस्परं युग्मतया सम्बद्धाः ये के वा, द्वे द्वे ज्ञात्वेति यावत्, बाह्याभ्यन्तरमध्यमासु तारमन्द्रमध्यरूपासु उच्चारणक्रियासु प्रयुक्ताः उच्चारिता मृत्युमत्यो भवन्ति । एकैकामेव द्वे द्वे वा ये केचित् सम्यज्ज्ञात्वा शेषमज्ञात्वा उच्चैर्वा नीचैर्वा मध्यमानेन वा उच्चारिताः प्रणवमात्राः नापुनरावृत्तिफलं प्रापयन्तीत्यर्थः । तासु सम्यक् प्रयुक्तासु तिस्रोऽपि

सम्यज्ज्ञात्वोच्चारितासु सतीषु ज्ञो ज्ञानी न कम्पते, न च्यवते, न पुनरावृत्तिफलं प्राप्नोतीति । एतदर्थविवरणार्थो द्वितीयो मन्त्रः । एकमात्राज्ञानपूर्वकोपासनाद् ऋग्भिरेनं पृथिव्याख्यं मानुषं लोकम् उपासको नीयते । द्विमात्राज्ञानपूर्वकोपासनाद्यजुर्भिरन्तरिक्षं तत्रस्थसोमलोकं नीयते यत्तत् कवयो ज्ञानिनो वेदयन्ते जानन्ति ज्ञापयन्ति च । परात्परं ब्रह्म यत्तच्छान्तं सुखोत्कर्षसीमाभूमिरूपमजरं जरादिवर्जितं परं सर्वोत्तमं ब्रह्म ओङ्कारेणैवायनेन, अयनसाधनमोङ्कारं मात्रात्रयात्मकं सम्यग् ज्ञात्वा चेति यावत्, सामभिरन्वेतीति ॥ ३ ॥

**॥ इति पञ्चमप्रश्नप्रतिवचनम् ॥**

—o—

## अथ षष्ठः प्रश्नः

**अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ । तमहं कुमारमब्रुवम् । नाहमिमं वेद यद्यहमिम-मवेदिष्यं कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति योऽनृतमभिवदति । तस्मान्नार्हाम्यनृतं वक्तुम् । स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥**

**अथ हैनं सुकेशाः ।** प्राक् प्राणादीनां शरीरिणश्च जाग्रत्स्वप्नसुषुप्तिषु परमेश्वराधीनत्वमभिहितं, न तु मोक्षे । अतः सिंहावलोकनन्यायेन मुक्तावपि तेषां भगवदधीनत्वप्रकाशनार्थमुत्तरो ग्रन्थः । प्रष्टव्यार्थेऽतिशयितबुभुत्सां स्वस्य ज्ञापयितुं पूर्ववृत्तान्तकथनम् । भगवन्, हिरण्यनाभो नामतः, कोसलायां भवः कौसल्यः कस्यचिद्राज्ञः पुत्रः, मामुपेत्य प्राप्यैनं वक्ष्यमाणं प्रश्नं प्रष्टव्यार्थम-पृच्छत । हे भारद्वाज षोडशकलो नाम कश्चित् पुरुषोऽस्तीति सामान्यतो मया श्रुतम् । तं षोडशकलं पुरुषं त्वं वेत्थ विशेषतो जानासि किम्? कोऽसौ पुरुषः? क्व चाऽस्ते? का नाम षोडशकलाः? कथं चैतस्य षोडशकलत्व-मित्यादि । यदि च जानासि तर्हि मह्यं ब्रूहीति । एवं पृष्टवन्तं कुमारं पूर्ववयसि वर्तमानं हिरण्यनाभं अहमब्रुवम् । अहमिमं त्वया पृष्टं षोडशकलं पुरुषं न वेद न जानामि । कुतः? यद्यहमिमं पुरुषम् अवेदिष्यं विदित-वानभविष्यं तर्हि कथं कस्माद्योग्याय ते तुभ्यं नावक्ष्यम् इत्यतो नाहमिमं वेद । किं च, यः पुरुषः अनृतमभिवदति स एषः समूलः परिशुष्यति वै

सर्वात्मना गतसारो भवति। तेनार्जितं समस्तमपि सुकृतं नश्यतीति यावत् । यत एवं तस्माद् ज्ञात्वाऽपि न जानामीत्यनृतं वक्तुं दोषज्ञोऽहं नार्हामि नार्हो भवामीत्येवमनेकप्रकारेण प्रत्यायितः स लज्जया तूष्णीं किमप्यवदन् रथमारुह्य प्रवव्राज यथागतं गतवान् । एवं तदाप्रभृति ज्ञातव्यतया मम हृदि वर्तमानं पुरुषं त्वां पृच्छामि । किमिति ? असौ षोडशकलः पुरुषः काऽस्ते ? काश्च ताः कलाः? कथं चासौ षोडशकलः? इत्यादि ॥ १ ॥

**तस्मै स होवाच । इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति स ईक्षाञ्चक्रे । कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि । कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजत । प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद् वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ॥ २ ॥**

एवं पृष्टवते तस्मै स होवाच । वक्ष्यमाणलक्षणः विष्णुरेवासौ पुरुष इति सेत्स्यतीत्यभिप्रायेण शिष्टस्य परिहार उच्यते– **इहैवेति** ॥ हे सोम्य यस्मिन् पुरुषे एता वक्ष्यमाणाः प्राणाद्याः षोडशसङ्ख्याकाः कलाः स जीवस्य शरीरस्य भागाः प्रभवन्ति यस्मादुत्पद्यन्ते यस्मिंश्च प्रतिष्ठिताः मुक्ताः सत्यो यमाश्रित्य वर्तन्ते । अनेन षोडशकलत्वं चैतस्य कथमिति परिहृतं भवति । स पुरुष इहैव शरीरे शरीरस्यैवान्तरास्ते । नावश्यं तद्दर्शनाय दूरं गन्तव्यमित्यभिप्रायः ॥

यस्मिन्नेताः षोडशकलाः प्रभवन्तीत्युक्तं प्रपञ्च्यते– **स इत्यादि** ॥ स पुरुषः कल्पादौ कलाः सृजामीति ईक्षाञ्चक्रे चिन्तितवान् । पुनश्च कस्मिन् पुरुषे शरीरादुत्क्रान्तेऽहमुत्क्रान्तो भविष्यामि ? कस्मिन् वा तत्र प्रतिष्ठितेऽहमपि प्रतिष्ठास्यामीति प्रतिष्ठितो भविष्यामि ? को नु मद्वशीकरणक्षमभक्तिज्ञानादिसम्पन्नः यं निमित्तीकृत्याहं कलाः सृजामीत्येवमीक्षित्वा तादृशः

प्राण एवेति निश्चित्य स पुरुषः प्राणं जीवकलाभिमानिनमसृजत । प्राणात् तं प्राणं निमित्तीकृत्य श्रद्धां जीवस्याऽस्तिक्यनिष्ठाभिमानिनीं भारतीमसृजत । ततः खं वायुः ज्योतिरापः पृथिवीत्येतानि शरीरोपादानभूतानि भूतानि तदभिमानिनो विघ्नेशाद्याः देवाः, इन्द्रियं चक्षुरादिप्रवृत्तौ उपकरणं सूर्यादिदेवाः, मनः प्रधानकरणं तद्देवाः वीन्द्रशेषकामानिरुद्धाः, अन्नं तत्स्थितिकारणं तन्मानी सोमः, तस्माच्चान्नाद् अन्नं निमित्तीकृत्य वीर्यं शरीरहेतुभूतं तद्देवता वरुणः, तपो जीवस्य ज्ञानादिहेतुतया सुखसाधनं तदभिमानी वह्निः, मन्त्रा ऋगादिवेदाः साक्षाज्ज्ञानादिहेतवः तद्देवता स्वाहा, कर्म पुण्यापुण्यलक्षणं सुखादिनिमित्तम्, तदभिमानी पुष्करः, लोकाः गोलकाः, इन्द्रियाश्रयभूताः, तद्देवः पर्जन्यः, नाम देवदत्तादिकम्, तन्मानिनी उषा इत्येताः कलाः पुरुषेण सृष्टा इति ग्राह्यम् ॥

अत्र स प्राणमसृजत, प्राणाच्छ्रद्धामित्यादौ, अन्नाद्वीर्यमिति मध्ये लोकेषु सृष्टेषु सत्सु नाम चेत्यन्तेऽपि कथनेन पूर्वपूर्वोत्पन्नाः कलाः निमित्तीकृत्योत्तरोत्तराः कलाः परमेश्वरेण सृष्टा इति सूच्यते । तच्च यथोक्तक्रमेऽनुपपन्नम् । अतो भाष्याद्युक्तदिशा क्रमोऽवगन्तव्यः ॥ २ ॥

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति । भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । भिद्येते चाऽसां नामरूपे । पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति ॥ ३ ॥**

एतासां च कलादेवतानां जीवेन सह मोक्षे पुरुषप्राप्तिरुच्यते– **यथेमा नद्य इत्यादिना ॥** यथा लोके इमाः प्रसिद्धाः स्यन्दमानाः प्रस्रवन्त्यः समुद्र [illegible]नमाश्रयो यासां ता नद्यः समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति प्राप्नुवन्ति, अज्ञानामदर्शनं गतानामपि तासां समुद्रे स्थितानां नद[illegible]यमुनेत्यादि-

नामरूपे भिद्येते विविक्ते तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते एवमेवास्य पुरुषस्य परिद्रष्टुर्ज्ञानिनो जीवस्य षोडशकलाः प्राणाद्याः पुरुषायणाः पुरुष एवायनम् आश्रयो येषां ते, त एव पुरुषं प्राप्यास्तमज्ञैरज्ञेयत्वं गच्छन्ति । आसां पुरुषे स्थितानां तासां नामरूपे भिद्येते विविक्ते तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते । तथा च कलादेवतासु मुक्तिं गतासु स एष जीवः नष्टाचेतनकलो भवति । तत एवामृतो भवति, कलानिमित्तं हि मरणमस्येति ॥ ३ ॥

**तदेष श्लोकः–**

**अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः ।**
**तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥**

(उपनिषदः उपसंहारः)

**तान् होवाच । एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति । ते हि तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ४ ॥**

**(इति षष्ठप्रश्नप्रतिवचनम्)**
**इति षट्प्रश्नोपनिषत् समाप्ता**

—०—

तत्तत्रोक्तार्थे एष वक्ष्यमाणः श्लोकः सम्मतित्वेन भवति । रथनाभौ अरा इव यस्मिन् पुरुषे कलाः प्रतिष्ठिताः तं वेद्यं वेदितव्यं पुरुषं वासुदेवं वेदयथाः जानीध्वम् । ततश्च मृत्युः संसारो वो युष्मान् मा परिव्यथाः मा परिव्यथयतु । पुरुषाज्ञाने संसारव्यथा भवेत् । सा भवतां मा भवत्विति । एवं स पिप्पलादः तत्त्वमुपदिश्य तान् भारद्वाजादीन् प्रत्युवाच । एतदुक्तलक्षणं परं ब्रह्माहमेतावदुक्तमात्रमेव वेद नातः परं मया विदितमस्ति । अस्मदादयः

तदेकदेशविद एव न त्वपरिमितविद इति भावः । एवमुपदिष्टास्ते मुनयस्तमाचार्यमर्चयन्तः प्रणामादिना पूजयन्त इदमूचुः । भगवन्, त्वं हि नः पिता निरुपाधिकोपकारकः । कथं? यः त्वमस्माकम् अस्मानविद्यायाः परं पारं तारयसि अतारयः । को हि नामैवमुपकुर्यादिति । एवमाख्यायिकां समाप्य वेदपुरुषः शिष्यशिक्षार्थमाह– **नमः परमऋषिभ्यः पिप्पलादादिभ्य** इति । द्विर्वचनमादरार्थमित्यशेषमङ्गलमिति ॥ ४ ॥

**॥ इति षष्ठप्रश्नप्रतिवचनम् ॥**

**॥ इति षट्प्रश्नोपनिषत्खण्डार्थः सम्पूर्णः ॥**

—०—

(नायं खण्डार्थः श्रीमद्राघवेन्द्रतीर्थविरचित इति बहूनां मतम् । आदौ विहितस्य मङ्गलाचरणस्य पाठः, अन्ते, अन्यत्र इतरेषु तदीयखण्डार्थेषु परिदृश्यमानस्य मङ्गलश्लोकस्याभावः, खण्डार्थ-शैली च तदेतन्मतं द्रढयति । अस्य रचयिता अन्यः क इत्यपि न ज्ञातम् । तथाऽपि ऐतिह्यप्रमाणानुसारेण गङ्गोदकप्रविष्ट-यमुनोदकवदस्य ग्रथनमत्र विहितमिति सविनयं विज्ञाप्यते ।)

## प्रमाणवचनसङ्ग्रहे, उपनिषद्वाक्यकोशे च स्वीकृताः सङ्केताः

| | |
|---|---|
| ईशावास्योपनिषद्भाष्यम् | ई.उ.भा. |
| तलवकारोपनिषद्भाष्यम् | तलव.उ.भा. |
| काठकोपनिषद्भाष्यम् | का.उ.भा. |
| षट्प्रश्नोपनिषद्भाष्यम् | षट्.उ.भा. |
| ईशावास्योपनिषत् | ई.उ. |
| तलवकारोपनिषत् | तलव.उ |
| काठकोपनिषत् | का.उ. |
| षट्प्रश्नोपनिषत् | ष.उ. |

# उपनिषद्भाष्योदाहृतप्रमाणवचनानां वर्णानुक्रमसूचिका


| प्रमाणवचनानि | आकरग्रन्थाः | उपनिषद्भाष्यम् | पृष्ठसङ्ख्या |
|---|---|---|---|
| अग्निस्थं परमात्मानं | तत्त्वसारे | का.उ.भा. | २४२ |
| अग्नौ विष्णुं सदा ध्यायन् | ब्रह्मसारे | का.उ.भा. | २१० |
| अग्र्यत्वादग्निनामाऽसौ | गतिसारे | का.उ.भा. | २२८ |
| अज्ञस्य कर्म लिप्येत | नारदीये | ई.उ.भा. | ३९ |
| अतिरोहितविज्ञानाद् | रामसंहितायाम् | ई.उ.भा. | १४२ |
| अदनाददितिर्विष्णुः | | का.उ.भा. | ३११ |
| अधिकस्सतोऽयं | | का.उ.भा. | ३६८ |
| अनन्तं वै नाम | | षट्.उ.भा. | ४८२ |
| अनेजन्निर्भयत्वात् तत् | ब्रह्माण्डे | ई.उ.भा. | ५८ |
| अन्तःकरणकामानाम् | | का.उ.भा. | ३६८ |
| अन्यथोपासका ये तु | कौर्मे | ई.उ.भा. | ९८ |
| अम्रामभ्यश्च भूतेभ्यः | | का.उ.भा. | ३११ |
| अरा इव रथनाभौ | षट्प्रश्नोपनिषदि | षट्.उ.भा | ४७९ |
| अस्य विस्रंसमानस्य | काठकोपनिषदि | का.उ.भा | २४१ |
| आत्मनिस्थं हरिं जानन् | कौर्मे | का.उ.भा. | ३४० |
| आत्माऽन्तरात्मेति विभुः | | का.उ.भा. | ९१ |
| आसीनो दूरं व्रजति | महावराहे | का.उ.भा. | २८५ |
| इष्टकादेवतां विष्णुं | गतिसारे | का.उ.भा. | २२८ |
| ऋग्यजुःसामाथर्वाख्याः | विद्यानिर्णये | तलव.उ.भा | १९३ |

